वाऽधिष्ठानमिति मतभेदो वरीवर्ति । तत्र प्रथममते काचादिदोषसहकृतमूलाविद्याकार्यत्वम्, द्वितीयमते तु तूलाविद्याकार्यत्वमिति विशेषोऽनुसन्धेयः ॥

(११) व्यावहारिकत्वं नाम ब्रह्मसाक्षात्कारपूर्वक्षणेऽबाधितत्वम्, मूलाविद्याकार्यत्वं वा । प्रातिभासिकत्वं तु ब्रह्मसाक्षात्कारपूर्वक्षणबाधितत्वं तूलाविद्याकार्यत्वम्, दोषान्तरसहकृतमूलाविद्याकार्यत्वं वा। ब्रह्मप्रमाऽव्यवहितपूर्वप्रातिभासिकानां ब्रह्मसाक्षात्कारपूर्वक्षणेऽबाध्यमानानामपि तद्योग्यत्वं तूलाविद्याकार्यत्वादिरूपं विद्यत एवेति न कोऽपि दोषः । देहात्मताऽपि तु 'उष्णं जलमि'ति ज्ञानविषयौष्ण्यवद् व्यावहारिक्येव । तदेवं व्यवहारकालाबाध्यत्वेनैव व्यावहारिकत्वम्, तत्कालीनबाधविषयत्वेन तु प्रातिभासिकत्वमिति व्यावहारिक-प्रातिभासिकयोर्विभागः ॥

इदं च नैकसत्तावादे, यतो ब्रह्मव्यतिरिक्तस्य सत्तैव तत्र नोरीक्रियते। अधिष्ठानगतसत्तासंसर्गमात्रं तु स्वीक्रियते । अस्मिन् हि मते 'इदं रजतमि'त्यादावपि रजत इदमंशसंसर्ग एवाध्यस्यते, नेदंत्वमपि । बाध्यत्वं च स्वरूपतः सत्तानिषेध एव, नतु पारमार्थिकत्वमात्रनिषेधः । सत्तात्रैविध्यमते तु घटादीनां व्यावहारिकसत्ता, शुक्तिरूप्यादीनां प्रातिभासिकसत्ता, ब्रह्मणस्तु पारमार्थिकसत्तेति तत्तत्सत्ताविशिष्टत्वेन प्रतिभासिकत्वादिकम् । मिथ्यात्वं तु पारमार्थिकत्वाभाव एव ॥

(१२) अनेन च व्यवहारकालाबाधितार्थविषयकज्ञानत्वं प्रमात्वम् । तत्क्षणबाधितार्थविषयकज्ञानत्वं भ्रमत्वम्, इति तत्तज्ज्ञानजनकत्वेन प्रमाणाप्रमाणविभागोऽपि व्याख्यातः । ब्रह्मज्ञानमपि व्यवहारकालाबाधितार्थविषयकमेवेति प्रमैव, इति तज्जनकत्वेन वेदान्तानामपि प्रामाण्यमनपोढम् । घटादेरिव ब्रह्मणोऽपि व्यावहारिकत्वमेव स्यात्, नतु पारमार्थिकत्वमित्यापत्तिस्तु नात्रावतरति । नहि घटादीनां प्रमाविषयत्वं ब्रह्मसाक्षात्कारबाध्यत्वे प्रयोजकम्, किंतु ब्रह्मणि कल्पितत्वम्, नतु ब्रह्म कुत्राप्यन्यत्र स्वस्मिन् वा कल्पितम्? इति कथं घटादिसमानता? प्रमात्वं हि चैतन्यनिष्ठं चैतन्यत्वप्रयुक्तं स्वतः सिद्धम्, नतु प्रमाणतन्त्रम्, नवा बाधितविषयत्वप्रयुक्तम्, इति न चैतन्यरूपां प्रमामादाय प्रमाणाप्रमाणविभागः, किन्तु वृत्त्यवच्छिन्नचैतन्यरूपामेव । वृत्त्यवच्छिन्नं च चैतन्यं व्यावहारिकमेव, इति वृत्तिविलयनेन विलीनं स्वरूपचैतन्यमात्रं सत् स्वत एव प्रकाशमानं ब्रह्म न स्वसिध्यर्थं प्रमाणमपेक्षते । वाचस्पतिमिश्रा हि—उपहितमेव वेदान्तप्रतिपाद्यम्, शुद्धं तु स्वत एव सिध्यतीति—मन्यन्ते । व्यक्तं चैतदद्वैतसिध्यादौ । विवरणमते तु शुद्धस्य वृत्त्या भानेऽपि शब्दजन्यस्य साक्षात्कारस्य त्रिकालाबाधितविषयकस्य व्यवहारकालाबाधितविषयकत्वमपि वर्तत एव । 'इदं रजतमि'त्यादावप्यधिष्ठानांशे प्रमात्वमनुमतमेव । तथाच न केवलं प्रमाणमात्रजन्यं प्रमात्वम्, किन्त्वप्रमाणजन्यमपि प्रमाज्ञानमंशविशेषे । अनुमानप्रमाणेन पर्वतांशे प्रत्यक्षप्रमा, शब्देन प्रमातुः प्रत्यक्षप्रमा, मनसा तु सुखादीनां प्रत्यक्षप्रमा, इति हि सत्यपि प्रमासाङ्कर्ये, प्रमाणानां तु न साङ्कर्यमिति परिभाषादिषु व्यक्तम् ॥

(१३) तथाच मिथ्याभूतेनापि व्यावहारिकेण शास्त्रेण सत्यस्य ब्रह्मणो ज्ञापनं न विरुद्धम् । नहि कारणानि सर्वाणि सत्त्वेन कारणानि ; अन्यथा सत्त्वेऽपि कारणतावच्छेदके सत्त्वान्तराङ्गीकारायोगादसत एव कारणत्वमापद्येत । तदुक्तम्—

"अन्तर्भावितसत्त्वं चेत् कारणं तदसत्ततः ।
नान्तर्भावितसत्त्वं चेत् कारणं तदसत्ततः ॥" इति ॥

कारणत्वं हि पूर्वक्षणसम्बन्धमात्रमेव, नतु सत्त्वघटितमपि। तथाच नान्तर्भावितसत्त्वं कारणं भवति, तदुक्तम्—

"पूर्वसम्बन्धनियमे हेतुत्वे तुल्य एव नौ।
हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथा॥" इति।

(१४) सति चैवं शास्त्रस्य कारणत्वं न मिथ्यात्वेन, सत्त्वेन वा, किन्तु स्वरूपत एव, इति मिथ्याभूतेनापि शास्त्रेण सत्यवस्तुबोधनमविरुद्धम्। मिथ्याभूतेनापि कारणेन तदधिकसत्ताकानि कार्याणि बहुशो वयं पश्यामः। यथा स्वप्ने स्वाप्निकदर्शनेन व्यवहारिकं सुखम्। अत एव स्वप्नाध्याये भाविफलप्रतिपादनं पुराणेषूपपद्यते। सत्यं ज्ञानस्यैवात्र साधनत्वम्, नतु स्वाप्निकानामर्थानामित्यस्त्यवसरः शङ्कायाः, परंतु—"अर्थेनैव विशेषो हि निराकारतया धियामि"ति न्यायाद् अर्थविशेषितस्य ज्ञानस्य कारणत्वेऽर्थस्यापि कारणत्वमर्थसिद्धमेव। व्यक्तं चेदमद्वैतसिध्यादौ। अत एवारोपितवर्णतानां रेखाणां वर्णविशेष-पदविशेषादिप्रमितिसाधनत्वं दृश्यते। आरोपितैरेव क्षुद्रवृक्षैर्दूराद् दृश्यमानैर्महतो वनस्यानुमितिप्रमा भवति, इति मिथ्याभूतेनापि शास्त्रेण सत्यब्रह्मज्ञापनं न दोषाय॥

(१५) वस्तुतस्तु मिथ्याभूतेन शास्त्रेण सत्यार्थज्ञापनं कथम्? इत्यनेन किं विवक्षितम्? किं मिथ्यात्वनिर्णयानन्तरं शास्त्रस्य कथं ब्रह्मप्रमापकत्वम्? किं वा ततः पूर्वमिति? आद्ये तु न शास्त्रम्, न वा प्रमा, इति न चोद्यस्यैवावसरः। द्वितीये तु न मिथ्याभूतस्यार्थक्रियाकारित्वमस्माभिरपि स्वीक्रियते। नहि शास्त्रं मिथ्याभूतं तदानीम्। मिथ्यात्वं हि परमार्थतः कालत्रयेऽप्यभाव एव, न सत्त्वाभावः, इति पारमार्थिकत्वेन तदभावेऽपि स्वरूपेण यावद्बाधं विद्यमानत्वाद् न पूर्वोक्तरीत्या प्रमासाधनत्वविरोधः। सर्वथा तु यावद्दोषनिश्चयं स्वत एव प्रमाणस्य ज्ञानमात्रसाधारण्याद् वेदान्तेषु चापरोक्षसाक्षात्कारपर्यन्तमविद्यादोषत्वानिर्णयात् स्वतः प्रामाण्यं वेदान्तानां न विरुद्धम्। स्वतो ग्राह्यं प्रमात्वं न केवलं प्रमायाः, किन्तु यावद्बाधं भ्रमज्ञानस्यापि वर्तत एव। नहीदं प्रामाण्यमबाधितार्थविषयकत्वरूपम्, किन्तु मिथ्यात्वेनानिश्चीयमानार्थविषयकत्वम्, इति वेदान्तानां यावद्ब्रह्मसाक्षात्कारं मिथ्यात्वानिश्चयाद् न स्वतःप्रामाण्यव्याहतिः। भ्रमज्ञानानां स्मृत्याश्च प्रवृत्तिप्रयोजकत्वमप्येतादृशेनैव प्रामाण्येन गृहीतेन। न ह्यन्यथोत्पत्तिमात्रेण वस्तुगत्या बाधितार्थविषयकत्वस्यैव ग्रहणे प्रवर्तकत्वं भ्रान्त्यादीनामुपपद्यते, इति सर्वाणि वेदान्तवाक्यानि षड्विधतात्पर्यलिङ्गबलान्निर्विशेषे पारमार्थिके च ब्रह्मणि स्वत एव प्रमाणामिति सिद्धम्॥

(१६) यथाच सत्यपि सगुणवाक्यानामपि बहुनां सत्त्वे, निर्गुणवाक्यानुसारेणैव वेदान्तानां नयनम्, नतु सगुणवाक्यानुसारेण, तथा "न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि"त्यत्र सूत्रकारा एव विवेचयन्ति। "अथातो ब्रह्मजिज्ञासे"ति हि ज्ञेयमेवोपक्षिप्यते ब्रह्म, यस्य ज्ञानमात्रं स्वत एव पुरुषार्थाय कल्पते, नानुष्ठानापेक्षम्। तच्च निर्गुणमेव भवितुमर्हति, नतु सगुणम्। सगुणं हि ब्रह्मोपास्यततयैव तत्र तत्र निर्दिश्यते। नान्तरेणानुष्ठानं सगुणब्रह्मणो ज्ञानमात्रं पुरुषार्थाय प्रभवति। सत्यम् "अथातो धर्मजिज्ञासा" इति सूत्रे जिज्ञासापदमनुष्ठानापेक्षया पुरुषार्थसाधनं ज्ञानं प्रतिपादयति, परन्तु गौण-मुख्ययोर्मुख्य एव कार्यसंप्रत्ययः सति सम्भवे, इति प्रकृते गौणार्थविवक्षा नोपपद्यते। "तरति शोकमात्मवित्" "ब्रह्मविदाप्नोति परम्" इत्यादिवाक्यानि च ज्ञानमात्रेण मोक्षप्रतिपादनपराण्यपि ज्ञानप्राधान्यपक्ष एव स्वरसानि, नतूपासनाप्राधान्यपक्षे॥

निर्गुणविचारस्यैव प्रतिज्ञायामपि मानसज्ञानत्वसामान्यात् प्रसङ्गादुपासनाविशेषपराण्यपि वाक्यानि विचार्यन्ते। ब्रह्मसाक्षात्कारानन्तरमेव चैतन्यमात्रावशेषेऽपि यावत्साक्षात्कारं जीवेश्वरादिभेदस्यानुवर्तमानत्वात् कर्मवाक्यान्युपासनावाक्यानि च यथासम्भवमनुष्ठानपर्यवसायीनि व्यवस्थापनीयानि। नहि ब्रह्मसाक्षात्कारः सर्वेषां तज्जन्मन्येवेति नियमः। सत्यं केचन पुरुषधौरेया इहैव जन्मनि जातमात्रा एव विना कर्मविचारम्, विनोपासनाविचारम्, विना च तदनुष्ठानं ब्रह्मभावमर्हन्ति। न हि तानुद्दिश्य ब्रह्ममीमांसायामुपासनादिविचारः सप्रयोजन इति पश्यामः। उपासनामार्गनिष्ठा अपि हिरण्यगर्भलोकादिप्राप्तिद्वारा तेन सह ब्रह्मभावं प्राप्नुवानाः केचन भविष्यन्ति। नचैतत्केनापि निर्द्धारयितुं शक्यम्—यत् कुत्र जन्मनि मुक्तिः स्वस्य भविष्याति ? प्रारब्धानि कर्माण्युपभुज्यैव हि मुक्तिर्नाम। सति चैवं कर्मदेवभावप्राप्त्यनन्तरम्, इन्द्रादिभावप्राप्त्यनन्तरम्, हिरण्यगर्भादिलोकप्राप्त्यनन्तरं वाऽत्रैव वा मुक्तिरिति निर्णयाभावाद् यथाशक्ति सगुणोपासनान्यनुतिष्ठन्तोऽपि ब्रह्ममीमांसायां गौणाधिकारिणो भविष्यन्ति, इति परम्परया निर्गुणभावोपयोगित्वादपि सगुणोपासनान्यपि नात्र न विचारमर्हन्ति। सगुणोपासनस्यापि विषयश्चैतन्यमेव। निर्गुणमेव चैतन्यं कल्पितैस्तत्तादृशैर्गुणैः सगुणं नाम, नतु सगुणं नाम परमार्थतो भिन्नं ब्रह्मान्तरमिति सूचनं तु निर्गुणब्रह्ममीमांसाप्रकरण एव सगुणब्रह्मविचार एव सम्भवति। नान्यत्र तु सगुणवाक्यानां प्रसङ्गलेशोऽपि। यथाहि निर्गुणे सगुणस्य पर्यवसानम्, नैवं सगुणे निर्गुणस्य, इति सगुण-निर्गुणोभयविधब्रह्मनिरूपणमपि ब्रह्ममीमांसायामेव सङ्गतम्; अन्यथा सगुणब्रह्मणोऽन्यत्र विचारे ब्रह्मान्तरशङ्का समापद्येत। *एतेन*—देवताधिकरणमपि—*व्याख्यातम्*; कर्मणा देवभावोऽपि न पर्यवसितपुरुषार्थः, यतो देवा अपि वयमिव साधकावस्थायामेव वर्तन्ते। तथाच यजनीया उपासनीयाश्च सर्वेऽधिकारिकोटिमेवार्हन्ति, न फलकोटिम्, इति सादरमेवाऽऽसत्यलोकं वैराग्यमभ्यसनीयम्। इदमेव च देवताधिकरणस्य प्रयोजनम्॥

(१७) "नेतरोऽनुपपत्तेः" इति तत्र तत्र भेदनिर्देशोऽपि न साधकावस्थायामधिकारितावस्थायां वा जीव-ब्रह्मभेदः, किंतु तुरीयावस्थायाम्, इति सूचनेनोपासनादिविधयो न ब्रह्माभिन्नं जीवमाधिकृत्य प्रवृत्ता इति सूचयति। नह्येतावता पारमार्थिकमेव भेदं सूत्रकारा मन्यन्त इति कल्पना सावसरा। *अयमाशयः*—अद्वैतिनो हि जीव-ब्रह्मणोर्विगतोपाधिकयोः शुद्धचैतन्यभावेनैवाभेदं व्यपदिशन्ति, नतु जीवत्व-ब्रह्मत्वोपाधिसम्बन्धेनापि। तदत्र सूत्रकारा यदि न कुत्रापि निर्विशेषवाक्यविचारपरे सूत्रे जीव-ब्रह्मणोर्जीवेश्वरयोरीश्वर-ब्रह्मणोर्वा भेदं व्यपदिशन्ति, कथमेतावता विरोधो निर्विशेषपरतायाम्। नहि कुत्रापि ब्रह्ममीमांसायां शुद्धचैतन्यभावेन भेदव्यपदेशो वर्तते। "भेदव्यपदेशाच्च" "नेतरोऽनुपपत्तेः" इत्यानन्दमयजीवतापक्षे तदीश्वरतापक्षे वा जीवत्वोपाधिविवक्षयैवानन्दमयाद् विज्ञानमयाद्वा पुच्छब्रह्मणो निर्विशेषस्यानन्दमयपदवाच्यस्य वा भेदं व्यपदिश्यमानं प्रतिपादयति। नचैतदद्वैतवादस्य विरुद्धम्॥

तदयं निष्कर्षः—सत्यं "तत्त्वमसी"ति जीव-ब्रह्मणोरभेदो बोध्यते, स च न तत्त्वंपदवाच्यार्थोपाधिना, किन्तु लक्ष्यार्थोपाधिना। सति चैवं जीव-ब्रह्मणोः सामानाधिकरण्यं जीवाभासतावादे बाधायां सामानाधिकरण्यम्, यत्र जीवस्यापि बाधः। मतान्तरे तु न स्वरूपबाधप्रयुक्तं बाधायां सामानाधिकरण्यम्, किन्त्वभेद एव। उपपादितं चैतद् वेदान्तसारे-सम्बन्धत्रयेण तत्त्वमस्यादिवाक्यानामखण्डार्थत्वम्। सम्बन्धत्रयं च सामानाधिकरण्यं च विशेषण-विशेष्यता लक्ष्य-लक्षणभावश्चेत्यादि, तत एवावगन्तव्यम्।

सति चैवं भेदव्यपदेशः, इतरव्यपदेशाधिकरणादिकं च सर्वं कथमद्वैतस्य विरोधि ? *एतेन*—"अधिकं तु भेदनिर्देशादि"ति सूत्रमपि—*व्याख्यातम्* ; अनेनापि शुद्धचैतन्यस्येश्वरस्य वा जीवत्वोपाधिना भेद एव प्रतिपाद्यते । वस्तुतस्तु निर्विशेषस्वरूपानिरूपणपरेषु "न स्थानतोऽपी"त्यादिषु "भेदादिति चेन्न, प्रत्येकमतद्वचनादि"ति भेदनिषेधमेव पश्यामः । भेदानिर्देशो भेदनिषेधश्चोभयं तु पूर्वोक्तरीत्यैव निर्वहति । यथा च "अंशो नाना व्यपदेशादन्यथाऽपि दाशकितवादित्वमधीयत एके"इत्यादिसूत्राण्यपि भेदकल्पनायाम-भेदपारमार्थिकतायां चानुगुणानि, तथाऽद्वैतमार्तण्डादौ व्यक्तमिति नेह प्रपञ्च्यते ॥

किञ्च भेदव्यपदेशान्यथानुपपत्त्या किं शरीर-शरीरिभावो विवक्ष्यते ? उतात्यान्तिकभेदमात्रम् ? आद्ये तु शरीर-शरीरिभावस्य भेदाभेदनिबन्धनत्वात् कथम्—"नेतरोऽनुपपत्तेः" "भेदव्यपदेशात्" इत्यादिकं शरीर-शरीरिभावस्यापि न व्याघातकम् ? उत्तरत्राभेदस्यापि "अंशो नाना व्यपदेशात्" इत्यादिषु प्रतिपादनाद् यदि तदविरोध्येव भेदोऽत्र विवक्ष्यते, तर्हि कथमद्वैतस्यापि भेदव्यपदेशमात्रं व्याघातकम् ? नहि शरीर-शरीरिभावप्रयुक्त एवाभेदो भेदाविरोधी, नतु कार्य-कारणभावप्रयुक्त इत्यत्रास्ति किमपि प्रमाणम्, उपपद्यते वा सा कल्पना। नहि मृद्घटयोरिदं-रजतयोर्वा भेदाभेदप्रयुक्तं सामानाधिकरण्यं केनापि वारयितुं शक्यते। सति चैवं "जन्माद्यस्य यतः" इति जिज्ञास्यब्रह्मणः कार्य-कारणभावेनैव लक्षितत्वात् शरीर-शरीरिभावेना-लक्षितत्वात् कार्य-कारणभावप्रयुक्तावेव भेदाभेदौ सूत्रेषु निर्दिश्येते । कुत्रचन शरीर-शरीरिभावावगमस्त्वन्त-र्यामिब्राह्मणादिधूपासनाविशेषं तेन रूपेण कर्तव्यमेव गमयति ॥

वस्तुतस्तु शरीर-शरीरिभावनिबन्धनमपि सामानाधिकरण्यम् "अहं स्थूलः" इत्यादिरूपं बाधाया-मेव ; शरीर-शरीरिभावस्यापि कल्पितत्वात्, इति शरीरात्मनोरप्यधिष्ठानाधिष्ठेयभावाख्यकार्य-कारणभाव-प्रयुक्तमेव सामानाधिकरण्यम्, इति शरीर-शरीरिभावप्रयुक्तं सामानाधिकरण्यमपि कथं शरीरस्थानीयानां स्थूल-सूक्ष्म-चिदाचित्प्रपञ्चानामधिष्ठानब्रह्मस्वरूपातिरिक्तस्वरूपान्तरसत्त्वे प्रमाणं भविष्यति ?

(१८) इदमत्रालोचनीयम्—"जन्माद्यस्य यतः" इति सूत्रविवक्षितः कार्य-कारणभावः कीदृशः ? किं केवलनिमित्तकारणत्वमात्रं वैशेषिक-नैयायिक-पातञ्जल-पाशुपत-श्रीमाध्वादिसम्मतम् ? उताभिन्न-निमित्तोपादानत्वरूपं शुद्धाद्वैत-द्वैताद्वैत-विशिष्टाद्वैताभिमतम् ? केवलाद्वैतव्यवस्थापितं वेति ? निमित्त-कारणत्वमात्रं हि ब्रह्मणः केवलानुमानगम्यत्वपक्ष एव संभावयितुं शक्यते, नतु तस्य श्रुतितात्पर्या-नुसरणे । आनुमानिकेश्वरकारणतावादस्तु वैशेषिक-नैयायिक-पातञ्जल-पाशुपतानां "पत्युरसामञ्जस्यात्" इत्यधिकरण एव निरस्तः, इति द्वैताद्वैत-विशिष्टाद्वैत-शुद्धाद्वैत-केवलाद्वैतवादिनः सर्व एव मन्यन्ते ॥

श्रीमाध्वानुयायिनस्तु "पत्युरसामञ्जस्यादि"ति परमात्मनो रुद्रत्वपक्षमेव सूत्रकारा अनेनाधि-करणेन निवारयन्ति, नतु तन्निमित्तकारणत्वमात्रवादम्, इति नोक्तमधिकरणं निमित्तकारणतामात्रपक्ष-विरोधि । "तदनन्यत्वमारम्भणशब्दादिभ्यः" इति सूत्रं तु ब्रह्मणो निमित्तकारणस्यासहायत्वमेव बोधयति, नतु कारणाभेदं कार्यस्य, इति नेदमधिकरणं स्वसिद्धान्तविरोधि। "प्रकृतिश्च प्रतिज्ञादृष्टान्तानु-परोधात्"इति सूत्रमपि पदसमन्वयपादगतत्वात् प्रकृतिपदस्य परमात्मनि प्रवृत्तिमेव व्यवस्थापयति, नतु परमात्मन उपादानकारणत्वं परिणामित्वरूपं विवर्तमानत्वरूपं वा । "जन्माद्यस्य यतः" इति सूत्रे

"यतः" इति पञ्चमीनिर्देशस्तु हेतावेव, नोपादानकारणत्वे हेतुत्वविशेषे। जायतेपदमात्रसमभिव्याहारे हि पञ्चमी प्रकृतित्वापरपर्यायमुपादानत्वं बोधयेत्। अत्र तु जन्मादीत्यादिपदप्रयोगान्न जन्ममात्रकारणत्वं प्रतिपाद्यते, किंतु स्थिति-लयादिकारणत्वमपि। नाहि स्थितिमपेक्ष्य श्रुतावपि पञ्चमी प्रयुज्यते। "येन जातानि जीवन्ती"ति तृतीयैव खलु तत्र दृश्यते। नवा लयमपेक्ष्य; "यत्प्रयन्ती"ति द्वितीयान्तमेव हि यत्पदं तत्राम्नायते। सति चैवं कथं "जन्माद्यस्य यतः" इति न हेतुमात्र एव पञ्चमी? केवलाद्वैतिनोऽपि "यतः इति हेतुनिर्देशः" इति वदन्तोऽत्रानुगुणा एव, इति कथं ब्रह्मोपादानत्वं सूत्रारूढम्? उपादानत्वं हि ब्रह्मणो विशिष्टस्यैव वक्तव्यम्, न तु शुद्धस्य; निर्धर्मकत्वात्। तत्रच न विशेष्यांशस्य परिणामित्वम्; निरवयवत्वात्। निरवयस्यापि परिणामित्वकल्पनायां तु नोपपत्तिं पश्यामः। नहि निरुपपत्तिः श्रुतिः प्रतिज्ञामात्रेणार्थं साधयति। विशेषणपरिणामित्वेन विशेष्यस्यापि परिणामित्वव्यपदेशो नामान्तरेण ब्रह्मकेवलनिमित्तकारणतावाद एव। गौणो हि तत्कारणत्वव्यपदेशः, न मुख्यः। अत्रहि मते ब्रह्मणो नामान्तरेणाकारणत्वमेव व्यवस्थाप्यते, इति कथं जन्मादिसूत्रं ब्रह्मलक्षणपरं स्यात्? ब्रह्मविशेषणस्य प्रकृतेः खलु कारणत्वं मुख्यो धर्मः, न ब्रह्मणः। अपृथक्सिद्धत्वात् प्रकृति-ब्रह्मणोर्ब्रह्मधर्मत्वेनापि व्यपदेश इति कल्पना तु न संभवति; नहि रूप-घटयोरपृथक्सिद्धिरिति रूपत्वमपि घटे पश्यामः। न ह्यन्यधर्मोऽन्यलक्षणम्; अव्यावर्तकत्वात्। परिणामिकारणत्वं हि न ब्रह्मण्येव, किन्तु प्रकृतावपीति कथमितरभेदो नाम? ब्रह्मण एव परिणामित्वमिति द्वैताद्वैत-शुद्धाद्वैतमतयोस्तु सत्यं जगत्कारणत्वं नेतरसाधारणमिति नेतरभेदानुपपत्तिः; तथाऽपि निरवयवब्रह्मपरिणामितावादो मम माता वन्ध्येतिवादवद् व्याहतार्थ इति जानीमः। ब्रह्मविवर्तमानतावादस्तु स्वकपोलकल्पनामात्रमिति "जन्माद्यस्य यतः" इति सूत्रं ब्रह्मकेवलनिमित्तकारणतावाद एव स्वरसम्। सर्वाणि ब्रह्मसूत्राणि तदविरोधेनैव नेयानीति श्रुतीनामपि तत्रैव पर्यवसानम्। नहि वयमपि ब्रह्मानुमानादिगम्यं पाशुपतागमादिगम्यं वा वदामः, किन्तु शास्त्रयोनि। "तदैक्षत बहु स्यां प्रजायेय" इति ब्रह्मण इतरभावसंकल्पस्तु मन्त्रिणो राजभावसंकल्पवद् गौण एव, नतु मुख्यः, इति न कोऽपि विरोधः। सर्वथा तु ब्रह्मकेवलनिमित्तकारणतायामेव ब्रह्ममीमांसोपनिषदादितात्पर्यमिति केवलद्वैतवादिनो मन्यन्ते। "पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति" इति केवलभेदज्ञानाद् मुक्तिप्रतिपादनमस्मिन्नेव मत उपपद्यते। न ह्यस्मिन् मते कर्मकाण्डस्योपासनाकाण्डस्य ज्ञानकाण्डस्य वा कस्यापि निरर्थकत्वम्, इति केवलद्वैतमतमेव श्रुतिसूत्राद्यनुगतम्, नापराणि मतानीति तदीयं हृदयम्॥

अन्ये तु मन्यन्ते—न सूत्रकारा ब्रह्मकेवलनिमित्तकारणतामात्रावलम्बिनः, किन्त्वभिन्ननिमित्तोपादनतामेवावलम्ब्यन्ते। न ह्यन्यथा—"न विलक्षणत्वादस्य तथात्वं च शब्दात्" इति कार्यकारणयोर्वैलक्षण्यानुपपत्तिः प्रयुक्ता सूत्रकाराणामुपपद्यत्ते। नहि निमित्तकारणस्य दण्डस्य, कुलालादेर्वा कार्येण सालक्षण्यं पश्यामः। सत्यं वेदाप्रामाण्यशङ्कानिरासपरमिदमधिकरणमिति केवलद्वैतिनो व्याचक्षते; परंतु नेदं विवरणं सोपपत्तिकं सप्रयोजनं वा। "शास्त्रयोनित्वादि"ति हि वेदप्रामाण्यं स्पष्टमेवोपक्षिप्तं सूत्रकारेण। "अत एव च नित्यत्वमि"ति वेदापौरुषेयत्वमेव पूर्वमेव व्यवस्थापितम्, इति कथं वेदाप्रामाण्यशङ्काया उत्थितिरपि? तदुक्तं केवलद्वैतभाष्ये देवताधिकरणे—"वाचा विरूपनित्यये"ति श्रुतेराप्त्यनिश्चयाद् नित्यत्वापेक्षत्वाच्च मूलप्रमाणस्य स्वतः प्रामाण्यसिद्धेश्च नित्यत्वाद्वेदस्ये"ति।

नाविलक्षणत्वाधिकरणेऽपि नित्यत्वेनैव वेदप्रामाण्यं व्यवस्थाप्यते, इति कथं न नविलक्षणत्वाधिकरणा-वैयर्थ्यं केवलद्वैतमते? एतेन—"कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा" इत्यादिसूत्राण्यपि—व्याख्यातानि; अत्र कृत्स्नप्रसक्त्यापादनमुपादानत्वमभिप्रेत्य, इति सर्वेऽप्यन्ये भाष्यकारा मन्यन्ते। केवलद्वैतभाष्यकारास्तु जीवकारणत्वे दोषप्रदर्शनपरतया श्रुतिमूलकत्वेन निरवयवकारणत्वव्यवस्थापनपरतयाऽमूनि व्याचक्षते। इदं च "जन्माद्यस्य यतः" "शास्त्रयोनित्वादि"त्यत एव सिद्धम्, इति व्यर्थमेवाधिकरणं तन्मते। एतेन "आत्मकृतेः परिणामात्" इत्यादिसूत्राण्यपि क्लिष्टकल्पनयैव केवलद्वैतभाष्यकारैर्योज्यमानान्यपि नितरां विरुद्धानि ब्रह्मकेवलनिमित्तकारणतावादे? किञ्च केवलनिमित्तकारणस्य ब्रह्मणोऽनुमानेनैव साधनसंभवात् शास्त्रयोनित्वादिसूत्रमपि तन्मते व्यर्थम्। नहि फलतः कोऽपि विशेषो वैशेषिकादिमतात् केवलद्वैतमतस्य। सति चैवम्—"तदनन्यत्वमारम्भणशब्दादिभ्यः" इत्यादिसूत्राण्यपि ब्रह्मोपादानता-पक्षस्यैवानुगुणानि। अनन्यत्वं हि अन्यराहित्यमेव, न सहायराहित्यम्, न वा निमित्तकारणतयाऽभि-मतं ब्रह्म जीवादृष्टादिसाहाय्यमपि प्रपञ्चसृष्टौ नापेक्षते, नवा प्रकृतिं स्वाधिष्ठेयामुपादानकारणं च, इति कथमसहायत्वं ब्रह्मणः संभवति? "प्रकृतिश्च प्रतिज्ञा-दृष्टान्तानुपरोधादि"त्यत्रत्यप्रतिज्ञा-दृष्टान्तानुपरोधः, अत्रत्यारम्भणशब्दादिश्चैक एव, इति न्यायैकत्वाद् उपादानत्वव्यवस्थापनपरतया योजनमेवाधिकरणद्वयस्यापि वक्तव्यम्। अनन्यत्वं नामाभेद एव स्वारसिकः, नतु बहुव्रीहिसमासकल्पनया क्लिष्टकल्पनम्। सत्यं प्रकृतिपदस्य ब्रह्मणि समन्वय एव "प्रकृतिश्चे"ति सूत्रतात्पर्यविषयः, सोऽपि तु प्रकृतिपदमुख्यार्थो-पादानत्वादिसमन्वयं विना कथं नाम घटते? "योनिश्च हि गीयते"इति योनित्वं ब्रह्मणो न निमित्त-कारणत्वमात्रामिति गमयाति; अन्यथा प्रकृतिपदार्थस्यैव ब्रह्मणि समन्वये विवक्षिते निमित्तकारणस्यैव सतो योनित्ववर्णनमत्र नोपपद्येत। "आत्मकृतेः परिणामात्"इत्यादीन्यपि न निमित्तकारणतामात्र उपपद्यन्ते। नहि निमित्तकारणमात्मानमेव कुर्वत् सत् परिणामयति। सति चैवम्—"जन्माद्यस्य यतः" इति सूत्रे "यतः" इति पञ्चम्यपि हेतुत्वबोधिकाऽप्युपादानत्वमपि ब्रह्मणो बोधयत्येव। इदं हि सूत्रं "यतो वे"ति वाक्यमारभ्य प्रवृत्तां सर्वामपि भृगुवल्लीमत्र विषयवाक्यतया निर्दिशति। तथाच—"यतो वे"ति प्रथमवाक्येन पञ्चम्योपादानमात्रबोधनेऽपि "तदैक्षते"त्यादिवाक्यसन्दर्भेण तस्यैवेक्षणकर्तृत्वोल्लेखात् प्रकरणस्याभिन्ननिमित्तोपादानसमर्पणात् तत्तात्पर्येणैव प्रवृत्तत्वात् प्रकरणार्थसंग्रहं मनसि निधायोभयविधमपि हेतुत्वं विवक्षितम्, इत्यभिप्रायेणैव शङ्करभगवत्पादानाम्—"यत इति कारणनिर्देशः" इति भाष्यम्॥

प्रकृतिविशिष्टमेव ब्रह्म स्थूलप्रपञ्चविशिष्टब्रह्मभावं प्राप्नोति, इति विशिष्टयोर्ब्रह्मणोरेव मुख्यः कार्य-कारण-भावः, इति न पृथक्सिध्यर्हयोः प्रकृति-ब्रह्मणोः परिणामिकारणाद्यंशेऽपि भावः संभवति। नेदृशमभिन्न-निमित्तोपादानत्वं ब्रह्मण्यमुख्यम्, नवा जगत्कारणत्वस्याव्यावर्तकत्वमिति न कोऽपि दोषः। न ह्येक-मप्यधिकरणं ब्रह्मनिमित्तकारणतामात्रपक्षानुगुणं वर्तते, इति सर्वसम्मतमिदम्। बहूनि हि सूत्राणि केवलद्वैतभाष्यकारैः सर्वेषामपि भाष्यकाराणामविषयाणि श्रुतिवाक्यान्यधिकृत्य प्रवृत्तानीति मन्यन्ते। बहवश्च भाल्लवीयादयः श्रुतयोऽश्रुतपूर्वाः, अप्रत्यक्षाश्च सर्वेषामपि दार्शनिकानामपरेषाम्, विषयवाक्यगतपद-विशेषणां वाक्यार्थनिर्णयादौ स्वोपष्टम्भकतया तैराश्रीयन्ते, इति कथं ब्रह्मसूत्राणि केवलद्वैतपराणि? निमित्तकारणमात्रब्रह्मपराणि वा? किन्तु विशिष्टब्रह्माभिन्ननिमित्तोपादानतावाद एव समुचित इति श्रीविशिष्टाद्वैतमतानुयायिनः॥

शुद्धाद्वैत-द्वैताद्वैत-केवलाद्वैतवादिनस्तु ब्रह्मणः केवलस्यैवोपादानत्वम्, नतु विशिष्टस्य। तत्रापि श्रुतिप्रामाण्याद् ब्रह्मणः परिणामित्वमिति शुद्धाद्वैतमतम्, केवलाद्वैतमतं तु विवर्तोपादानत्वमेव वस्तुगत्या, परिणामित्वं तु कृत्वाचिन्तयेति। श्रुत्यर्थसमन्वयो हि नियतकर्तव्य इति सर्वसम्मतामिदम्। यदि स निरवयवत्वाविरोधेन विवर्तमानत्वेन निर्वहति, किमिति तर्हि लोकन्यायविरुद्धमविकारिपरिणामवादेन तत्समन्वयः कर्तव्यः ? नहि परिणामित्वेनैव कारणस्य कार्येषु समन्वयः, इति शुद्धाद्वैतिनोऽपि स्वीकर्तुमर्हन्ति। शुक्तिरूप्यादौ सत्तानुवेधो हि विनाऽपि ब्रह्मपरिणामित्वं तैरपि स्वीक्रियते। नहि तन्मते शुक्तिरूप्यमपि ब्रह्मोपादानकम्, किन्त्वन्तःकरणस्यैव शुक्तिरूप्यादिकं परिणामः। सति चैवम्—"तत्तु समन्वयादि"ति सूत्रं घटादिषु सत्तानुवेधाद् ब्रह्मपरिणामिकारणतासाधकमिति न सङ्गतमिदं योजनम्। यथा चैतन्मते तदनन्यत्वाधिकरणाद्यनौचित्यम्, तदस्वारस्यं वा, तदनुपदमेव व्यक्तीकरिष्यते॥

अत्र च प्रसङ्गे विवरण ( ९०८-पृष्ठ ) गतानि केवलब्रह्मपरिणामवादानिरासपराणि वाक्यानि समालोचनमर्हन्ति।

"केचित्तु—ब्रह्मैव जगदाकारेण परिणमते मृदिव घटाकारेणेति—वदन्ति, तन्न ; विवर्तकारणत्वाद् ब्रह्मणः। एकस्य तत्त्वादप्रच्युतस्यासत्यानेकरूपावभासो विवर्तः। एकस्य पूर्वरूपपरित्यागेन सत्यरूपान्तरापत्तिः परिणामः। तत्र ब्रह्म न विवर्तते, किन्तु परिणमत एवेति तैस्तत्र प्रमाणं वक्तव्यम्। सृष्टिश्रुतेः परिणमत इति चेत्, सा खलु सृष्टिश्रुतिः ज्ञानानन्द-सत्य-निरवयवापरिच्छिन्न-ब्रह्मस्वरूपस्य पूर्वसिद्धस्य परित्यागेन जड-दुःख-मिथ्या-सावयव-परिच्छिन्नकार्यापत्तिं ब्रह्मणो ब्रवीति ? आहोस्वित् पूर्वसिद्धरूपापरित्यागेनैव तद्विपरीतकार्यरूपापत्तिं ब्रह्मणो ब्रवीति ? इति वक्तव्यम्। तत्र पूर्वरूपपरित्यागे ब्रह्मस्वरूपोच्छेदात् कार्यमात्रमेव स्यात्। पुनः प्रलयावस्थायां ज्ञानानन्दादिरूपेण परिणमत इति चेत्, अनिर्मोक्षप्रसङ्गात्। अत्र "आत्मा महान् ध्रुवः" "न जायते चे"त्यादिश्रुतिविरोधश्च स्यात्। अथ पूर्वविपरीतब्रह्मस्वरूपापरित्यागेनैव कार्यरूपापत्तिं ब्रूयात् सृष्टिश्रुतिः, एवं तर्हि विवर्तं प्रतिपादयति ; शुक्तिकारजत-मायाव्याघ्रादिषु विवर्तस्य तल्लक्षणत्वात्। अथ सृष्टिश्रुतिः सृष्टिमात्रविषया, न पूर्वस्वरूप-परित्यागयोर्व्याप्रियत इति चेत्, तथाऽपि व्यवस्थितब्रह्मवाक्यैरेकत्वात् तत्स्वरूपापरित्यागेनैव कार्यरूपापत्तिं ब्रह्मणो ब्रुवाणा विवर्तमेव दर्शयतीत्यनवद्यम्॥ योऽपि काश्चिदाह निरवयवमपि परिणमत इति। तथाहि—हेमद्रव्ये रुचकाकारेण परिणममाने तदवयवा अपि परिणमेरन् ? नवा ? इति वक्तव्यम्। यदि परिणमेरन्, तर्हि तदवयवा अपि तथा, इति निरवयवपर्यन्तः परिणामः स्यात्। अथ न परिणमेरन्, तर्ह्यवयवी न परिणमेत ; आश्रयविकारमन्तरेणाश्रितविकारायोगात्। तस्माद् यथा संयोगोऽवयव्येकदेशसमवेतः परम्परया निरवयवपरमाणुसंयोगपुरःसरः, तथा निरवयवपरिणामपुरःसरोऽवयविपरिणाम इति॥

स वक्तव्यः—कश्चायं परिणाम इति ? यदि तावत् स्वावयवानां पूर्वसंयोगात्

संयोगान्तरापत्त्या वाऽवयवान्तरसंयोगेन वा संमूर्च्छितावयवत्वं परिणामः, न तर्हि निरवयवे परिणामः ; स्वावयवाभावान्निरवयवस्य । नचावयवानां संयोगान्तरेण संमूर्च्छितत्वमन्तरेणावयविनः परिणामोऽवस्थान्तरं वाऽन्यथाभावो वा निरूपयितुं शक्यते । नच वस्तुनो वस्त्वन्तरसंयोगो वा परिस्पन्दो वा गुणान्तरोदयो वा परिणामः ; ब्रह्मणि तेषामभावात् । आकाशे च वस्त्वन्तरसंयोगिनि, परिस्पन्दमाने च भ्रमरे, लौहित्योदये च घटे द्रव्ये परिणामबुद्ध्यभावात् । अथ तदनुषक्तद्रव्यान्तरोत्पत्तिः परिणाम इति, तत्र किं हेमावयवानां रुचकरूपेणैव परिणामः ? किं वा द्रव्यान्तररूपेण ? न तावद् द्रव्यान्तररूपेण ; तत्र रुचकद्रव्यातिरिक्तकार्यद्रव्यादर्शनात्, नापि रुचकाकारेणैव ; तस्यावयविपरिणामत्वात्, अवयवानां च रुचकानुगमस्य रुचकानुगतावयव्यनुगमेनैवान्यथासिद्धत्वात् । नच रुचकावस्थाव्यतिरेकेण हेमावयवानामवस्थान्तराणि दृश्यन्ते, येन परिणामभेदः स्यात् । नच संयोगभेद एवावयवपरिणाम इत्युक्तम् । नचावयवि द्रव्यं विना हेमावयवा रुचकाकारेण परिणमन्त इति युक्तम् ; आरम्भवादप्रसङ्गात् । अथादृश्यमानोऽप्यवयवपरिणामोऽवयविपरिणामानुपपत्त्या कल्प्यते ; आश्रयविकारमन्तरेणाश्रितविकारानुपपत्तेः, *नैतत्सारम्*; अवयविजन्म-विनाशयोरवयवानामपि तत्तन्त्राणां जन्म-विनाशप्रसङ्गात्, अवयविगमनेऽवयवानां गमनवत् । परिणामोऽपि भविष्यतीति चेत्, न ; अवयविनि घटत्वजातिसमवायिन्यवयवानां घटत्वजातिसमवायाभावात् । *ननु* अवयवानामन्यथाभावमन्तरेण कथमवयविनोऽन्यथाभावः ? न हि द्रव्यस्यावस्थान्तरद्रव्यान्तरापत्तिवद् नैल्यं गुणान्तरमापद्यतेऽवस्थान्तरं वा । नचावयविकार्यव्यतिरेकेणावयवानां कार्यं दृश्यत इत्युक्तम् । न हि पटे कार्यान्तरावभासेऽपि तन्तवोऽतन्त्वात्मनाऽवभासन्ते । पटकार्ये तन्त्वनुगमः स्वानुगतानुगमादन्यथासिद्ध इत्युक्तम् । किंचावयविपरिणामोपाधावेवावयवपरिणामो दृष्टः, इति न निरुपाधिनिरवयवात्मपरिणामासिद्धिः ॥ यत्तु निरवयवसंयोगवत्परिणाम इति, तत्रापि दृश्यमानोऽवयविसंयोगो न परमाणुसमवेतः ; तद्गतरूपादिवदप्रत्यक्षत्वप्रसङ्गात् । नाप्यवयव्येकदेशसंयोगेन निरवयवे संयोगः कल्पयितुं शक्यते ; अवयविन्येव जातिसमवायवदवयवसंयोगमन्तरेणावयविन्येव संयोगोपपत्तेः । अवयवानां संयोगानुगमस्यावयव्यनुगमेनान्यथासिद्धत्वात् । अवयवेष्वेव संयोगो नावयविनीति चेत्, न ; अवयविभ्यामसंयुक्ताभ्यां कार्यान्तरानारम्भप्रसङ्गात् । तस्मादवयविन्येव संयोगः, नावयवेषु । अवयविसमवाये संयोगस्य, कृत्स्नवृत्तिता संयोगस्य प्राप्नोतीति चेत्, तर्हि निरवयवसंयोगेऽपि कृत्स्नवृत्तेः प्रचयाभावप्रसङ्ग इति । कथं पुनर्ब्रह्मणो निरवयवत्वलाभः ? उच्यते ; अवयवावयविनोः स्वयंप्रकाशत्वे सतीतरेतराविषयत्वान्न सावयवत्वं ब्रह्मणा स्वात्मन्यनुभवितुं शक्यम् । अन्यतरस्यास्वयंप्रकाशत्वेऽन्यतरेण वेद्यत्वाद् घटात्मनोरिव नांशांशिभावसिद्धिः । श्रुतिश्च

"निष्कलं निष्क्रियं शान्तमि"ति क्रियावयवशून्यतामाह । नियन्तृत्वादिक्रियाऽपि श्रूयत इति चेत्, तर्हि परस्परविरोधे सति मायया तत्त्वातत्त्वव्यवस्था कल्पनीया । "मायाभिः पुरुरूप ईयते" इति प्रवृत्तेर्मायानिबन्धनत्वश्रवणात्, चेतनस्य सुषुप्ते पुरुषार्थत्वावगमात्, ब्रह्मणः स्वतः प्रवृत्तिप्रयोजनाभावाच्च विपरीतस्वरूपापरित्यागेन विपरीतकार्यापत्तेश्च विवर्त एवेति सिद्धम्" इति ॥

"मृत्तिकेत्येव सत्यम्" इति मृत्तिकादृष्टान्तस्तु न विवर्तवादाविरोधी । नहि ब्रह्मसाक्षात्कारपर्यन्तं घटादीनां विवर्तत्वं निर्धारितम्, इति व्यावहारिकेष्वपि कार्यमात्रमिथ्यात्वोपपादनार्थं न मृत्तिकोदाहरणं विहायाऽस्ति काऽपि गतिः । ब्रह्मपरिणामित्वे हि घटादीनां मृदादेश्चैकरूपमेव सत्यत्वम्, इति 'मृत्तिकेत्येव सत्यमि"ति मृत्तिकामात्रसत्यत्ववर्णनं कथमुपपद्यते ? वाचारम्भणवाक्यं च मतान्तरेषु क्लिष्टकल्पनाभिरन्यथा नीयते । स्वरूपव्याक्रियैव पराक्रियेति न्यायेन तदीयां प्रक्रियामत्र निर्दिशामः ॥

"वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि"ति श्रूयते ॥ वाचा=व्यवहार-व्याहारो-भयार्थम्, विकारो घटादिः, नामधेयं संज्ञा च स्पृश्यते । "मृन्मयमि"ति पूर्ववाक्यादनुषज्यते । तथाच "घटादिकं मृत्तिके"त्येव सत्यम्=प्रमितामि"ति वाक्यार्थवर्णनेन—अन्ये मृद्-घटयोरिव परिणामि-परिणाम-योरभेद एवोक्तश्रुत्यर्थ इति वर्णयन्ति । अत्र "मृत्तिकापदं कारणब्रह्मोपलक्षणम्, मृन्मयपदं तु कार्य-सामान्योपलक्षणम्, इति जगद्-ब्रह्मणोरभेदसाधनं क्रियते, इति तदाशयोऽपि तदीये ग्रन्थे विशद एव ॥

इदमेवात्रालोचनीयम्—यद् मृद्-घटयोरिव ब्रह्म-प्रपञ्चयोरेकद्रव्यत्वं किं तन्मतम् ? उत नेति ? आद्ये ब्रह्मविकार्यत्वापत्तिः । द्वितीये तच्छरीरसूक्ष्मचिदचितोः स्थूलचिदचितोश्चैकद्रव्यत्वसाधनेन यदि तद्-द्वारैकविज्ञानेन सर्वविज्ञानं साध्यते, तर्हि न केवलं क्लिष्टकल्पना, किन्तु दृष्टान्तास्वारस्यमपि । स्वतःपरिणममानमृत्तिकादृष्टान्तेन परिणममानप्रकृतिशरीरकब्रह्मपरीक्षणे हि कथं तद्दृष्टान्तस्वारस्यम् ? अतः स्वयमनुवर्तमानब्रह्मरूपकारणसत्यत्वविवक्षायामेवोक्तवाक्यस्वारस्यमङ्गीकर्तव्यम् । सति चैवमनुवर्त-मानं कारणं सत्यम्, विकारास्तु व्यावर्तमानाः सद्विलक्षणा मिथ्या, इति सन्, परमार्थः, अनुवर्तमानत्वात्, विकाराः, मिथ्या, व्यावर्तमानत्वादित्यनुमानद्वयमेवात्र विवक्ष्यते । सति चैवं वेदैकप्रमाणसिद्धोऽभेदस्त-द्व्यतिरेकेणाभावरूपो निरूपितो भवति । परिणामि-परिणामयोरभेदसाधनं हि लोकसिद्धं न श्रुतितात्पर्यविषयतामर्हति । सति चैवं वाचारम्भणशब्दस्य नामधेयशब्दसमभिव्याहृतस्य मिथ्येत्यर्थ एव युक्तः । तथाच कारणव्यतिरेकेण कार्याभावसाधनेन मृत्तिकापदस्य सर्वकारणब्रह्मोपलक्षणत्व-स्वीकारेण च ब्रह्मणो विवर्तोपादानत्वसाधने दृष्टान्तस्वारस्यमपि भवति ॥

अयं भावः—इदं हि वाक्यं नोपादानोपादेययोरभेदबोधनार्थे प्रवृत्तम्, किन्तूपादानमात्रसत्यत्वव्यव-स्थापनद्वारा "ब्रह्मविवर्तोपादानत्वसूचनेनैकविज्ञानेन सर्वविज्ञानप्रतिष्ठापनार्थम्, इति प्रतिज्ञा-दृष्टान्तानुपरोध-साध्यमुपादानत्वं ब्रह्मण एव विवक्षितमद्वैतमत एव निर्वहतीति सिद्धम् । मतान्तरे वाचारम्भणश्रुत्यर्थे वाचापदस्य व्यवहार-व्याहारोभयपरत्वम्, "मृत्तिकेत्येव सत्यमि"त्यत्र मृण्मयपदाध्याहारः, आरम्भण-पदेनालम्भनपदकल्पना, विकारमात्रस्यैव घटादिरूपस्य कारणेनाभेदसाधनस्याभीप्सितत्वात्, नामधेयप्राप्त्यु-पादानवैयर्थ्यम्, मृत्तिकादृष्टान्तायोग इत्यादीनि बहूनि दूषणानि । अद्वैतमते तु मृत्तिकापदस्यानुवर्तमान-कारणपरत्वात् तेन च प्रातिभसिक-व्यावहारिकोभयसाधारणस्योपादानस्य विवक्षणात् प्रातिभासिकमिथ्या-

त्वस्य तदुपादानसत्यत्वस्य च लोकसिद्धत्वेनासाधनीयत्वेन व्यावहारिकमिथ्यात्वसाधनस्यैव प्रातिभासिकदृष्टान्तेन विवक्षितत्वान्मृत्तिकेतिपदोपादानसार्थक्यम्, पूर्वोक्ताध्याहारादिदोषाभावश्चेति न किञ्चिदनुपपन्नम् ॥

इदमेवाभिप्रेत्य सूत्रितम्—"तदनन्यत्वमारम्भणशब्दादिभ्यः" इति । तदनन्यत्वपदेन तदभिन्नत्वं यदि विवक्ष्यते, तर्हि तदभिन्नत्वसाधने परोक्तरीत्या "मृत्तिकेत्येव सत्यमि"त्यस्यैव वाक्यस्याध्याहारेण व्याख्यानस्योपयोगात् "आरम्भणशब्दादिभ्यः" इत्यनुपपन्नं भवति, इति तद्व्यतिरेकेणेतरशून्यत्वमित्यद्वैतिनां विवरणमेव युक्तम् । तदनन्यत्वपदेन ह्यद्वैतसम्मतार्थविवरणे हि ब्रह्मेतरमिथ्यात्वं बोध्यते, इति "आरम्भणशब्दादिभ्य इति" सौत्रहेतुस्सर्वथा सार्थकः । न विद्यतेऽन्यद् यस्य तद् अनन्यम्, अनन्यस्य भावोऽनन्यत्वम् । तस्यानन्यत्वं तदनन्यत्वमिति, स्वेतरशून्यत्वं ब्रह्मणो बोध्यते । यद्यप्यत्र साध्यपदे बहुव्रीह्यादिकल्पनेन क्लेश इव प्रतीयते ; तथाऽपि सौत्रहेतुपदसार्थक्यार्थं सोढव्य एवायमिति तत्त्वम् । तदिदं सिद्धम्—यत्—'जन्माद्यस्य यतः" इति सूत्रोपाक्षिप्तं ब्रह्मोपादानत्वं भगवत्पादाभिप्रेतमेवेति ॥

अद्वैतिनोऽपि सत्यं परिणामवादं स्वाकुर्वन्ति । "भोक्त्रापत्तेरविभागश्चेत् स्याद् लोकवत्" "कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा" इत्यादौ, परन्तु कृत्वाचिन्तया, न तत्परतया । व्यक्तं तदाकर एव । "परिणामात्" इति सूत्रं तु "विवर्तादित्यर्थकमि"ति वार्तिककारास्तस्मिन् सूत्रे विवेचयन्ति । निरवयत्वाविरोधेन कार्य-कारणभावकल्पना लोकन्यायाबाधेन विवर्तवाद एव संभवति, नान्यत्र । तथाच ब्रह्मविवर्तोपादानतावादस्यैव "जन्माद्यस्य यतः" इति सूत्रारूढत्वाद् निर्विशेषब्रह्मवादे न जन्मादिसूत्राणामपि विरोधः । विवर्तोपादानता परिणममानाविद्याविषयत्वम्, इति न तद् निर्विशेषताविरोधि । अत्रेमानि (९०७ पृष्ठ) विवरणवाक्यानि—

> "त्रैविध्यमत्र सम्भवति—रज्ज्वाः संयुक्तसूत्रद्वयवन्मायाविशिष्टं ब्रह्म कारणमिति वा "देवात्मशक्तिं स्वगुणैर्निगूढामि"ति श्रुतेर्मायाशक्तिमत्कारणमीति वा, जगदुपादानमायाश्रयतया ब्रह्म कारणमिति वेति । तत्र विशिष्टपक्षे तथैव ब्रह्मत्वेनोपलक्षितस्य ज्ञानानन्दादिस्वरूपलक्षणेन मायानिष्कर्षाल्लक्षणद्वयेन विशुद्धब्रह्मसिद्धिः । उत्तरपक्षयोस्तु मायाया ब्रह्मपरतन्त्रत्वात् तत्कार्यमपि ब्रह्मपरतन्त्रं भवति ; यथांऽशुतन्त्रतन्त्वारब्धोऽपि पटोंऽशुतन्त्रः प्रतीयते । ततश्चोत्पद्यमानकार्यस्य यद् आश्रयोपाधि ज्ञानानन्दलक्षणं च, तद् ब्रह्मेति शुद्धब्रह्मलाभः" इति ॥

(१९) सति चैवं मायोपहितत्वेन तस्यैवेश्वरत्वात्तु भक्तिमार्गः, कर्ममार्गो वा नाद्वैतवादं विरुणद्धि । अद्वैतिनो हि परमार्थगत्या ब्रह्मनिर्विशेषतां स्वीकुर्वन्तोऽपि तस्येश्वरत्वं जीवत्वमिन्द्रादिदेवरूपत्वादिकं च न निषेधन्ति यावद्ब्रह्मसाक्षात्कारम्, इति चित्तशुध्याधायकत्वेन कर्मणाम्, चित्तैकाग्र्यसाधनत्वेनोपासनानां चोपयोगं मन्यन्ते ॥

तदयं निष्कर्षः—ज्ञान-कर्मसमुच्चयवादिनः केचन, केचन कर्माङ्गज्ञानवादिनः । तत्र प्रथममतावलम्बिनो भट्टभास्करादयः । भगवद्रामानुजादयस्तु द्वितीयमतावलम्बिनः । मतद्वयेऽपि ज्ञानं चोपासनं चेत्यनर्थान्तरम् । अद्वैतिनस्तु कर्मणां चित्तशुद्धिमात्रेणोपक्षयाद् जन्मान्तरीयेणापि तत्संभव

इह तदनुपयोगाद् न कर्म ज्ञानाङ्गम्, न वोपासनाङ्गम्, किन्तु ज्ञानमात्रमेव मोक्षसाधनम्। उपासनमपि भक्त्यपरपर्यायं कर्मसमानयोगक्षेममेव, इति कर्म-ज्ञान-भक्तीनां त्रयाणामुपयोगं व्यवस्थापयन्ति। साति चैवं मतान्तरेषु मार्गद्वयमेव, नतु मार्गत्रयम्, इति काण्डत्रयविभागोऽप्यद्वैत एवोपपद्यते, न मतान्तरेषु। तत्र कर्मकाण्डेन त्वंपदार्थजविस्वरूपनिष्कर्षः, उपासनाकाण्डेन तत्पदार्थेश्वरस्वरूपनिष्कर्षः, ज्ञानकाण्डेन तु तयोः पारमार्थिकस्वरूपनिष्कर्षः, इति तत्त्वमसिमहावाक्यशेषता सर्वेषामपि वेदवाक्यानामद्वैतमत एव भवति, यतोऽध्यारोपापवादन्यायेन ब्रह्मस्वरूपबोधनार्थमेव सर्वे वेदान्ताः प्रवर्तन्ते। मतान्तरेषु तु भगवत्स्वरूपे सगुण एव सर्वेषां वेदवाक्यानां पर्यवसानात्, जीवस्वरूपमपि वेदान्तेषु ब्रह्ममीमांसायां वा न शोधनीयमवशिष्यते, इति व्यक्तमिदमन्यत्र ॥

(२०) तत्र जीवो नाम निरतिशयप्रेमास्पदोऽहंप्रत्ययगोचरश्च पुत्र एव ; "आत्मा वै पुत्रनामासी"ति श्रुतेरिति प्राकृता जनाः। पुत्रपरित्यागेन दह्यमानाद् गृहात् स्वशरीररक्षणार्थं बहिर्निर्गमदर्शनात्तु शरीरमेवात्मा, न पुत्र इति चार्वाकाः ; "स वा एष पुरुषोऽन्नरसमयः" इति श्रुतेः। "ते ह वा प्राणा ऊचुः" इत्यादिश्रुत्यनुसारेण स्थूलशरीरनाशेऽपि स्वप्न इन्द्रियादिभिर्व्यवहारदर्शनेन चेन्द्रियाण्येवात्मेति चार्वाकैकदेशिनः। "तस्माद्वा एतस्मादन्योऽन्तर आत्मा प्राणमयः" इति श्रुतिरत्र प्रमाणम्। प्राणोऽपि क्रियाशक्तिमदन्तःकरणमेव, नतु ज्ञानशक्तिमदन्तःकरणम् ; सर्वदा च संशयानः स्मरन् गर्वित एव तु सर्वोऽपि लोको दृश्यते, इति मन एवात्मेति केचन वदन्ति। एतन्मतोपष्टम्भस्तु—"अन्योऽन्तर आत्मा मनोमयः" इति श्रुतिः। एवं निश्चियात्मकबुद्धिः क्षणिकैवात्मा, तस्या एवाकारोऽर्थो नाम ; स्वप्ने तथा दर्शनात्, इति विज्ञानवादावलम्बिनो विज्ञानमेवात्मेति—"अन्योऽन्तर आत्मा विज्ञानमयः, इति श्रुतिमनुसृत्य वदन्ति। "अविनाशी वाऽयमात्माऽनुच्छित्तिधर्मे"ति जीवात्मनित्यत्वावगमादुत्पत्तिविनाशशालित्वायोगादविकारि शून्यमसदेवात्मेति केचनापरे सौगता वदन्ति—"असदेवेदमग्र आसीत्" इत्यादिश्रुतेः। "असन्नेव स भवति, असद् ब्रह्मेति वेद चेत्" इति श्रुतावसद्वादनिन्दाश्रवणात् सद्रूप एवात्मा जीवः। स च "सधीः स्वप्नो भूत्वाऽनुसंचरती"त्यदिश्रुतेर्जाग्रदाद्यवस्थायामहामिति प्रतीयमानः शरीरेन्द्रिय-मनो-बुद्ध्यादिविलक्षणोऽपि ज्ञान-सुखाद्याश्रयोऽहमर्थरूपो यावन्मुक्ति सदैवाहंभावेनानुवर्तते ॥

मुक्तिपूर्वक्षणपर्यन्तमहमित्यभावसः प्रतीयत इत्यत्र तु न कस्यापि विप्रतिपत्तिः ; मुक्त्यनन्तरमपि तदनुवृत्तिरपेक्षितैव। अन्यथा—

> "अहमर्थविनाशश्चेद् मोक्ष इत्यध्यवस्यति।
> अपसर्पेदसौ मोक्षकथाप्रस्तावगन्धतः ॥"

स च नैयायिकाद्यभिमतः पूर्वमेवोपक्षिप्तः। सुषुप्त्यवस्थायामप्यहंभावोऽनुवर्तत एव ; न ह्यन्यथा 'सुखमहमस्वाप्समि'ति जीवात्मप्रतिसन्धानं जाग्रद्दशायामुपपद्यते। स च सर्वगत इति सांख्य-वैशेषिक-नैयायिक-पातञ्जल-मीमांसकाः, मध्यमपरिमाण इति जैनाः, अणुरिति पाशुपत-पाञ्चरात्र-केवलद्वैत-शुद्धाद्वैत-विशिष्टाद्वैतादिमतानुयायिनः। द्वैताद्वैत-केवलाद्वैतानुयायिनस्तु स्वतो व्यापकः, औपाधिकस्तु मध्यमपरिमाणो जीव इति "तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्" इत्यादिसूत्रानुसारेण वर्णयन्ति। जीवात्मव्यापकतामात्रवादे—"बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्टः" इति श्रुतिरप्रमाणं

स्यात्, केवलमध्यपरिमाणत्वे तु "स वा एष महानज आत्मे"त्यादिश्रुतिविरोधः। जीवाणुपरिमाणतापक्षे तु सर्वगतत्वश्रुतेरुक्ताया ईश्वरविषयत्वम्, नतु जीवविषयत्वमिति विषयान्तरपरतया नयनम्। द्वैताद्वैत-केवलाद्वैतयोस्तु जीवस्य स्वाभाविकौपाधिकरूपद्वयाविषयकत्वेन श्रुतिद्वयं व्यवतिष्ठते ॥

तत्र मुक्त्यवस्थायां ब्रह्मणः पृथगवस्थाय ब्रह्मानन्दानुभवितृत्वं केवलद्वैतमते, विशिष्टाद्वैतादिमते तु ब्रह्मशरीरभावेन जीवानां ब्रह्मापृथक्सिद्धतयाऽवस्थानात्। मुक्त्यवस्थायां हि जीवस्यापि सर्वगतविकासितधर्मभूतज्ञानद्वारा व्यापकत्वमपि न विरुद्धमिति त्वन्यदेतत्। द्वैताद्वैतमते केवलाद्वैतमते चोपाधिभूताहङ्कारविलयाद् ईश्वरभावो मुक्तौ जीवस्य। इयान् विशेषः—यत् केवलाद्वैतमतेऽनेकजीववाद एव यावत्सर्वमुक्तीश्वरभावः, पक्षान्तरे तु सर्वदा, सर्वमुक्तौ तु केवलाद्वैतमते निर्गुणब्रह्मभाव इति ॥

तत्र प्रथममत ईश्वरशक्तिस्थानीया प्रकृतिः कदापि न नश्यति, द्वितीयमते तु सा नाशमर्हतीति विशेषान्तरमप्यनुसन्धेयम्। सूक्ष्मेक्षिकया समालोचने तु जीवस्यापि ब्रह्मशक्तिरूपेण रूपान्तरं द्वैताद्वैतमते, केवलाद्वैतमते तु कारणब्रह्मरूपत्वमिति विशेषोऽप्यनुसन्धानमर्हति ॥

तदयं निष्कर्षः—केवलद्वैतमते—स्वस्वामिभावो जीव-ब्रह्मणोः, विशिष्टाद्वैतमते शेष-शेषिभावः, शरीर-शरीरिभावो वा, द्वैताद्वैतमते शक्ति-शक्तिमद्भावः, केवलाद्वैतमते तु स्वरूपाभेद इति। निर्णयस्तु जीवस्वरूपस्य जीवत्वोपाधिनाऽहमर्थत्वमेव सर्वेषु मतेषु। जीवत्वोपाध्यपगमसंभवासंभवयोश्च मतान्तरैरस्साकमद्वैतमतस्य विप्रतिपत्तिः। उपाधिस्तु कारणशरीरं जीवस्य व्यष्ट्यज्ञानम्, यत्तु जाग्रदाद्यवस्थात्रयानुगतम्। सूक्ष्मरूपावस्थस्यान्तःकरणस्य मूलाविद्यावस्थाभेदत्वेन व्यष्ट्यज्ञानत्वादन्तःकरणोपाधित्वपक्षेऽपि सुषुप्त्यवस्थायां जीवावस्थानं न विरुद्धम्। तत्र जाग्रदवस्थोपहितो विश्वः। स्वप्नावस्थोपाहितस्तैजसः। सुषुप्त्यवस्थोपाहितः प्राज्ञः। तत्र स्थूल-सूक्ष्म-कारणशरीरत्रयोपाहितो विश्वः। सूक्ष्म-कारणशरीरद्वयोपाहितस्तैजसः, कारणशरीरमात्रोपहितः प्राज्ञः। आद्योऽन्नमयस्वरूपः, द्वितीयस्तु प्राणमय-मनोमय-विज्ञानमयस्वरूपः, प्राज्ञस्त्वानन्दमयः, इत्यानन्दमयस्यापि जीवत्वपक्षेण विवरणम्। अधिकं तु वेदान्तसारादौ व्यक्तम्। इदं चाद्वैतमतानुसारेण, यत्र न केवलं जीव-ब्रह्मणोः, किन्तु जीवेश्वरयोरपि कथंचन भेदाविरोध्यभेदरूपं तादात्म्यं स्वीक्रियते। "गुणादिकं गुण्यादिना भिन्नाभिन्नं समानाधिकृतत्वात्" इत्यनुमानेन भाट्टा इवाद्वैतिनोऽपि गुण-गुण्यादाविवावयवावयविनोरपि तादात्म्यमूरीकुर्वन्ति ॥

(२१) तथाच व्यष्टि-समष्ट्योरपि तादात्म्याद् व्यष्ट्युपहित-समष्ट्युपहितयोरपि तादात्म्यं वर्तत एव, इति जीवेश्वरतादात्म्यमपि न विरुद्धम्। ईश्वरो हि नाम पूर्वोक्तस्थूल-सूक्ष्म-कारणशरीराणां समष्टिरूपेणोपहितं चैतन्यमेवेति हि केवलाद्वैतिनः। अत्र विराट्-हिरण्यगर्भान्तर्यामिभेदेनौपाधिकनामभेद ईश्वरस्यापि वर्तते। नैवं तु मतान्तरेषु। जीवेश्वरयोरौपाधिकमेव स्वरूपम्, न पारमार्थिकम्। इदंतु समानम्—यत् प्रकृतिविशिष्टं चैतन्यमेवेश्वरो नामेति, इयान् विशेषः—नेदमेव स्वरूपमीश्वरस्य, किन्तु पारमार्थिकं रूपान्तरं ब्रह्म नाम। निर्गुणं तु पारमार्थिकं जीवस्येश्वरस्य वा रूपम्। निर्गुणं तु ब्रह्म न प्रामाणिकमिति परे। प्रामाणिकमिति तु (९४१ पृष्ठे) विवरणाचार्याः। यथा—

"आनन्द एव हि ब्रह्मत्व-सर्वज्ञत्व-कारणत्वादिधर्मवत्तया निरुपाधि ब्रह्मस्वरूपं निर्णीयते। तथाहि—"यत्र नान्यत् पश्यती"त्यारभ्य "यो वै भूमा तत् सुखमि"ति सुखस्यैव बृहत्त्वधर्मवत्तामाह। विज्ञानं तर्हि निरुपाधिकब्रह्मगुण इति चेत्, किं

विज्ञानानन्दयोः सामानाधिकरण्यं नीलोत्पलवद् गुण-गुणिभावात् ? किं वा द्रव्यं घट इतिवत्परापरसामान्यभावादिति ? न तावद् गुण-गुणिभावात् ; "साक्षी चेता केवलो निर्गुणश्चे"ति श्रुतेः, 'एकधैवानुद्रष्टव्यं नेह नानास्ती'ति च गुण-गुणिभाव-भेदप्रतिषेधात्, गुणस्य गुणिनोऽन्यत्वानन्यत्वाभ्यामानिरूपणात् ॥

अत्र सर्वसङ्करवादी न निर्गुणं द्रव्यमस्तीति जल्पति। मा भून्निर्गुणं द्रव्यम्, ब्रह्म तु न द्रव्यम् ; प्रमाणाभावात्। समवायिकारणत्वाद् द्रव्यमिति चेत्, न ; आरम्भवादानभ्युपगमात्। उपादानकारणत्वाद् द्रव्यमिति चेत्, न ; गुणादीनामपि ग्रहणकर्मत्वादिधर्मोपादानत्वात्। न निर्गुणं वस्त्विति चेत्, अन्त्यगुणेष्वनेकान्तः। तस्मात्तत्त्वज्ञानप्रद्वेषमात्रमेतद्—न निर्गुणं ब्रह्मेति। तस्माद् 'द्रव्यं घटः' 'सन् घटः' इतिवत्परापरसामान्यनिबन्धनं विज्ञानमानन्दमिति सामानाधिकरण्यम्। तस्माद् विज्ञानसामान्यालम्बनमानन्दविशेषो ब्रह्मेति। तत्र सर्वज्ञाद्वितीयत्वादिधर्माणां प्रपञ्चोपाधितयाऽनिर्वचनीयत्वान्न तैर्ब्रह्म सगुणं सद्वितीयं वा भवति। विज्ञानसामान्यमपि दुःख-रागादिप्रपञ्चोपाधितयाऽनिर्वचनीयं सद् ब्रह्मणि विज्ञानशब्दप्रवृत्तिमात्रहेतुर्भवति। विज्ञानगुणत्वाभावे न विज्ञानं ब्रह्मेति चेत्, न ; विज्ञानसामान्यालम्बनस्य विज्ञानव्यवहारगोचरत्वात्, विज्ञानप्रयुक्तार्थ-क्रियाकारित्वाच। सामान्यस्याभासत्वात् तदालम्बनं मिथ्याज्ञानमिति चेत्, न ; मुख्यसामान्यान्तराभावात्, अस्यैव च मुख्यत्वात्। तस्माद् विज्ञानस्वभाव आनन्दो ब्रह्म इति ॥

(२२) तदिदं सिद्धम्—यत् स्वतो निर्गुणमपि प्रकृतिवशात्सगुणमिव केवलं ब्रह्म। निर्गुणपदं हि श्रुति-स्मृतीतिहास-पुराणेषु दृश्यमानमसंकोचेन विव्रियमाणमद्वैतमतमेवोपबृंहयति, इति हेयगुणराहित्यपरतया विवरणं चिन्त्यमूलमेव। श्रुत्यर्थसंग्रहरूपा भगवद्गीताऽपि "ज्ञेयं यत्तत्प्रवक्ष्यामी"त्युपक्रम्य निर्गुणपदेनैव ब्रह्मस्वरूपमुपदिशति। कथमन्यथा नोपदिशति निर्दोषमिति ? कथं च मतान्तेषु न 'निर्गुणमि'ति "नान्त-रिक्षेऽग्निश्चेतव्यः" इतिवदप्रमाणमापद्यते। भ्रान्तिप्रसक्तास्सत्त्वादिगुणा निषिध्यन्त इति तु नेयं यथार्थख्याति-रख्यातिर्वा, अनिर्वचनीयख्यातौ तु नायं पर्यनुयोगः। यतोऽविद्यावशाद् ब्रह्मणि सत्त्वादिगुणा धर्म-मात्रं वा नाप्रसक्तमेव निषिध्यन्ते ॥

(२३) अविद्या, माया, प्रकृतिरिति तु नामभेदमात्रम्, नतु भिन्नं स्वरूपम्। "अन्धेन तमसाऽऽवृताः" "मृत्युनैवेदमावृतमासीत्" "तमसा गूढमग्रे प्रकेतम्" 'माययाऽपहृतज्ञानाः" इत्यादिवचनानि हि विक्षेप-शक्तिमिवावरणशक्तिमपि तस्या वर्णयन्ति नान्यत्राद्वैतदर्शनात्स्वरसानि भवन्ति। सर्वदर्शनसम्मतमिदमविद्या-मायादिपदगम्यं स्वरूपम्, यत् "प्रकृतिं स्वामवष्टभ्य संभवाम्यात्ममायया" इत्यादौ प्रकृत्यादिपदेन व्यप-दिश्यते। अत्र "आत्ममायया प्रकृतिमवष्टभ्ये"ति प्रकृति-मायापदयोः प्रयोगादावरणशक्तिरपि तस्या गीताभिप्रेतेति जानीमः। सर्वथा तु तस्या विक्षेपशक्तौ न कस्यापि विप्रतिपत्तिः ॥

आवरणशक्तिमात्रे तु तस्याः परे विप्रतिपद्यन्ते। सति चैवं प्रकृतेरावरणशक्तिसिद्धौ निर्विशेषं ब्रह्म, इतरथा तु सविशेषमेव। यथा च मायाया आवरणशक्तिरपि प्रामाणिकी, तथा व्यक्तमन्यत्र। मायावादोऽयं

न केवलमौपनिषदः ; किन्तु सर्वदर्शनासिद्धः, इति कथं "मायावादमसच्छास्त्रमि"ति वचनं शांकरमेव दर्शनं विषयीकरोति । नं हि शाङ्करं दर्शनमसच्छास्त्रम् । न हि तन्मते नामरूपे ब्रह्म वा कर्म वोपासना वा ज्ञानं वा तत्फलं वा शास्त्रं वाऽसत् । इति कथं वेदं पद्मपुराणवचनं तत्र गीतासारव्याजेनाद्वैतस्यैव व्यवस्थापनाद् अद्वैतवादं गोचरयेत् ?

मायाप्रतिविम्बमीश्वरचैतन्यम्, अविद्याप्रतिविम्बं जीवचैतन्यम्, विम्बचैतन्यमीश्वरः, प्रतिविम्बचैतन्यं तु जीवः, अथवा मायाविद्याद्युपहितत्वेनैव जीवेश्वरविवेक इत्यादयो बहवः प्रकारभेदाः सिद्धान्तलेशसंग्रहादिषु विस्तृताः । मायाविशिष्टस्यैवेश्वरत्वेऽपि मायैव परिणमते, नेश्वरः । उपाधिरेव हि माया, न विशेषणम्, इति न ब्रह्मणः परिणामित्वव्यपदेशयोग्यता केनापि रूपेणेत्यद्वैतमतम् । विशिष्टाद्वैतमतं तु मायाया विशेषणत्वाद् विशिष्टमेव परिणामितया व्यपदेशमर्हतीति । सत्यमीश्वरत्वमद्वैतमते मायाविशेषणत्वेनैव, नतु मायोपाधित्वेन, तत्साक्षित्वमेव तु मायोपाधित्वेन ; तथाऽपि कारणत्वं विवर्तोपादानत्वं नेश्वरत्वेन, किन्तु जीवेश्वरानुस्यूतचैतन्यत्वेनैवेति सिद्धान्तलेशसंग्रहादौ व्यक्तम् । सति चैवं ब्रह्मपरिणामित्वव्यपदेशोऽद्वैतमते गौण एव, नतु मुख्यो विशिष्टाद्वैतमत इव । ईश्वरस्य तस्य सर्वज्ञत्व-सर्वशक्तित्व-सत्यकामत्व-सत्यसंकल्पत्वादिगुणगणपरिच्छेदे यावदीश्वरसत्त्वमद्वैतिनोऽपि न विप्रतिपद्यन्ते । ईश्वरोऽपि जीवादिवद् ब्रह्मसाक्षात्कारपर्यन्तमनुवर्तमानत्वाद् व्यावहारिक एव । पारमार्थिकं त्रिकालाबाध्यं च सत्त्वं ब्रह्मचैतन्यस्याद्वितीयस्यैव । सति चैवं विगतान्तःकरणाद्युपाधिकं जीवत्वेश्वरत्वाद्युपाधिसम्बन्धशून्यं च सच्चिदानन्दरूपं नित्य-शुद्ध-बुद्ध-मुक्त-स्वभावं त्रिकालाबाध्यं सर्वाधिष्ठानं च स्वरूपमात्रमेव ब्रह्म, नतु जीवः, ईश्वरो वा । ब्रह्म हि चैतन्यरूपमप्यनादिनाऽविद्यासम्बन्धेनावृतत्वात्, केनचन रूपेण प्रकाशमानत्वाच्च, कदाचन 'सन् घटः' इति सदात्मना, कदाचन 'घटो भाती'ति चिदात्मना, कदाचित्तु 'घट इष्टः' इत्यानन्दात्मना च प्रकाशते । सर्वात्मना ज्ञाने तु मुक्तिस्तस्य, खण्डात्मना ज्ञाने तु बन्धः, इति तत्त्वमस्यादिमहावाक्यैकगम्यमेव तदखण्डं स्वरूपम्, नतु प्रमाणान्तरगम्यम् ॥

(२४) न केवलमविद्यासम्बन्धेनावरणमात्रं ब्रह्मणोऽनादि, किन्तु जीवत्वेश्वरत्वादयोऽपि तस्यानादय एव ॥

तदुक्तम्— "जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा ।
अविद्या तच्चितोर्योगः षडस्माकमनादयः ॥" इति ।

अज्ञानप्रयुक्तत्वं हि जीवत्वेश्वरत्वादेरज्ञानसमानकालीनत्वमात्रेण ब्रह्मेतरत्वसमवहितेन, नतु तदधीनोत्पत्तिकत्वेन, इति न जीवेश्वरौ सादी ; किन्तु अनादी एव ॥

(२५) अनादित्वेऽपि तयोरविद्याप्रयुक्तत्वाद् ब्रह्मसाक्षात्कारेणाविद्यानाशाधीननाशप्रतियोगित्वाद् ज्ञाननिवर्त्यावेव तौ; तत एव मिथ्याभूतावपि । न ह्यज्ञानजन्यमेव ज्ञाननाश्यमज्ञानमेव वा; किन्तु तत्प्रयुक्तमपि । 'इयं शुक्तिरि'ति साक्षात्कारो हि न केवलमविद्याजन्यं प्रातिभासिकं रजतं निवर्तयति, न वा शुक्तित्वाज्ञानम्, किन्त्वज्ञानप्रयुक्तं शुक्त्यवच्छिन्नचैतन्यस्याज्ञानस्य च सम्बन्धमपि । अधिकं लघुचन्द्रिकायां व्यक्तम् ॥

तदयं निष्कर्षः—अज्ञानमसत्त्वापादकम्, अभानापादकम्, अनानन्दतापादकं च । यत्र सत्त्वमात्रानुभवः,

तत्रासत्त्वापादकाज्ञानमात्रस्य विनाशः ; यत्र तु भातीति व्यवहारः, तत्र सत्तानुवेधोऽपि वर्तते, इत्यसत्त्वापादकस्याभानापादकस्य च द्विविधस्यापि विनाशः । त्रिविधाज्ञानस्यापि विनाशे तु न ब्रह्माधिष्ठानं विवर्तोपादानं वा भवति । सति चैवमनाद्यविद्यापरिणामस्य त्रिविधस्यापि यदा सर्वात्मना निवृत्तिः, तदैवाऽऽनन्दैकरसमद्वितीयं ब्रह्मचैतन्यम् । "आनन्दो ब्रह्मेति व्यजनात् । सैषा भार्गवी वारुणी विद्या । परमे व्योमन् प्रतिष्ठिते"ति हि सच्चिदानन्दात्मना ज्ञातमात्मानमेव ब्रह्मेति श्रावयति ॥

(२६) सति चैवमनादित्वेऽपि जीवस्य नाद्वैतविरोधः । अद्वितीयत्वं हि पारमार्थिकद्वितीयपदार्थराहित्यं द्वितीयाभावमात्रम् । सद्वितीयत्वं हि ब्रह्मणि कल्पितमेव स्वीकुर्मः । तदुक्तम्—

"अक्षमा भवतः केयं साधकत्वप्रकल्पने ।
किं न पश्यसि संसारं तत्रैवाज्ञानकल्पितम् ॥" इति

अयं भावः—अध्यारोपापवादन्यायेन ब्रह्मस्वरूपाधिगमः । तत्र सृष्ट्यादिवाक्यमध्यारोपविधया ब्रह्म प्रतिपादयति । "अथात आदेशो नेतिनेती"त्यादि तु द्वितीयनिषेधमुखेन ॥

(२७) सति चैवं निषेधमुखेन प्रवर्तमानानि "नेति नेति" इत्यादिवाक्यानि विधिमुखेन प्रवर्तमानान्यपि "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिलक्षणवाक्यानि "तत्त्वमसी"त्यादिमहावाक्यानि च निर्विशेषे जीवेश्वरस्वरूपातिरिक्ते ब्रह्मणि प्रमाणानि । तत्र सत्यज्ञानादिपदेन ब्रह्मोपस्थितिः सत्यं पूर्वतनब्रह्मानुभवमपेक्षते । स च सुषुप्तौ वृत्त्यङ्गीकारमते सौषुप्तः । अन्यत्रासंप्रज्ञातसमाधिः, तदधीनमनुभवान्तरं वा ॥

"आत्मैकाकारतया तिरस्कृतानात्मदृष्टि विदधीत" इत्यादिवचनानुसारिवेदान्तसाराद्युक्त आत्माकारवृत्तिरूपत्वमते सोऽसंप्रज्ञातसमाधिरूपः । असंप्रज्ञातसमाधेः सर्ववृत्तिनिग्रहरूपत्वमेव; न काऽपि तत्र वृत्तिरिति मते तज्जन्यात्मानुभवः । तस्यापि तदसाधनत्वे तु विशिष्टशक्तिज्ञानस्यैव विशेष्यमात्रतात्पर्यसहकारेण विशेष्यमात्रानुभावकत्वस्वीकारेण विनैव पदार्थोपस्थितिं सत्य-ज्ञानादिपदेन स्वरूपमात्रानुभवोऽविरुद्धः । सत्यं बोधकानि वाक्यानि शक्तिं लक्षणां वाऽपेक्षन्ते स्वघटकपदार्थस्य ; ब्रह्मणि निर्गुणेऽनिर्देश्येऽपि कथं गुणवृत्तयः श्रुतयश्चरन्ति ? कल्पितैरेव हि गुणैः श्रुतयो ब्रह्मणि चरन्ति । तदेवं निर्गुणेऽपि ब्रह्मणि जीवेश्वरातिरिक्ते प्रमाणानि विवेचितानि ॥

(२८) वाक्यानि तु सत्यमुत्सर्गतस्तात्पर्यविषयं संसर्गमेव बोधयन्ति प्रमाणानि, परं तु नायं नियमः—यत् तात्पर्यविषयः संसर्ग एव शाब्दबोधे भासत इति । तात्पर्यविषयतैव हि शाब्दबोधविषयतायां तन्त्रम्; नतु तादृशसंसर्गत्वम् ; गौरवात् । तात्पर्यविषयत्वं तु तत्त्वमस्यादिवाक्यानामुपक्रमोपसंहारादिभिरद्वितीये शुद्ध एव च चैतन्ये वर्तते; नतु सविशेषे । व्यक्तं चैतद् भाष्य-तद्वार्तिकादिषु विवरणे च । सति चैवं वेदान्तप्रमाणजन्यत्वाद् निर्विकल्पकमपि ज्ञानं प्रमैव । नैयायिका हि विशेष्यावृत्त्यप्रकारकज्ञानत्वं सविकल्पक-निर्विकल्पकज्ञानसाधारणं प्रमात्वं मन्यन्ते । मीमांसकास्तु अनधिगताबाधितार्थविषयकज्ञानत्वमेव प्रमात्वं मन्यन्ते, नतु तद्वति तत्प्रकारकज्ञानत्वम्, इति तन्मतेऽपि तदविशिष्टम् । नहि विशेष्य-विशेषणभावविषयकत्वनियतं प्रमात्वमिति तु तदाशयः । वेदान्तिनोऽपि वयमनधिगताबाधितार्थविषयकं ज्ञानमेव प्रमां मन्महे । सति चैवं निर्विकल्पकज्ञानमपि नाप्रमा भवति ब्रह्मविज्ञानम् ।

अत्र वार्तिककारा नारायणसरस्वत्यः—घटादिविषयदेशे चक्षुरिन्द्रियमात्रसम्बन्धदशायां प्रथमतो मानसी वृत्तिरुदीयमानाऽऽज्ञातज्ञानरूपा तत्तद्विशेषरूपानवगाहनाद् निर्विकल्पकं ज्ञानमिति वदन्ति । तस्य

प्रत्यक्षत्वं तु वृत्तेर्विषयदेशगमनेऽपि विषय-चक्षुरिन्द्रिय-मनसां सन्निकर्षाद् निरपोहमेव। संसर्गा-विषयकं प्रकारताविशेष्यताद्यनवगाहिज्ञानं वा निर्विकल्पकमिति तु नैयायिकादयः। श्रीभाष्यकारादयस्तु प्रथमं सविशेषपिण्डग्रहणं निर्विकल्पकम्, द्वितीयतादृशपिण्डग्रहणम्—यत्र धर्मोऽनुवर्तमानतया प्रतीयते, तत्सविकल्पकमिति वदन्ति। एकव्यक्तौ तु तन्मत आकाशादावाकाशत्वानुवृत्तिज्ञानं द्वितीयपिण्डग्रहणा-धीनं न भवतीति यदि निर्विकल्पकमेव, तर्हि ब्रह्मणोऽपि ज्ञानं ब्रह्मण एकत्वान्निर्विकल्पमेव तन्मतेऽपि। सत्यं वयमपि निर्विकल्पकज्ञानविषयत्वेन न ब्रह्मणो निर्विशेषत्वं वदामः, किन्तु विशेषाणां ब्रह्मणि प्रामाणिकत्वाभावेनैव॥

अद्वैतमतैकदेशिनस्तत्त्वशुद्धिकारास्तु—घटादिज्ञानं सविकल्पकमेव, ब्रह्मज्ञानमेव निर्विकल्पकमिति वदन्ति। अयं भावः—घटादिकं हि ब्रह्मण्यध्यस्ततया 'सन् घटः इत्येव सर्वदा प्रतिभासते। यतः—"न सोऽस्ति प्रत्ययो लोके यत्र सत्ता न भासते" इत्यध्यस्ततयैव हि घटादयः स्वरूपवन्तः। ब्रह्म तु नाध्यासाधिष्ठानतयैव, किन्तु स्वप्रकाशानावृतस्वभावतयाऽपीति सद्रूपब्रह्मज्ञानमेकमेव निर्विकल्पकमिति। सर्वथा तु निर्विकल्पकज्ञानप्रमात्वे न कस्यापि विप्रतिपत्तिः। तथाच व्यवहारदशाऽबाध्यान्युपासनापराणि सविशेषपराणि च सविकल्पकं ज्ञानमेव जनयन्ति, तत्त्वमस्यादिवाक्यानि तु तात्पर्यानुसाराद् अखण्डस्वरूप-मात्रावबोधादखण्डार्थानि सन्ति निर्विकल्पकमेव ज्ञानं जनयन्ति।

(२९) इदमेव तत्त्वमस्यादिवाक्यानामखण्डार्थत्वम्—पदवृत्तिस्मारितातिरिक्तागोचरप्रमाजनकानेका-पर्यायशब्दत्वम्, संसर्गासङ्गियथार्थज्ञानजनकानेकापर्यायशब्दत्वं वा। तथा चोक्तम्—

"संसर्गासङ्गिसम्यग्धीहेतुता या गिरामियम्।
उक्ताऽखण्डार्थता, यद्वा तत्प्रातिपदिकार्थता॥" इति।

तत्त्वमस्यादिवाक्यानि हि तदादिपदैर्लक्षणयोपस्थितं चैतन्यस्वरूपमेव बोधयन्ति, नतु तदति-रिक्तं कमपि संसर्गम्। नच तत्रत्यानि तदादिपदानि पर्यायपदानि। एकप्रवृत्तिनिमित्तवत्त्वं हि नाम पर्यायत्वम्, नतु लक्ष्यैकार्थबोधकत्वम्? नहि गङ्गापद-तीरपदयोः पर्यायता। जीवत्वेश्वरत्वोपस्थिति-पूर्वकचैतन्यस्वरूपसाक्षात्कार एव ह्यज्ञाननिवर्तकः। अज्ञानं हि जीवाश्रितं ब्रह्माश्रितं चेति द्विविधम्। आद्यं तूलाज्ञानमवस्थाज्ञानं वोच्यते, येन स्वप्नप्रपञ्चः प्रातिभासिकः प्रपञ्चो वा जन्यते। द्वितीयं तु मूलाज्ञानम्, यतः सर्वो व्यावहारिकः प्रपञ्च उदेति। द्विविधस्याप्यज्ञानस्य निवृत्तिर्हि जीवत्वोपलक्षितेश्वरत्वोपलक्षितचैतन्यसाक्षात्काराधीनैव। नहि 'चैत्रोऽस्ति घटोऽस्ति' इत्यादिवाक्यैर्लक्षण-योपस्थापितचैतन्यज्ञानं जीवाश्रितमीश्वराश्रितं चाज्ञानं निवर्तयितुमलम्। अत एव तत्त्वमस्यादिवाक्य-मेवाखण्डार्थबोधकं महावाक्यम्। निर्विशेषवाक्यानि महावाक्यार्थनिरूपणपराणि। सविशेषवाक्यानि तु त्वंपदार्थस्य तत्पदार्थस्य वा निरूपणपराणि। प्रधानानुसारेण हि गुणानां नयनम्, नतु गुणानुसारेण प्रधानानाम्॥

(३०) सति चैवं सगुणवाक्यानि दुर्बलानि, निर्गुणवाक्यानि तु प्रबलानि। प्राबल्य-दौर्बल्य-निर्णयः पूर्वापरयोः पूर्वदौर्बल्येन, सावकाश-निरवकाशन्यायेन वा। परशास्त्रं बाधकमिति "विप्रतिषेधे परं कार्यमि"ति न्यायसिद्धम्। 'इदं रजतमि'त्यादि पूर्वतनं ज्ञानं 'नेदं रजतमि'ति परेण बाध्यते। क्रमिकापच्छेदद्वये पूर्वतनापच्छेदानिमित्तस्य प्रायश्चित्तस्योत्तरापच्छेदानिमित्तस्य च तस्य विरोधे

ह्युत्तरापच्छेदनिमित्तमेव प्रायश्चित्तमनुष्ठेयम् । सगुण-निर्गुणवाक्ययोरपि सगुणवाक्यप्राप्तगुणनिषेधपरत्वाद् 'नेदं रजतमि''ति ज्ञानमिव निर्गुणवाक्यमेव तु बाधकम् । अन्यथा हि निरवकाशं निर्गुणवाक्यजातमापद्येत । सगुणवाक्यं हि कल्पितगुणपरयाऽप्युपपद्यते । उपासनार्थमेव हि गुणाम्नानम्, नतु तत्त्वज्ञानार्थम् । न ह्युपासनं नाम पारमार्थिकं गुणमपेक्षते । नहि धेनुत्वं वाचि पारमार्थिकम् । निर्गुणपदस्यैव हेयगुणराहित्यपरता तु सत्यकामत्वादीनां पारमार्थिकत्वनिर्णये सत्यं संभवति । नहि सत्यकामत्वादि पारमार्थिकमिति प्रमाणसिद्धमिदम् । आम्नानं हि धर्माणां कल्पितानामपि दृश्यते मनोब्रह्मत्वादिवत् । "नेह नानाऽस्ति किञ्चने''ति हि सर्व एव गुणाः साकल्येन निरस्यन्ते, इति कथं केचन वर्तन्ते ब्रह्मणि गुणा इति साधुरयं वादः ? यावद्व्यवहारं हि सगुणवाक्यमपि प्रमाणं निर्गुणवाक्यमपि । व्यावहारिकतत्त्वावेदकत्वेनापि हि प्रमाणता नापह्नूयते । विवेचितं चेदमधस्तादेव । वस्तुतत्त्वनिर्णयार्थं हि—''अथातो ब्रह्मजिज्ञासे''ति मीमांसाप्रतिज्ञाऽपि सूत्रकाराणाम् ॥

(३१) अत्र ह्यथशब्देनानन्तर्याभिधानमुखेन ब्रह्ममीमांसाधिकारी साधनचतुष्टयसंपन्नो विवक्ष्यत इति भगवत्पादभाष्यम्, अधिगतकर्मावबोध इति श्रीविशिष्टाद्वैतादिमतम् । प्रथममते साधनचतुष्टयसंपत्त्यानन्तर्यमथशब्दार्थः । द्वितीयमते तु कर्मविचारानन्तर्यम् । इदमेव द्वैताद्वैतमतेऽपि, द्वैतादिमते च । तत्र प्रथममते नित्यानित्यवस्तुविवेके सति ब्रह्मविचारः, ब्रह्मविचारे च नित्यानित्यवस्तुविवेकः, इत्यन्योन्याश्रयः, इति श्रीभाष्यकारादयो वदन्ति । सत्यं तृतीयाध्यायविचारेणैव नित्यानित्यवस्तुविवेकः सम्भवतीति ब्रह्ममीमांसायां चतुर्लक्षण्यामेव नित्यानित्यवस्तुविवेकादिरपि विचारितः, परन्तु न तृतीयाध्यायो ब्रह्मविचारः, किन्तु ब्रह्मज्ञानसाधनाध्यायत्वात् साधनविचारः । चतुर्थाध्यायस्तु फलाध्यायत्वात् फलविचारः, अपि च ब्रह्मविचारः ; ब्रह्मण एव फलत्वात् । नहि साधनाध्यायापेक्षा ब्रह्मविचारस्य । अन्यथा श्रीभाष्यादिमतेऽपि विचाराधिकारापेक्षितवैराग्यस्य वैराग्यपादविचाराधीनत्वात् कथं नाम नान्योन्याश्रयः ? अथशब्दार्थविवरणं हि साधनाध्यायो नाम । मूल-व्याख्यानयोश्च शेष-शेषिभावादथशब्देनैकवाक्यतापन्नस्तृतीयाध्यायः, प्रथम-द्वितीयाध्यायावेव तु मुख्यब्रह्मविचाराविति पाठक्रमादर्थक्रमस्य बलीयस्त्वाद् वस्तुगत्या न तृतीयाध्यायानन्तर्यं प्रथमाध्यायादेः, प्रथमाद्यध्यायानन्तर्यं च तृतीयाध्यायस्येति कल्पनासंभवाद् नान्योन्याश्रयशङ्काऽपि । ब्रह्मविचारो हि न नित्यानित्यवस्तुविवेकमात्राय, किन्तु तत्पूर्वकब्रह्मतत्त्वविनिर्धारणाय, इति न नित्यानित्यवस्तुविवेकेनैव गतार्थत्वाद् ब्रह्मविचारवैतथ्यम् । नित्यानित्यवस्तुविवेको नाम सामान्यतो नित्यमस्ति किञ्चन, अनित्यं तु घटादिकं कर्मकृतमविद्यकं वा सर्वमनित्यमिति निश्चयाभ्यास एव, नतु ब्रह्मैव नित्यमितरदनित्यमिति विवेकः, अस्तु वा तादृश एव सः, नैवमपि सगुण-निर्गुणवाक्यार्थनिर्णयमपि नापेक्षामहे ; येन विचारवैतथ्यमापतति । कर्मविचारस्तु न सर्वाधिकारिसाधारणः । ब्रह्मचर्यादेव सन्यस्ता अपि त्वनुपनीता वेदाध्ययन-कर्मविचार-तदनुष्ठानाद्यनधिकारिणश्च देवा इव ब्रह्मविद्यायामधिकुर्वन्ति । नैतेऽपि कर्मविचारानन्तरं ब्रह्म विचारयितुमर्हन्तीति कल्पनं विकल्पसहमुपपन्नं वा । अमुमेवार्थं—''धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेरि''ति भाषणेन भगवत्पादाः सूचयन्ति । अपिच कर्मविचारोऽयमधिकारप्रयोजकः को नामेति विवेचनीयम्—यदि कर्मस्वरूपविचारः, तर्हि कथमस्य ब्रह्मविचारोपयोगः ? यदि कर्मफलानित्यत्वनिर्णयः, तर्हि जैमिनीयमीमांसा नात्र कर्मविचारः । नहि तत्र कर्मफलानित्यत्व-

निर्णायकं सूत्रारूढमुत्सूत्रं वा किमप्यधिकरणमुपलभामहे । ब्रह्ममीमांसातृतीयाध्यायेन हि कर्मफलानित्यत्वमपि गत्यागतिविचारद्वाराऽवसेयम् । स तु कर्मविचारो न द्वादशलक्षणी, किन्तु चतुर्लक्षण्येकदेश एव, इति कथं वा जैमिनीयकर्मविचारानन्तरमेव ब्रह्ममीमांसेति शास्त्रैक्यवादे न कर्मविचारानन्तरं ब्रह्मविचार इति । अपिच किं बादरायणः स्वयं तत्पूर्वतनाश्च ब्रह्ममीमांसाधिकारिणो वा ? नवा ? यद्यधिकारिणः, तर्हि कथं जैमिनीयकर्मविचारस्तेषाम् ? सति चैवं न क्षोदक्षमोऽयं वादः—यत् संहतमिदं जैमिनीयेन षोडशलक्षणेन, इति साधनचतुष्टयसंपन्नाधिकारितावाद एव समादरणीयः, इत्यथशब्दार्थनिष्कर्षः ।

(३२) जिज्ञासापदं तु ज्ञानस्येष्यमाणत्वप्रदर्शनमुखेन विचारसाध्यं निश्चयात्मकमपरोक्षरूपं वा ज्ञानमेव विचारप्रयोजनमिति गमयति । "अथातो धर्मजिज्ञासे"त्यत्रापि ज्ञानस्येष्यमाणत्वमस्ति सत्यमुपक्षिप्तम् । परंतु "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यनुष्ठानमेव यागस्य स्वर्गं प्रयोजयति, न ज्ञानमात्रमिति गम्यमानत्वादनुष्ठानापेक्षमेव धर्मज्ञानं पुरुषार्थाय कल्पते । ब्रह्मज्ञाने तु "ब्रह्मविदाप्नोति परम्," "तरति शोकमात्मवित्" "विद्वान्नामरूपाद्विमुक्तः" भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥" इत्यादि वचनैरनुष्ठानमनपेक्ष्यैव फलसाधनत्वमवगच्छामः । सति चैवं ब्रह्मविचारस्य मुख्यं प्रयोजनं ब्रह्मज्ञानमेव, यस्मिन् सति विनैव विलम्बं सकलबन्धनिवृत्तिर्ब्रह्मभावश्च स्वत एव सेत्स्यति । ब्रह्मभावो हि जीवस्याविद्यानिवृत्तिमात्रमपेक्षते । अविद्यानिबन्धनं हि जीवत्वम्, अविद्यानिवृत्तावुपाधिविलयाद् ब्रह्मभावं जीव आप्नोति । "ब्रह्मविदाप्नोति परमि"ति प्राप्तिरपि ब्रह्मणो नित्यप्राप्तस्याविद्यानिवृत्त्या तद्भाव एव । नहि नित्यप्राप्तं स्वरूपमप्राप्तं सत् प्राप्यम् । "कार्यं बादरिरस्य गत्युपपत्तेः" इति ह्यर्चिरादिप्राप्यं कार्यं ब्रह्मैव, नतु परं ब्रह्मेति व्यवस्थापितं ब्रह्ममीमांसायाम् । अविद्यानिवृत्तिरेव हि मोक्षो नाम ॥

(३३) अनादित्वेऽप्यविद्याया निवृत्तिस्तु न विरुद्धा । न ह्यनादिपदार्थाः सर्व एव न नश्यन्ति । प्रागभावो ह्यनादिरपि नश्यतीति नैयायिकाः । पूर्वपूर्ववासनास्तत्त्वज्ञानेन विनश्यन्तीति सौगताः । परमाणुगतं श्यामत्वं भावरूपं पाकेन विनश्यतीति तार्किकाः । अनादित्वं ह्यनुत्पत्तिमेव गमयति, नाविनाशम् । नह्युत्पन्नमेव नश्यतीति नियमः । जातस्य हि ध्रुवो मृत्युः, नतु जातस्यैव । तथाचाविद्यानिवृत्तिमात्रेण जीवस्य ब्रह्मभावाद् नोत्क्रमणादिगतिसापेक्षा ब्रह्मप्राप्तिः ॥

(३४) "अत्र ब्रह्म समश्नुते" "न तस्य प्राणा उत्क्रामन्ति" इत्यादिवचनानि हि विनैवोत्क्रमणं जीवस्य मुक्तिं प्रतिपादयन्ति । नाहि हिरण्यगर्भस्य मुक्तिरप्यर्चिरादिमार्गमपेक्ष्यैव भवति ; असंभवात्, नवा चन्द्रादित्यादीनाम्, इति ब्रह्मविद्याधिकारिणां सर्वेषां देवादिसाधारण्येन न मुक्तिरुत्क्रमणमपेक्षते, संभवति वा । अयमत्र निष्कर्षः—

"अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" इति हि वाक्यं कठवल्ल्यामिव बृहदारण्यकेऽपि—"अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति । तदप्येष श्लोको भवति—"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥" इति विदुषः प्राणोत्क्रमणनिषेधानन्तरमपि श्रूयते, इति श्रुतिद्वयैकवाक्यतैव श्रुत्यभिमतेति जानीमः । बृहदारण्यकोपनिषदि हि सकामानां प्राणोत्क्रान्तिरकामानां तदभाव इति वर्णनात् "अत्र ब्रह्म समश्नुते" इत्यस्यानुत्क्रान्तिपक्षविवरणपरतया योजनाच्चेदमपि ज्ञाप्यते—यत्

"शतं चैका च हृदयस्य नाड्यः" इति प्राणोत्क्रमणपक्ष एव, नतु पक्षान्तरे—इति। सति चैवं "शतं चैका चे"ति वाक्ये "उत्क्रमणे भवन्ती"त्यंशस्यापि सार्थक्यं भवति। अयं हि विषयः "यथाऽहिनिर्ल्वयनी वल्मीके प्रत्यस्ता शयीतैवमेवेदं शरीरं शेतेऽथायमशरीरोऽमृतः" इति सनिदर्शनमत्रोपपाद्यते, इति मुख्यं तात्पर्यमत्रावगम्यते। सकामवाक्य उत्क्रमणावधितया प्रसक्तस्यैवात्राप्युत्क्रान्त्यवधित्वमवगम्यते, इति प्रकरणादेवेदमवगम्यते। तस्य शरीरात् प्राणा नोत्क्रामन्तीत्येवार्थः स्पष्टं प्रतीयते, इति, नात्र शाखान्तरवचनेनैवार्थनिर्णयः कर्तव्यः। यत्तु शाखान्तरीयम्—"तस्मात् प्राणा नोत्क्रामन्ती"ति, तत्र परं जीवस्योत्क्रान्त्यवधित्वमप्रसक्तमिति संशयाद् निर्णयार्थमुक्तवाक्यमपेक्ष्यते॥

अयं भावः—जीवात्मनः परिच्छिन्नस्योत्क्रमणमनु प्राणादीनामुत्क्रमणम्। विदुषां तु ज्ञानेन हृदयग्रन्थि-पूर्वोत्तराघादिविनाशेन प्राप्तामृतत्वानामुपाधिकृतपरिच्छेदशून्यानां कथमुत्क्रमणं सम्भवति? सति चैवं बृहदारण्यकषष्ठाध्यायचतुर्थब्राह्मणेनैव प्रश्नोत्तररूपेण प्रवृत्तेन स्पष्टेनात्र व्यवस्था युक्ता, इति "स्पष्टो ह्येकेषामि"ति सिद्धान्तसूत्रम्, "प्रतिषेधादिति चेन्न, शारीरात्"इति पूर्वपक्षसूत्रमित्यद्वैतिनां विवरणमेव सूत्रारूढम्। अत एव बृहदारण्यकपञ्चमाध्यायाद्वितीयब्राह्मणे—"यत्रायं पुरुषो म्रियते, उदस्मात् प्राणाः क्रामन्त्याहो ने"त्यार्तभागप्रश्नस्य "नेति होवाच याज्ञवल्क्यः" इत्युत्तरमुपपद्यते॥

बृहदारण्यकषष्ठाध्यायचतुर्थब्राह्मणं विद्वदविद्वद्विषयभेदेनोत्क्रान्तौ विशेषमभिधाय, "तत्रैते श्लोका भवन्ती" त्युपक्रम्यार्चिरादिमार्गं प्रतिपाद्य "तांस्ते प्रेत्याभिगच्छन्त्यविद्वांसोऽबुधो जनाः" इत्यार्चिरादिमार्गपर्यन्तमधिकारिणोऽविद्वांस इति विविच्य, "आत्मानं चेद् विजानीयादयमस्मीति पूरुषः। किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत्॥" इत्यादिना ज्ञानिनः कर्तव्य-प्राप्याद्यभावं बोधयति। अत एव—"अन्धं तमः प्रविशन्ति येऽविद्यामुपासते" इत्युपासकानामप्यविद्वत्त्वं प्रतिपादितमुपपद्यते। अनेन हीदं ज्ञायते—यत् सगुणोपासकपर्यन्तमेवोत्क्रान्तिः, न तदुत्तरमपीति॥

परब्रह्मप्राप्तिर्हि गतिमनपेक्ष्यैव भवति, इति "परं जैमिनिर्मुख्यत्वादि"त्यत्र मुख्यत्वहेतुमात्रनिर्देशेन ज्ञायते। अत्र "कार्यं बादरिरस्य गत्युपपत्तेः" इत्यत्र गत्युपपत्तिहेतुनिर्देशेन हि गतिवाक्येषु सर्वेषु कार्यं ब्रह्मैव विवक्ष्यत इति गम्यते, इति मुख्यत्वेऽपि ब्रह्मणो नात्र विवक्षा, इति सूत्राशयोऽवगम्यते, इति बादरिमतमेव बादरायणमतामिति विजानीमः॥

इदं हि मतद्वयसंप्रतिपन्नम्—यद् जैमिनि-बादरिपक्षीयसूत्राणां प्रतिक्षेप्य-प्रतिक्षेपकभाव इति। इदमेवात्रालोचनीयम्—किमन्वारुह्य बादरिणैव जैमिनिमतं प्रतिक्षिप्यते? उत बादरिमतं प्राप्तं जैमिनिः प्रत्याचष्ट इति। वयं तु विश्वसिमः—यद् बादरिरेव जैमिनिमतमन्वारुह्य प्रत्याख्यातीति सूत्रकारा मन्यन्त इति। अत एव गत्यनुपपत्तिमात्रं न परिहृतं सूत्रकारैः। "सामीप्यात्तु तद्व्यपदेशः" इति सूत्रं हि—"परं जैमिनिर्मुख्यत्वादि"ति शङ्कानिरासार्थमिति युक्तम्। अत्र हि लक्षणया ब्रह्मपदस्य हिरण्यगर्भपरत्वं साध्यते। लक्षणा च मुख्यार्थासंभवप्रतिसन्धानानन्तरमेवात्मानं लभते, इति मुख्यार्थविवक्षां जैमिन्यभिमतां गत्यनुपपत्त्याऽनुपपन्नां मत्वैव "सामीप्यात्तु तद्व्यपदेशः" इति सूत्रं प्रवृत्तामिति विज्ञायते। एतेन—"दर्शनाचे"ति सूत्रमपि पूर्वपक्षसूत्रमिति—व्याख्यातम्। न ह्यमृतत्वश्रवणं कथमिति शङ्कां विना "कार्यात्यये तदध्यक्षेणे"त्यस्य स्वरसप्रवृत्तिः संभवति। अत्र च "स्मृतेश्चे"ति स्मृतेरप्युपष्टम्भोऽत्रेति वर्णनेन हि विशदं सूत्रकाराः 'कार्यात्ययेने'त्येवं सिद्धान्तपक्षं मन्यन्ते। अनेन हि—

गतिपूर्वकममृतत्वाम्नानस्थले सर्वत्र हिरण्यगर्भप्राप्तिरेव साक्षाद्विवक्षितेति गम्यते । श्रुतिद्वयविरोधे हि क्रमविशेषमात्रस्यैकत्र कल्पनेन वियदधिकरणन्यायेनार्थक्रमाद्वा तत्परिहार एव युक्त इति तु हृदयम् । एतेन—"नच कार्ये प्रत्यभिसन्धिः" इति सूत्रमपि पूर्वपक्षसूत्रमेवेति—व्याख्यातम् । इयं हि शङ्का—"नास्ति वचनस्यातिभारः' इति न्यायेन परिहरणीया, इति—"ब्रह्मलोकान् गमयति" इति बहुवचनघटित-ब्रह्मलोकपदान्यथानुपपत्त्या कार्यब्रह्मगतिरेवात्र विवक्षणीयेति सूत्रकाराः सूचयन्ति, इति जैमिनिमतनिरा-सार्थान्येव सर्वाणि बादरिगुणसूत्राणि । जैमिनिमते त्रीण्येव सूत्राणि, बादरिमते तु पञ्च सूत्राणीति प्रथमसूत्रांशस्य जैमिनिपक्षीयसूत्रैः कैरप्यप्रत्याख्यानात् सर्वेषां च जैमिनिपक्षीयसूत्रार्थानां पृथक् पृथक् सूत्रेण बादरिपक्षीयेण निरासाच्च कथं सूत्रकारा जैमिनिपक्षमेव पूर्वपक्षं निरस्यं वा न मन्यन्ते ? अधिकमन्यत्र व्यक्तम् । सर्वथा तु सौत्र एव भावो न केवलम्, किन्त्वौपनिषदोऽप्यद्वैत एव सर्वाङ्गसुन्दरे । इदमेवाभिप्रेत्योक्तं न्यायरत्नावल्याम्—"अद्वैतदर्शनमेव सर्वेषु दर्शनेषु दर्शनीयतमं दर्शनीयमि"ति ॥

सर्वाण्यपि दर्शनान्यद्वैतदर्शनस्य प्रायेणांशतो वेदमूलकान्युपकुर्वन्त्येव । अन्नमयादिवाक्यानि हि स्थूला-रुन्धतीन्यायेनाऽद्वैत एव पर्यवस्यन्ति, इति शरीरात्मवादादयोऽपि क्त्वाचिन्तया प्रवृत्ता अद्वैतमेव तात्पर्यतो बोधयन्ति । सौगतमतमपि प्रपञ्चमिथ्यात्वनिर्णयेनाद्वैतमतं परिपोषयत्येव। मीमांसका अपि भाट्टा ज्ञानकर्मसमुच्चयावलम्बिनोऽपि वस्तुगत्या वेदान्त एव पर्यवसानेन स्वीयं दर्शनं दर्शनपदवाच्यं मन्यन्ते—

"इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या ।
दृढत्वमेतद्विषयः प्रबोधः प्रयाति वेदान्तनिषेवणेन ॥"

इति वदन्तः । प्रभाकरगुरवस्तु "विज्ञानरूपता तु विज्ञानस्यानाशङ्कनीया ; अनाशङ्कित-त्वात् । युक्तं चानाशङ्कितम् ; कर्मप्रवणत्वात् । तदुक्तं भगवता—"न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्" "यत्तु ब्रह्मविदामेष निश्चयः—यदुपलभ्यते न तत्तथ्यम्, यन्नोपलभ्यते, तत्तथ्यमिति, नमस्तेभ्यः ; विदु-षां नोत्तरं वाच्यम्" इत्यादि वदन्तोऽद्वैतवादमेव प्रशंसन्ति । वैशेषिक-नैयायिकानामसत्कार्यवादः, सांख्या-दीनां सत्कार्यवादश्चोभयं सदसद्विलक्षणत्वेनानिर्वचनीयत्वसाधानार्थमपेक्षितांशविशेषव्यवस्थापनेन सद्वि-वर्तवादस्याद्वैताभिमतस्य विशेषत अलङ्कारायैव । 'नहिनिन्दा'न्यायेन दर्शनान्तरेष्वविद्यावादादि निरासा दृश्यमाना अपि न तात्पर्यतोऽद्वैतनिन्दां गोचरयन्ति ॥

अद्वैतदर्शनस्य हि मूलमुपनिषद एव । उपनिषदामद्वैत एव परमं स्वारस्यमित्यत्र पाश्चात्या अपि न विप्रतिपन्नाः । काशकृत्स्नौडुलोमि-बादरायणप्रभृतयो महर्षिवर्या अप्यद्वैतवादमेव विचारसहमुपनिषदर्थं मन्यन्ते । बादरायणसूत्राणामद्वैत एव तात्पर्यम्, नतु मतान्तरे, इति व्यासतात्पर्यनिर्णयादौ व्यक्तम् । गौडपादाचार्या अपि माण्डूक्योपनिषद्व्याख्याव्याजेन विशदमद्वैतमतं व्यवस्थापयन्ति । भगवत्पादास्तु भाष्यकारा अद्वैतवादस्य पितृचरणाः ।

भाष्यव्याख्यानव्याजेन पद्मपादाचार्य-वाचस्पतिमिश्रप्रभृतयो बहवो व्याख्यातारोऽद्वैतमेव सुविज्ञेयमुपपाद-यन्ति, पञ्चपादिकाविवरणं तु विशेषतो ब्रह्मपरिणामवादादिद्वैताद्वैतादिमतान्तरनिरासपूर्वकम् ।

तत्र पद्मपादाचार्याणां व्याख्या पञ्चपादिकेति विख्यातमिदम् । इयं हि चतुःसूत्रीपर्यन्तमेवोप-लभ्यते । इदमत्रैतिह्यम्—पद्मपादाचार्या व्याचक्षत संपूर्णं ब्रह्मसूत्रभाष्यम्, परन्तु कैश्चित् तदीयं

पुस्तकं दग्धम्। अनन्तरं चाचार्यपादैरैवानुग्रहवरेण पुनरप्युज्जीवितं यावत् श्रुतमाचार्यपादैरिति। पञ्चपादिकेति नामापि पादपञ्चकपर्यन्तमेव तथोज्जीवितमिति कृत्वैवेति ॥

पञ्चपादिकाविवरणे पञ्चपादिकानाम्नैव ग्रन्थस्योपक्षेपात् चतुस्सूत्रीपर्यन्तमेव विवरणग्रन्थप्रवर्तनाच्च पञ्चपादिकेति चतुःसूत्र्या एव नामेति जानीमः। व्याख्या तु पद्मपादाचार्यैः संपूर्णस्यैव भाष्यस्य विरचिता, इति ग्रन्थमध्ये "एक आत्मनः शरीरे भावादि"त्यादिसूत्राणां विषयविशेषाणां विस्तृतविचारस्थानत्वेनोल्लेखादध्यवसीयते। सति चैवं चतुःसूत्र्या एव पञ्चपादिकेति नामनि निदानमिदमेव प्रतिभाति—यत् पादशब्देनावयवार्थाभिधानात् पञ्चावयवा व्याख्येति पद्मपादाचार्या मन्यन्त इति। चतुःसूत्र्याः पञ्चावयवत्वं चतुःसूत्री सर्वाऽपि शास्त्रारम्भसमर्थनरूपत्वादेकमधिकरणमिति पक्षेणोपपद्यते। शास्त्रारम्भसमर्थनं चतुस्सूत्र्याः कार्यमिति विशिष्टाद्वैतिनोऽपि मन्यन्ते, शारीरकमीमांसाभाष्यवर्तिकेऽप्यत्र योजिते समन्वयाधिकरणे (१००१ पृष्ठे) व्यक्तम्। पद्मपादाचार्यविवरणाचार्यादीनां समयस्तु सर्वविदित एव। विवरणस्य तु व्याख्यानानि बहूनि सन्ति। तत्र तत्त्वदीपनं पूर्वमेव काशीतः प्रकाशितम्, यस्य कर्तारोऽखण्डानन्दसरस्वत्यः। इमे हि भाष्यव्याख्यातॄणामानन्दगिरिपादानामन्तेवासिनः, इति महामहोपाध्यायादिपूज्यश्रीकुप्पुस्वामिशास्त्रिपादानां सूचनानुसारं बडोदाप्रकाशितानान्दगिरिकृततर्कसंग्रहभूमिकातोऽवगच्छामः, तदिदमप्यत्र संस्करणे वयं योजयामः ॥

अपरा तु व्याख्या विवरणभावप्रकाशिका नृसिंहाश्रमिविरचिता, या किल नाद्यापि प्रकाशिता। ऋजुविवरणाख्यं तु विवरणव्याख्यानं सर्वज्ञविष्णुभट्टकृतमत्रैव संस्करणे योजयामः। सर्वज्ञ-विष्णुभट्टा हि सर्वतन्त्रस्वतन्त्रजनार्दनात्मजाः, इति ग्रन्थत एव जानीमः। श्रीजनार्दनाचार्याश्चेम एवाश्रमान्तरे आनन्दगिरिनामान इति तर्कसंग्रहभूमिकात एवावगच्छामः। एतेषामाचार्यास्तु स्वामीन्द्रपूर्णा इति ग्रन्थत एव प्रतीमः। सति चैवमानन्दगिरेः संन्यासाश्रमात् पूर्वमृजुविवरणं ग्रथितं विष्णुभट्टैरिति प्रतिभाति। तत्त्वदीपनकाराः—"योऽपी"ति विवरणग्रन्थः (६०६ पृष्ठ) कैश्चन प्रक्षिप्त इति मन्यत इति वर्णयन्ति, ऋजुविवरणे तस्याव्याख्यानाद् ऋजुविवरणकारा अप्युल्लिखिता भवेयुरिति प्रतिभाति। ऋजुविवरणमिदं मद्रपुरराजकीयादर्श-(*Oriental Library*) पुस्तकालयाध्यक्षाणां कृपयाऽस्माभिस्ततोऽधिगतमिति ते धन्यवादार्हाः। अस्मिन्नवसरे एतेषामेवाध्यक्षाणामनुमत्या मद्रपुरविश्वविद्यालयगवेषणाविभागाधिकृताः *T. R.* चिन्तामणिमहोदया अपि यैरस्माकं भाष्यभावप्रकाशिका चित्सुखाचार्याणां विलिख्य समर्पिता, तेऽपि च सादरमेव स्मर्यन्ते ॥

सत्येवास्मिन् विवरणप्रस्थाने वाचस्पतिमिश्रा भामतीनाम्ना व्याख्यानान्तरेण प्रस्थानभेदेनाद्वैतमेव स्म प्रचारयन्ति, यतो भामतीव्याख्या कल्पतरुः ॥

कल्पतरोरनन्तरमृजुप्रकाशिकाख्याऽपराऽपि व्याख्याऽऽखण्डानन्दयतिराडभिधैर्महाभागैर्भामत्या विरचिता, या हि सरलगभीरतादिगुणगणभरिता प्रत्यक्षरव्याख्या किंचिदिव न्यूनं चतुस्सूत्रीपर्यन्तमुपलब्धा मद्रपुरपुस्तकालयात् 'अडयार'स्थानगतात्, इति तदध्यक्षा अप्यस्माकमुत्तमर्णाः ॥

ऋजुप्रकाशिकाकारा आन्ध्रदेशीया नलगन्तुवंशजा इत्यादिकं ग्रन्थत एव जानीमः। एते खलु रत्नकोशस्य नृसिंहाश्रमकृते रत्नकोशप्रकाशिकाख्यां व्याख्यामेकां व्यरचयन्निति, ऋजुप्रकाशिकायां जन्माद्यधिकरणोपसंहारे 'मत्कृतरत्नकोशप्रकाशिकायामि'त्युल्लेखादधिगच्छामः। रत्नकोशप्रकाशिकायाः कर्ता कालहस्तियज्वेति 'अडयार'दर्शसूच्यां दृश्यते। श्रीकालहस्तियज्वनस्तु ऋजुप्रकाशिकाकाराणां

पितृचरणा इति तु सत्यम् । शैली तु व्याख्याया अस्या अतिसरला बालसुबोधा बह्वर्थपरिपूर्णाऽपि । अस्मिन् संस्करणे भामत्याः प्रत्यक्षरव्याख्यानापेक्षां बहूनामालोक्यैनामपि वयमत्र योजयामः ॥

ऋजुप्रकाशिकाकारा स्वस्याखण्डानन्दाभिधां संन्यासाश्रमस्वीकारनिबन्धनां सूचयन्ति । मङ्गलश्लोकगता भावा अपि लेशतोऽपि तत्त्वदीपनगतमङ्गलश्लोकगतेभ्यो भावेभ्यो न विलक्षणाः । आचार्यचरणाः स्वीयास्तु 'श्रीबोधपृथ्वीधराः' इति तत्त्वदीपनकारैरुच्यते । ऋजुप्रकाशिकायां तु—"स्वयंप्रकाशं गुरुमानतोऽस्मि" इति । 'बोधपृथ्वीधरः' इत्यानन्दगिरेरेव नामान्तरमिति तु नेदं विप्रतिपन्नम् । सति चैवं स्वयंप्रकाशपदमपि यदि गौणाभिधानम्, तर्हि तु तत्त्वदीपनकारा एव विवरणप्रस्थानस्येव भामतीप्रस्थानस्यापि व्याख्यानं संपादयामासुरिति सुष्ठु लगति ॥

विवरण-भामत्योर्भामत्यां न विवरण इव तत्तादृश्योऽद्वैतप्रक्रियाः समालोचिताः, भामत्यास्तु प्रसन्नगभीरायाः प्रत्यक्षरव्याख्यानमेकमपेक्ष्यत इति तु सत्यम् । "सम्यग् वाचस्पत्यस्य कुर्विति व्याख्यामि"ति प्रक्रम एव विशिष्य वाचस्पत्यस्य समुल्लेखेनापि ग्रन्थकारैरेतैरपरस्य भाष्यविवरणस्य विवरणं कृतमित्यस्ति संभावनाऽवसरः । अत्र तु चारितविमर्शका एव प्रमाणम् ॥

अस्यां च परिस्थितौ चित्सुखाचार्यैरपि भाष्यभावप्रकाशिकानाम्नी व्याख्यैका भगवत्पादभाष्यस्य व्यरचि । इयं हि व्याख्या कुत्रचन पञ्चपादिकावाक्यानि कुत्रचन भामतीवाक्यानि च तथैवोपक्षिप्य संघटिता, इति प्रस्थानद्वयेऽपि चित्सुखाचार्याः समदृष्टय इति विशदमिदमुदारमतीनामपुरोभागिनाम् । मन्यामहे तदनन्तरमेव श्रीनारायणसरस्वतीभिः 'शारीरकमीमांसाभाष्यवार्तिकमि'ति • विवरणमेकं सुविस्तृतं ब्रह्मसूत्रभाष्यस्य भगवत्पादानां समपादीति ॥

शारीरकमीमांसाभाष्यवार्तिकस्य हि कृष्णानन्दसरस्वतीकृता व्याख्याऽप्येका दरीदृश्यते । एतादृशविरलविरलगभीरार्थ-निबन्धजातसंग्रहण-संरक्षणादिना, अस्माकं तस्यास्यादर्शरूपस्य वितरणेन च चिरचिन्तनीया बङ्गीयैषियाटिक्सोसाइटीसंपादकास्तत्सदस्याश्च ॥

अत्र हि वादप्रस्थानयोग्या बहव एव तत्तादृशाः प्रक्रियाविशेषाः संसूचिता वर्तन्ते, इति प्रायेण ब्रह्मानन्दसरस्वतीनामाचार्या नारायणतीर्था एवेमे नारायणसरस्वतीनाम्नापि प्रसिद्धा इति प्रतिभाति । 'परोक्षभ्रमेऽप्यनिर्वचनीयख्यातिरेव', अथवा तु 'न परोक्षो भ्रम एव संभवति' 'स्वतःप्रामाण्यवादस्त्वनुमित्यादौ गुणनिर्णयासंभवाद् न संभवदुक्तिकः', 'चक्षुरिन्द्रियस्य प्रथमतो विषयदेशगमनेन प्रथममालोचनात्मकं ज्ञानं जायते, तदनन्तरमेव मनसो विषयदेशगमनेन विशेषावधारणं भवति', 'स्मृतिरूपः परत्र पूर्वदृष्टावभासः' इत्यनेन त्रिंशन्मतानिरासेनैकत्रिंशं मतं भ्रमविषये व्यवस्थाप्यते', 'वेदान्तविचारस्तद्विजिज्ञासस्वेति वाक्येनेतिकर्तव्यतया प्रतिपाद्यते', इत्यादयो विषयाः प्रतिवाक्यं प्रतिपदं वा भाष्यार्थस्य सम्यग्निष्कर्षणेन तत्तादृशविवरणान्तराणामौचित्यविचारचर्चया, उक्तानुक्त-दुरुक्तचिन्तनेन च सुष्ठु विवृतं भगवत्पादीयं भाष्यमनेन यथार्थाभिधानेन वार्तिकेन ॥

अस्य च कालः १५९२ तमं क्रैस्तवं शतकमिति *Catalogus Catalogorum* इत्यत्र विवेचितमेव । माकिम्—इतः शतकादेकात् पूर्वमेव प्रादुर्भावो न्यायामृतकाराणां व्यासतीर्थानामपि, इति चित्सुखी-पञ्चपादिका-विवरण-भामती-कल्पतरुनिरसनेन स्वतन्त्रविचारावलम्बनेन प्रक्रियाविशेषाणां द्वैत-

केवलाद्वैताद्यभिमतानां खण्डन-मण्डनप्रणाल्या वादप्रस्थानमुदमिलत् । यदनन्तरं मधुसूदनसरस्वती-नामुक्तन्यायामृतानिरसनपराद्वैतसिद्धिग्रन्थ उदियाय, येनानुमीयते—विशेषत एव मतद्वयेऽपि वादप्रतिवादास्तत्र तत्र खण्डनमण्डनशैल्या प्रादुर्बभूवुः, यतस्तरङ्गिणीनाम्नी न्यायामृतव्याख्या श्रीरामतीर्थानां बहिरवततार । अयमेव समयः श्रीमदप्पय्यदीक्षितेन्द्राणामपि—ये खलु परिमलादिग्रन्थविरचनेनाद्वैत-मतावलम्बिनां चिरन्तनोत्तमर्णाः । परिमलादिसमय एव श्रीविशिष्टाद्वैतसंप्रदायानुसारिणां महाचार्यादीनामपि समयः, यदा वेदान्तपरिभाषा धर्मराजाध्वरीन्द्राणामङ्कुरयति स्म । तदेवम्—न केवलं द्वैतिभिः, किन्तु विशिष्टाद्वैतिभिरप्याक्रम्यमाणमद्वैतमतं सर्वत एवोपप्लूयमानमासीत् । तदनन्तरं तु ब्रह्मविद्याभरणादि-भाष्यप्रस्थाननिबन्धानां लघुचन्द्रिकादीनां च वादप्रस्थाननिबन्धानां गौडब्रह्मानन्दसरस्वतीप्रभृतिकर्तृकाणाम-वतारेण सर्वत एव सुरक्षितमद्वैतमतम् ॥

सव्याख्यवेदान्तपरिभाषा-सिद्धान्तलेशसंग्रह-शारीरकमीमांसाभाष्य-सव्याख्य-तद्व्याख्याभामती-पञ्च-पादिकाविवरण-न्यायामृताद्वैतसिद्धि-तरङ्गिणी-लघुचान्द्रिका-न्यायरत्नावल्यादीनाम्, शारीरकमीमांसाभाष्य-वार्तिकस्य च सम्यगध्ययनेन तत्र प्रवीणतां प्राप्ताः, विश्वासिमः, सव्यसाचीवाद्वैतमतमात्मानं च सर्व एव प्रभवन्ति रक्षितुम् । श्रीद्वैतसंप्रदायानुसारिणां न्यायामृतसौगन्धादिग्रन्था न्यायभास्करादिवाद-ग्रन्थाश्च प्रक्रियाविशेषाणां सम्यग् अद्वैताभिमतानां स्फुरणे न कथमपि पुरतः स्थास्यन्ति । पञ्च-पादिका-विवरण-भामत्यादीनामन्यथाग्रहणेनैव श्रीव्यासतीर्थानां तात्पर्यचन्द्रिका, नतु वास्तवार्थग्रहणेनेति चन्द्रिकाखण्डनाद्वैतदीपिकादिपर्यालोचने विशदं भविष्यति ॥

ब्रह्मसूत्राणां विशिष्टाद्वैतवाद एव स्वारस्यमिति भगवद्रामानुजादिभाष्यमपि विरोधवरूथिन्यादिषु व्यासतात्पर्यनिर्णयादौ च व्यक्तं समालोचितम् । व्यासतात्पर्यनिर्णयविमर्शरूपो महामहोपाध्यायश्रीदेशिकाचार्य-महाशयानां व्याससिद्धान्तमार्तण्डोऽपि समालोचित एवास्माभिरद्वैतमार्तण्डेऽस्मदीये ॥

अद्वैताभिमतः प्रपञ्चमिथ्यात्ववादो न मतान्तराभिमतप्रपञ्चसत्त्ववादस्य विरुद्धः, मतान्तरेषु हि सत्यमहंभावाद्यनुवृत्तिरितरप्रपञ्चानुवृत्तिश्च स्वाभिमते मुक्तिक्षणेऽपि मन्यते, मतान्तराभिमता तु मुक्तिरप्यद्वैतिनां व्यवहारदशैव, इति व्यावहारिकसत्यत्ववादस्य स्वीकारादद्वैतिनाम्, कथमद्वैतिनो मतान्तरं बाधन्ते ? अधिकारिभेदेन सर्वाण्यपि दर्शनानि मुक्तिसोपानविशेषाः, इति नेदं विप्रतिपन्नमद्वैतिनाम् । अद्वैतदर्शनाख्यं सोपानान्तरमेव शशशृङ्गायमाणमिति तु कल्पना रूपविशेषानिषेधः प्रज्ञाचक्षुषाम् । उदयनाचार्या हि—"किमार्द्रकवणिजो वहित्रचिन्तया" इति पुरुषधौरेयाधिकारिणमद्वैतवादं मन्यन्ते ॥

भगवत्पादा मुक्ता वा ? न वा ? यदि मुक्ताः, न तर्हि निबन्धरचनादिसंभवः, यदि तु न मुक्ताः, तदाऽपि ननु ब्रह्मस्वरूपसाक्षात्काराद्यभावाद् नानुभूतार्थविषयमिदं भाष्यमिति सप्तमरसोपदेश इव कथमादरणीयमद्वैतदर्शनमिति शङ्का तु सर्वेष्वपि दर्शनेषु समाना, यतस्तत्रापि वैकुण्ठप्राप्त्यनन्तरं मुक्तानां न पुनरावृत्त्या स्वीयोपदेशप्रचारणं संभवदुक्तिकम् । वेदान्तवाक्यपरीक्षासिद्धार्थमेव हि सर्वेऽपि भाष्यकारा विवेचयन्ति । मननावस्थायां खलु भाष्यकारा न साक्षात्कारावस्थायामिति तु वस्तुस्थितिः ॥

सत्स्वपि बहुषु प्रकाशितेष्वप्रकाशितेषु च भाष्यविवरणेषु प्रस्थानद्वयस्यापि सम्यगवगमार्थं भामती-

प्रस्थानं संग्रहतः, विवरणप्रस्थानं च संपूर्णं प्रकाशयितुकामाः सांप्रतं प्रथममिदं संस्करणं प्रियपाठकानामुपहरामः। विवरणप्रस्थानं हि लुप्तप्रायं विशेषतः प्रचारमर्हतीति, इति तत्त्वदीपनतोऽपि प्राचीनमृजुविवरणं नाम विवरणमपि सुमनोरममतिसरलं चात्र तत्त्वदीपनेन साकं योजयामः। ऋजुप्रकाशिकाख्या भामतीव्याख्या तत्त्वदीपनकारैरखण्डानन्दमुनिभिरेव संगृहीतेति संभावनामनु विवरणप्रस्थानप्रधानेऽस्मिन् संस्करणे सत्यप्यप्रकाशिते भामतीतिलकादिव्याख्यान्तरे विशिष्टं स्थानमलभत। वार्तिकविषये तु वक्तव्यं पूर्वमेव निवेदितम्। प्रदीपाख्या तु व्याख्याऽस्मदीया टिप्पणीमात्रमपि, विश्वसिमः, कथमपि प्रियपाठकानां न विरागातिशयमुत्पादयिष्यति। इमां हि व्याख्याम्—

"आचार्यकृतिनिवेशनमप्यवधूतं वचोऽस्मदादीनाम्।
रथ्योदकमिव गङ्गाप्रवाहपातः पवित्रयति"॥
"विदितसकलवेद्यैर्न प्रशंसन्ति लोके
प्रथितमपि महद्भिः किं पुनर्मादृशेन।
इति विफलसमेऽस्मिन् वाग्व्ययेऽहं प्रवृत्तः
स्वमतिविमलतायै क्षन्तुमर्हन्ति सन्तः" ॥

इत्यादिं नीतिमेवानुसृत्योपहरामः। प्रथमभागरूपेण व्याख्योपव्याख्यारूपनवनिबन्धोपबृंहितं ब्रह्मसूत्रशाङ्करभाष्यं प्रकाश्यमानं तत्तद्व्याख्यानादिसुपरिशीलनेन नियतमद्वैतप्रक्रियासु निरतिशयं विज्ञानमुत्पादयिष्यतीति वस्तुस्थितिकथनमिदम्॥

संस्करणेऽस्मिन् प्रथमे मुद्रणकालेऽक्षराणां भङ्गादिना मानुषसहजदृष्टिदोष-प्रमादादिना चाङ्कुरिता दोषा द्वितीयसंस्करणे संशोधयिष्यन्ते, इति सप्रश्रयमिदं प्रार्थयामः, यत् क्षमापणीया वयमेतेषां क्षुद्रापराधानामिति॥

संस्करणेऽस्मिन् प्रथमे बहुमूल्यस्य समयस्य विनियोगेन केवलं प्रेमवशतोऽस्माकं संशोधनकार्ये सम्यगुपकृतवन्तो महामहोपाध्याय-पण्डितप्रवर-पूज्य-श्रीसीतारामशास्त्रिमहोदयाः कलकत्ताविश्वविद्यालयाध्यापका अधमर्णयन्त्यस्मानिति नेयमतिशयोक्तिः॥

अतिकरालेऽपि काले सांप्रतमस्मत्प्रियमित्राणाम्—श्रीयुक्तामरेश्वरठाकुर-(M. A. PH. D.) महोदयानां वेदान्तशास्त्रिणां कलकत्ताविश्वविद्यालयाध्यापकानां प्रोत्साहनेन नैजैन च प्रामातिशयेन संस्कृतभाषायाः, भारतीय-प्राचीन-नवीन-प्रकाशिताप्रकाशित-काव्य-नाटकाख्यानकाख्यायिका-पुराणेतिहास-धार्मिक-सामाजिक-दार्शनिकनिबन्धानां प्रकाशनार्थं बद्धदीक्षा उत्साहमूर्तय उदारहृदयाश्च श्रीसच्चिदानन्दभट्टाचार्या मेट्रोपालिटन् पब्लिषिङ् हौसुविभागाध्यक्षाः, अन्ये च सर्वे कार्यकारिण उत्तमर्णा भारतवर्षस्य, सप्रश्रयं प्रार्थयामो भगवन्तमुमारमणं रमारमणं च, जीवन्तु प्रातिक्षणं संपत्तिवर्धनेनोत्साहवर्धनेन च चिरकालमिति शिवम्॥

इति सुधीजनविधेयः
अनन्तकृष्णशास्त्री,
महामहोपाध्यायः कलकत्ताविश्वविद्यालयाध्यापकश्च।



कामकोटिमठमास्थितो महान् ज्ञान-धर्म-तप उग्रविग्रहः ।
राजते धृतसरस्वतीपदः चन्द्रशेखर इवेन्दुशेखरः ॥

श्रीकाञ्चीकामकोटिपीठाधिष्ठान-
प्रातःस्मरणीय स्वनामधन्य वैदिकमार्गप्रतिष्ठापक-षण्मतस्थापनाचार्य-
जगद्गुरु-श्रीशङ्करभगवत्पादाः परमहंसपरिव्राजकादि—
श्री १००८ चन्द्रशेखरसरस्वतीस्वामिपादाः

# ब्रह्मसूत्रशाङ्करभाष्यानुक्रमणिका

# सव्याख्यभामतीविषयानुक्रमणिका

---

# पञ्चपादिकाप्रस्थानविषयानुक्रमणिका

---

## वार्तिकविषयानुक्रमणिका

(१) ४१४ तमे पृष्ठे 'ननु अचाक्षुषमि'ति स्थले 'चाक्षुषमि'ति पठनीयम्।

# भाष्यभावप्रकाशिकाविषयानुक्रमणिका

---

## प्रदीपविषयानुक्रमणिका

भामत्यादिव्याख्योपव्याख्योपेतब्रह्मसूत्रभाष्याध्यास-भाष्यविषयानुक्रमणिका संपूर्णा

*शुभमस्तु*





# ब्रह्मसूत्रशाङ्करभाष्यम्

भामत्यादिव्याख्योपव्याख्या-नवकोपेतम्

## ॥ सू० अथातो ब्रह्मजिज्ञासा ॥ १ ॥

### भामती

अनिर्वाच्याविद्याद्वितयसचिवस्य प्रभवतो विवर्ता यस्यैते वियदनिलतेजोऽबवनयः ॥
यतश्चाभूद्विश्वं चरमचरमुच्चावचमिदं नमामस्तद्ब्रह्मापरिमितसुखज्ञानममृतम् ॥ १ ॥

### ऋजुप्रकाशिका

विश्वं यदज्ञानविलासजातम् विज्ञानतो यद्विषयान्निवृत्तम् ॥
आनन्दरूपं हरिमद्वयं तं वेदान्तवेद्यं विधितो भजामः ॥ १ ॥
वयं विमूढा इति ये स्थितास्ते स्मयं विना यत्सविधे बुधाः स्युः ॥
न यं श्रितो बन्धमितो जनस्तं स्वयंप्रकाशं गुरुमानतोऽस्मि ॥ २ ॥
वाणीविघ्नेश्वरौ वन्दे माणिक्यगणभूषितौ ॥ वाणीप्रसिद्धये विघ्नश्रेणीनां च निवृत्तये ॥ ३ ॥
श्रीमान् श्रीनलगन्तुवंशजनितः श्रीकालहस्त्यध्वरी यज्ञाम्बा च यमात्मजं प्रसुषुवे श्रीरङ्गनाथाभिधम् ॥
सोऽयं सम्प्रति साधनोज्ज्वलमनाः प्राग्जन्मपुण्योदयात् प्राप्याखण्डयतीशतामनुभवत्यार्यादखण्डां मुदम् ॥४॥
सोऽयमखण्डो यतिराडिम्मडिजगदेकरायभूपेन । संप्रार्थितोऽस्ति सम्यग्वाचस्पत्यस्य कुर्विति व्याख्याम् ॥५॥
स कल्पकतरोरर्थमभिधाय क्वचित् क्वचित् । करोत्यखण्डयतिराट् व्याख्यां वाचस्पतेः कृतेः ॥ ६ ॥

इह खलु कश्चिद्विपश्चिदग्रगण्यो वाचस्पतिः श्रीमच्छङ्करभगवत्पादकृतं शारीरकभाष्यं व्याचिकीर्षुः स्वचिकीर्षितस्य अविघ्नपरिसमाप्त्यादिसिद्धये विषयप्रयोजनप्रदर्शनपूर्वकं शास्त्रप्रतिपाद्यं परं ब्रह्म नमस्करोति—* अनिर्वाच्येत्यादिना * ॥ केवलस्य ब्रह्मणोऽसङ्गस्य वियदादिप्रपञ्चनिर्मातृत्वायोगात्—"अनिर्वाच्याविद्याद्वितयसचिवस्ये"त्युक्तम् । *अनिर्वाच्यम् = सत्त्वासत्त्वाभ्यां निर्वक्तुमशक्यम्, अत एव सदसद्विलक्षणम्, मिथ्याभूतमिति यावत् । तच्च तत् अविद्याद्वितयं च तथोक्तम् । तद्द्वितयं सचिवम् = सहकारि यस्य तस्य । अनादिभावरूपा एका अविद्या, पूर्वपूर्वभ्रमजन्यसंस्काररूपा अपरा अविद्या ; एवंरूपेण द्वैविध्यात् तद्द्वितयसाचिव्यमुक्तम् । तत्साचिव्यं च ब्रह्मणस्तद्विषयतया, न तदाश्रयत्वेन ; जीवानामेव तदाश्रयताया वक्ष्यमाणत्वात् । *ननु*—एवमविद्याद्वितयसाचिव्ये ब्रह्मणः पारतन्त्र्यमेव स्यात्, न स्वातन्त्र्यम्; इत्यत आह—*प्रभवत इति* ॥ *प्रभवतः = समर्थस्य

### भाष्यभावप्रकाशिका

यत्साक्षात्सच्चिदानन्दं प्रत्यगक्रियमद्वयम् । तन्नमामि नृसिंहस्य योगगम्यं परं पदम् ॥

### भामती

**निःश्वसितमस्य वेदा वीक्षितमेतस्य पञ्च भूतानि ॥ स्मितमेतस्य चराचरमस्य च सुप्तं महाप्रलयः ॥ २ ॥**

### ऋजुप्रकाशिका

**स्वतन्त्रस्येत्यर्थः**; स्वोपकरणभूतस्य अविद्यादितयस्य स्वस्वातन्त्र्याव्याघातकत्वादिति भावः। एवंविधस्य ब्रह्मणः पारमार्थिकसत्ताकत्वाद्वियदादिप्रपञ्चस्य चापारमार्थिकसत्ताकत्वाद् ब्रह्मविषमसत्ताककार्यत्वेन वियदादीनां ब्रह्मविवर्तत्वमिति भावः। न केवलं वियदादिभूतपञ्चकस्यैव ब्रह्मविवर्तत्वम्, किन्तु जीवानामपि चराचरोपाधिकानां बिम्बभूतब्रह्मप्रतिबिम्बरूपत्वात् तद्विवर्तत्वमित्याह—*यत इति *॥ अथवा*—भूतवद्भौतिकचराचरात्मकविविधप्रपञ्चस्यापि ब्रह्मविवर्तत्वमेवेत्यभिप्रेत्याह—*यत इति* ॥ भौतिकप्रपञ्चस्य ब्रह्मविवर्तत्वं हिरण्यगर्भद्वारा बोध्यम्। *यतः=ब्रह्मणः सकाशात्।* उच्चावचम्=अत्यधिकम्। *चरमचरम्=चराचरात्मकम्। विश्वं चाभूत्। *तदपरिमितसुखज्ञानम्=अपरिच्छिन्नानन्दरूपज्ञानघनम्। *अमृतम्=नित्यम्, मुक्तस्वरूपमिति वा। *ब्रह्म नमामः। अत्र ब्रह्मणः स्वाभिन्नत्वेन नमस्कार्यत्वायोगात् "नमामः" इत्ययं शब्दः अनुसन्धानपरः; अनुसन्धानविषयं कुर्म इत्यर्थः। ब्रह्मणः स्वाभिन्नत्वेन अनुसन्धानं तु युज्यते इति हृदयम्। अनुसन्धानविषयस्य ब्रह्मणः लक्षणप्रमाणाभ्यां सिद्धिर्वाच्या, इति विविधवियदादिभूतभौतिकात्मकजगद्विवर्ताधिष्ठानत्वलक्षणं जगदुपादानत्वम्, सर्वज्ञत्वेन जगदुपादानगोचरज्ञानवत्त्वात् जगत्कर्तृत्वलक्षणं जगन्निमित्तत्वं चेत्यभिन्ननिमित्तोपादानत्वं ब्रह्मणः तटस्थलक्षणम्—"अनिर्वाच्ये"त्यादिना "उच्चावचमि"त्यन्तेन दर्शितम्। "अपरिमितसुखज्ञानममृतम्" इत्यनेन ब्रह्मणः स्वरूपलक्षणं च दर्शितम्। ब्रह्मणः प्रमाणान्तराविषयत्वात् वेदान्ता एव तत्र प्रमाणमिति सूचितम्। "अपरिमितसुखज्ञानं ब्रह्म" इत्यनेन अज्ञाततया विपर्ययविषयत्वात् तदेव ब्रह्म विषय इति सूचितम्, तदेव च ज्ञाततया प्रयोजनमित्यपि सूचितम्; "अज्ञातं ब्रह्म विषयो ज्ञातं ब्रह्म प्रयोजनम्" ॥ इत्यभिधानात्। ब्रह्मणः सर्वज्ञत्वं जगदुपादानत्वं च दर्शितमाद्यपद्ये, तत्र सर्वज्ञत्वं कथम्? इत्याशङ्क्य ज्ञानपदेन सूचितम् ॥ १ ॥

सर्वज्ञत्वं वेदकर्तृत्व-वेदोपादानत्वादिना दर्शयति—*निःश्वसितमिति* ॥ *अस्य=ब्रह्मणः। वेदाः निःश्वसितम्; "निःश्वसितमेतद्यदृग्वेदः" इत्यादिश्रुतेः। निःश्वसितवदत्यन्तमयत्नसाध्यत्वात् वेदानां निःश्वसितत्वोक्तिः। तथाच जगत्कर्तृ-जगदुपादानभूतस्य ब्रह्मणः जगदन्तःपातिवेदं प्रत्यपि कर्तृत्वमुपादानत्वं चायातम्,

### भाष्यभावप्रकाशिका

ज्योतिर्यद्दक्षिणामूर्तिर्व्यासशङ्करशब्दितम्। ज्ञानोत्तमाख्यं तद्वन्दे सत्यानन्दपदोत्थितम् ॥
भगवत्पादपादाब्जपांसवः पान्तु सन्ततम्। अपारासार-संसार-सागरोत्तार-सेतवः ॥
संप्रदायविदामुक्ती-स्संकलय्याभिधीयते। मुनिना चित्सुखाख्येन भाष्यभावप्रकाशिका ॥

### प्रदीपः

मातामहमहाशैलं महस्तदपितामहम्। कारणं जगतां वन्दे कण्ठादुपरि वारणम् ॥

"अथातो ब्रह्मजिज्ञासे"त्यादि "अनावृत्तिः शब्दात्" इत्यन्तं चतुरध्यायात्मकं ब्रह्ममीमांसाशास्त्रमिति श्रीशंकरभगवत्पादादिमतानुयायिनः। "अथातो धर्मजिज्ञासे"त्यादि विंशत्यध्यायात्मकं तदिति तु भगवद्रामानुजादिमतानुयायिनः। तत्र, भास्कराचार्याः ज्ञानकर्मसमुच्चयवादिनः, भगवद्रामानुजादयः शंकरभगवत्पादाश्च ज्ञानकर्मसमुच्चयासंभववादिनः। ज्ञानकर्मसमुच्चयो नाम ज्ञानवत्कर्मणोऽपि मोक्षोपयोग इति, तदुभयसमप्राधान्यमेव। अयमेव भास्कराचार्यसिद्धान्तः। कुमारिलपादा अपि ज्ञानकर्मसमुच्चयवादिन एव। मन्यामहे—"इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या। दृढत्वमेतद्विषयश्च बोधः प्रयाति वेदान्तनिषेवणेने"ति श्लोके वेदान्तनिषेवणपदेन श्रीभास्कराचार्यमूलसिद्धान्तमेव कुमारिलपादा अभिप्रयन्तीति। अयं हि श्लोको वृत्तिकारीयात्मवादान्ते दरीदृश्यत इति श्रीभास्कराचार्यमूलाचार्या उपवर्षाचार्या

## भामती

षड्भिरङ्गैरुपेताय विविधैरव्ययैरपि । शाश्वताय नमस्कुर्मो वेदाय च भवाय च ॥ ३ ॥

मार्तण्ड-तिलकस्वामि-महागणपतीन् वयम् । विश्ववन्द्यान्नमस्यामः सर्वसिद्धिविधायिनः ॥ ४ ॥

ब्रह्मसूत्रकृते तस्मै वेदव्यासाय वेधसे । ज्ञानशक्त्यवताराय नमो भगवतो हरेः ॥ ५ ॥

नत्वा विशुद्धविज्ञानं शंकरं करुणानिधिम् । भाष्यं प्रसन्नगम्भीरं तत्प्रणीतं विभज्यते ॥ ६ ॥

## ऋजुप्रकाशिका

इति ब्रह्मणः सर्वज्ञत्वसिद्धिः । नच—वेदोपादानत्वेन कथं सर्वज्ञतेति—वाच्यम् ; वेदस्य सकलार्थप्रकाशनशक्तिमत्त्वेन वेदगतसकलार्थप्रकाशनशक्तेः तदुपादानगततादृशशक्तिपूर्वकत्वेनोपादानभूतब्रह्मणः सकलार्थप्रकाशनशक्तिसिद्धेः सर्वज्ञत्वसिद्धिरिति भावः । *एतस्य=ब्रह्मणः । *पञ्च भूतानि वीक्षितम्=वीक्षणपूर्वकं सृष्टत्वात् वीक्षणवत् । निःश्वासाधिकप्रयत्नसाध्यत्वाच्च पञ्चभूतानां वीक्षणत्वोक्तिः । न च—भूतानां वीक्षणपूर्वकं सृष्टत्वमसिद्धमिति—वाच्यम्; "तदैक्षत बहु स्यां प्रजायेय" इत्यादिश्रुत्या भूतभौतिकप्रपञ्चमात्रस्य वीक्षणपूर्वकत्वावगमेन भूतानामपि वीक्षणपूर्वकत्वसिद्धेरिति भावः । *एतस्य=ब्रह्मणः । *चराचरम् स्मितम् = हिरण्यगर्भद्वारा सृष्टम् । चराचरात्मकं विश्वं तस्य स्मितवत्; वीक्षणाधिकप्रयत्नसाध्यत्वात् स्मितत्वोक्तिः । चेतनस्यैव सर्वज्ञत्वात् ब्रह्मणः पूर्वोक्तसर्वज्ञत्वसिध्यर्थं चेतनधर्मसुषुप्तिमत्त्वेन चेतनत्वं संभावयति—*अस्य चेति* ॥ ब्रह्मण इत्यर्थः । *अथवा—अनायासेन नामरूपात्मकप्रपञ्चसृष्टि-स्थिति-लयकर्तृत्वात् ब्रह्मात्यन्तं महिमशालि, अतस्तदेव स्तोतव्यम्, तदेव अनुसन्धेयम्, इत्यभिप्रेत्य ब्रह्म स्तौति—*निःश्वसितमस्येत्यनेन श्लोकेन* ॥ अर्थस्तु उक्तविध एव ॥ २ ॥ वेदान्तशास्त्रव्याख्यातृत्वात् स्वस्य वेदार्थस्फूर्त्यर्थं स्वोपास्येश्वरप्रसादसिध्यर्थं च यथाक्रमं वेदमीश्वरं च समानविशेषणं कृत्वा युगपन्नमस्करोति—*षड्भिरिति* ॥ षड्भिः अङ्गैः, विविधैरव्ययैरपि उपेताय शाश्वताय वेदाय च भवाय च नमस्कुर्म इति योजना । वेदस्य षडङ्गानि—शिक्षा-कल्प-व्याकरण-निरुक्त-ज्योतिश्छन्दांसि । वेदस्याव्ययाः=चादयः । एवं वेदस्य शाश्वतत्वम् । तच्च वेदस्यापौरुषेयत्ववादिमतमादाय बोध्यम् । एवं भवस्य=शङ्करस्य षडङ्गानि—"सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः । अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य ॥" इति श्लोकोक्तानि । एवं भवस्य अव्ययाः,—"ज्ञानं विरागतैश्वर्यं तपः सत्यं क्षमा धृतिः । द्रष्टृत्वमात्मसंबोधो ह्यधिष्ठातृत्वमेव च । अव्ययानि दशैतानि नित्यं तिष्ठन्ति शङ्करे ॥" इति श्लोकोक्तानि । एवं शाश्वतत्वं भवस्य प्रसिद्धमेव । तथाचोक्तषडङ्गोपेतत्व-विविधाव्ययोपेतत्व-शाश्वतत्वविशेषणविशिष्टाय वेदाय च भवाय च नमस्कुर्म इति योजनीयम् ॥ ३ ॥ "आदित्यस्य सदा पूजां तिलकस्वामिनस्तथा । महागणपतेश्चैव कुर्वन् सिद्धिमवाप्नुयात् ॥" इति स्मृत्या मार्तण्ड-तिलकस्वामि-महागणपतीनां वाञ्छितसकलार्थदातृत्वेन प्रसिद्धत्वात् तेऽप्यवश्यं नमस्कार्या इति मत्वा तान् नमस्करोति—*मार्तण्डेति* ॥ तिलकप्रियः स्वामी तिलकस्वामी=स्कन्दः । यत एव विश्ववाञ्छितसिद्धिदत्वम्, अत एव विश्ववन्द्यत्वं द्रष्टव्यम् । विश्वशब्दो विश्वस्थजनमात्रलक्षकः ॥ ४ ॥ सूत्रव्याख्यानभूतभाष्यस्य व्याचिकीर्षितत्वात् सूत्रार्थस्फूर्तये सूत्रकर्तारं नमस्करोति—*ब्रह्मसूत्रकृते इति* ॥ हरेः ज्ञानशक्तेः अवतारो यस्मिन् स तथोक्तः, तस्मै वेधसे विधात्रे ईश्वराय । हरेः ज्ञानशक्त्यवतारत्वादेव ईश्वरत्वं बोध्यम् । *भगवते="उत्पत्तिं च विनाशं च भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥" इत्युक्तलक्षणलक्षितो यः, तस्मै । *तस्मै=प्रसिद्धाय । *ब्रह्मसूत्रकृते=वेदव्यासाय नम इति योजना । व्यासस्य हरेः ज्ञानावतारत्वमुक्तम्, तत् कथम् ? इति चेत्—"द्वापरे द्वापरे चैवं व्यासरूपी महामुने । वेदमेकं सुबहुधा कुरुते जगतो हितम् ॥" इति वचनेन तस्य तदवतारत्वमवगम्यते इति द्रष्टव्यम् ॥ ५ ॥ भाष्यकर्तारं नमस्कुर्वन् तत्कृतं भाष्यं व्याख्यायत इति चिकीर्षितं प्रतिजानीते—*नत्वेति* ॥ *विशुद्धम्=निर्मलम्, निर्विचिकित्समिति

### भामती

**आचार्यकृतिनिवेशनमप्यवधूतं वचोऽस्मदादीनाम् । रथ्योदकमिव गङ्गाप्रवाहपातः पवित्रयति ॥ ७ ॥**

**अथ यदसंदिग्धमप्रयोजनं च न तत्प्रेक्षावत्प्रतिपित्सागोचरः ; यथा समनस्केन्द्रियसंनिकृष्टः**

### ऋजुप्रकाशिका

यावत् । तादृशं विज्ञानं यस्य स तथोक्तः, तम् । *करुणानिधिम् = दयासमुद्रम् । *शङ्करम् = शङ्कराचार्यम् । *नत्वा=नमस्कृत्य ; *तत्प्रणीतम् = तत्कृतम् । *प्रसन्नगम्भीरम् = आपाततः प्रसन्नम्, विचारणायां तु गम्भीरमित्यर्थः । तादृशं भाष्यं विभज्यते=विविच्य व्याख्यायत इत्यर्थः ॥ ६ ॥ स्वस्य व्याख्यातृत्वप्रयुक्तं गर्वं परैः शङ्क्यमानं परिहरन्नाह—*आचार्येति* ॥ रथ्योदकस्य गङ्गाप्रवाहपातो यथाऽवधूतम्=अपवित्रमपि रथ्योदकं पवित्रयति, तथा अस्मदादीनां वचसः, *आचार्यकृतिनिवेशनम्=आचार्यकृतौ भाष्ये प्रवेशनम्, अवधूतमपि अपूतमपि अपवित्रमपि अस्मदादीनां वचः पवित्रयतीत्यर्थः । "अपूतमवधूतं स्यात्" इति शब्दार्णवे । तथाच तत्कृतिव्याख्यानेन वयं कृतार्थाः स्म इति भावः ॥ ७ ॥

इह विवेकः, वैराग्यम्, शमदमादिः, मुमुक्षुत्वं चेति यत्साधनचतुष्टयम्, तद्वन्तं प्रति "अथातो ब्रह्मजिज्ञासा" इति भगवता सूत्रकारेण ब्रह्मजिज्ञासा उपदिष्टा । जिज्ञासा च अभिन्नस्यैव ब्रह्मणो वाच्या, न भिन्नस्य ; "द्वितीयाद्वै भयं भवति", "उदरमन्तरं कुरुते, अथ तस्य भयं भवति", "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इत्यादिश्रुतिभिः भेदज्ञानादनर्थश्रवणेन भिन्नब्रह्मज्ञानस्य इच्छाविषयत्वायोगात् ; अतोऽभिन्नस्यैव ब्रह्मणो जिज्ञास्यत्वं मतम् ॥ *एतदत्राऽऽक्षिप्यते—इदमनुपपन्नम् ; किञ्चिज्ज्ञत्व-कर्तृत्व-भोक्तृत्वादिधर्मवता जीवेनाऽसमर्थेन सह सर्वज्ञाकर्त्रभोक्तृब्रह्मणः तद्विरुद्धत्वेनाभेदायोगात्, नच—किञ्चिज्ज्ञत्व-कर्तृत्व-भोक्तृत्व-सर्वज्ञत्वादीनामध्यस्तत्वेन वास्तवत्वाभावात् जीवब्रह्मणोरभेदो युज्यत इत्यभिन्नस्यैव ब्रह्मणः सन्दिग्धत्व-सप्रयोजनत्वाभ्यां जिज्ञास्यत्वं वाच्यमिति—वाच्यम् ; अध्यासस्यैवासंभवात्—इत्येवंरूपेणाध्यासाक्षेपपरतां "युष्मदस्मदि"त्यादिनः "तथापी"त्यतः प्राक्तनस्य भाष्यस्य दर्शयन्, "तथापी"त्यादिनः "आह कोऽयमि"त्यतः प्राक्तनस्य भाष्यस्य तदाक्षेपपरिहारपरतां दर्शयति—*अथेत्यादिना परिहरति इत्यन्तेन* ॥ *ननु*—आनन्तर्यवाची "अथ यदसंदिग्धमि"त्यत्रत्योऽथशब्दोऽनुपपन्नः ; आनन्तर्यप्रतियोगिनोऽकथनादिति—चेत्, *न* ; अत्रत्याथशब्दस्य प्रतिग्रन्थव्याख्यानारम्भपरत्वेनोपपत्तेः, आरम्भार्थत्वेनाप्यथशब्दस्य तत्र तत्र प्रयोगदर्शनात् । *ननु*—"तत् पुनर्ब्रह्मे"-

### भाष्यभावप्रकाशिका

नानानिबन्ध-पद-लब्धसदर्थमाना सत्संप्रदाय पदवीरनुवर्तमाना ।
वाचस्पतेरपि वचांसि विवर्तयन्ती वागीश्वरीव विदुषां कृतिरिष्टदैषा ॥

"तदेतद् ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्" "अयमात्मा ब्रह्मे"त्यादिवाक्यप्रतिपन्नं जीवब्रह्मणोरेकत्वलक्षणं विषयम्, "ब्रह्मविदाप्नोति परम्," "तरति शोकमात्मविदि'त्यादि श्रुतिप्रतिपन्नं प्रयोजनं च

### प्रदीपः

एवेति प्रतिभाति । आत्मवादोऽपि शाबरभाष्यगतो वृत्तिकाराणामेव, न तु शबरस्वामिनामिति व्यक्तमिदमन्यत्र । उपनिषदामर्थवादत्वोक्तिस्तु कुमारिलपादानां प्रौढिवादमात्रम्, कर्मप्रवणतानिबन्धनं वा ; यतो "न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्" । ब्रह्मज्ञानं हि भास्करमते कुमारिलमते चोपासनारूपमेव । नहि तयोः परस्परविरोधः, इति न तत्संमुच्चयासंभवः । उपास्यं तु ब्रह्म कल्पितं वोत पारमार्थिकमिति त्वन्यदेतत् । सर्वथा तु ज्ञानकर्मसमुच्चयो न विरुध्यत इति तदीयो निष्कर्षः । विज्ञानभिक्षुरपि ज्ञानकर्मसमुच्चयमेवाभिप्रैतीति तदीयभाष्य एव व्यक्तम् । अयं च समुच्चयः पूर्वोत्तरमीमांसयोरेकशास्त्रतावाद एव संभवतीति विंशत्यध्यायात्मकमेव ब्रह्ममीमांसाशास्त्रमिति तदीयं हृदयम् ॥

## ऋजुविवरणम्

असितजलदरूपं सच्चिदानन्दरूपं निजभुजजितराज्यं निर्जरैशेड्यपूज्यम् ॥
नतजनहितरामं संश्रये स्वात्मरामं जगदवनकृतं तं भासयन्तं नितान्तम् ॥१॥
जगन्निर्माणनिपुण मोहनिर्वाहहेतवे ॥ नमोऽनन्तसुखप्रत्यग्बोधरूपाय विष्णवे ॥२॥
यत्प्रसादसमावाप्तधीविकासससमन्वितः ॥ समर्थो वदितुं सम्यक् तां नमामि सरस्वतीम् ॥३॥
अप्रबोधान्यथाबोधविघ्नसङ्घनिपीडितः ॥ मनः करोमि विघ्नेश त्वत्पदद्वन्द्ववन्दने ॥४॥

## तत्त्वदीपनम्

यद्बोधसमुद्भूतं यद्बोधात्प्रविलीयते ॥ नामरूपात्मकं विश्वं तस्मै पूर्णात्मने नमः ॥१॥
जटाजूटं बिभ्रत् क्वचिदपरभागे भृतकचः तथैकस्मिन् भागे भसितमपरत्राऽऽप्तवसुणः ॥
फणीन्द्रं कस्मिंश्चिन्मणिगणधरोऽन्यत्र भगवान् गिरीशः श्रेयो नः प्रदिशतु शिवामिश्रितवपुः ॥२॥
दिक्कूलङ्कषकीर्तिफेनविशदप्रोद्दामविद्याजल भ्राम्यद्वाङ्मयतुङ्गभङ्गविलसत्तीर्थप्रभेदास्पदम् ॥
वादिव्रातकथाप्रसङ्गविसरत्तर्काश्मसारोज्ज्वलं वन्दे सर्वमुनीन्द्रसेव्यमनिशं श्रीबोधपृथ्वीधरम् ॥३॥
वादिवारणसंदोह प्रभञ्जनविशारदम् । श्रीमदानन्दशैलाह्वपञ्चास्यं सततं भजे ॥ ४ ॥

## वार्तिकम्

यस्मिञ् जगद् भ्रमति काशतृणं यथाब्धौ यस्माज्जगद्भवति नाशमुपैति यस्मिन् ॥
सत्यः सुखैकतनुभासुरबोधरूपो रामोऽहमेव न परः खलु मत्त आस्ते ॥ १ ॥
एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ॥
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥ २ ॥
शम्भुविष्ण्ववतारौ यौ व्यासशङ्करशब्दितौ ॥ गोविन्दमाधवौ पश्चाज्जातौ भक्त्या नमामि तौ ॥ ३ ॥
तत्प्रसादलवेनैव कुर्वे वार्तिकमञ्जसा ॥ श्रीमच्छारीरके भाष्ये नारायणसरस्वती ॥ ४ ॥

वेदान्तमीमांसापृथक्कर्तव्यतासमर्थनपरमिदमादिमं सूत्रम्—"अथातो ब्रह्मजिज्ञासे"ति। तस्यानुसन्धानभाष्यम्—"युष्मदस्मदि"त्यादि—"वेदान्तमीमांसाशास्त्रस्य व्याचिख्यासितस्येदमादिमं सूत्र"मित्यन्तम्। कथम्? "तद्विजिज्ञासस्व" इति श्रुत्या वेदान्तवाक्यानां हि विचारकर्तव्यतोपदिश्यते। * ननु *—एतदयुक्तम्; पदोपस्थापितपदार्थस्यैव शाब्दबोधेऽन्वयप्रतियोगित्वात्, नन्वेतदप्ययुक्तम्; "श्वेतोऽश्वो धावति" इत्यत्रोक्तनियमस्य व्यभिचारात्, तत्र हि प्रत्यक्षानुमानाभ्यामुपस्थितानामेव श्वेताश्वत्वधावनपदार्थानामन्वयप्रतियोग्यनुयोगिभावेन व्यवस्थितत्वात्, नच तत्र शाब्दत्वमसिद्धम्; प्रमाणान्तराप्रसरेण शाब्दत्वव्यवस्थितेः, आकाङ्क्षादिविशिष्टपदार्थधीजन्यज्ञानस्यैव तत्त्वात्। तस्मात्पदोपस्थितपदार्थस्यैवान्वयप्रतियोगित्वनियमोऽसिद्ध इति चेत्, न; व्यभिचारासिद्धेः, "श्वेतोऽश्वो धावति" इति बुद्धेरानुमानिकत्वात्। नच—दूरं गतस्य धावतोऽश्वस्य श्वेतपिण्डं पश्यतः खुरविक्षेपहेषाशब्दौ च शृण्वतः पुरुषस्याश्वधावद्व्यक्त्योः प्रत्येकं लिङ्गे सत्यपि विशिष्टलिङ्गाभावान्न विशिष्टधीरिति—वाच्यम्; अयं श्वेतः, धावन्नश्वो भवितुमर्हति, खुरविक्षेपशब्दवत्त्वे सति हेषाशब्दवत्त्वादिति विशिष्टलिङ्गसम्भवात्तदभावासिद्धेः। नच तत्सम्भवेऽपि पक्षे तद्ग्रहासिद्धिः; काव्यादिव मनसोपनीततद्ग्रहोपपत्तेः। तस्मात्सिद्धम्—पदोपस्थितपदार्थस्यैवान्वयप्रतियोग्यनुयोगिभावेन भानम्—इति, *अत्रोच्यते*; "यतो वा इमानि भूतानि जायन्ते" इत्यादिवाक्योक्तजगज्जन्मादिकारणं ब्रह्म तच्छब्दार्थः।

## ऋजुविवरणम्

शमादिसेनां निजरूपजैत्रीं संगृह्य मोहं परिपन्थि दैत्यम् ॥
यो मुक्तिसीतां समवाप जित्वा तमिन्द्रपूर्णं प्रणतोऽस्मि रामम् ॥ ५ ॥
ज्ञानाम्बुजं धर्मपयोनिधिं यो विकासयन्नेकगवाऽनिशं तम् ॥
ब्रह्मेन्दुरूपं कृपया विधत्ते तमोनिरासं प्रणतोऽस्मि विष्णुम् ॥ ६ ॥
गुरुवरकरुणाप्तं भावबोधं समीक्ष्य ग्रहणककृतिरूपं संप्रदायानुरूपम् ॥
ऋजुविवरणसंज्ञं स्थापनार्थं परेषां विवरणगतभावं बोद्धुमेतत्करोमि ॥ ७ ॥
यथा स्थिता व्याकृतिरन्यथा च सोपस्करा भावविवेचनी च ॥
मेयोपसंहारभिदैकताद्यौ भावाभिधानाय तथोपपत्तेः ॥ ८ ॥
संदंशेन च रीत्या वा व्याख्यानेन विनापि यत् ॥
ज्ञायते विस्तराद्भीतो विवृणोमि विहाय तत् ॥ ९ ॥

## वार्तिकम्

"विजिज्ञासस्व" इत्यत्र सोपसर्गस्य ज्ञाधातोः साक्षात्काररूपं ज्ञानम्, सनस्त्विच्छा, लोटो विधिभावने। न चैषामेकतरोऽपि पदार्थो वेदान्तवाक्यविचारः, येनोक्तवाक्यार्थः स्यादिति, *नैष दोषः* ; श्रुतोपपत्तिकलाक्षणिकपदार्थयोरपि पदोपस्थापितत्वात्, अन्यथाऽपूर्वादीनामशब्दार्थतापत्तेः, प्रकृते च वेदान्तमीमांसायाः फलतदिच्छयोरन्तर्णीतत्वात् कृतिसाध्यत्वेनान्वययोग्यत्वाच्च लक्षणया श्रुतार्थापत्त्या वोपस्थितौ वाक्यार्थान्वयित्वमित्यविरोधः ॥ तत्र भावनावादे प्रत्ययेन 'भावयेदि'त्युपस्थितौ तस्याः फलकरणेतिकर्तव्यतात्मकत्र्यंशत्वात् सामान्यतस्तल्लाभेऽपि विशेषतोऽलाभात्—किम्? केन? कथम्? इति तदाकाङ्क्षायामिच्छाविषयतया प्रकृत्यर्थस्योपस्थितेः, तेनैव किमित्यंशपूरणेऽपि करणेतिकर्तव्यतांशयोः साक्षादश्रवणात्, इष्यमाणब्रह्मज्ञानस्य प्रमाणनियतत्वात्, प्रमाणान्तरासम्भवात्, "तं त्वौपनिषदं पुरुषम्" इत्यौपनिषदत्वश्रुतेश्च योग्यतया सन्निधानाच्च प्रकृत्यैवाऽजहत्स्वार्थलक्षणयाऽऽक्षेपेण वोपस्थापितेन गृहीतशक्तितात्पर्यकवेदान्तवाक्येनैव करणांशः पूर्यते, प्रकरणेन च शमदमादिना मननादिना चेतिकर्तव्यतांश इति। नच—एवं सति सन्निधानादेव वेदान्तवाक्यान्वयलाभाल्लक्षणा व्यर्थेति—वाच्यम्; वेदान्तवाक्यसन्निधानेऽपि तद्वाचकपदासन्निधेः, पदोपस्थापितपदार्थस्यैवान्वयप्रतियोगित्वाल्लक्षणावश्यकत्वात्, आक्षेपलक्षणयोस्त्वाक्षेपे श्रुतिकल्पना, लक्षणायां तु नैवमिति परं भेदः ॥ इष्टसाधनताविधिवादेऽप्येवम्। तत्रापि प्रत्ययेन इष्टसाधनत्वमित्युपस्थितौ—किमिष्टम्? किं वा तत्साधनम्? इति विशेषाकाङ्क्षायां प्रकृत्याऽजहत्स्वार्थलक्षणया तदुभयाकाङ्क्षापूरणम्। लक्षणाप्रवृत्तिनिमित्तं तु "तत्सिद्धि" रित्यन्यत्। नच—एवं ज्ञानस्यापि साधनांशे प्रवेशात् मोक्षैकफलसाधकत्वेन "यजमानः प्रस्तरः" इतिवत् न किमंशप्रवेशित्वमिति—वाच्यम्; "सोमेन यजेत" इतिवत् विशिष्टविधौ पार्ष्ठिकान्वये यागवत्तत्फलत्वान्वयोपपत्तेः। *ननु*—एवमपि विचारो न लब्धः; वेदान्तवाक्यानामेव करणत्वेनान्वयात्, *नैष दोषः* ; गृहीतशक्तितात्पर्यकेति विशेषणात्तल्लब्धेः। न ह्यगृहीतशक्तितात्पर्यकाणां वेदान्तवाक्यानामुक्तज्ञानकरणत्वमस्ति, छिदाकरणत्वमिवोद्यमननिपातनरहितस्य कुठारस्य। नच विचारमन्तरेण शक्तितात्पर्यग्रहः; अतो विचारोऽपि तदन्तःपातीति श्लिष्टम् ॥ *ननु*—एवं सति विचारस्यापि शाब्दज्ञानजनने पदार्थज्ञानवत् सहकारिकारणत्वं स्यात्, न चैतदिष्टम्; लोके प्रत्यक्षादिना गृहीतशक्तिकस्य शब्दश्रवणसमनन्तरं तमन्तरेणापि वाक्यार्थबोधदर्शनात्, *न*; प्रकृतेऽपि तदसिद्धेः। विचारो हि नाम प्रमाणानुकूलयुक्त्यनुसन्धानम्। नच तत् प्रमाणशरीरे तत्कार्यजननाय प्रविशति; कुठारादिषु

## पञ्चपादिकाविवरणम्

पालने विमलसत्त्ववृत्तये, जन्मकर्मणि रजोजुषे, लये ॥
तामसाय जगतः, पराकृतद्वैतजालवपुषे नमः सते ॥ १ ॥

## ऋजुविवरणम्

शास्त्रारम्भेऽभिमतप्रयोजनसिद्ध्यर्थं परदेवतात्वेन प्रतिपाद्यमानं ब्रह्म आदौ नमस्करोति—*पालने विमलसत्त्ववृत्तय इति* ॥ विमलसत्त्ववद् वृत्तिर्यस्येति विग्रहः; स्थितिहेतुत्वात्। यद्वा—सत्त्वतो वर्तनं यस्येति वृत्तिवद् वृत्तिरिति च उत्तरार्धसामर्थ्यान्निश्चीयते। इतरत्राप्येवम्। *ननु*—नमस्कारश्लोके पालनादिनिमित्तं नमस्कार्यस्य गुणावच्छेदप्रतिपादनमप्रयोजनम्, *मैवम्*; तटस्थलक्षणप्रदर्शनार्थत्वात्, अथवा—ब्रह्मनमस्कारे सति विष्ण्वादीनामपि नमस्कारप्रदर्शनार्थम्। यद्वा—सते नम इत्युक्ते तस्य जडत्वेन प्रसिद्धत्वात् एतदपि तादृशमित्याशङ्कायां चेतनतासाधकजगत्कारणताप्रतिपादनार्थम्। यद्वा—नमस्कार्यस्य परत्वं बृहत्त्वं च न संभवति; विष्ण्वादीनामपि जगत्कारणत्वेन परत्वप्रसिद्धेः, इत्याशङ्क्य तेषामपि एतदात्मत्वप्रतिपादनार्थम्। किमर्थमेतद्वक्ष्यमाणप्रदर्शनं कृतम्? उच्यते; आद्यत्वात्। तर्हि ब्रह्मणः सविशेषत्वं स्यात्, इत्याशङ्क्याह—*पराकृतेति*॥ द्वैतजालमेव वपुः द्वैतजालवपुः शरीरं तत् पराकृतं तिरस्कृतं यस्मिन्निति विग्रहः। द्वैतजालस्य वा वपुः स्वरूपं पराकृतं यस्मिन्निति। अथवा—पराकृतद्वैतजालमेव वपुः स्वरूपं यस्येति विग्रहः। नमसा लक्षणत्रयलक्षितेन जीवस्यैकत्वं प्रतिपाद्यते। "णमु प्रह्वत्वे शब्दे" इत्यनुशासनात् अस्यापि तदर्थत्वात्। प्रह्वता च तदेकत्वोन्मुखीभावः; पराकृतेति भेदनिषेधप्रतीतेः।

## तत्त्वदीपनम्

विमलमदजलौघद्योतमानोरुगण्ड-स्थलनिकटनिकुञ्जद्भ्राजमानालिमालः॥
जयति पृथुलकण्ठाबद्धमालेन्द्रनीलावलिरिव सुरसिद्धाराधितो विघ्नराजः ॥ ५ ॥
आधारपङ्केरुहमध्य-संस्था मृणालसूत्राकृतिरप्रमेया ॥
शीर्षादिभेदस्थितसर्ववर्णा जिह्वाङ्गने नृत्यतु वागजस्रम् ॥ ६ ॥
नानाविधनिबन्धाढ्यप्रसूनरसमादरात्। निबन्धमधु संगृह्य क्रियते तत्त्वदीपनम् ॥ ७ ॥

पञ्चपादिकां व्याचिख्यासुः ग्रन्थकरणयोग्यतार्थं परदेवतां प्रार्थयत आद्यश्लोकेन। "यमेवैष वृणुते तेन लभ्य" इति ईश्वराधीनत्वं विद्याया लक्ष्यते। विदुषश्च ग्रन्थकरणाधिकारात्परदेवताप्रार्थनमुचितम्। अथैषाऽक्षरयोजना—सते नम इति संबन्धः। ननु—किं नमस्कार्यं सत्? अचेतनम् चेतनं वा, आद्ये न नमस्कार्यता; घटादिवत्। द्वितीयेऽपि किं जीवात्मा, उत ब्रह्म? प्रथमे किं नमस्कर्तुरनन्यत्, उतान्यत्? नाद्यः; नमस्कर्तृनमस्कार्यभावस्यैकस्मिन्नयोगात्, द्वितीयेऽपि किं तात्त्विकमुतातात्त्विकम्? आद्येऽद्वैतक्षतिः, अन्त्ये न सच्छब्दः स्यात्, सच्छब्दं ब्रह्मेति पक्षे तस्य पूर्णत्वान्न नमस्कर्तृनमस्कार्यता, इत्याशङ्क्य कारणत्वाक्रान्तं ब्रह्म नमस्कार्यमित्याह—*पालन इति*॥ जगत् इत्येतत्पदं पालनजन्मलयैः संबध्यते। पालने उद्देश्ये सतीत्यर्थः। *विमलम्=रजस्तमोभ्यामनभिभूतं यत्सत्त्वम्, तस्मिन् वृत्तिर्वर्तनं प्रतिबिम्बता यस्य, तद्विमलसत्त्ववृत्ति; तस्मै। रजस्तमसोरपि भावान्न सत्त्वोपाधिकं पालयितृत्वमिति शङ्कां निराकर्तुम्—"विमले"ति विशेषणम्। रजस्तमसोरभिभूतत्वात्सत्त्वस्योद्भूतत्वात्तदुपाधेः पालनहेतुत्वमुचितमित्यर्थः। उत्तरत्राप्यभिभूतत्वं द्रष्टव्यम्। विमलं च तत्सत्त्वं चेति विमलसत्त्वम्, तस्य वृत्तिः परिणामो यस्य, तद्विमलसत्त्ववृत्ति; तस्मै इति

## वार्तिकम्

स्वकार्यजनने तददर्शनात्, किं तर्हि? सति प्रतिबन्धे तन्निरासितया प्रमाणानुकूलं भवति, नतु तत्कार्येऽपि तस्य व्यापारः; प्रतिबन्धाभावे सति स्वयमेव तज्जननसमर्थत्वात् प्रमाणस्य; अन्यथा करणत्वव्याहतेः। प्रकृते च यद्यपि तत्त्वमस्यादिवाक्यं वाक्यार्थबोधजनने स्वयमेव समर्थम्; तथापि शक्ति-

## पञ्चपादिकाविवरणम्

यस्याः प्रसादमवलम्ब्य जगद्गुरूणामप्यस्खलद्बहुगुणाः प्रसरन्ति वाचः ॥
सा वेदशास्त्रपरिनिर्मितवन्द्यदेहा भूयात्समग्रवरदैव सरस्वती नः ॥ २ ॥
विघ्नाभितापमपहत्य मदीयकृत्यबीजं प्रवृद्धमदनुग्रहवर्षपातैः ॥
संप्रार्थितः सिततरोऽपि गणेशमेघः सिञ्चन्नभीष्टफलमङ्कुरयत्वमोघम् ॥ ३ ॥

## ऋजुविवरणम्

अनन्तरमस्खलद्बहुगुणवाक्प्रसरलाभार्थं सरस्वतीं नमस्करोति—* यस्या इति * ॥ न स्खलन्त्यः अस्खलन्त्यः, बहवो गुणा यासां ता बहुगुणाः, अस्खलन्त्यश्च ता बहुगुणाश्चेति विग्रहः। यद्वा—अस्खलन्तो बहवो गुणा यासु ताः अस्खलद्बहुगुणा इति विग्रहः। कथं सरस्वतीनमस्कारेण तल्लाभ इति ? तदाह—* सा वेदशास्त्रेति* ॥ शास्त्राभिमानित्वादिति भावः। ननु गणेशस्यादौ नमस्कारः शङ्कनीयः; अवाप्तग्रन्थकरणसामर्थ्यस्य विघ्ननिर्हरणाशङ्का यतः। अनन्तरं विघ्ननिर्हरणार्थं गणेशं नमस्करोति—* विघ्नाभितापमपहत्येति * ॥ शारीरकसूत्रकर्तृत्वात्तद्विषयमतिविकासार्थं

## तत्त्वदीपनम्

वा विग्रहः। इदमिदानीं पालयितव्यमित्येवमाकारः सत्त्वस्य परिणामभेदः कदाचिदुदेति, तस्मिन् प्रतिबिम्बितचैतन्यं पालकम्, तदभिप्रेत्य वृत्तिशब्दप्रयोग इति। तर्हि ब्रह्म पालकमस्तु, विधिरुद्रौ तु स्रष्टसंहर्ताराविति पुराणप्रक्रियामाशङ्क्य, तयोः कार्यत्वेन निखिलसर्जनसंहरणसामर्थ्याभावादखण्डं रजस्तमोभ्यामुपहितं ब्रह्म स्रष्टृ संहर्तृ चेत्याह—*जन्मेत्यारभ्य जगत इत्यन्तेन* ॥ न च कर्मपदवैयर्थ्यम्; जगतः सत्तासमवायसंबन्धलक्षणजन्मघटकव्यापारस्य विवक्षितत्वात्, सकर्तृकत्वद्योतनार्थत्वाद्वेति द्रष्टव्यम्। न च—गुणोपहितब्रह्मकारणत्वेऽविद्योपहितस्य कारणत्वप्रतिपादकश्रुत्या विरोध इति—शङ्क्यम्; "देवात्मशक्तिं स्वगुणैर्निगूढा"मित्याद्विवाक्यादविद्यायाः सत्त्वाद्यात्मत्वप्रतिपत्तेः सत्त्वाद्युपहितस्य कारणत्वोक्त्याऽविद्यावतः कारणत्वस्य विवक्षितत्वादित्यर्थः। "सर्वकर्मे"त्यादिश्रुतेः कारणरूपं तात्त्विकमित्याशङ्क्य, तात्पर्यलिङ्गानुगृहीतनिर्विशेषवस्तुप्रतिपादकवेदवचनविरोधान्नैवमित्याह—*पराकृतेति* ॥ पराकृतं द्वैतजालं वपुर्यस्मिन् सत्, पराकृतद्वैतजालवपुः, तस्मै। अथवा पराकृतद्वैतजालं वपू रूपं यत् तत्तथोक्तम्। षष्ठी च कल्पितभेदाभिप्रायेण द्रष्टव्या ॥ १ ॥ परानुग्रहलब्धविद्यः सन् स्वविद्यां ग्रन्थरूपेण प्रसारयितुं वाग्देवतां प्रार्थयते—*यस्या इति* ॥ सा सरस्वती नः समग्रवरदैव भूयाद् इति संबन्धः। तस्याः समग्रवरदत्वं कुतः ? इत्याशङ्क्य प्रसिद्धेरित्याह—*यस्या इति* ॥ जगद्गुरूणां वाचस्पतिपुरोगाणामपि वाचो यस्याः प्रसादमवलम्ब्याऽस्खलद्बहुगुणाः प्रसरन्तीति संबन्धः। अस्खलन्तो बहवो गुणा यासु ताः, अस्खलद्बहुगुणाः, अस्खलन्त्यश्च ता बहुगुणाश्चेति वा। के ते गुणाः ?

"श्लेषः प्रसादः समता माधुर्यं सुकुमारता। अर्थव्यक्तिस्तथा कान्तिरुदारत्वमुदात्तता ॥"
ओजस्तथाऽन्यदौर्जित्यं प्रेयानथ सुशब्दता। प्रौढिः समाधिः सौक्ष्म्यं च गाम्भीर्यमथ विस्तरः ॥
संक्षेपः संमितत्वं च भाविकत्वं गतिस्तथा। रीतिरुक्तिस्तथा प्रीतिरिति षड्विंशतिः स्मृता ॥" इति।

अत्र युक्तिमाह—*वेदेति* ॥ वेदाश्च शास्त्राणि चेति वेदशास्त्राणि, तैः परिनिर्मितो वन्द्यो देहो यस्याः सा तथोक्ता ॥ सरस्वत्या वागभिमानिदेवतात्वात्तासां तदधीनत्वं युक्तमित्यर्थः ॥ २ ॥ "श्रेयांसि बहुविघ्नानि भवन्ति महतामपी"ति वचनादाध्यात्मिकाद्यनेकोपद्रवप्रतिपत्तेस्तन्निरासार्थं गणेशं प्रार्थयते—*विघ्नेति* ॥ गणेशमेघो मदीयकृत्यबीजममोघं यथा स्यात्, तथाऽङ्कुरयत्वित्यन्वयः। मेघसारूप्यमाह—*विघ्नेति* ॥ प्रवृद्धमदनुग्रहवर्षपातैः विघ्नाभितापमपहत्य मदीयकृत्यबीजं सिञ्चन्त्विति संबन्धः। प्रवृद्धाश्च ते मदनुग्रहाश्चेति प्रवृद्धमदनुग्रहाः, त एव वर्षाणि प्रवृद्धमदनुग्रहवर्षाणि; तेषां पातैः। प्रसिद्धो हि मेघो वर्षपातेन तापं निरस्य बीजमङ्कुरयति, अयमप्यनुग्रहाख्यवृष्ट्याऽऽध्यात्मिकादितापनिरासेन मदीयं कृत्यबीजमङ्कुरयत्वित्यर्थः। *सिततरोऽपीति प्रसिद्धमेघादतिशयमाह। नीलनीरदो हि वृष्टिं कुर्वन् अङ्कुरयति, अयं तु सिततरोऽपीत्यतिशयः। *अभीष्टफलमिति* ॥ *अनर्थनिवृत्त्यादिफल-

## भामती

स्फीतालोकमध्यवर्ती घटः, करटदन्ता वा ; तथा चेदं ब्रह्म, इति व्यापकविरुद्धोपलब्धिः । तथाहि— *बृहत्त्वाद् बृंहणत्वाद्वाऽऽत्मैव ब्रह्मेति गीयते* ॥ स चायमाकीटपतङ्गेभ्य आ च देवर्षिभ्यः प्राणभृन्मात्रस्येदं-

## ऋजुप्रकाशिका

त्यादिना अत्र ब्रह्मणो जिज्ञास्यत्वाऽऽक्षेपोऽनुपपन्नः ; पौनरुक्त्यादिति—चेत्, *न* ; आत्मन एव बृहत्त्वात् ब्रह्मत्वम्, तस्य ब्रह्मणोऽहंप्रत्ययेनैव सिद्धत्वात् सन्देहाभावात् वक्ष्यमाणविधया प्रयोजनाभावाच्च न जिज्ञास्यत्व-मित्याक्षेप इति जिज्ञास्यत्वाक्षेपभेदेनापौनरुक्त्यात् । *प्रतिपित्सा=जिज्ञासा । तथाच "न तत्प्रेक्षावत्प्रतिपित्सा-गोचर" इत्यस्य न तत्प्रेक्षावज्जिज्ञासागोचर इत्यर्थः । असन्दिग्धस्य प्रतिपित्सागोचरत्वाभावे दृष्टान्तमाह—*यथा समनस्केति* ॥ अप्रयोजनस्य प्रतिपित्सागोचरत्वाभावे दृष्टान्तमाह—*करटेति* ॥ करटदन्तविचारेण प्रयोजनाभावादिति भावः । अस्त्वसन्दिग्धाप्रयोजनयोरजिज्ञास्यत्वम्, ततः किम् ? इत्यत आह—*तथाचेद-मिति* ॥ इदं च ब्रह्म *तथा=असन्दिग्धमप्रयोजनं चेत्यर्थः । ततोऽपि किम् ? तत्राह—*व्यापकेति* ॥ जिज्ञा-स्यत्वं सन्दिग्धत्वसप्रयोजनत्वव्यापकम्, एवं सन्दिग्धत्वसप्रयोजनत्वे अपि जिज्ञास्यत्वव्यापके ; समव्याप्त्यङ्गी-कारात् । तथाच जिज्ञास्यत्वव्यापकसन्दिग्धत्वसप्रयोजनत्वविरुद्धयोः सन्दिग्धत्वाभाव-सप्रयोजनत्वाभावयोरत्र ब्रह्मण्युपलम्भात् व्यापकाभावात् व्याप्यजिज्ञास्यत्वाभाव इति भावः । तथाचेत्थमनुमानम्—मुमुक्षुणा, ब्रह्म न जिज्ञास्यम्, न विचार्यम् ; असन्दिग्धत्वात्, समनस्केन्द्रियसन्निकृष्टस्फीतालोकमध्यवर्तिघटवत् ; अप्रयोजनत्वात्, काकदन्तवदिति । अत्र ब्रह्म पक्षः, अजिज्ञास्यत्वरूपमविचार्यत्वं साध्यम्, असन्दिग्धत्वं हेतुः, तथा अप्रयोजनत्व-मपि हेतुः । आद्यहेतौ घटस्य दृष्टान्तत्वम्, द्वितीयहेतौ काकदन्तदृष्टान्तत्वं बोध्यम् । आद्यहेतुं प्रपञ्चयति—*तथाहीति* ॥ *बृंहणत्वाद्वेति* ॥ देहादिपरिणमयितृत्वाद्वेत्यर्थः । *आत्मैवेति* ॥ "परिणामि तु देहादेः बृंहणं ब्रह्मसंज्ञकम् । आत्मैवैवंविधः प्रोक्तो भिन्नोऽहमिति निश्चितः ॥" इति वचनात् । एवंविध आत्मैव ब्रह्मेत्यर्थः । तादृशस्य ब्रह्मणः सद्वितीयत्वात्, तस्य 'अहं कर्ता' 'अहं भोक्ता' 'अहं किञ्चिज्ज्ञः' इति कर्तृत्वभोक्तृ-त्वादिमत्तया निश्चितत्वात्, कर्तृत्वादेश्चाबाध्यत्वेन वास्तवत्वात्, अध्यस्तत्वाभावेन तथाविधात्माऽभिन्नब्रह्मा-भावात्, अभेदप्रतिपादकवेदान्तानामभेदोपासनापरतया स्वार्थपरत्वाभावेनोपचरितार्थत्वात् अभिन्नं ब्रह्म जिज्ञास्य-मित्ययुक्तमित्यभिसन्धिः । ईदृशाभिसन्धिं प्रपञ्चयति—*स चायमिति* ॥ आत्मेत्यर्थः । *इदंकारास्पदेभ्यः=

## प्रदीपः

* भगवद्रामानुजादयस्तु मन्वते—सत्यं न विरोधो ज्ञानकर्मणोः, तथापि तु न तयोः समप्राधान्यम् । शास्त्राणि मुक्तिसाधनं ब्रह्मोपासनामात्रं प्रतिपादयन्ति, नतु कर्मापि । कर्म तु चित्तशुद्धिद्वारा ब्रह्मज्ञानोपकारकमात्रं तदङ्गमेव भवितुमर्हति, नतु मोक्षसाधनमपि । उपकारकत्वं च कर्मणोऽनुष्ठानद्वारा तत्तज्जन्मन्येव संभवति, नतु जन्मान्तरीयानुष्ठानेन जन्मान्तर उपकारो भवति । तत्तज्जन्मनि कर्मानुष्ठानं च कर्मविचारं विना नोपपद्यत इति मीमांसैकत्ववाद एवेति । "अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते" इति पृथक्फलनिर्देशो हि नान्यथोपपद्यते, यदि समुच्चयवाद उपनिषदां तात्पर्यम् । यद्यपि वैराग्यादिवत् कर्मणामपि ज्ञानसाधनत्वे साधनाध्याय एव पूर्वमीमांसायाः समावेशापत्तिः ; तथापि अर्थक्रमात् ब्रह्ममीमांसा-तृतीयाध्यायान्त एव योजनं वस्तुगत्याभिप्रेतमिति, नेयमापत्तिरनिष्टाऽस्माकमिति श्रुतप्रकाशिकाकारा मन्यन्ते—"जैमिनीय-पूर्वमीमांसायाः प्रतिपत्तिलक्षणसौकर्यक्रमात्तु पूर्वं निवेशः, अर्थक्रमात्तु तृतीयाध्यायचतुर्थपादेनैव सङ्गतिरि"ति वदन्तः । भास्कराचार्यमते भगवद्रामानुजाचार्यमते च—यत्र ब्रह्मोपासनमेव साक्षात्कारसमानजातीयं ब्रह्मज्ञानम्, तत्र—"आत्मा वाऽरे द्रष्टव्य" इति वाक्ये द्रष्टव्यपदं निदिध्यासितव्य इति पदार्थनिष्कर्षपरम्, नतु निदिध्यासनातिरिक्तार्थान्तरपरम्—इति ॥

* शंकरभगवत्पादास्तु—ब्रह्मज्ञानं मोक्षसाधनं प्रमाण-परतन्त्रसाक्षात्काररूपमेव, नतु पुरुषतन्त्रमुपासनारूपम् । तत्र च कर्मणो न सहभावो न वोपकारकत्वमपि । अधिकारिणां चित्तशुद्ध्याधानमात्रेण कर्मणां पर्यवसानम् । जन्मान्तरीयानुष्ठानेनापि कर्म चित्तशुद्धिद्वारोपकरिष्यति । धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तो ब्रह्मजिज्ञासायामधिकरोति । देवतानां स्वयंप्रतिभात-

### पञ्चपादिकाविवरणम्

विशेषविशिष्टरूपवत्तया चोपलभ्यमानं तमः कथं द्रव्यीमभावविधामासीदेत् ? बहुलालोकवितते ऽपि देशे निमीलितनयनस्य गोलकान्तरवर्तितमोदर्शनमन्धकारोपलब्धिः पिहितकर्णपुटस्याऽऽन्तरशब्दोपलब्धिवन्न विरु-

### ऋजुविवरणम्

प्रतियोगिनिमित्तमुपचितत्वादि सम्भवतीति तन्निराकरणे हेत्वन्तरमाह—*विशिष्टरूपवत्तयेति* ॥ नच—विशिष्टरूपवत्तयेत्यनेनैवालमिति—युक्तम् ; अभावेऽपि रूपारोपेण रूपवत्त्वनिरूपणात्तन्निराकरणार्थमुपचयापचयेति हेतोः साफल्यात् । यद्वा—उपचयापचयेत्यादिना भावत्वनिरासः, विशिष्टरूपवत्तयेत्यनेन द्रव्यत्वसाधनम्, न त्वाद्येनैव द्रव्यत्वसिद्धिः ; सुखादावप्युपचयादिदर्शनात् । *ननु* विरोधिद्रव्याक्रान्तो बाह्यदेशः, न तत्र द्रव्यत्वे सति तमसः स्थितिः सम्भवति ; नाप्यन्तः ; मूर्तद्रव्यावष्टब्धत्वात, देहगतस्य मूर्तद्रव्यव्यवहितत्वात्, उभयत्रापि ग्राहकेन्द्रियव्यापाराभावोऽविशिष्टः ; निमीलितनयनत्वात्, अथापि तमोदर्शनाद् दृश्यादर्शनमात्रमारोपितप्रतीतिमात्रं वा न द्रव्यत्वसाधकमित्याशङ्क्याह—*बहुलालोकेति* ॥ नालोकतमसोः सहस्थितिरुक्ता ; तत्कथमालोकवितते देशे प्रतीतिमात्रेण द्रव्यत्वं निराक्रियते ? इत्याशङ्क्य शङ्काबीजमाह—*बहुलालोकेति* ॥ ''गोलकान्तर्वर्ती''त्यनेन देशभेदेन तमसः स्थितिरुक्ता । ''निमीलितनयनस्ये''त्यनेन तत्रालोकविततत्यभाव उक्तः, बहिरिन्द्रियव्यापाराभावो वाऽङ्गीकृतः । ''तमोदर्शनमि''त्यनेन दृश्यादर्शनमिति पक्षनिरासः । ''अन्धकारोपलब्धिरि''त्यनेन भावरूपद्रव्यप्रमितिरुक्ता । मतद्वयनिरासद्योतनाय पदद्वयम् । *ननु* इन्द्रिय-

### तत्त्वदीपनम्

मन्दप्रभप्रदीपे मन्दिरे तयोः सहावस्थानं दृष्टमिति कथमालोकवितते देशे तमसोऽसंभव इत्याशङ्क्याह—*बहुलेति* ।

उपलम्भकाभावान्नाऽऽन्तरस्यापि तमस उपलम्भ इत्युक्तं निरस्यति—*न विरुध्यत इति* ॥ तत्र दृष्टान्तः—पिहितकर्णेति* ॥ पिहितकर्णपुटस्यापि श्रोत्रादेवान्तरशब्दोपलब्धिवदन्तर्मुखैर्लोचनरश्मिभिरान्तरं तमो गृह्यते । न चातिप्रसङ्गः ; आन्तरतमोग्राहकत्वस्याञ्जनग्राहकत्वाव्याप्तत्वात्प्रशिथिलमूलतया तर्काऽऽभासत्वात् । विमतम्, स्वगताञ्जनग्राहि, तत्संयुक्तत्वात्, यद् येन संयुक्तम्, तत् तद्ग्राहि; यथा संतमसजलादिसंयुक्तं लोचनमिति बिवक्षितत्वान्नोक्तदोषावसर इति चेत, तत्र संयोगित्वमात्रं ग्राहकत्वप्रयोजकत्वेन विवक्षितम्, उत योग्यतावत्त्वविशेषितम् ? आद्ये गगनदिगादीनपि गृह्णीयात्, द्वितीयेऽसिद्धिः ; न चोद्भूतरूपत्वेन तत्सिद्धिरिति शङ्क्यम् ; तत्त्वेऽप्यतिसामीप्येन तद्ग्राह्यत्वानुपपत्तेः, नच प्रकृतेऽप्येतत्समानम् ; कार्यदृष्टयदृष्टिभ्यां विशेषात् । उद्भूतस्पर्शस्यापि धूमस्य लोचनदेशे त्वग्ग्राह्यत्वेऽप्यन्य-

### वार्तिकम्

गोचरः, अस्मत्प्रत्ययगोचरः=चिदात्मा । यद्यपि सांख्यमते वेदान्तिमते च नाहंप्रतीतेरन्तःकरणस्य कामादीनां वाऽऽत्मा साक्षाद् विषयः ; तथाप्यचेतनस्यापि बुद्ध्यादेरतिस्वच्छस्य स्फटिकमणेर्लोहितावभासवत् चिदाभासग्राहितया भोक्तृत्वाद्याकारेण भासनाद् लौहित्येन तदुपधानानुमानवत् तेन चिदात्मनोऽनुमानात् प्रतिपत्त्यनुबन्धिविषयत्वाभावेऽपि व्यापारानुबन्धिविषयत्वमस्त्येव ; यथा धूमज्ञानस्य विषयो वह्निरिति सांख्या मन्यन्ते ॥ वृद्धास्तु निर्विकल्पस्यापि चिदात्मनोऽन्तःकरणाद्यध्याससम्बन्धात् तत्र तत्र सविकल्पतयोपलम्भाद्वाकाशस्थितस्येव तेजसोऽङ्गुल्यादिसम्बन्धाद् राहोरिव चन्द्रमस्सम्बन्धात् तद्विषय-

### प्रदीपः

गोचरयोर्विषयविषयिणोरिति* ॥ *विषयः=पराक्, इदंप्रतीतियोग्यं दृश्यम् ; शरीरान्तःकरणादि । *विषयि=दृग्रूपं स्वयंप्रकाशमानं स्वव्यवहारे स्वेतरानपेक्षं शुद्धचैतन्यस्वरूपम् ; प्रत्यक्चैतन्यमिति यावत् । वृत्त्यभिव्यक्तचैतन्यभास्यत्वयोग्यत्वं

## पञ्चपादिकाविवरणम्

ध्यते। आलोकविनाशितस्य च तमसः पुनर्मूलकारणादेव झटिति महाविद्युदादिजन्मवज्जन्म सिद्ध्यति। *ननु* रूपवतो द्रव्यस्य स्पर्शवत्त्वनियमात्तद्रहितं तमः कथं रूपवद् द्रव्यमवगम्येत ? *नैष दोषः* ; वायोरन्यत्र

## ऋजुविवरणम्

स्याऽऽन्तरवस्तुग्राहकत्वं न संभवति ; बाह्यवृत्तित्वादित्याशङ्क्याह—*पिहितकर्णपुटस्येति* ॥ *ननु* द्रव्यत्वे सति आलोकेन निवृत्तस्याऽऽलोकापाये कथं तदैवोत्पत्तिः ? तादृक्कारणाभावात्, अन्यत्र तथोत्पत्त्यदर्शनादित्याशङ्क्याह—*आलोकविनाशितस्येति* ॥ *ननु* तमसः स्पर्शवत्त्वमङ्गीक्रियते वा ? न वा ? न चेत्, रूपवत्त्वेन व्याप्तं स्पर्शवत्त्वं निवर्तमानं स्वाविनाभूतं रूपवत्त्वं निवर्तयति, तेन रूपवत्त्वमसिद्धमिति चोदयति—*ननु रूपवत इति* ॥ अङ्गीकरणे प्रतीतिः स्यादिति भावः। तत्र तज्जातीये दर्शनाभावे सहकारितर्काभावे चान्यत्र साहचर्यमात्रेणानुमाने केवलप्रतीतिनियमे वा व्याप्तिरेव न निर्वहतीत्यत्र दृष्टान्तमाह—*वायोरन्यत्रेति* ॥ *तद्वद्दर्शननियमादेवेति* ॥ दर्शनान्नियमो दर्शननियमः। अथवा—दर्शनस्य नियमो दर्शननियमः, दर्शननियमादेवेति। अनेन तावन्मात्रस्य व्याप्तिबाधकत्वम्, न तु व्यापकनिवृत्तिन्यायेनेति दर्शितम्। *एतदुक्तं भवति—वायोः स्पर्शवत्त्वेनैव प्रतीतिनियमाद्रूपवत्त्वाभावः, तद्वदत्रापि रूपवत्त्वेनैव प्रतीतेः स्पर्शवत्त्वस्य कदाचिदप्यप्रतीतेस्तदभावो निश्चीयत इति। न केवलं

## तत्त्वदीपनम्

त्रातथात्वाद् नित्यानुभवप्रसादाद्वाऽऽन्तरं तमः सिद्ध्यतीत्यर्थः। *ननु* तमः किमनादि, उत सादि ? नाऽऽद्यः ; आलोकध्वंसे तदुत्पत्त्यनुभवात्। नेतरः ; किं चतुर्विधाः परमाणवः कारणम्, ? उतान्यत् ? नाऽऽद्यः ; तेषां खण्डावयविपरम्परया महाद्रव्यारम्भकत्वात्। नच तदुपपद्यते ; आलोकापगमसमसमयमेवोत्पत्तेः। न द्वितीयः ; प्रमाणाभावादित्याशङ्क्य, तस्योत्पत्तिस्तावदुपेया, पूर्वस्य ध्वस्तत्वादित्याह—*आलोकेति* ॥

आलोकनाशितस्य प्राचीनस्य तमसो यन्मूलकारणम्, तस्मादेव तज्जातीयस्य जन्म सिद्ध्यतीति योजना। विद्युदादि हि विलम्बमन्तरेण यथा परमाणुभिरारभ्यते, तथा तमोऽपीत्यभिप्रेत्य "झटिति महाविद्युदादी"त्युक्तम्। वस्तुतस्तु—अस्मन्मते संतमसस्य न परमाणुकारणकत्वम्, किंत्वविद्यैव चिदधिष्ठिता तमोरूपेण विवर्तत इत्याह—*मूलकारणादिति* ॥ न च प्रमाणाभावचोद्यम् ; "सदेव सौम्येदमग्र आसी"दित्यादिवाक्याद् ब्रह्मणोऽद्वितीयताप्रतीतेरित्यविद्याविवर्तताया एव तस्याऽऽश्रयणीयत्वादित्यर्थः ॥

एवं निष्पत्तिप्रतीतिकारणसंभवात् तमःप्रतीतिर्न भ्रम इत्यभ्यधायि, संप्रति रूपवत्त्वहेतोरसिद्धिमाशङ्कते—*ननु रूपवत इति* ॥ रूपवत्त्वस्य स्पर्शवत्त्वं व्यापकम्, तद्व्यावृत्तौ रूपवत्त्वमपि व्यावर्तते। तथाच प्रयोगः—तमः, नीरूपम्, स्पर्शविधुरत्वात् ; गगनवदिति। विपक्षे बाधकाभावादप्रयोजको हेतुरित्याह—*नैष दोष इति* ॥ रूपवत्त्वे स्पर्शविधुरत्वभङ्गो बाधक इत्याशङ्कां प्रतिबन्द्या परिहरति—*वायोरिति* ॥ *अयमर्थः*—यत् स्पर्शवत्, तद् रूपवदिति व्याप्तेर्यथा वायौ भङ्गः, तद्वद् यद्रूपवत् तत् स्पर्शवदिति व्याप्तेस्तमसि भङ्गः। न च प्रमाणाभावः ; 'तमालमाला-

## प्रदीपः

विषयत्वम्, स्वप्रकाशत्वं विषयित्वम्। चैतन्यातिरिक्तं सर्वं वृत्त्यभिव्यक्तचैतन्यभास्यत्वयोग्यम्। प्रातिभासिकमपि प्रमाणजन्येदमाकारवृत्त्यभिव्यक्तचैतन्यभास्यत्वाद् विषय एव। चैतन्यं तु न फलव्याप्यम्, किन्तु स्वयंप्रकाशमिति न दोषः। तथाच 'विषयविषयिणोरिति' पदेनात्मान्तःकरणयोः स्वरूपतो भेदः प्रतिपादितः ॥ स्वरूपतो भिन्नयोरप्यात्मान्तःकरणयोर्भेदाग्रहाद् नाध्यासो विरुद्ध इति शङ्कावारणार्थम्—* युष्मदस्मत्प्रत्ययगोचरयोरिति * विशेषणम् ॥ युष्मच्छब्देन युष्मच्छब्दजन्यो विवक्ष्यते, अस्मच्छब्देनास्मच्छब्दजन्यो विवक्ष्यते। युष्मच्च अस्मच्च युष्मदस्मदी, तौ प्रत्ययौ युष्मदस्मत्प्रत्ययाविति विग्रहः। युष्मत्प्रत्ययो हि पुरोऽवस्थितविषयः। यद्यपि त्वंशब्दप्रयोगेणापि सम्बोध्योऽहमित्येव प्रत्येति, न तु

## पञ्चपादिकाविवरणम्

स्पर्शवद्द्रव्यस्य रूपवत्त्वनियमेऽपि रूपरहितस्य स्पर्शवतो वायोरभ्युपगमात्, तद्वद्दर्शननियमादेव स्पर्शहीनस्य रूपवत्तमसः सिद्धेः। धूमस्य च रूपवतश्चक्षुःप्रदेशादन्यत्र स्पर्शानुपलब्धिः, तद्वत्सर्वस्पर्शहीनं तमः किं न स्यात्? सवितृकिरणविततेऽपि देशे प्रदीपालोकजन्मविनाशयोः प्रागभाव-प्रध्वंसाभावेतरेतराभावेषु तमोबुद्ध्य-दर्शनान्नालोकाभावमात्रं तमः। सर्वालोकाभावश्चेत्, सर्वालोकासन्निधाने तर्हि न निवर्तेत। बहुलान्धकार-

## ऋजुविवरणम्

च्छायावेव दर्शनबलाद् व्याप्तिभङ्गः, अन्यत्रापीत्याह—*धूमस्य चेति* ॥ *एतदुक्तं भवति*—योग्यस्पर्शस्य सर्वत्र स्पर्शेन ग्रहणे स्थिते दर्शनान्नियमः; यथा धूमे, एवं तमस्यपि भावधीः। अथवा—तत्र रूपवत्त्वाभावेऽपि स्पर्शवत्त्वमभ्युपगम्यते; स्पर्शवत एव द्रव्यारम्भकत्वनियमात्, रूपवत्त्वविरोधात्, अत्र तु कथं व्याप्तिबाध इत्याशङ्क्याह—*दर्शननियमा-देवेति* ॥ नियमान्तरं नास्ति, तावन्मात्रमेव समर्थमित्यर्थः। कथं दर्शनमात्रेण व्याप्तिभङ्गः? अन्यत्रादर्शनादित्या-शङ्क्याह—*धूमस्य चेति* ॥ अत्र 'तमः सर्वस्पर्शहीनमि'ति विशेषणसामर्थ्यादेकदेशेन धूमस्य स्पर्शवत्त्वप्रतीतिः; सामर्थ्यात्, तथा सतीतरत्र रूपवत्त्वेऽपि स्पर्शवत्त्वाभाववदिति प्रतिभाति; तदितरांशस्यापि नयनदेशागमने स्पर्शदर्शनादुपेक्षणीयम्। अथवा—स्पर्शवत्त्वमङ्गीक्रियते। तर्हि प्रतीतिरपि स्यादिति चेत्, न; विद्यमानस्याप्रतीति-संभवादिति सदृष्टान्तमाह—*धूमस्य चेति* ॥ सामान्येनाभावत्वं निराकृत्येदानीं विपक्षे बाधकतर्कोऽप्यस्तीति दर्शयितुं विशेषतो निराकरोति—*सवितृकिरणवितत इति* ॥ *अथवा*—व्याप्तिभङ्गाश्रयणाद् वरमभावत्वमेवाश्रितम्; प्रतीति-मात्रस्यान्यथाकरणात्, अत्र तूत्पत्त्यादिकल्पनागौरवादित्याशङ्क्यालोकाभावत्वं तावद् दूषयति—*नालोकाभावमात्र-मिति* ॥ तत्रालोकाभावः—एकालोकाभावः? सर्वालोकाभावो वा? तथा तेषां प्रागभावः? प्रध्वंसाभावः? इतरे-तराभावो वेति विकल्प्य पक्षद्वये दूषणमाह—*सवितृकिरणेति* ॥ तृतीयं दूषयति—*सर्वालोकाभाव इति* ॥ रूपदर्शना-भाव इति पक्षेऽप्येक-सर्व-रूपदर्शनाभावमात्रपक्षांस्तथा तेष्वेव प्रागभावादिविकल्पान्मनसि निधायाह—*बहुलेति* ॥

## तत्त्वदीपनम्

श्यामलं तमः' इत्युपलम्भादिति। यद् रूपवत्, तत् चक्षुःप्रदेशादन्यत्रोपलभ्यमानस्पर्शवदिति नियमस्य धूमे भङ्गवत् स्पर्शवत्त्वनियमस्य तमसि व्यभिचार इत्याह—*धूमस्येति* ॥ तस्यानुपलभ्यमानस्पर्शत्वाद् दृष्टान्तो विषम इत्यत्राह—*तद्वदिति* ॥ सर्वसाम्यस्यानपेक्षितत्वाद् रूपवत्तमः स्पर्शमात्रहीनं स्यादित्यर्थः। यद्वा—न केवलं हेतोरप्रयोजकता, असिद्धता चेत्याह—*धूमस्य चेति* ॥ नच—स्पर्शवत्त्वे तदुपलम्भापत्तिरित्यपि—शङ्क्यम्; स्पर्शवत्त्वेऽपि धूमस्य लोचनदेशादन्यत्र स्पर्शानुपलब्धिवत् क्वचिदप्यनुपलभ्यमानस्पर्शं तमः किं न स्यादित्यर्थः। *सर्वत्र स्पर्शहीनमिति* ॥ सर्वत्रोपलभ्यमानस्पर्शशून्यमित्यर्थः।

किंचाभावस्तम इति वदन् वादी प्रष्टव्यः—किं तमः एकैकाऽऽलोकाभावः, उत सर्वाऽऽलोकाभावः? आद्येऽपि किं प्रागभावः? उत प्रध्वंसाभावः? आहोस्विदितरेतराभाव इति? विकल्पत्रयमप्यसंभवीत्याह—*सवितृकिर-णेति* ॥ जन्मविनाशयोरिति सतिसप्तमी। प्रदीपजन्मनः प्राक् प्रागभावः, जन्मनीतरेतराभावः, नाशोत्तरकाले प्रध्वंसाभावस्तत्रास्ति; तथापि सावित्रालोकव्याप्ते देशे तमो नोपलभ्यते; इतरथा तत्रापि तदुपलम्भः स्यात्। प्राग-भावाद्यवस्थासु तमोबुद्ध्यभावो विरोध्यालोकसन्निधिनिबन्धन इति वदता विरोध्यभावसहितप्रागभावादेस्तमोबुद्ध्यालम्ब-नत्वमिति वक्तव्यम्, नच तदुपपद्यते; विरोध्यभावगिरा प्रागभावोक्तौ प्रध्वंसेऽनुपपत्तेः, प्रध्वंसोक्तावितरत्रानुपपत्तेः, इतरेतराभावोक्त्यां वाऽऽलोकभावेऽपि तद्भावात्तमोबुद्धिरनिवार्येत्यर्थः। द्वितीयमनूद्य दूषयति—*सर्वेति* ॥ किमस्य सर्वेषामालोकानां सन्निधानं निवर्तकम्, उत एकैकस्य? आद्ये सकलालोकोदयमन्तरेण तन्निवृत्तिर्न भवेत्। द्वितीयेऽप्ये-कैकस्य सकलाऽऽलोकाभावनिवर्तकत्वाभावात् तमोबुद्धिः स्यात्। नच—एकैकाऽऽलोकप्रादुर्भावे तदभावस्य व्यावृ-त्तेर्न तमोबुद्धिप्रसक्तिरिति—शङ्क्यम्; प्रागभावादिविकल्पदूषणयोरत्रापि तुल्यत्वादिति हृदयम्।

### भामती

चिदात्मानं विषिण्वन्ति, अवबध्नन्ति, स्वेन रूपेण निरूपणीयं कुर्वन्तीति यावत्। परस्परानध्यासहेताव-

### ऋजुप्रकाशिका

चिदात्मानमित्याह—*एते हि चिदात्मानमिति* ॥ 'विषिण्वन्ती'त्येतद्विवृणोति—*अवबध्नन्तीति*। *ननु* अहंकारबुद्धीन्द्रियादयो न चिदात्मानमवबध्नन्ति, आत्मनो निरवयवत्वेन बन्धुमशक्यत्वादित्यत आह—*स्वेन रूपेणेति* ॥ *ननु* "स्वेन रूपेण निरूपणीयं कुर्वन्ती"त्यस्य स्वेन रूपेणावभासयन्तीत्यर्थे, आगत एव परस्पर-

### वार्तिकम्

त्वमुपचरन्ति। तथाच वसिष्ठः—"अदृश्यो दृश्यते राहुर्गृहीतेनेन्दुना यथा। तथाऽनुभवमात्रात्मा दृश्येनात्माऽवलोक्यते"—इति। वक्ष्यति चैतद् भगवान् भाष्यकारः—"न तावदयमेकान्तेनाविषयः; अस्मत्प्रत्ययविषयत्वात्"—इति। तेनायमात्मा शुद्धचिद्घनोऽस्मत्प्रत्ययविषय इत्युच्यते। युष्मच्चास्मच्च युष्मदस्मदी, तयोः प्रत्ययौ युष्मदस्मत्प्रत्ययौ, तद्गोचरौ च तौ, युष्मदस्मत्प्रत्ययगोचरौ; तयोरित्यर्थः। *ननु* एवं तर्हि भोग्यभोक्त्रोरित्येव वाच्यम्, किं युष्मदस्मत्प्रत्ययगोचरयोरिति ? क्लिष्टश्च, *नैष दोषः*; यद्यपि सांख्यमते शुद्धस्याप्यात्मनः पारमार्थिकं भोक्तृत्वमस्ति; बुद्धौ चिच्छायापत्तेर्भोगत्वात्, तस्याश्च तन्मते सत्यत्वात्, तथापि वेदान्तिमते तदभावाद् अन्यतरासिद्धो हेतुः स्यात्। तथाच विरोधासिद्धेर्न तादात्म्यानुपपत्तिः सिद्ध्येदिति, उभयसंप्रतिपन्नरूपेण विरोधप्रतिपादनार्थम्—युष्मत्प्रत्ययगोचरत्वेन सकलभोग्यानुगमार्थं च *"युष्मदस्मत्प्रत्ययगोचरयोरि"त्युक्तम्*। यद्वा—सांख्यशिष्ययोस्तन्त्रेण पूर्वपक्षित्वात् तन्त्रेण स्वपरमताभिधानार्थं तथोक्तमित्यदोषः। * विषयविषयिणोरिति * ॥ दृग्दृश्ययोरित्यर्थः। विशेष्यपदमेतत्। पूर्वोत्तरे तूपपादकोपपाद्यपरे विशेषणपदे इति ध्येयम्। नच—पूर्वोत्तरपदयोः परस्परव्याहतार्थत्वात् प्रतिज्ञाविरोधो नाम निग्रहस्थानम्, पूर्वपदेन विपरीतविषयविषयित्वबोधनादिति—वाच्यम्; उपचारेणैव चिदात्मनो जडविषयत्वाभिधानादित्युक्तत्वात्, परमार्थतो जडविषयस्यैव विषयत्वादित्यविरोधः। *विरुद्धेति* ॥ विरुद्धः स्वभावः=स्वरूपं ययोस्तौ, विरुद्धस्वभावौ; तयोरित्यर्थः। तत्र

### भाष्यभावप्रकाशिका

भवितुं युक्तमि"त्यन्तेन भाष्येणार्थाच्च "सुतरामितरेतरभावानुपपत्तिरि"त्यन्तेन तत्त्वानुसरणलक्षणं मङ्गलाचरणं सम्पादयति। 'इदमस्मत्प्रत्ययगोचरयोरि'ति वक्तव्ये युष्मद्ग्रहणमत्यन्तभेदोपलक्षणार्थम्। त्वङ्कारवदिदंकारस्याहंकारप्रतियोगित्वाभानात्, 'एते वयम्', 'इमे वयम्' इति प्रयोगदर्शनात्। युष्मच्चास्मच्च युष्मदस्मदी। युष्मच्छब्देन जडस्वभावा बुद्धीन्द्रियदेहा उच्यन्ते। अस्मच्छब्देन तत्साक्षी चिद्रूप आत्मा; तयोः प्रत्ययौ। मनइन्द्रियादिव्यवधानेनात्मनः प्रतीतिः युष्मत्प्रत्ययः, अस्मत्प्रत्ययः स्वाहङ्कारः, तयोर्गोचरयोः = युष्मदस्मत्प्रत्ययगोचरयोः। तदनेन प्रत्ययतो विरोधो दर्शितः। स्वरूपतो विरोधमाह—*विषयविषयिणोरिति* ॥ अत एव * विरुद्धस्वभावयोः=तादात्म्यायोग्ययोरिति यावत्।

### प्रदीपः

त्वमिति; तथापि सम्बोध्यातिरिक्ता नाहमिति जानन्ति, किन्त्वयमितीति, प्रमाणजन्यवृत्त्यभिव्यक्तचैतन्यभास्यत्वादन्तःकरणमपि दृश्यमेवानुमीयते। इदमेवाभिप्रेत्य सिद्धान्तबिन्दौ—'अन्तःकरणस्य प्रतिभासततोऽहंप्रत्ययविषयत्वम्, चिद्भासत्वेन तु लक्षणेन युष्मत्प्रत्ययविषयत्वमि'ति वर्णितम्। सति चैवं प्रतीतितोऽपि भेद आत्मान्तःकरणयोर्वर्तत इति साधनाद् भेदाग्रहरूपप्रथम-

### भामती

त्यन्तवैलक्षण्ये दृष्टान्तः—*तमःप्रकाशवदिति* ॥ न हि जातु कश्चित् समुदाचरद्वृत्तिनी प्रकाशतमसी परस्परात्मतया प्रतिपत्तुमर्हति, तदिदमुक्तम्—*इतरेतरभावानुपपत्ताविति* ॥ *इतरेतरभावः=इतरेतरत्वम्,

### ऋजुप्रकाशिका

तादात्म्याध्यास इति, अत आह—*भाष्ये—तमःप्रकाशवदिति* ॥ तमःप्रकाशवद् विरुद्धस्वभावत्वं निवर्त्य-निवर्तकभावत्वं वा, सहानवस्थायित्वं वा ? नोभयमपि ; दार्ष्टान्तिके तदभावात्, विषयविषयिणोः परस्परं निवर्त्यनिवर्तकभावाभावात्, काले तयोः सहावस्थानाच्च ; तथाच दृष्टान्त-दार्ष्टान्तिकभावायोग इत्याशङ्क्य, परस्परविलक्षणत्वमेव विरुद्धस्वभावत्वम् ; तावतैव परस्परतादात्म्याध्यासायोगसंभवात्, तथाचात्यन्त-विलक्षणत्वस्य दृष्टान्त-दार्ष्टान्तिकयोः समानत्वात् तद्वैलक्षण्यमात्र एव 'तमःप्रकाशवदि'ति दृष्टान्त इत्याह—*परस्परेति* ॥ *ननु* स्वरूपतोऽत्यन्तवैलक्षण्यं न परस्परतादात्म्यानध्यासहेतुः, सत्यपि प्रकाश-तमसोरत्यन्त-वैलक्षण्य उलूकादीनां प्रकाशे तमस्तादात्म्याध्यासदर्शनाद् इत्याशङ्क्य, परस्परानात्मत्वेनावभासमानत्वलक्षणं वैलक्षण्यं परस्परतादात्म्यानध्यासहेतुत्वेन विवक्षितम्, उलूकादीनां तु तमः-प्रकाशयोः परस्परभेदाग्रहात् तदुभयता-दात्म्यारोप इत्यभिप्रेत्याह *न हीति* ॥ *समुदाचरन्त्यौ भेदेन प्रतिभासमाने वृत्ती वर्तने ययोः ते, तथोक्ते ; ते च ते प्रकाशतमसी च, ते इत्यर्थः । दृष्टान्ते स्वोक्तमर्थं दार्ष्टान्तिकेऽपि सिद्धवत् कुर्वन् भाष्यारूढं करोति—*तदिदमुक्तमिति* ॥*''इतरेतरभावानुपपत्तावि''त्यत्र* इतरस्य धर्मिण इतरत्र धर्मिणि भावो वर्तनम्,

### पञ्चपादिकाविवरणम्

संवृतापवरकान्तरवस्थितस्यापि बहीरूपदर्शनेन सहापवरकान्तस्तमोदर्शनान्न रूपदर्शनाभावमात्रं तम इत्यलमतिप्रसङ्गेन ।

### तत्त्वदीपनम्

रूपदर्शनाभावस्तम इत्यत्रापि किमेकैकस्य रूपस्य दर्शनाभावः, उत सर्वस्य ? आद्येऽपि किं रूपदर्शनमात्राभावः, उत यत्र तमोबुद्धिस्तत्रत्यरूपदर्शनाभाव इति विकल्प्याद्यं प्रत्याह—*बहुलान्धकारेति* ॥ द्वितीयोऽपि प्रागभावादिविकल्पेन दूष्यः । सर्वरूपदर्शनाभावस्तम इति पक्षे सर्वरूपदर्शनमन्तरेण तमो न निवर्ततेत्यर्थः ।

तथा आलोकसंसर्गाभावस्तम इत्यत्रापि किं संसर्गप्रागभावः ? उत तत्प्रध्वंसः ? आहोस्वित् तदितरेतराभावः ? आद्ये प्रध्वंसे तमोबुद्धिर्न स्यात्, द्वितीये प्रागभावे, तृतीयेऽप्यालोकव्याप्तेऽपि देशे तमोबुद्धिः स्यात् । नच—भावरूपतमोवादिनाऽपि तद्व्यञ्जकत्वेनाऽऽलोकाभावः समाश्रितः, तस्यैव तमोबुद्धिगोचरत्वमिति—शङ्क्यम् ; इतरेतराभावव्यतिरिक्ताऽऽलोकाभावस्य व्यञ्जकत्वमाश्रीयते, नच स त्वयैष्टव्यः ; इतरेतराभावस्येतरेतराभावानिरूपणात् । नच—तमसो रूपिद्रव्यत्व आलोकसहितचक्षुर्ग्राह्यत्वप्रसङ्ग इति—वाच्यम्. रूपवदभावस्याऽऽलोकसहितचक्षुर्ग्राह्यत्वनियमेऽप्यालोकाभावस्य केवलचक्षुर्ग्राह्यत्वनियमवदत्रापि तदुपपत्तेरिति । एतत्सर्वं मनसि निधायोपसंहरति—अलमतिप्रसङ्गेनेति ॥

### वार्तिकम्

दृष्टान्तः—*तमःप्रकाशवदिति* ॥ अत्र तु विरोधः परस्परतादात्म्यायोग्यता ग्राह्या, न सहावस्थानायोग्यता ; दृष्टान्त-दार्ष्टान्तिकयोरुभयोरपि सहावस्थानदर्शनात् । तथाच तत्प्रयुक्तपरस्परतादात्म्यानुप-

### प्रदीपः

कारणासंभवो "युष्मदि"त्यनेन सूचितः । तथाच—*युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोः=भिन्नतया गृह्यमाणयोरात्मान्तःकरणयोस्तादात्म्याध्यासासंभवे धर्मीणामपि तादात्म्याध्यासासंभव इति भाष्ययोजना ॥ न केवलं प्रथमं तृतीयं च

### पञ्चपादिका

त्मकत्वस्यानुपपत्तिः । कथम् ? स्वतस्तावद्विषयिणश्चिदेकरसत्वान्न युष्मदंशसम्भवः, अपरिणामित्वा-न्निरञ्जनत्वाच्च न परतः, विषयस्यापि न स्वतश्चित्सम्भवः, समत्वाद् विषयत्वहानेः ; न परतः ; चितेर-

### पञ्चपादिकाविवरणम्

*ननु* दृग्दृश्ययोरितरेतराभावानुपपत्तिस्तयोर्विभ्रमनिमित्तं तादात्म्यावभासं न निरुणद्धि, शुक्तिका-रजतयोरपि हि तादात्म्यहीनयोरेव विभ्रमनिमित्तमैकाधिकरण्यमवभासते, तद्वदिहापि स्यादिति चोदयति—*कथमिति* ॥ सत्यम् ; इदमंशमात्रस्याधिष्ठानस्य रजतस्य चाध्यस्यमानस्य क्वचित्तादात्म्यमस्त्येव, ततश्चाधिष्ठानसामान्यांशस्याध्यस्यमानविशेषांशस्य च क्वचित्सामान्यविशेषभावेन वा गुणगुणिभावेन वा समानाधिकृतस्यान्यत्रान्यतरांशवतः पदार्थस्य दर्शनादन्यतरांशाध्यासो विभ्रमो दृष्टः, तद्वदिहाधिष्ठानस्य चितोऽध्यस्यमानस्य चानात्मनो नास्तीत्याह—*स्वतस्तावद्विषयिणश्चिदेकरसत्वान्न युष्मदंशसम्भव इत्यादिना* ॥

### ऋजुविवरणम्

*ननु* इतरेतरभावानुपपत्तौ सहेतुकायां साधितायां कथमित्याक्षेपोऽनुपपन्न इत्याशङ्क्याभिप्रायमाह—*ननु दृग्दृश्ययोरिति* ॥ *ननु* तादात्म्याभावेनाध्यासो निराकर्तुं न शक्यत इति चोदिते, स्वत इत्यादिग्रन्थैः चिज्जडतादात्म्यनिराकरणं व्यर्थमित्याशङ्क्य समुदायतात्पर्यमाह—*सत्यमित्यादिना* ॥ यद्यपि विशेषयोस्तादात्म्यं नास्ति ; तथापि कथञ्चिदस्तीत्यङ्गीकरोति—*सत्यमिति* । नच—"स्वतस्तावदि"त्यादिना चिदेकरसत्वादिहेतुसमुदायेन तादात्म्यनिराकरणे भाष्याननुसारः, तत्र विरोधेन तन्निराकरणादिति—वाच्यम् ; विरोधस्यैव तैस्साध्यमानत्वात् । *ननु* स्वतो विषयिणश्चिदेकरसत्वाद्युष्मदंशसंभव उत्पत्तिर्नास्तीत्युक्तमिव प्रतिभाति, तथा परतोऽपि संभवो नास्ति ; स्वस्यापरिणामित्वादिति ; एवं च सति व्यधिकरणो हेतुः । नहि स्वस्य चिदेकरसत्वमपरिणामित्वं वा प्रपञ्चोत्पत्तिं निरुणद्धि । *यद्वा*—स्वत इत्यनेन = स्वतः = स्वस्माद्विषयिणः, युष्मदंशसंभवः = उत्पत्तिर्नास्तीत्यन्वयः, स्वतस्तदाकारत्वं वा नास्तीति ; पूर्वस्मिन् व्यधिकरणत्वम्, उत्तरस्मिन् परस्परव्याहतिः । विषयोऽस्यास्तीति

### तत्त्वदीपनम्

विरुद्धस्वभावत्वेनेतरेतरभावे प्रतिक्षिप्ते, कथमिति चोद्यस्यानुपपत्तिरित्याशङ्क्य पारमार्थिकतादात्म्याभावेऽपि तद्भ्रमः स्यादिति तात्पर्यमाह—*ननु दृग्दृश्ययोरिति* ॥ अनुपपत्तिरित्यत्र परमार्थत इति द्रष्टव्यम् । विभ्रमो निमित्तं यस्य स तथा, तमित्यर्थः । न च विभ्रमावभासयोरेकत्वान्निमित्तनैमित्तिकताऽनुपपन्ना ; पूर्वभ्रमस्योत्तरभ्रमनिमित्ततायाः विवक्षितत्वेनानुपपत्त्यभावादित्यर्थः । *ननु* स्वाभाविकतादात्म्याभावेऽपि तादात्म्यभ्रमः स्यादिति चोदिते, आत्मनोऽनात्मांशत्वनिराकरणमसंगतमित्याशङ्क्याधिष्ठानाध्यस्यमानयोः किं विशेषरूपेणाऽन्यत्र तादात्म्याभावः, उत सामान्यरूपेणेति विकल्प्याद्यमङ्गीकरोति—*सत्यमिति* ॥ न द्वितीय इत्याह—*—*इदमंशमात्रस्येति* ॥ इदंरूप्ययोः सामान्यविशेषादिभावेन क्वचित्तादात्म्यवतोरेव तादात्म्यभ्रमो दृष्टः, नेह प्रकृते तादृशमपि तादात्म्यं समस्तीत्यर्थः ।

किं युष्मदंशस्य स्वस्मान्न संभवः, विषयिणश्चिदेकरसत्वादित्यर्थः, उत विषयिणः सकाशान्न संभव इति । आद्ये

### भाष्यभावप्रकाशिका

न तु सहानवस्थानयोग्ययोरिति भावः । "तमःप्रकाशवदिति" निदर्शनमेवं विरोधाभिप्रायम् ; मन्दप्रभे मन्दिरे तयोस्सहोपलम्भात् । एतेनाभावत्वमपि तमसो निराकृतं वेदितव्यम् । इदमाह—* इतरेतरभावानुपपत्तौ सिद्धायामिति * ॥ तादात्म्यलक्षणकार्यस्यानुपपत्तौ सिद्धायामित्यर्थः ॥

## पञ्चपादिकाविवरणम्

*अयमाशयः* :—द्रष्टुरचिदंशः स्वाभाविको वा स्यादागन्तुको वेति। न स्वाभाविक इत्याह—*स्वत इति* ॥ चेत्यं हि जडं चैतन्यस्य कर्मकारकतयाऽवभासते। तत्कथमेकस्यां क्रियायां कर्तुर्विपरीतस्थानगतं कर्मकारकमात्मा स्यादित्यभिप्रायः। आगन्तुकश्चेत्, सहेतुरहेतुर्वा। निर्हेतुश्चेत्, तत्राह—*अपरिणामित्वादिति* ॥ न हि निरवयवं वस्तु स्वतः सावयवाकारेण परिणममानं दृष्टमित्यभिप्रायः। न सहेतुरित्याह—*निरञ्जनत्वादिति* ॥ न हि निरवयवमाकाशं हेतूपरागात्परिणममानं दृष्टमित्यर्थः। तद्धनात्मैवाधिष्ठानमात्मांशात्मकं क्वचिद् दृष्टमिति,

## ऋजुविवरणम्

विषयीति तादात्म्यप्रतीतेः। टीकायाम्—*अपरिणामित्वादिति* आगन्तुका सहेतुकोत्पत्तिर्निरस्यते। एवं व्यधिकरणत्वं प्रकृततादात्म्यानिराकरणादप्रयोजनं चेत्याशङ्क्याह—*अयमाशय इति* ॥ द्रष्टुरचिदिति विकल्पव्याजेन विषयिण इति व्याख्यातम्। *स्वाभाविकेत्यनेन स्वत इति व्याख्यातम्। *ननु* चैतन्यस्य जडात्मत्वनिराकरणे कथं चिदेकरसत्वं हेतुः? असिद्धिप्रसङ्गात्; अथवैकरसस्यैवाकारान्तरासंभवादहेतुः, नच 'द्रष्टुरि'त्येवान्तर्गर्भितो हेतुः; द्रष्टुरेव युष्मदंशसंभवाद्विरोधाभावात्, अतः स्वरूपपरत्वेन निराकरणे हेत्वभावान्न प्रतिज्ञातार्थसिद्धिरित्याशङ्क्याभिप्रायमाह—*चेत्यं हीति* ॥ अंशभेदेनाविरोधशङ्का निरंशत्वेन सुपरिहृतत्वान्न कृता। अन्यत्र टीकाकारेणाप्येवमेवोक्तम्—"तत्कथमेकस्य निरवयवस्य विरुद्धांशद्वयसन्निवेशः"—इति। आगन्तुकत्वे निराकर्तव्ये "न परतः" इति निराकरणमसङ्गतम्; विकल्पितपक्षत्वाभावात्, तथा स्वतोऽपरिणामिनोऽपि परतः परिणामदर्शनादनैकान्तिको हेतुः। अथ परतः परिणामो न संभवति निरञ्जनत्वादिति व्याख्यायेत, तथा सति निर्हेतुकपरिणामस्य शेषाभ्यनुज्ञान्यायेनाङ्गीकार इति शङ्कानिराकरणाय विकल्पयावतारयति—*आगन्तुकश्चेदिति* ॥ *'अपरिणामित्वादिति'* परिणामरहितत्वे विवक्षिते हेतोरसिद्धिः स्यात्; परिणामायोगात्, इत्यभिप्रायमाह—*न हि निरवयवमिति* ॥ 'निरञ्जनत्वादि'त्युक्तमयुक्तम्; निरवयवस्यापि हेतुसंसर्गात्परिणामाङ्गीकारप्रसङ्गात्, तथाच तस्यासिद्धत्वमित्याशङ्क्य परिणामित्वापादकहेतुसंसर्गायोगादित्यभिप्रायेण व्याचष्टे—*न हि निरवयवमिति* ॥ विषयस्येत्यनेन विषयस्य चिदात्मकत्वनिराकरणं व्यर्थम्; अधि-

## तत्त्वदीपनम्

व्यधिकरणता, द्वितीये त्वसिद्धिरित्याशङ्क्याह—*अयमाशय इति* ॥ अवयवश आशयोऽभिधीयत इत्यर्थः। हेत्वसिद्धिं निरस्यति—*चेत्यं हीति* ॥ कर्मकारकतया भासने हेतुमाह—*जडमिति* ॥ फलितमाह—*तत्कथमिति* ॥ कर्मत्वेऽप्यात्मत्वं किं न स्यादित्यत आह—*कर्तुरिति* ॥ क्रियां प्रति गुणभूतः कर्ता, तस्य विपरीततया प्रधानतया स्थानमवस्थानं; तद् गतं प्राप्तं येन तत्तथोक्तम्। गुणत्वप्राधान्ययोः कथमेकत्र विरोधः? गन्तुर्विदिकर्मत्वदृष्टेः, इत्याशङ्क्याह—*एकस्यामिति* ॥ द्वितीयमनुवदति—*आगन्तुक इति* ॥ सोऽपि विकल्पासह इत्याह—*सहेतुरिति* ॥ आत्मनोऽनात्माकारपरिणामे किमन्यो हेतुरस्त्युत नेति विकल्पार्थः ॥

आत्मनोऽपरिणामित्वम् "आत्मकृतेः परिणामादि"ति सूत्रेण "सच्च त्यच्चाभवदि"त्यादिश्रुत्या च विरुद्धमित्याशङ्क्य, निरवयवस्याविद्यां विना तत्त्वतः परिणामानुपपत्तिरित्याशयमाह—*न हि निरवयवमिति* ॥ आद्यं दूषयति—*न सहेतुरिति* ॥ असिद्धिं निरस्यति—*नहीति* ॥ चेतनस्यानात्मांशत्वाभावेऽप्यनात्मनश्चैतन्यांशत्वं स्यादिति शङ्कते—*तद्धनात्मेति* ॥ *क्वचिद् दृष्टमिति* । "अहमुपलभ" इत्युपलब्ध्याश्रयत्वमहंकारस्य दृष्टमित्यर्थः। चैतन्यांशत्वं किं स्वभावः, उतागन्तुकम्? इति विकल्प्याद्यं प्रत्याह—*नेत्याहेति* ॥ समयोरप्यात्मनोर्विषय-विषयित्ववद्

## प्रदीपः

कारणं नात्रावसरति, किन्तु द्वितीयमपीति सूचयन् विशेषणान्तरमाह—* तमःप्रकाशवद्विरुद्धस्वभावयोरिति * ॥ अनेन च सादृश्यज्ञानासंभव उपक्षिप्यते। न हि शुक्तिकायामिवेङ्गालेऽपि रजतज्ञानमुदेतीति. सादृश्यज्ञानमवश्यमध्यासकारणमिति स्वीकर्तव्यमिति, प्रकृते तदभावान्नात्मन्यन्तःकरणाध्यास इति भावः ॥ * इतरेतरभावानुपपत्तौ=तादात्म्यप्रतीत्यनुपपत्तौ ॥

### भामती

तादात्म्यमिति यावत् ; तस्यानुपपत्ताविति ॥ स्यादेतत्—मा भूद्धर्मिणोः परस्परभावः, तद्धर्माणां तु जाड्य-चैतन्य-नित्यत्वानित्यत्वादीनामितरेतराध्यासो भविष्यति; दृश्यते हि धर्मिणोर्विवेकग्रहणेऽपि तद्धर्माणामध्यासः, यथा कुसुमाद् भेदेन गृह्यमाणेऽपि स्फटिकमणावतिस्वच्छतया जपाकुसुमप्रतिबिम्बोद्ग्राहिणि—'अरुणः

### ऋजुप्रकाशिका

इतरेतरभावः, तदनुपपत्तावित्यर्थे क्रियमाणे धर्मिणोस्तादात्म्याध्यासमङ्गीकृत्य संसर्गाध्यासनिषेध उक्तः स्यात् ; तथाच सिद्धसाधनं स्यात् ; सिद्धान्तिना तादात्म्याध्यासाङ्गीकारात्, धर्मिणोः संसर्गाध्यासनिषेधाङ्गीकाराच्च, अतोऽर्थमाह—*इतरेतरभाव इतरेतरत्वम्, तादात्म्यमिति यावदिति* ॥ *तस्यानुपपत्ताविति* ॥ *इतरेतर-तादात्म्यस्य प्रतीत्यनुपपत्तौ सिद्धायाम्, तादात्म्यस्याध्यासानुपपत्तौ सिद्धायामिति निर्गलितार्थः । तथाच इत्थमनुमानम्—युष्मदस्मत्प्रत्ययगोचरत्वेन विषय-विषयित्वेन चोक्तावनात्मात्मानौ, नेतरेतरतादात्म्यप्रतीत्यापन्नौ, इतरेतरानात्मत्वेन प्रतिभासमानत्वात् ; तमः-प्रकाशवदिति । नेतरेतरतादात्म्यापन्नावित्येव साध्ये क्रियमाणे सिद्धसाधनं स्यात्, अतः प्रतीत्यापन्नावित्येतत्पर्यन्तधावनम् । उक्तयोर्धर्मिणोस्तादात्म्याध्यासानुपपत्तिमङ्गीकृत्य धर्माणामध्यासं शङ्कते—*स्यादेतदिति* ॥ *परस्परभाव इति* । परस्परतादात्म्यप्रतीतिलक्षणोऽध्यास इत्यर्थः । *जाड्यम्=अनात्मभूतविषयधर्मः । *चैतन्यम्=विषयिभूतस्यात्मनो धर्मः । एवमनित्यत्वमनात्मभूत-विषयधर्मः, नित्यत्वं विषयिभूतस्याऽऽत्मनो धर्मः । एतदादीनां धर्माणामितरेतरत्राध्यासो भविष्यति=अनात्म-गतानामात्मन्यात्मगतानामनात्मन्यध्यासो भविष्यतीत्यर्थः । *ननु* धर्मिणोरितरेतरतादात्म्याध्यासा-भावे धर्माणामितरेतराध्यासः क्व दृष्ट इति ? अत आह—*दृश्यते हीति* ॥ अत्र स्फटिके जपाकुसुमगतलौहित्य-धर्माध्यासेऽपि जपाकुसुमे स्फटिकधर्मारोपो नास्तीति, 'धर्माणामितरेतराध्यासो दृश्यते ही'त्ययुक्तमित्यभिप्रेत्याह—

### पञ्चपादिकाविवरणम्

नेत्याह—*विषयस्यापीति* समत्वादिति* ॥ *अयमर्थः—यथा द्रष्टुर्द्रष्ट्रन्तरं न प्रत्यक्षगोचरः, अनुमेयमेव तत्, एवं विषयोऽपि स्यादिति । परतोऽपि नानात्मनश्चिदाकारपरिणामः ; जडोपादानस्यापि कार्यस्य जडत्वात्, तर्ह्यात्मचैतन्यमेवानात्मा स्वांशत्वेन स्वीकरोतीति चेत्, तत्राह—* चितेरप्रतिसंक्रमत्वादिति * । तस्मात्-क्वचिदपि तादात्म्यादर्शनादन्यत्रान्यतरांशदर्शनेनान्यतरांशाध्यासो नोपपद्यत इति ।

### तत्त्वदीपनम्

आत्मानात्मनोरपि किं न स्यादित्याशङ्कायामाह—*अयमर्थ इति* ॥ प्रत्यग्विषयत्वस्य निषिध्यमानत्वान्न व्यभि-चार इत्यर्थः । द्वितीयेऽपीदं निरूपणीयम्—किमनात्मा स्वतश्चिदाकारेण परिणमते, उतान्यतः ? नाद्यः ; सदा तत्परि-णामप्रसङ्गादिति मत्वा द्वितीयं प्रत्याह—*परतोऽपीति* ॥ विमतः, जडः, जडोपादानत्वात् ; संमतवदित्यर्थः ॥

मुखसन्निधानाद्दर्पणस्य तदाकारत्ववदनात्मनोऽपि चित्सन्निधानाच्चिच्छायता स्यादिति चोदयति—*तर्ह्यात्मेति* । अनात्मनश्चिच्छायता चिदाकारपरिणामः, उत चैतन्यस्य तत्र संक्रमणम् ? नाद्यः ; पूर्वरूपे स्थिते नष्टे वाऽन्यस्यान्य-भावासंभवात्, अन्त्येऽपि संक्रमणं किं तात्त्विकम्, उतातात्त्विकम् ? न प्रथमः ; निष्क्रियत्वात्पूर्णत्वाच्च। न द्वितीयः ; क्व चित्तात्त्विकांशांशिताभावे तत्कल्पनाया एवासंभवादित्यभिप्रेत्याह—*तत्राहेति* ॥ टीकायामपेक्षितं पूरयति—*तस्मादिति* ॥

### भाष्यभावप्रकाशिका

*ननु*—मा भूत् धर्मिणोरितरेतरभावः, तद्धर्माणां तु जाड्य-चैतन्य-नित्यत्वानित्यत्वादीनामितरेतरा-

**भावानुपपत्तौ सिद्धायाम्, तद्धर्माणामपि सुतरामितरेतरभावानुपपत्तिः, इत्यतोऽ-**

### भामती

स्फटिकः' इत्यारुण्यविभ्रम इति, अत उक्तम्—*तद्धर्माणामपीति*।। इतरेतरत्र धर्मिणि धर्माणां भावो विनिमयः,

### ऋजुप्रकाशिका

*इत्यत उक्तमिति*। *विनिमयो* व्यत्यासः, इतरेतरत्र धर्मिणि इतरेतरधर्माध्यास इति यावत्; तस्यानुपपत्तिरित्यर्थः। *ननु* उभयत्र धर्मिण्युभयगतधर्माध्यासादर्शनेन तदुपपत्तावप्यन्यतरत्र स्फटिकेऽन्यतरजपाकुसुमगतधर्माध्यासदर्शनेन तद्वत् स्यादित्यत आह—*अयमभिसन्धिरिति* ।। धर्मिणोरन्यतरत्रान्यतरस्य

### पञ्चपादिका

प्रतिसङ्क्रमत्वात्। *तद्धर्माणामपि सुतरामिति* ।। एवं स्थिते स्वाश्रयमतिरिच्य धर्माणामन्यत्र भावानुपपत्तिः सुप्रसिद्धेति दर्शयति। इतिशब्दो हेत्वर्थः। यस्मादेवमुक्तेन न्यायेनेतरेतरभाव-

### पञ्चपादिकाविवरणम्

*तद्धर्म्माणामपि सुतरामित्यारभ्याभाव एवाध्यासस्य युक्त इत्यतः* प्राक्तनो ग्रन्थः स्पष्टार्थः।

### वार्तिकम्

**पत्तिः सिद्धा भवति। * ननु *—धर्मिणोर्जपाकुसुमेन्द्रनीलमण्योरितिरेतरभावाभावेऽपि तद्धर्मयोर्नील-लौहित्ययोः परस्परविनिमयो दृष्टः, तद्वद् दृग्दृश्ययोरितिरेतरभावाभावेऽपि तद्धर्माणां चैतन्यादिकर्तृत्वादीनां विनिमयसंभवात् तद्द्वारा तयोरध्यासससिद्धिर्भविष्यतीति, नेत्याह—* तद्धर्माणामपि सुतरामितरेतरभावा-नुपपत्तिरिति *॥ इतरेतरस्मिन् भावो विनिमयः, तदनुपपत्तिरित्यर्थः। इतरेतरयोर्भावो धर्मः, धर्म-प्रधानो निर्देशः; इतरेतरधर्मानुपपत्तिरिति वार्थः। धर्मिणं विहाय धर्माणां स्वातन्त्र्येण गमनानुपपत्तेः; अन्यथा च धर्मत्वहानेर्न तद्विनिमयः संभावयितुमपि शक्यः, किं पुनः प्रमापयितुमित्यभिप्रेत्योक्तम्—*सुतरा-मिति *॥ अपिशब्दो धर्म्यपेक्षया। योऽपि जपा-नीलमणिधर्मयोर्नील-लौहित्ययोः परस्परविनिमय उक्तः, सोऽप्यसिद्धः; न हि तत्रापि धर्मविनिमयोऽस्ति; उक्तविरोधात्; किं तर्हि? तत्प्रभयोर्नील-लोहित-द्रव्ययोस्तत्र गत्वा मिश्रणात् तदविवेकाद् रञ्जितपटवत् तद्व्यवहारमात्रं भवतीति न किञ्चिदनुपपन्नम्॥**

### भाष्यभावप्रकाशिका

रोपः स्यादिति, तत्राह—*तद्धर्माणामिति* ।। पूर्वोदितविरोधभावादतिविरोधभावाद्धर्मिणमतिक्रम्य धर्मा-णामन्यत्र गमनासंभवाच्च—*सुतरामित्युक्तम्* ।। इति शब्दो हेत्वर्थः। अध्यासव्यापकभेदाग्रहविरुद्ध-भेदग्रहस्येह संभवाद् अध्यासव्यापकभेदाग्रहं व्यावर्तयन् भेदग्रहस्तद्व्याप्यमध्यासमपि निवर्तयति यस्मादित्यर्थः। अथवा—क्वचित् सामान्यविशेषाध्यासेनाप्रमिततादात्म्ययोरन्यत्रान्यतरांशदर्शनादन्यत-रांशाध्यारोपो दृष्टः, प्रकृते तु चिदचितोस्सामान्यविशेषात्मनाऽनाकलिततादात्म्ययोरारोपो न संभवति यस्मादित्यर्थः। तस्मादात्मन्यनात्मारोपो न युक्त इत्याह—*अत इति* ।। आत्मन्यधिष्ठानेऽनात्मारोपो

### प्रदीपः

*ननु*—धर्मिणोस्तादात्म्याध्यासाभावेऽपि धर्माणां परस्पराध्यासः कथं न संभवति? न हि धर्माध्यासो यत्र यत्र, तत्र तत्र धर्म्यध्यास इति नियमः; विनापि लोहितपुष्पाध्यासं स्फटिके लौहित्याध्यासदर्शनात्, इत्यत आह—* तद्धर्माणामपि

### भामती

तस्यानुपपत्तिः ॥ अयमभिसन्धिः—रूपवद् द्रव्यमतिस्वच्छतया रूपवतो द्रव्यान्तरस्य तद्विवेकेन गृह्यमाणस्यापि छायां गृह्णीयात्, चिदात्मा त्वरूपो विषयी न विषयच्छायामुद्ग्राहयितुमर्हति। यथाहुः—"शब्द-गन्ध-रसानां च कीदृशी प्रतिबिम्बता" इति। तदिह पारिशेष्याद्विषयविषयिणोरन्योन्यात्मसंभेदेनैव तद्धर्माणामपि परस्परसंभेदेन विनिमयात्मना भवितव्यम्, तौ चेद्धर्मिणावत्यन्तविवेकेन गृह्यमाणावसंभिन्नौ, असंभिन्ना-स्तयोर्धर्माः; स्वाश्रयाभ्यां व्यवधानेन दूरापेतत्वात्, तदिदमुक्तम्—*सुतरामिति* ॥ *तद्विपर्ययेणेति* ॥

### ऋजुप्रकाशिका

प्रतिबिम्बभावो वा, धर्मिणोः परस्परतादात्म्याध्यासो वा धर्माध्यासे निमित्तत्वेन वक्तव्यः; तत्र आत्मानात्मनो-र्धर्माध्यास आद्योक्तं निमित्तं न लभ्यत इत्यभिप्रेत्याह—*रूपवद्धि द्रव्यमिति* ॥ यद्यद् रूपवद् द्रव्यं स्वच्छम्, तद् रूपवद्द्रव्यस्य प्रतिबिम्बग्राहीति व्याप्तेरित्यर्थः। नच—नीरूपस्याकाशस्य जले प्रतिबिम्बभावदर्शनेनास्या व्याप्तेर्व्यभिचार इति—वाच्यम्; स्वगतसूर्यकिरणप्रतिबिम्बद्वाराऽऽकाशस्य जले प्रतिबिम्बत्वभ्रम इत्युक्तव्याप्ते-र्व्यभिचाराभावात्। यद्यपि नीरूपस्यापि रूपस्य प्रतिबिम्बोऽस्त्येव; तथाऽपि द्रव्यस्य प्रतिबिम्बो रूपवत एवेति नियम इति भावः। प्रतिबिम्बः छायाशब्दार्थः। अस्तूक्तव्याप्तिः, प्रकृते किमायातमिति? अत आह—*चिदात्मा त्विति। न विषयच्छायामुद्ग्राहयितुमर्हतीति* ॥ न विषये प्रतिबिम्बितुमर्हतीत्यर्थः। एवं विषयोऽपि न चिदात्मनि प्रतिबिम्बितुमर्हतीत्यूहनीयम्। नीरूपस्य प्रतिबिम्बाभावे संमतिमाह—*यथाहुरिति* ॥ द्वितीयं परिशेषयति—तदिहेति* ॥ "विषयविषयिणोरि"त्यनन्तरं धर्मिणोरिति शेषः। *अन्योन्यसम्भेदेनैव*=अन्योन्य-तादात्म्याध्यासेनैव। तद्धर्माणामपि *विनिमयात्मना=व्यत्यासात्मना, *परस्परसंभेदेनैव*=परस्परतादात्म्या-ध्यासेनैव, *भाव्यम्=अन्यतरधर्मिणि अन्यतरधर्माध्यासेन भाव्यमित्यर्थः। अस्त्वेवम्, तावता किमायातमिति? अत आह—*तौ चेदिति*। आत्मान्तःकरणे विषय-विषयिणौ चेद्धर्मिणावित्यर्थः। *असंभिन्नौ=तादात्म्या-ध्यासानापन्नौ। *असंभिन्नाः=व्यत्यासेन परस्पराध्यासानापन्नाः। तत्र हेतुमाह—*स्वाश्रयाभ्यां व्यवधाने-नेति* ॥ धर्मिणोः परस्परभिन्नत्वज्ञानप्रयुक्तेनान्यधर्मिण्यन्यधर्मानाश्रयत्वज्ञानेनेत्यर्थः। अध्यासानुपपत्ति-

### वार्तिकम्

तेनैवं वाक्यार्थयोजना कर्तव्या—विषय-विषयिणोरितरेतरभावानुपपत्तौ सिद्धायां तद्धर्माणामपि सुतरा-मितरेतरभावानुपपत्तिः। *कुतस्तयोरितरेतरभावानुपपत्तिरिति*? तत्राह—*तमःप्रकाशवद्विरुद्धस्वभावयो-रिति*। तदपि कुतः?—*युष्मदस्मत्प्रत्ययगोचरयोरिति* ॥ तेनैवं प्रयोक्तव्यम्—विवादगोचरतापन्ना धर्माः, नेतरेतरविनिमयभाजः, इतरेतरभावानापन्नधर्मत्वात्; घटपटत्वादिवदिति। नचासिद्धिः; दृग्दृश्यौ, न परस्परात्मानौ, विरुद्धस्वभावत्वात्; तमःप्रकाशवत्। नचायमपि हेतुः साध्यसमत्वादसिद्धः; तथाहि—तौ, विरुद्धस्वभावौ, युष्मदस्मत्प्रत्ययगोचरत्वात्, मार्जारमूषकवदिति। न हि भोक्तृभोग्ययो-रविरुद्धस्वभावतयैकता भवति; तथा सति भोक्तृभोग्याविभागापत्तेः, भोग्यस्यापि भोक्तृत्वापत्तेश्च। तथाच सर्वलोकव्यवहारोच्छेद इति विपक्षबाधकस्तर्कः। इयमेवाशङ्का—"भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्" इत्यस्मिन्नधिकरणे भविष्यति; परंतु तत्र सर्वस्य जगतश्चेतनकारणाक्षेपकतया मुखतः सूत्रकारेणोपात्ता, अत्र तु भाष्यकारेणाध्यासाक्षेपकतयेति न पौनरुक्त्यम् ॥

### प्रदीपः

सुतरामितरेतरभावानुपपत्तिरिति * ॥ अध्यासो द्विविधः—सोपाधिको निरुपाधिकश्च। सोपाधिकोऽपि प्रतिबिम्बाध्यासरूपो धर्माध्यासरूपश्चेति। यत्रोपाधिबिम्बयोः पृथग्देशोपलम्भस्तत्रैव प्रतिबिम्बाध्यासः; यथा लोहितस्फटिकयोः,

## वार्तिकम्

*ननु*—मध्यमानुमाने भावाभावत्वमुपाधिर्भविष्यति ; सर्वत्र पक्षेतरस्मिन् साध्यव्यापकत्वात्, पक्षे च साधनाव्यापकत्वात्। नच—व्यतिरेकासिद्धिः, घटपटयोः परस्परभावाभावरूपत्वाभावेऽपि परस्परतादात्म्याभावादिति—वाच्यम् ; तयोः परस्परमन्योन्याभावरूपत्वेन भावाभावरूपत्वात्तदभावासिद्धेः। तथाचोक्तम्—"भावान्तरमभावो हि कयाचित्तु व्यपेक्षया"—इति। नच—एवं द्रव्यद्रव्ययोरपि परस्परमन्योन्याभावरूपत्वात् साधनव्यापकतेति—वाच्यम् ; "तदनन्यत्वमारम्भणशब्दादिभ्यः" इत्यत्र तयोरभेदस्य वक्ष्यमाणत्वात् परस्परमन्योन्याभावत्वासिद्धेः। नच—एवमपि साध्याव्यापकत्वम्, तमसो भावरूपत्वादिति—वाच्यम् ; तस्य भावरूपत्वासिद्धेः, आलोकाभावस्यैव तमस्त्वात्, गतिरूपवत्तया तदुपलब्धेस्तु देशान्तरसन्निध्यसन्निध्यालोकरूपविरोधित्वसाद्रूप्याभ्यां तदारोपेणाप्युपपत्तेरतिरिक्तद्रव्यकल्पने प्रमाणाभावात्, देशान्तरसन्निध्यसन्निधिभ्याम्=पुनः प्रतियोग्यसन्निधिसन्निधिभ्यामित्यन्यदेतत्। भावत्वेऽपि परस्परमन्योन्याभावरूपत्वाच्च। तस्मात् तमसोऽभावरूपत्वात्, भावाभावत्वोपाधेः साध्याव्यापकत्वाभावाद्र नोक्तहेतुस्साधुरिति—चेत्, *न* ; क्रियागुणवत्तया तमसः प्रतीतेरभावत्वासिद्धेः। नच—आलोकाभावे तमसि तदारोपात् तद्वत्तया प्रतीतिरुपपद्यत इति—वाच्यम् ; बाधाभावात्। बाधे हि सत्यारोपः कल्प्यते ; अन्यथाऽतिप्रसङ्गात्, सर्वत्रानाश्वासापत्तेः, आरोपाभावाच्च। तथाहि—गृहीते खल्वालोकाभावे धर्मिणि तदारोपो वाच्यः ; धर्मिज्ञानस्यारोपहेतुत्वात्। न चैवं द्वितीयमारोपितक्रियागुणवदभावज्ञानं चक्षुषा तव मते संभवति ; तत्सहकारिण्या योग्यानुपलब्धेरभावात्, प्रतियोगि-तद्व्याप्येतरयावत्तद्ग्राहकस्यानुपलब्धियोग्यतात्वात्, ग्राह्याभावनिश्चयाभावस्यापि प्रतियोगिग्राहकत्वेन तदन्तर्भावात्, प्रकृते चारोपकाले धर्मिज्ञानसत्त्वेन ग्राह्याभावनिश्चयसत्त्वात् तदभावाभावेन योग्यताया अभावात्। अपिच यद्यालोकाभावत्वं तमस्त्वम्, तर्हि तद्ग्रहे विशेषदर्शनसत्त्वाद्र न द्रव्यधर्मारोपस्तत्र संभवति ; तस्यारोपविरोधित्वात्, तदग्रहे तु धर्मितावच्छेदकतयेदन्त्ववत्तमस्त्वस्याभानापत्तेः। स्वतो गतिमत्त्वेऽश्वादिवदन्यानुविधायिगमनानुपपत्तिरिति चेत्, मणिप्रभावत्तदुपपत्तेः। यदि ब्रूषे तमः स्वत एव चेद्र गमनक्रियावत्, किमिति तर्हि आवारकद्रव्यादिगमनमनुविधत्ते, स्वत एवाश्वादिवत्तद्गमनोपपत्तेः ? नैष दोषः ; स्वतो गतिमत्त्वेऽपि मणिप्रभायास्तेजोद्रव्यस्य गमने स्वाश्रयमणिगमनानुविधानवत्तदुपपत्तेरिति। * एतेन *—रूपदर्शनाभावस्तम इति मतम्—* अपास्तम् * ; बहिस्तमोदर्शनाभावप्रसङ्गात्, रूपदर्शनकालेऽपि तमउपलब्धिप्रसङ्गाच्च, तदधिकरणस्यात्मनस्तज्ज्ञानस्य वा रूपदर्शनस्य तदभावस्य च तत्काले सत्त्वात्, विषयज्ञानमन्तरेणात्मनि ज्ञानान्तरस्याभ्युपगमात्तदाश्रयतयैवात्मनो भानाङ्गीकारात्, केवलाधिकरणाभावत्वकल्पनस्यायुक्तत्वात्, कैवल्यानिरूपणात्, धर्मिस्वरूपमात्रत्वे तस्य पूर्वदोषानिस्तारात्, तदतिरिक्तत्वे चातिरिक्ताभावाभ्युपगमप्रसङ्गात्, नाममात्रभेदात्,

## प्रदीपः

चैतन्यान्तःकरणे तु भिन्ने अपि न पृथग्देशयोर्विविच्य गृह्येते। "युष्मदस्मत्प्रत्ययगोचरयोरि"त्यनेनापि भेदप्रतीतियोग्यत्वमेव वर्णितम्, न तु पृथग्देश उपलभ्यमानत्वमपीति न पूर्वोक्तदोषः॥ * धर्मप्रतिबिम्बोऽपि धर्मिप्रतिबिम्बमपेक्षत एव। न हि धर्मिणोः संसर्गं विना धर्माणां विनिमयः संभवति। असङ्गत्वात्त्वात्मनो नान्तःकरणेन संसर्गः। तथाच नीरूपस्य नीरूपेऽपि प्रतिबिम्बसंभव इति पक्षेऽपि नात्र धर्मिप्रतिबिम्बं विना धर्ममात्रप्रतिबिम्बतासम्भवः॥ * सोपाधिकाध्यासोऽपरोऽपि धर्ममात्रस्य दोषवशने धर्म्यध्यासं विना न संभवति। अयो दहतीत्यादौ वह्नितादात्म्यमपि दोषवशेनावश्यमेव स्वीकर्तव्यम्। तथाचात्र यदि न धर्म्यध्यासः, तर्हि कथं धर्माध्याससंभवः ? निरुपाधिकाध्यासेऽपीयमेव गतिः। तथाच धर्म्यध्यासव्याप्यत्वाद्धर्माध्यासस्य व्यापकधर्म्यध्यासासम्भवे धर्माध्यासोऽसंभवदुक्तिक एवेति, अहंप्रतीतिर्न भ्रमात्मिकेति, अहंप्रतीतिविषयस्यैवात्मत्वात्

**स्मत्प्रत्ययगोचरे विषयिणि चिदात्मके युष्मत्प्रत्ययगोचरस्य विषयस्य तद्धर्माणां**

### ऋजुप्रकाशिका

रुक्ता, तामुपसंहरति—*भाष्ये—अस्मत्प्रत्ययेति* ॥ भाष्ये—"अतोऽस्मदि"त्यतः पूर्वे विद्यमान 'इति'शब्दो हेत्वर्थः । यत उक्तविधया अध्यासानुपपत्तिः, अत इत्यर्थः । अथवा—अतस्मिन् तत्प्रतीतित्वमध्यासत्वमित्यध्यासलक्षणं वाच्यम् ; तल्लक्षणम्—'अहं मनुष्यः' इत्यध्यासे लक्ष्यभूते नास्तीत्युक्तम्—*"युष्मदस्मदि"त्यादिना तद्धर्माणामपि सुतरामितरेतरभावानुपपत्तिरित्यन्तेन* ॥ अधुना लक्ष्यभूतस्याध्यासस्यैवाभाव इत्याह—*भाष्ये—इत्यतोऽस्मत्प्रत्ययगोचर इति* ॥ *वस्तुतस्तु*—*"अतोऽस्मत्प्रत्ययगोचर"* इत्यादिभाष्यस्य

### पञ्चपादिका

सम्भवः, अतः । *अस्मत्प्रत्ययगोचरे विषयिणि चिदात्मके इति* ॥ अस्मत्प्रत्यये योऽनिदमंश-

### पञ्चपादिकाविवरणम्

*ननु* अहङ्कारादिषु शरीरान्तेष्वहमित्येव प्रत्ययः, न त्विदमिति कथमेषां युष्मत्प्रत्ययगोचरत्वमिति ? तत्राह—

### ऋजुविवरणम्

ष्ठानस्यान्यात्मत्वं निराकर्तव्यम्, अधिष्ठानत्वं चात्मन एव, तस्य चान्यात्मत्वं निरस्तम्, अतः किमनेन ? इत्याशङ्क्यानात्माऽधिष्ठानत्वेन शङ्कां दर्शयति—*तर्ह्यनात्मैवेति* ॥ समत्वेऽपि विषयत्वं दृश्यते, अतो नायं हेतुरित्याशङ्क्य व्याचष्टे—*समत्वादिति* ॥ *अयमर्थ इति*॥ 'तद्बलनिर्भासिततये'त्यनेन मनुष्याभिमानस्य युष्मदर्थत्वसाधनं किमर्थम् ? न हि युष्मदर्थस्य चैतन्येऽध्यस्तत्वनिराकरणे तत्साधनं सङ्गच्छते ; नाप्येतेषां युष्मदर्थत्वशङ्काकारणमप्यस्तीत्याशङ्क्यावतारयति—*नन्वहंकारादिष्विति* ॥ अथवा—अहंकारादेरध्यस्तत्वमनन्तरग्रन्थे वक्ष्यति, अत्र युष्मत्प्रत्ययगोचरस्याध्यस्तत्वं निराक्रियते ; अतश्चोद्यपरिहारयोर्भिन्नविषयत्वादसंबद्धं भाष्यम् । नच तेषामेवात्र युष्मच्छब्देन ग्रहणादेकविषयत्वम् ; तेषां युष्मदर्थत्वासंभवादिति शङ्कां बीजप्रदर्शनेन दर्शयित्वा, तां निवर्तयतीत्याह—*नन्वहंकारादिष्विति* ॥

### तत्त्वदीपनम्

आत्मा, न मुख्यप्रत्यक्त्वादिभाक्, अहमिति प्रतिभासमानत्वात् ; अहङ्कारवदित्याशङ्क्य, प्रतीतिकर्मत्वं हेतुः ? उत प्रतीतिरूपत्वम् ? आद्येऽसिद्धिरित्याह—*अस्मत्प्रत्यय इति* ॥ (टीकायाम्) अस्मच्चासौ प्रत्ययश्चेत्यस्मत्प्रत्ययोऽन्तःकरणम्, अहंप्रत्ययो वा ; तत्रेदमंशत्वं कर्मत्वं न विद्यत इति यावत् । तत्र हेतु :—*चिदिति* ॥ द्वितीये साधनवैकल्यमिति ॥ अहंकारादेरहमित्येव प्रतीयमानत्वान्न युष्मदर्थत्वमिति, न तदध्यस्तताक्षेप इति चोदयति—*नन्वहंकारादिष्विति* ॥

### वार्तिकम्

**तथाचापसिद्धान्त इति—*अपास्तम्* ; विस्तरस्तु वेदान्तमन्दाकिन्यामद्वैतामृतकन्दे चानुसन्धेयः । सर्वथापि भावरूपं तमः । नच—भावरूपत्वेऽपि परस्पराभावरूपत्वाद् भावाभावत्वसिद्धिरिति—वाच्यम् ; भावस्याभावत्वाभ्युपगमे सर्वशून्यतावादप्रसङ्गात् । अतः साध्याव्यापकत्वान्न भावाभावत्वमुपाधिरिति ॥ एवं सति विषयविषयिणोस्तादात्म्यासिद्धौ तदन्यथानुपपत्तिगम्यः सत्यानृतमिथुनीकरणरूपः**

### भाष्यभावप्रकाशिका

न संभवति चेत्, अस्तु, तर्ह्यनात्मन्येवात्मारोप इति, तत्राह—*तद्विपर्ययेणेति* ॥ *तद्धर्माणां चेति* ॥ विषयानुभव-नित्यत्वाऽऽनन्दादीनामन्तःकरणप्रत्ययेन परतन्त्रतयाऽवभासमानत्वादुपचाराद्धर्मत्व-

चाध्यासः,तद्विपर्ययेण विषयिणस्तद्धर्माणां च विषयेऽध्यासो मिथ्येति भवितुं युक्तम्;

### भामती

विषयविपर्ययेणेत्यर्थः ॥ मिथ्याशब्दोऽपह्नववचनः । एतदुक्तं भवति—अध्यसो भेदाग्रहेण व्याप्तः,

### ऋजुप्रकाशिका

पूर्वोक्तविधयाऽध्यासाभावोपसंहारत्वमेव सम्यक् । तद्विपर्ययेणेत्यस्य विवरणम्—*विषयविपर्ययेणेति* ॥ *विषयः=अचेतनः । *तद्विपर्ययः=चैतन्यम्, तेन ; इत्थंभावे तृतीया, चैतन्यरूपेण स्थितस्य विषयिण इत्यर्थः । *अपह्नववचन इति* ॥ तथाचाभाव एवाध्यासस्य युक्त इत्यर्थः । *तदयं निर्गलितार्थः*—चिदात्मके विषयिणि देहेन्द्रिय-मनो-बुद्ध्याद्यात्मकविषयतादात्म्याध्यासो नास्ति, अत एवोक्ते विषयिण्युक्तविषयधर्माध्यासोऽपि नास्ति ; एवं विषये = देहेन्द्रिय-मनो-बुद्ध्यादौ विषये चिदात्मतादात्म्याध्यासो नास्ति, अत एवोक्ते विषय उक्त-विषयिधर्माध्यासोऽपि नास्तीति ॥ अध्यासो नास्तीत्युक्तम्, तत्र हेतुं स्फोरयति—*एतदुक्तं भवतीति* ॥ *भेदाग्रहेण व्याप्त इति* ॥ यद्विषयकोऽध्यासः, तद्विषयको भेदाग्रह इति व्याप्तिरस्तीत्यर्थः । ततः किम् ? तत्राह—*तद्विरुद्ध इति* ॥ *इह=चिदात्मनि । पूर्वोक्तविधया देहेन्द्रिय-मनो-बुद्ध्यादिविषयप्रतियोगिकभेदग्रहोऽ-

### पञ्चपादिका

श्चिदेकरसः, तस्मिंस्तद्बलनिर्भासिततया लक्षणतो युष्मदर्थस्य मनुष्याभिमानस्य सम्भेद इवावभासः, स एवाध्यासः । *तद्धर्माणां चेति* ॥ यद्यपि विषयाध्यासे तद्धर्माणामप्यर्थसिद्धोऽध्यासः ; तथापि विनापि विषयाध्यासेन तद्धर्माध्यासो बाधिर्यादिषु श्रोत्रादिधर्मेषु विद्यत इति पृथग्धर्मग्रहणम् ।

### पञ्चपादिकाविवरणम्

* तद्बलनिर्भासिततयेति * ॥ तस्यास्मत्प्रत्ययगोचरस्य चैतन्यस्य बलेन निर्भास्यत्वादहङ्कारादेः प्रतिभासतो

### ऋजुविवरणम्

अहङ्कारादिवन्मनुष्याभिमानग्रहणमुपलक्षणमिति दर्शितवान् । तच्छब्देनास्मत्प्रत्ययः परामृश्यते ; अवभासकत्वेन प्रकृतत्वात्, तथा सति तदवभास्यचैतन्यवद् न युष्मदर्थता, ततो विरुद्धो हेतुः, अंशेऽसिद्धश्चेति शङ्कां निराकरोति—*तस्यास्मत्-

### तत्त्वदीपनम्

शरीरादौ यद्यपि न स्वरूपेणाहंप्रत्ययः ; तथापि मनुष्यत्वकागत्वादिविशिष्टे स समस्तीत्यर्थः । "तद्बलनिर्भासिततये"त्यत्र तच्छब्देनास्मत्प्रत्ययो निर्दिश्यत इति शङ्का स्यात्, तथाचास्मत्प्रत्ययभास्यचैतन्यवन्नाहंकारादेर्युष्मदर्थत्वमित्याशङ्क्याह—*तस्येति* ॥ अस्मत्प्रत्ययस्य विशेषणत्वेनोपात्तत्वात् चितेश्च प्राधान्यात्तस्या एव परामर्श इत्यर्थः ।

अहमिति प्रतीयमानस्य कथं युष्मदर्थत्वम् ? तत्राह—*अहंकारादेरिति* ॥ तद्बलनिर्भासिततयैव युष्मदर्थत्व-

### वार्तिकम्

सिद्धान्त्यभिमतोऽध्यासो न सिद्ध्यतीति फलितमाह—*इत्यतोऽस्मत्प्रत्ययगोचरे विषयिणि चिदात्मके युष्मत्प्रत्ययगोचरस्य विषयस्य तद्धर्माणां चाध्यासः, तद्विपर्ययेण विषयिणस्तद्धर्माणां च विषयेऽध्यासो मिथ्येति ॥

### भाष्यभावप्रकाशिका

व्यपदेशमभ्युपगम्य तद्धर्माणामित्युक्तम् । आत्मधर्मत्वाभिमतानामनुभवादीनां चिद्रूपात्ततो भेदाभावान्न

## भामती

तद्विरुद्धश्चेहास्ति भेदग्रहः, सोऽग्रहं निवर्तयंस्तद्व्याप्तमध्यासमपि निवर्तयति । मिथ्येति भवितुं युक्तं यद्यपि;

## ऋजुप्रकाशिका

स्तीत्यर्थः । ततः किम् ? तत्राह— *स इति* ॥ भेदग्रह इत्यर्थः । *अग्रहम्=भेदाग्रहम् । *अध्यासमपि निवर्तयतीति* ॥ भेदाग्रहस्याध्यासव्यापकत्वाद् व्यापकीभूतभेदाग्रहाभावे व्याप्यभूताध्यासस्याप्यभाव इत्यर्थः । यद्यपि वस्तुतोऽहंकारातिरिक्त आत्मन्यहंकाराद् भेदाग्रहादात्मन्यहंकारतादात्म्याध्यासो युक्तः, अत एव—अहंकारादिगतकर्तृत्वादिधर्माध्यासोऽप्यात्मनि सुतरां युक्तः; तथाप्यहंकारातिरिक्तात्मनि प्रमाणं नास्ति । यद्यस्ति, तदा वक्तव्यम्—किं प्रत्यक्षं प्रमाणम् ? अनुमानम् ? आगमो वा ? नाद्यः; 'अहमि'त्यात्मनोऽहंकारात्मतयैवानुभवात्, न द्वितीयः ; तद्व्याप्तिलिङ्गाभावात्, *न तृतीयः ;* आगमस्य सत्त्वेऽप्यात्मनोऽहंकारात्मत्वानुभवविरोधेन तस्योपचरितार्थत्वकल्पनाया एवोचितत्वादित्यभिसन्धिः । *यद्यपीति पदं "युष्मदस्मदि"त्यादिशङ्काग्रन्थे योजितम्, तत्

## पञ्चपादिका

*तद्विपर्ययेण विषयिणस्तद्धर्माणाञ्चेति* ॥ चैतन्यस्य तद्धर्माणां चेत्यर्थः । *ननु* विषयिणश्चिदेकरसस्य कुतो धर्माः ? ये विषयेऽध्यस्येरन्, *उच्यते* ; आनन्दो विषयानुभवो नित्यत्वमिति सन्ति धर्माः, अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्त इति न दोषः ।

अध्यासो नाम—अतद्रूपे तद्रूपावभासः, स मिथ्येति भवितुं युक्तमिति । मिथ्याशब्दो द्व्यर्थः—

## पञ्चपादिकाविवरणम्

युष्मदर्थत्वाभावेऽप्यपरोक्षतयावभास्यत्वेन लक्षणेन युष्मदर्थभावो युज्यत इत्यर्थः । *अपृथक्त्वेऽपि चैतन्यात्पृथगिवावभासन्त इति* ॥ अन्तःकरणवृत्त्युपाधौ नानेवावभासन्त इत्यर्थः । भूयोऽवयवसामान्यसादृश्या-

## ऋजुविवरणम्

प्रत्ययगोचरस्येति* ॥ किं तल्लक्षणमिति ? तदाह—*अपरोक्षतयेति* ॥ *'चैतन्यादि'ति* चैतन्यावभास्यत्वं प्रतीयते ; तथा सति युष्मदर्थत्वम् । *यद्वा*—कथमपृथग्भूतानां पृथग्भूतत्वेनावभासः ? इत्याशङ्क्याभिप्रायमाह—*अन्तःकरणेति* ॥ *ननु* मा भूत्तादात्म्यम्, तथाप्यध्यासः संभवत्येव ; तादात्म्यहीनयोरेवाध्यासदर्शनात् शङ्खपीतिमादौ, शुक्तिरजतयोरपि न तादात्म्यम्, इदन्त्वस्य पुरोदेशवर्तित्वातिरेकेणानिरूपणात्, तेन तादात्म्याभावेऽपि नाध्यासो निराकर्तुं शक्यते । सामग्र्यभावेन हि कार्यं निराक्रियेत, न तादात्म्यस्य सामग्र्यामन्तर्भावः ; व्यभिचारात्, अतो यद्यप्येवमित्यङ्गीकारो न युक्त इत्याशङ्क्याभिप्रायमाह—*भूयोऽवयवसामान्येति* ॥ *ननु* भूयोऽवयवसामान्याद्य-

## तत्त्वदीपनम्

सिद्धेः किं 'लक्षणत' इत्यनेन ? इत्याशङ्क्य व्याख्यानव्याख्येयरूपत्वान्न वैयर्थ्यमित्याह—*अवभास्यत्वेन लक्षणेनेति* ॥ तसिप्रत्ययस्तृतीयार्थे । आनन्दादीनां स्वरूपत्वान्न तद्धर्मत्वमिति शङ्कानिरासार्थमपृथक्त्वेऽपीत्युक्तम्, तदनुपपन्नम् ? अपृथग्भूतानां पृथग्भावासंभवादित्याशङ्क्योपाधिसंबन्धादविरोधमाह—*अन्तःकरणेति* ॥ निर्गुणत्वान्निरवयवत्वाच्च नात्मानात्मनोः सादृश्यम्, नापि विवेकाग्रहः ; प्रत्यक्पराग्भावादिविधया व्यावृत्त्युपलम्भात्, ततश्चाध्यासव्यापकाभावेन व्याप्याभावादसंभावितविषयफलत्वात् शास्त्रानारम्भ इति पूर्वपक्षः ।

अध्यासासंभवेन विषयाद्यसंभावनया आरम्भ आक्षिप्तेऽध्यासासंभवाङ्गीकारेण समाधानमभ्यधायि, तदयुक्तम् ; अध्यासासंभवे विषयाद्यनुपपत्तेरित्याशङ्क्य, अध्यासासंभवाङ्गीकारे तात्पर्यमाह—*भूयोऽवयवेति* ॥ भूयसामवयवानां सामान्यं समानता, सैव सादृश्यम्, तस्याभावादध्यासासंभवं प्राप्तमङ्गीकरोतीत्यन्वयः ।

## पञ्चपादिका

अपह्नववचनोऽनिर्वचनीयतावचनश्च । अत्र*---अयमपह्नववचनः । *मिथ्येति भवितुं युक्तम् = अभाव

## पञ्चपादिकाविवरणम्

भावात्, आत्मनि कर्तृत्वादेरहङ्काराद्युपाधिनिमित्तभ्रमत्वेऽपि शरीराद्यध्यासस्य सोपाधिकभ्रमत्वाभावात् ।

## ऋजुविवरणम्

भावेऽपि मुखादौ द्वित्वाद्यध्यासो दृश्यते, तद्वदिहाप्युपाधिना स्यादित्याशङ्क्याह—*आत्मनि कर्तृत्वादेरिति* ॥

## तत्त्वदीपनम्

*ननु* न सादृश्यमध्यासव्यापकम्; लोहितादिभ्रमे व्यभिचारात्, ततश्च सादृश्याभावेनाध्यासासंभवाङ्गीकरणमसङ्गतमित्याशङ्क्य, किं सादृश्ये सोपाधिकभ्रमव्यापकत्वं निषिध्यते, उत निरुपाधिकभ्रमव्यापकत्वम्? नाद्यः; अङ्गीकृतेरित्यभिप्रेत्य द्वितीयं दूषयति—*आत्मनि कर्तृत्वादेरिति* ॥ 'इदं रजतमि'त्यादिनिरुपाधिकभ्रमं प्रति सादृश्यस्य व्यापकतादृष्टेः शरीराद्यध्यासस्य च निरुपाधिकभ्रमत्वात् सादृश्यं वक्तव्यम्, तच्च न संभवति; अतोऽध्यासासंभवाङ्गीकरणमुचितमित्यर्थः ।

## वार्तिकम्

इतिशब्दः प्रकृतपरामर्शी । तेनैवमन्वयः—यत एवमुक्तप्रकारेण विषयविषयिणोरितरेतरतादात्म्यानुपपत्तिः, तदन्यथानुपपत्तिगम्यश्च सत्यानृतमिथुनात्मकोऽध्यासो नास्तीत्यर्थः; मिथ्याशब्दस्यापह्नवेऽपि प्रयोगदर्शनात्—'मिथ्यावचनो देवदत्तः' इति । कस्य कुत्राध्यास इति? अत आह—*अस्मत्प्रत्ययगोचर इति* ॥ *विषयिणि=धर्मिणि; अधिष्ठाने । विषयित्वे हेतुः—*चिदात्मके* ॥ चिदात्मकत्वे हेतुः—*अस्मत्प्रत्ययगोचरे* ॥ भोक्तरीत्यर्थः, तत्साक्षिणीति वार्थः । *विषयस्य=जडवर्गस्यान्तःकरणादेर्धर्मस्य च । जडत्वे हेतुः—*युष्मत्प्रत्ययगोचरस्य* ॥ युष्मत्प्रत्ययो भोगः, तद्विषयस्य; भोग्यस्येत्यर्थः । *तद्धर्माणां च=जडान्तःकरणादिधर्माणामपि; काम-सुख-दुःख-काणत्व-मनुष्यत्वादीनां स्वरूपतोऽध्यासः; भ्रमे भासमानवैशिष्ट्यप्रतियोगिनो रजतवन्मिथ्यात्वात्, तदनुयोगिनश्च शुक्तिवत् सत्यत्वात् । परस्परं सत्यानृतमिथुनीभावं दर्शयितुमाह—*तद्विपर्ययेणेति* ॥ इत्थंभावे तृतीया । पूर्वोक्ताधाराधेयभाववैपरीत्येनेत्यर्थः । तेन चैतन्यस्य जडाधारतयाऽऽरोपेऽपि न तद्विशेषणत्वम्, येन भ्रमे भासमानवैशिष्ट्यप्रतियोगित्वेन जडवत्तस्यापि स्वरूपत आरोपान्मिथ्यात्वं स्यात्, किं तर्हि? दर्पणे मुखवत्संसर्गत एव तदारोपाद्द्ध दर्पणस्थत्वस्येव मुखस्य जडवत्तुच्छत्वस्यापि, चैतन्यस्यैव विशेष्य-

## भाष्यभावप्रकाशिका

जडे बुद्ध्यादावध्यासः; तुल्यत्वादित्यर्थः ॥ अध्यासो नाम—अन्यस्मिन्नन्यरूपताधीः । मिथ्येत्यविद्यमानतोच्यते; नास्त्येवाध्यास इत्यर्थः । अर्थाध्यासो ज्ञानाध्यासश्चेत्यध्यासयोर्नास्तित्वं वक्तुं द्विविधाध्यासवचनम् । आक्षेपमुपसंहरति---*इति भवितुमिति* ॥

## प्रदीपः

तस्य च ब्रह्मरूपत्वे विचारवैयर्थ्यमिति निष्कर्षः ॥ सामान्यतो धर्म्यध्यासासंभवं धर्माध्यासासंभवं च भेदप्रतीतियोग्यत्वेनाधिष्ठानारोप्ययोर्विरुद्धस्वभावत्वेन धर्म्यध्यासाभावेन च निरूप्य लक्ष्यविशेषयोस्तत्समन्वयार्थम्—* अस्मत्प्रत्ययगोचरे *इत्यादि भाष्यम् ॥ *अस्मत्प्रत्ययगोचरे=वृत्तिमात्रव्याप्ये । * चिदात्मनि=चैतन्ये । * युष्मत्प्रत्ययगोचरस्य=दृश्यस्य । * विषयस्य=

### भामती

तथापीति योजना ॥ इदमत्राकूतम्—भवेदेतदेवम्—यदि 'अहमि'त्यनुभव आत्मतत्त्वं प्रकाशेत, न त्वेतदस्ति। तथाहि—समस्तोपाध्यनवच्छिन्नानन्तानन्दचैतन्यैकरसमुदासीनमेकमद्वितीयमात्मतत्त्वं श्रुति-स्मृतीतिहास-पुराणेषु गीयते। नचैतान्युपक्रमपरामर्शोपसंहारैः क्रियासमभिहारेणेदृगात्मतत्त्वमभिदधति तत्पराणि सन्ति शक्यानि शक्रेणाप्युपचरितार्थानि कर्तुम्। अभ्यासेन हि भूयस्त्वमर्थस्य भवति; यथा—'अहो दर्शनीया, अहो दर्शनीया सुन्दरी'ति, न न्यूनत्वम्; अपि प्रागेवोपचरितत्वमिति। अहमनुभवस्तु प्रादेशिकमनेकविध-शोक-दुःखाद्युपप्लुतमात्मानमादर्शयन् कथमात्मतत्त्वगोचरः? कथं वाऽनुपप्लवः? नच—ज्येष्ठप्रमाणप्रत्यक्ष-

### ऋजुप्रकाशिका

'तथापी'त्यनेन योजयति। *मिथ्येति भवितुं युक्तं यद्यपीति ॥ तथापीति योजनेति* ॥ "युष्मदस्मदि"त्यादि-भाष्येण "तथापी"त्यतः प्राक्तनेनाध्यासाभावहेतुभेदग्रहस्य सत्त्वाद् अध्यासाभाव एवेत्युक्तम्, तत्र "तथापी"-त्यादिपरिहारभाष्येणाध्यासाभावहेतुत्वेनोक्तो भेदग्रह एवासिद्ध इति सूचितम्, तद्विवृणोति—*इदमत्राकूत-मिति* ॥ समस्तोपाध्यनवच्छिन्नानन्तानन्दैकरसमुदासीनमेकमद्वितीयमात्मतत्त्वं श्रुति-स्मृतीतिहास-पुराणेषु यथा गीयते, तथा तादृशमात्मतत्त्वं यद्यहमनुभवे प्रकाशितम्, तदाऽहमनुभवे प्रकाशमानस्योक्तविधया देहादिभ्यो भिन्नत्वेनावगमादध्यासाभाव इत्येतद् भवेत्, न त्वेतदस्तीति योजना। *ननु* श्रुति-स्मृतीतिहास-पुराणादिवाक्यान्यनुभवविरोधादुपचरितार्थानीत्युक्तम्, तत्राह—*नचैतानीति* ॥ *एतानि=श्रुत्यादिवाक्यानि। *परामर्शः=मध्ये निर्देशः, *क्रियासमभिहारः=पौनःपुन्यम्। तथाचोपक्रमोपसंहाराभ्यासादिलिङ्गैर्निरुक्ताद्वितीया-यात्मतत्त्वे निश्चिततात्पर्यकाणि तादृशात्मतत्त्वप्रतिपादकानि च सन्ति श्रुत्यादिवाक्यानि शक्रेणाप्युपचरितार्थानि कर्तुं न शक्यानीति योजना। *तात्पर्यलिङ्गमध्यप्रविष्टाभ्यासो नाम=निरुक्ताद्वितीयात्मतत्त्वप्रतिपादकतया श्रुति-वाक्यावृत्तिः। तादृशाभ्यासेन किम्? इत्यत आह—*अभ्यासेन हि भूयस्त्वमिति* ॥ *भूयस्त्वम्=आधिक्यम्। अभ्यासादर्थस्य भूयस्त्वे दृष्टान्तमाह—*यथा अहो दर्शनीया अहो दर्शनीया सुन्दरीति* ॥ *दर्शनीया=प्रेक्षणीया। 'दर्शनीये'त्यभ्यासेन सुन्दर्या भूयस्त्वम्=आधिक्यं प्रमीयते। आधिक्यमेव न न्यूनत्वमित्याह—*न न्यूनत्व-मिति* ॥ यत एव प्रतिपादितार्थस्याऽऽधिक्यम्, न न्यूनत्वम्; अत एव तत्प्रतिपादकवाक्यस्योपचरि-तार्थत्वमपि नेत्याह—*अपि प्रागेवोपचरितार्थत्वमिति* ॥ न न्यूनत्वमित्यत्र विद्यमाननञ उपचरितार्थत्व-मित्यत्राप्यन्वयः; उपचरितार्थत्वमपि प्रागेव नेत्यर्थः। श्रुत्यादिषु यादृशमात्मतत्त्वं गीयते, तादृशमात्मतत्त्व-महमनुभवे न प्रकाशितमित्युक्तं प्रपञ्चयति—*अहमनुभवस्त्विति* ॥ *ननु* अहमनुभवस्यानुपप्लवत्वात् तद्गोचरार्थस्याप्यनुपप्लुतत्वमित्याशङ्क्याह—*कथं चानुपप्लव इति* ॥ *उपप्लवः=विपर्यासः कथम्-? तच्छून्योऽहमनुभव इत्यर्थः। अपरिच्छिन्नमात्मानं परिच्छिन्नत्वेन विषयीकुर्वन्नहमनुभवो विपर्यासवानेवेति भावः। "कथमात्मतत्त्वगोचरः" इत्यनेनाद्वितीयात्मतत्त्वस्य निरुक्तस्याज्ञातत्वमुक्तम्, तथाचाज्ञातस्य श्रुतिप्रमेयत्वादज्ञातार्थबोधकत्वेन श्रुतीनां प्रामाण्यम्; अत एव नोपचरितार्थमपीति स्थितम्। तत्राहमनुभवस्य प्रत्यक्षत्वात् प्रत्यक्षस्य च ज्येष्ठत्वाद् ज्येष्ठप्रमाणविरोधेनोपक्रमादिलिङ्गोहिततत्तात्पर्यकश्रुतीनामेवाप्रामाण्यम्, उपचरितार्थत्वं च, इत्याशङ्क्य निराकरोति—*नचेति* ॥ *आम्नायस्य=श्रुतिसमूहस्य। *तदपेक्षस्य=

### प्रदीपः

अन्तःकरणस्य। *अध्यासः=आरोपः। * मिथ्या=असंभवदुक्तिक इति पदार्थनिष्कर्षः। उत्तरत्र तथापीत्यसिसम्बन्धाद् यद्यपीति पूरणीयम्। तथाच—"युष्मदस्मदोरि"त्यादि—"युक्तमि"त्यन्तं शङ्काभाष्यम्, तथापीत्यादि परिहारभाष्यमिति निष्कर्षः ॥

* अयमाशयः *—सादृश्यज्ञानं भ्रमसामान्यं प्रति न कारणम्; विनापि सादृश्यं केतकीगन्धे सर्पगन्धं हि भ्रान्त्या जानीमः। *वस्तुतस्तु* विशेषदर्शनप्रतिबध्येष्वेवाध्यासेषु सादृश्यज्ञानं कारणमिति वक्तुमुचितम्, नान्यत्र;

## भामती

विरोधादाम्नायस्यैव तदपेक्षस्याप्रामाण्यमुपचरितार्थत्वं चेति—युक्तम् ; तस्यापौरुषेयतया निरस्तसमस्तदोषाशङ्कस्य,बोधकतया स्वतःसिद्धप्रमाणभावस्य स्वकार्ये प्रमितावनपेक्षत्वात् । प्रमितावनपेक्षत्वेऽप्युत्पत्तौ प्रत्यक्षापेक्षत्वात्तद्विरोधादनुत्पत्तिलक्षणमप्रामाण्यमिति चेत्, न ; उत्पादकाप्रतिद्वन्द्वित्वात् । न ह्यागमज्ञानं सांव्यवहारिकं प्रत्यक्षस्य प्रामाण्यमुपहन्ति, येन कारणाभावान्न भवेत्, अपितु तात्त्विकम् । (१) न च तत् तस्योत्पा-

## ऋजुप्रकाशिका

प्रत्यक्षापेक्षस्य । प्रत्यक्षस्य पूर्वोत्पत्तिमत्त्वेन ज्येष्ठतयोपजीव्यत्वेऽपि "पौर्वापर्ये पूर्वदौर्बल्यमि"ति न्यायेन प्रत्यक्षस्यैव दौर्बल्यम् ; अत आगमविरोधेनानधिगतार्थकत्वाभावादप्रामाण्यम् । नच—आगमस्य प्रत्यक्षसापेक्षत्वादागमस्यैव सापेक्षत्वलक्षणमप्रामाण्यमिति—वाच्यम् ; आगमस्य किं प्रत्यक्षसापेक्षत्वं स्वजन्यज्ञानप्रमितित्वाय ? स्वप्रामाण्यायेति यावत्, किं वा स्वेन प्रमित्युत्पत्तये तत्सापेक्षत्वम् ? आद्येऽपि किं स्वाप्रामाण्यशङ्कानिरासाय तदपेक्षा ? किं वा स्वविषयसंवादाय ? आद्याद्यं निरस्यति—*तस्येति* ॥ आगमस्येत्यर्थः । अपौरुषेयतया नित्यनिर्दोषत्वेनैव प्रामाण्याद् न तत्राप्रामाण्यशङ्का, येन तदप्रामाण्यप्रयोजकतच्छङ्कानिरासाय तदपेक्षा स्यादिति भावः । आद्यद्वितीयं निरस्यति—*बोधकतयेति* ॥ अज्ञातार्थबोधकत्वेन स्वतःसिद्धप्रमाणभावत्वात् स्वविषये स्वप्रामाण्यसंवादापेक्षा नास्तीति भावः । *स्वकार्ये प्रमितौ* ॥ भावप्रधानो निर्देशः, स्वकार्ये प्रमितित्वे । *अनपेक्षत्वात्=स्वप्रामाण्यायानपेक्षत्वादिति यावत् । द्वितीयं शङ्कते—*प्रमितावनपेक्षत्वेऽपीति* ॥ प्रमितत्वेऽनपेक्षत्वेऽपि=स्वप्रामाण्यायानपेक्षत्वेऽपीत्यर्थः । *उत्पत्तौ=स्वेन प्रमित्युत्पत्तौ । *तद्विरोधात्=प्रत्यक्षविरोधात् । *अनुत्पत्तिलक्षणमिति* ॥ प्रत्यक्षविरोधेन स्वप्रामाण्यव्याघातात् स्वस्य प्रमानुत्पादकत्वेनानुत्पादकत्वलक्षणमप्रामाण्यमागमस्येति शङ्कार्थं परिहरति—*उत्पादकेति* ॥ प्रत्यक्षस्य प्रमोत्पादकागमापरिपन्थित्वादित्यर्थः । यदि तथाप्यागमस्य प्रत्यक्षेण विरोधः, तदा वक्तव्यम्—किं प्रत्यक्षगतव्यावहारिकप्रामाण्येन तस्य विरोधः ? तद्गततत्त्वावेदकत्वलक्षणप्रामाण्येन वा ? नाद्य इत्याह—*न हीति* ॥ प्रत्यक्षस्य सांव्यवहारिकं प्रामाण्यमागमज्ञानं नोपहन्ति*=आगमेन जनिष्यमाणं प्रमारूपं ज्ञानं न विघटयति ; प्रमारूपज्ञानोत्पादप्रयोजकागमगतप्रामाण्यविघातकं न भवतीत्यर्थः ; अप्रतिहतप्रामाण्यकारणाभावादित्यर्थः । किं तर्हि तद्विघातकम् ? तत्राह—*अपितु तात्त्विकमिति* ॥ तात्त्विकं प्रामाण्यं तदुपघातकमित्यर्थः । तर्हि प्रत्यक्षगतं तात्त्विकप्रामाण्यमेव तद्विघातकमस्तु, इति द्वितीयमाशङ्क्य निराकरोति—*नच (१)तात्त्विकमिति ॥ प्रत्यक्षस्य सांव्यवहारिकप्रमाणत्वेन तत्र तात्त्विकप्रामाण्याभावात्, आम्नायस्यैव तत्त्वावेदकप्रमाणत्वादिति भावः । *ननु* यत् तत्त्वप्रतिपत्तिजनकम्, तदेव तत्त्वावेदकप्रमाणम् ; प्रत्यक्षमपि तथेति तदपि तत्त्वावेदकप्रमाणमेवेत्यत आह—*नच तत्तस्योत्पादकमिति* ॥ तदित्यनन्तरमेवकारोऽध्याहर्तव्यः ।

## प्रदीपः

तत्र च प्रतिबन्धकाभावविधया विशेषदर्शनसामग्र्यभावस्यापि कारणत्वावश्यकत्वात् तेनैव निर्वाहे व्यर्थं सादृश्यज्ञानस्यापि कारणत्वकल्पनम्, इङ्गालादौ तु नीलत्वादिविशेषदर्शनसामग्रीसत्त्वाद् न रजताद्यध्यासः । इदमेव सादृश्यज्ञानाकारणत्ववादं भाष्यकारसूचितमादाय * कवितार्किकनृसिंहभट्टोपाध्यायमतं प्रवृत्तम्—यद्, भ्रमस्थाने नाधिष्ठानज्ञानविधया सादृश्यज्ञानं कारणमिति । तथाच विसदृशेऽपि भ्रमो विशेषदर्शनाभावे संभवतीति, चैतन्यस्यावृतत्वेन विशेषदर्शनस्याप्यभावात्

## भाष्यभावप्रकाशिका

'युक्तमि'ति वक्तव्ये "इति भवितुमि"त्याक्षेपस्य संभावनैव मूलम्, नात्र मानमिति दर्शयितुमुक्तम् ॥ तदेवं प्रमातृत्वादिबन्धस्य वस्तुतया विषयाद्यभावादनारम्भ्यमिदं शास्त्रमित्याक्षेप्तु-

(१) ऋजुप्रकाशिकादृष्ट्या—नच तात्त्विकं प्रत्यक्षस्य प्रामाण्यमिति वाक्यान्तरमपि भामत्यामस्तीत्यनुमीयते ।

## भामती

दकम् ; अतात्त्विकप्रमाणभावेभ्योऽपि सांव्यवहारिकप्रमाणेभ्यस्तत्त्वप्रतिपत्तिजननात् । तथाच वर्णे ह्रस्वत्व-दीर्घत्वादयोऽन्यधर्माः, अपि समारोपितास्तत्त्वप्रतिपत्तिहेतवः ; न हि लौकिका नाग इति वा नग इति वा पदात् कुञ्जरं तरुं वा प्रतिपद्यमाना भवन्ति भ्रान्ताः । न चानन्यपरं वाक्यं स्वार्थ उपचरितार्थं युक्तम् ; उक्तं हि—"न विधौ परः शब्दार्थः" इति । ज्येष्ठत्वं चानपेक्षितस्य बाध्यत्वे हेतुः, न बाधकत्वे ; रजतज्ञानस्य ज्यायसः शुक्तिज्ञानेन कनीयसा बाधदर्शनात्, तदनपबाधने तदपबाधात्मनस्तस्योत्पत्तेरनुपपत्तेः । दर्शितं च तात्त्विकप्रमाणभावस्यानपेक्षितत्वम् । तथाच पारमर्षं सूत्रम्—"पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्" ।

## ऋजुप्रकाशिका

*तदेव=तत्त्वावेदकप्रमाणमेव । *तस्य=तत्त्वप्रत्ययस्य, उत्पादकं नेत्यर्थः । कुत इत्यत आह—*अतात्त्विकप्रमाणभावेभ्योऽपि सांव्यवहारिकप्रमाणेभ्यस्तत्त्वप्रतिपत्तिजननादिति* ॥ सांव्यवहारिकप्रमाणानि=लौकिकप्रमाणानि, प्रत्यक्षानुमानोपमानानि लौकिकवाक्यानि च ; तेभ्य इत्यर्थः । "तत्त्वप्रतिपत्तिजननादि"त्यस्याभ्रान्तिप्रतिपत्तिजननादित्यर्थः । न हि प्रत्यक्षानुमानोपमानप्रमाणेभ्यो जायमानं ज्ञानं भ्रान्तिरूपम्, किंतु प्रत्यक्षादिप्रमाणाभासेभ्य एव जायमानं ज्ञानं भ्रान्तिरूपमिति भावः ॥ तर्हि लौकिकशब्दजन्यं ज्ञानमपि किमभ्रान्तिरूपम् ? अभ्रान्तिरूपमेवेत्याह—*न हि लौकिका इति* ॥ *प्रतिपद्यमाना इति* । जानन्त इत्यर्थः । तथाच कालत्रयाबाध्यब्रह्मतत्त्वबोधकमेव प्रमाणं तत्त्वावेदकप्रमाणम्, तच्च श्रुत्यादिरूपमेवेति, तत्प्रामाण्यं प्रत्यक्षादिना केनापि न बाध्यत इति सिद्धम् । श्रुत्यादेरप्रामाण्यं निरस्योपचरितार्थत्वं निरस्यति—*नचेति* ॥ नच पूर्वमेव तत्पराण्युपचरितार्थानि कर्तुं शक्रेणापि न शक्यानी'ति तत्परत्वमनुपचरितार्थत्वं चोक्तम्, अधुनाऽपि तत्परत्वमनुपचरितार्थत्वं चोच्यत इति पौनरुक्त्यम् ; पूर्वमध्यासप्रयोजकभेदाग्रहसिद्ध्यर्थमुक्तम्, अधुनोपजीव्यप्रमाणविरोधपरिहारायोक्तमिति न दोष इति द्रष्टव्यम् । तथाच यत्परः शब्दः, स एव मुख्यतः प्रतीयमानः शब्दार्थः, नोपचरितार्थः । इदं तु शबरस्वामिनाऽप्युक्तमित्याह—*उक्तं हि न विधौ परः शब्दार्थ इति* ॥ *विधौ=विधायकवाक्ये, *परः=लक्षणया गौण्या वा प्रतीयमानोऽर्थः, शब्दार्थो न भवति, किन्तु यस्तात्पर्यविषयभूतोऽर्थः, स एव शब्दार्थ इत्यर्थः । एवं वेदान्तश्रुत्यादीनामप्यपरिच्छिन्नाद्वितीयसच्चिदानन्दब्रह्मण्युपक्रमादिषड्विधलिङ्गोपाधिकतात्पर्यकत्वात् तादृशं ब्रह्मैव वेदान्तश्रुत्यर्थः । अहमनुभवस्तु तादृशमर्थं न विषयीकरोति, येनाहमनुभवगोचरस्य देहादिभ्यः पूर्वोक्तरीत्या भेदग्रहादध्यासो नास्तीत्युच्येतेति भावः । यत्तूक्तं प्रत्यक्षस्य ज्येष्ठत्वेन आम्नायापेक्षितस्याम्नायबाधकत्वमिति, तत्र वक्तव्यम्—किं ज्येष्ठत्वमुपजीव्यत्वम् ? मुख्यत्वमात्रं वा ? तत्राऽऽद्यमुपजीव्यत्वं निराकृतमेव । अत एव प्रत्यक्षमाम्नायेनानपेक्षितं स्थितम् । एवं च सति द्वितीयं दूषयति—*ज्येष्ठत्वं चेति । मुख्यत्वरूपं ज्येष्ठत्वं चेत्यर्थ । "अनपेक्षितस्ये"त्यनन्तरं स्वस्य प्रत्यक्षस्येति शेषः । पूर्वोत्पन्नमात्रस्य बाध्यत्वमुक्तम्, तद्दर्शयति—*रजतज्ञानस्येति* ॥ भ्रमरूपज्ञानस्येत्यर्थः । *ज्यायसः=पूर्वोत्पन्नत्वमात्रेण ज्येष्ठस्य । *कनीयसा=अनन्तरोत्पन्नत्वेन कनीयसा । तद्बाधकत्वेनैवोत्पन्नतया तदबाधकत्वे तस्योत्पत्तिरेव नेत्याह—*तदनपबाधन इति* ॥ *ननु* ज्येष्ठमपि प्रत्यक्षं बाध्यं चेत्, तात्त्विकप्रमाणभावेनाम्नायेन प्रत्यक्षमपेक्षितं न भवेदिति पूर्वावमर्शेन शङ्कमानं प्रत्याह—*दर्शितं च तात्त्विकप्रमाणभावस्यानपेक्षत्वमिति* ॥ तथाचाम्नायस्यानपेक्षप्रमाणत्वे प्रत्यक्षस्य तदनपेक्षितत्वमिष्टमिति भावः । पूर्वस्य बाध्यत्वे पारमर्षं सूत्रमपि प्रमाणयति—*तथाचेति* ॥ *पौर्वापर्य इति* ॥ *षष्ठे स्थितम्*—अग्निष्टोमे—अन्योन्यं सम्बन्ध्य यज्ञशालातो

## प्रदीपः

विनापि सादृश्यज्ञानमहमिति भ्रमनिर्वाहः । "दृश्यते तु" इति नविलक्षणत्वाधिकरणसिद्धान्तसूत्रं तद्भाष्यमपि च सादृश्यज्ञानं सादृश्यमपि वा नोपादानोपादेयभावप्रयोजकमिति बोधयद् अस्मदनुकूलम् । यदि तु "दृश्यते तु" इति

### भामती

इति । तथा—"पूर्वात्परबलीयस्त्वं तत्र नाम प्रतीयताम् । अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत् ॥" इति । अपिच येऽप्यहंकारास्पदमात्मानमास्थिषत, तैरप्यस्य न तात्त्विकत्वमभ्युपेतव्यम् ; 'अहमिहैवास्मि सदने जानानः' इति सर्वव्यापिनः प्रादेशिकत्वेन ग्रहात्, उच्चतरगिरिशिखरवर्तिषु महातरुषु भूमिष्ठस्य दूर्वाप्रवालनिर्भासप्रत्ययवत् । नच—इदं देहस्य प्रादेशिकत्वमनुभूयते, न त्वात्मन इति—सांप्रतम् ; न हि तदा, एवं भवति—'अहम्' इति ; गौणत्वे वा न—'जानानः' इति ; अपिच परशब्दः परत्र लक्ष्य-

### ऋजुप्रकाशिका

निर्यातानामृत्विजां विच्छेदनिमित्तकं प्रायश्चित्तं श्रूयते—"यदि उद्गाताऽपच्छिन्द्याददक्षिणेन यजेत, यदि प्रतिहर्ता सर्वस्वदक्षिणेनेति" । तत्रोद्गातृप्रतिहर्त्रोः क्रमेण विच्छेदेऽदक्षिणत्व-सर्वस्वदक्षिणत्वयोर्विरुद्धयोः प्रायश्चित्त-भूतयोः प्राप्तौ, विरुद्धयोः समुच्चित्यानुष्ठानायोगादन्यतरस्यानुष्ठेयत्वे—किं पूर्वमदक्षिणं प्रायश्चित्तभूतं तत् कर्मानुष्ठेयम् ? उत सर्वस्वदक्षिणं प्रायश्चित्तभूतं तत् कर्मानुष्ठेयम् ? इति विशये, अनन्तरं प्रतिहर्तृविच्छेदेऽप्युद्गातृविच्छेदकाले प्रतिहर्तृविच्छेदाभावेनानुपसञ्जातविरोधित्वात् पूर्वप्राप्तत्वाददक्षिणत्वेनैव कर्मानुष्ठेयमिति पूर्वपक्षे प्राप्ते, राद्धान्तः ;—निमित्तभूतयोर्विच्छेदयोः पौर्वापर्ये सति पूर्वस्य नैमित्तिकस्यादक्षिणत्वस्य दौर्बल्यम्, उत्तरस्य निर-पेक्षस्य सर्वस्वदक्षिणत्वस्य पूर्वबाधकत्वेनैवोदितत्वात् पूर्वोदयकाल उत्तरस्याप्राप्तत्वेन पूर्वेण बाधायोगात् सर्वस्व-दक्षिणत्वेनैव तत् कर्मानुष्ठेयमित्यदक्षिणत्वस्य बाधः । उक्तं हि—"पूर्वं परमजातत्वादबाधित्वैव जायते । परस्या-नन्यथोत्पादान्न त्वबाधेन संभवः ॥" इति ॥ *प्रकृतिवदिति* ॥ प्रकृतौ "कुशमयं बर्हिस्तृणाति" इत्युप-देशतः कुशमयबर्हिर्भिरास्तरणं प्राप्तम्, विकृतावपि "प्रकृतिवद्विकृतिः कर्तव्या" इत्यतिदेशतः कुशमयबर्हिर्भि-रास्तरणं प्रसक्तम्, पृथग्विकृतौ श्रूयते—"शरमयं बर्हिस्तृणाति" इति । तत्र विकृतौ किं कुशमयानां बर्हिषामा-स्तरणं शरमयानां वेति विशयेऽतिदेशतः प्राप्तत्वात् कुशमयानामेव विकृतावास्तरणमिति पूर्वपक्षे, राद्धान्तः—कुशानां प्रकृतौ क्लृप्तोपकारत्वात् शराणां चोपकारस्य कल्प्यत्वात्, कुशानां प्रकृतौ सावकाशत्वात् शराणामन्यत्र निरवकाशत्वात्—"सावकाशनिरवकाशयोर्निरवकाशं बलीयः" इति न्यायाद् निरपेक्षैरास्तीर्यमाणैः शरैश्चरम-भाविभिरपि पूर्वतनाः कुशा एवानास्तरणवन्तः सन्तो बाध्यन्ते ; तद्वदिति । पूर्वापरभावमापन्नयोः परस्पर-निरपेक्षयोर्मध्ये परस्य बलीयस्त्वं पूर्वस्य बाध्यत्वं चोक्तम्, तत्रैवाभियुक्तोक्त्यन्तरमाह—*पूर्वात्परबलीयस्त्वमिति* ॥ इयता प्रबन्धेन श्रुत्यादिगम्याद्वितीयपूर्वोक्तात्मतत्त्वस्याहंप्रत्ययविषयस्य देहेन्द्रियादिभ्यो भेदग्रहेऽप्युक्तात्म-तत्त्वस्य तेभ्यो भेदाग्रहादध्याससंभव उक्तः, प्रतिवादिनिरूपितात्मनोऽनवभासादपि तमाह—*अपिचेति* ॥ *अहंकारास्पदम्=अहंप्रत्ययविषयीभूतम् । *अस्य=आत्मनः । सर्वगतत्वमाश्रित्याह—*अहमिहेति* ॥ "सर्व-व्यापिन" इत्यनन्तरं आत्मन इति शेषः । अधिकपरिमाणवतोऽल्पपरिमाणवत्त्वेन ग्रहणे दृष्टान्तमाह—*उच्चतरेति* ॥*ननु* 'अहमिहैवे'तिप्रत्ययस्य देहप्रादेशिकत्वविषयकत्वमेव, न त्वात्मप्रादेशिकत्वविषयकत्वमित्या-शङ्क्य निराकरोति—*नचेदमिति* ॥ निराकरणमेवाह—*न हि तदैवमिति* ॥ तदा देहप्रादेशिकत्वविषयक-प्रत्ययदशायां अहमि'त्येवंरूपेण प्रतीतिर्न भवतीत्यर्थः । तव मतेऽहंप्रत्ययस्य देहादिविविक्तात्मविषयकत्वेन देहप्रादेशिकत्वाविषयकत्वादिति भावः । *ननु* "'अहमिहैवे"त्यत्र अहंशब्दो देहे गौणत्वेनोच्यत इत्यत आह—

### प्रदीपः

सूत्रभाष्ये केनचन धर्मेण सादृश्यं ब्रह्मप्रपञ्चयोरपि वर्तत एवेति वर्णनात् सादृश्यज्ञानकारणतापक्षोऽपि भाष्यारूढ इति मन्यते, तर्हि त्वात्मान्तःकरणयोरपि जडत्व-चित्त्वादिना विरुद्धस्वभावयोरपि सत्त्वादिना सदृशयोरध्याससंभवो न विरुद्धः । इममेव भाष्यसूचितं भावं गृहीत्वा भ्रमस्थलेऽधिष्ठानज्ञानं कारणमिति पक्षान्तरम्—सिद्धान्तलेशसंग्रहे संगृहीतम् । सर्वथा

भामती

माणगुणयोगेन वर्तत इति यत्र प्रयोक्तृप्रतिपत्त्रोः संप्रतिपत्तिः स गौणः । स च भेदप्रत्ययपुरःसरः, तद्यथा—नैयमिकाग्निहोत्रवचनोऽग्निहोत्रशब्दः प्रकरणान्तरावधृतभेदे कौण्डपायिनामयनगते कर्मणि "मास-

ऋजुप्रकाशिका

*गौणत्वे इति* । भवतीत्यनुषङ्गः । तथाच तथात्वे जानान इति न भवतीत्यर्थः । उपचरितात्मभावस्य देहस्य ज्ञातृत्वायोगादिति भावः । नच—जानान इति शब्दोऽपि देहे गौण इति—वाच्यम्; वक्तुः स्वज्ञान-प्रकाशनपरे वाक्येऽज्ञातरि देहे जानान इति गौणप्रयोगायोगात् । *ननु*—अहंप्रत्ययविषयः आत्मैव; तत्र देहगतं प्रादेशिकत्वमुपचर्यत इहैवेतीति—चेत्, *तर्हि* देहप्रादेशिकत्वप्रत्यायक इहैवेतिशब्द आत्मनि, देहेऽहंशब्दश्च गौणो वाच्यः, गौणत्वे च देहात्मनोर्भेदो ग्रहीतव्यः । नच स गृह्यत इत्याह—*अपिचेति* ॥ *परशब्दः* = परप्रत्यायकशब्दः । *परत्र* = अन्यत्र । *लक्ष्यमाणगुणयोगेन* = मुख्यार्थे लक्ष्यमाणो दृश्यमानो यो गुणो धर्मः, तद्योगेनेत्यर्थः । गौणत्वं द्विविधम्—साम्प्रतिकं निरूढं चेति । तत्र माणवके सिंहशब्दस्य गौणत्वं साम्प्रतिकम्; सार्षपरसादौ तैलशब्दगौणत्वं निरूढम् । एवं द्वैविध्ये स्थिते गौणवादी प्रष्टव्यः—किं देहादावहंशब्दस्य गौणत्वं सिंहे माणवकशब्दगौणत्ववत् साम्प्रतिकम् ? किं वा सार्षपरसादौ तैलशब्दगौणत्ववद् निरूढम् ? नाद्य इत्याह—*परेति* ॥ परशब्द इत्यादेरर्थ उक्त एव । *नैयमिकेति* ॥ प्रमाण-लक्षणे स्थितम्—"तत्प्रख्यं चान्यशास्त्रम्" । "अग्निहोत्रं जुहोति" इति श्रूयते । तत्र संशयः—किम् अग्निहोत्रशब्दो-ऽग्निदेवतागुणविधिः, उत कर्मनामेति ? तत्र अग्नये होत्रं हविरस्मिन्निति समासान्तरवर्तिन्या चतुर्थ्या अग्नेर्होमे देवतात्वप्रतीतेर्हूयमानहविष्कं यद्धोमाख्यं कर्म तदग्निदेवताकमित्यग्निदेवतागुणविविधिरिति प्राप्ते, राद्धान्तः;—"यदग्नये च प्रजापतये च सायं जुहोति" इति शास्त्रादग्नेर्देवतात्वप्रख्यापनादग्नेर्देवतात्वस्य प्राप्तत्वात् प्राप्ते च विधिवैयर्थ्यात् कर्मनामैवाग्निहोत्रशब्दः । नच समासान्तर्वर्तिचतुर्थीबलादग्निदेवतागुणविधि-रित्युक्तमिति—वाच्यम्; अग्नेर्यजमानहविर्विकारत्वासंभवात् । "कुण्डलाय हिरण्यम्" "यूपाय दारु" इत्यादौ तादर्थ्यचतुर्थ्यां सत्यां कुण्डलादेर्विकारत्वं हिरण्यादेः प्रकृतित्वं च दृष्टम्, तद्वत् तादर्थ्ये प्रकृतिविकारयोरभावेन चतुर्थीसमासासंभवात् । एवं नित्याग्निहोत्रवाचिनोऽग्निहोत्रशब्दस्य गुणयोगादन्यत्र कर्मणि वृत्तिं वक्तुं मुख्यार्थाद् नित्याग्निहोत्राद् गृहीतभेदं तत् कर्माह—*प्रकरणान्तरेति* ॥ भेदलक्षणे स्थितम्—"प्रकरणान्तरे प्रयोजनान्यत्वम्" । कुण्डपायिनामयने—"मासमग्निहोत्रं जुहोति" इति श्रूयते । तत्र संशयः—तत्र किं नित्याग्निहोत्रे मासगुणो विधीयते, उत मासगुणविशिष्टं कर्मान्तरमिति । तत्र सत्यपि प्रकरणभेदे, अग्निहोत्रनाम्ना नित्याग्निहोत्रस्य बुद्धौ सन्निधापनात् तत्समभिव्याहृतस्य 'जुहोती'त्याख्यातस्य तत्सन्निधापितार्थपरत्वाद् नित्याग्निहोत्रानुवादेन मासलक्षण-गुणो विधीयत इति प्राप्ते, राद्धान्तः;—किम्—अग्निहोत्रनाम्ना नित्यप्रसिद्धाग्निहोत्रानुवादेन मासगुणविधानम्, किं वा 'जुहोती'त्याख्यातेन प्रसिद्धाग्निहोत्रमनूद्य मासगुणविधानम् ? न द्वितीयः; जुहोतीत्याख्यातस्य साध्यावस्थ-कर्मबोधकत्वेन सन्निहितार्थकतया सिद्ध-व्यवहित-प्रसिद्धाग्निहोत्रपरामर्शित्वायोगात्, नाद्यः; अग्निहोत्रनाम्नो धातुसमानाधिकृतस्य धात्वर्थबोधकत्वेन सन्निहितपरामर्शितया पृथग्व्यवहितार्थबोधकत्वायोगात्, मासस्य कालरूपतया पुरुषानिष्पाद्यत्वेनानुपादेयतया विधातुमशक्यत्वाच्च । नच—मासानुवादेन नित्याग्निहोत्रविधि-रिति—वाच्यम्; नित्याग्निहोत्रस्य "यावज्जीवमग्निहोत्रं जुहोति" इत्यनेनैव हि विहिततया विहितस्य पुनर्विधानायोगात्, जुहोतिना वा अग्निहोत्रनाम्ना वाऽसन्निहितनित्याग्निहोत्रपरामर्शासंभवस्योक्तत्वाच्च । तस्मात् प्रकरणान्तरत्वात्, अत एव पूर्वकर्मासन्निधानाच्चेदमपरं मासगुणविशिष्टकर्मान्तरम् । अत एव प्रयो-जनान्यत्वम् = विधेयभावनान्यत्वम् । *ननु* अग्निहोत्रशब्दस्य कुण्डपायिनामयने कर्मणि गौणप्रयोगे किं प्रयोजनम् ? किं नित्याग्निहोत्रेण सह क्रियात्वादिसादृश्यबोधः प्रयोजनम् ? किं वा अन्यत् ? नाद्यः,

भामती

मग्निहोत्रं जुहोति" इत्यत्र साध्यसादृश्येन गौणः, माणवके चानुभवसिद्धभेदे सिंहात्सिंहशब्दः। नत्वहंकारस्य मुख्योऽर्थो निर्लुठितगर्भतया देहादिभ्यो भिन्नोऽनुभूयते, येन परशब्दः शरीरादौ गौणो भवेत्। नच—अत्यन्तनिरूढतया गौणेऽपि न गौणत्वाभिमानः, सार्षपादिषु तैलशब्दवदिति—वेदितव्यम्; तत्रापि स्नेहात्तिलभवाद्भेदे सिद्ध एव सार्षपादीनां तैलशब्दवाच्यत्वाभिमानः, न त्वर्थयोस्तैलसार्षपयोरभेदाध्यवसायः। तत्सिद्धम्—गौणत्वमुभयदर्शिनो गौणमुख्यविवेकविज्ञानेन व्याप्तम्। तदिह व्यापकं विवेकज्ञानं निवर्तमानं गौणतामपि निवर्तयतीति। नच—बाल-स्थविर-शरीरभेदेऽपि 'सोऽहमि'त्येकस्यात्मनः प्रति-

ऋजुप्रकाशिका

सादृश्यबोधस्याकिञ्चित्करतया स्वयमप्रयोजनत्वेन व्यर्थत्वात्, नान्त्यः; अन्यस्यापरिज्ञानात्, इत्यत आह—*साध्येति* ॥ साध्ये = कुण्डपायिनामयने कर्मणि = सादृश्येन = नित्याग्निहोत्रसादृश्येन प्रयुज्यमानोऽग्निहोत्रशब्दो गौण इत्यर्थः। तस्य नित्याग्निहोत्रद्रव्याणां धर्मदेवतादीनामतिदेशः प्रयोजनमित्यभिसन्धिः। सप्तमे स्थितम्—"उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यात्"। "मासमग्निहोत्रं जुहोति" इत्यत्रान्या चिन्ता—किमग्निहोत्रशब्दः कुण्डपायिनामयने कर्मणि नित्याग्निहोत्रधर्मानतिदिशेद्वा? न वेति? यद्यत्राग्निहोत्रशब्दो गौणो भवेत्, तदा परं नित्याग्निहोत्रधर्मानतिदिशेत्, गौण एव न भवति; अग्निहोत्रशब्दस्य जुहोतिना सामानाधिकरण्यस्यात्रापि तुल्यत्वेन नामधेयतया गौणत्वस्य वक्तुमशक्यत्वात्, अग्निदेवताविधानार्थत्वाद्वा गौणत्वायोगात्, अतोऽग्निहोत्रशब्दः कुण्डपायिनामयने न नित्याग्निहोत्रधर्मानतिदिशतीति प्राप्ते, राद्धान्तः;—न तावद् अग्निदेवताविधानार्थोऽत्राग्निहोत्रशब्दः; "यदग्नये च प्रजापतये च सायं जुहोति" इत्यादिनाऽग्नेर्देवतात्वस्य विहिततया विहिते पुनर्विधानायोगात्, पूर्वोक्तविधया चतुर्थीसमासबलादपि नाग्निदेवताविधिः; चतुर्थीसमासासम्भवस्योक्तत्वात्, तस्मात् सिद्धे कर्मभेद उभयत्र प्रयुक्तस्यैकस्याग्निहोत्रशब्दस्यानेकार्थताया अन्याय्यत्वादयमग्निहोत्रशब्दो नित्याग्निहोत्रेऽग्निहोत्रनामपदप्रवृत्तिनिमित्तस्याग्निदेवतासम्बन्धस्य सत्त्वात् तत्र मुख्यः, कुण्डपायिनामयने तु मुख्यनित्याग्निहोत्रसादृश्यमवलम्ब्य प्रवर्तमानोऽयमग्निहोत्रशब्दो गौणः। मुख्यसादृश्यं च कर्तव्यार्थबोधकाख्यातसमभिव्याहृतनाम्ना बोध्यत्वम्। अतोऽग्निहोत्रवद् जुहोतीति साध्यत्वेन तद्विधेयमिति, तत्सिद्ध्यर्थं नित्याग्निहोत्रधर्मानतिदिशेदेवायमग्निहोत्रशब्दः। सूत्रार्थस्त्वयम्—क्रियाया नित्याग्निहोत्रस्याभिधानं नामधेयम् अग्निहोत्रपदमुक्तं तत्प्रख्याधिकरणे, तस्यान्यत्र श्रवणे विधिप्रदेशः विधेयधर्मातिदेशः स्यादिति। वेदे गौणप्रयोगमभिधाय लोकेऽप्याह—*माणवके चेति*। सिंहादनुभवसिद्धभेदेऽन्यत्र माणवके मुख्यार्थभूतसिंहनिष्ठक्रौर्यादिगुणयोगात् सिंहशब्दश्च गौण इत्यर्थः। गौणप्रयोगस्थले भेदग्रहो दर्शितः। प्रकृते देहादावहंशब्दस्य गौणत्वे भेदग्रहोऽवश्यं वक्तव्यः, स नास्तीत्याह—*न त्विति* ॥ *अहङ्कारस्य मुख्यार्थः = अहंपदस्य मुख्यार्थः। *निर्लुठितः = निष्कृष्य लुठितः, प्रतिभासितः, *गर्भः = असाधारणाकारो यस्य तथा। तत्र यो नामानुभूयतेऽहङ्कारात्मवादिनस्तव मते, स देहेन्द्रिय-मनो-बुद्ध्यहंकारेभ्यो भिन्नतया नानुभूयते। अहङ्कारादपि भिन्नतयाऽनुभवे वादिविवादो न स्यादित्यर्थः। *परशब्दः = अहंशब्दः। सांप्रतिकं गौणत्वं द्वितीयं निराकरोति—*नचात्यन्तेति* ॥ गौणत्वेऽपीत्यनन्तरं देहादावहंशब्दे इति शेषः। न चेत्येतद्वेदितव्यमित्यनेन सम्बध्यते। *तत्रापि = गौणत्वनिरूढतास्थलेऽपीत्यर्थः। *निरूढत्वं नाम = प्रयोगप्राचुर्याद् मुख्यवद् भानम्। निरूढेऽपि गौणप्रयोगे नार्थयोस्तादात्म्यं प्रतीयते, प्रकृते तु प्रतीयत इति वैषम्यमित्यर्थः। तस्माद् गौणमुख्ययोर्देहात्मनोर्भेदज्ञानं गौणत्वव्यापकीभूतं निवर्तमानं गौणतामपि निवर्तयतीत्येतत् सिद्धमित्यर्थः। अभिज्ञारूपाहंप्रत्ययाद् देहात्मभेदासिद्धावपि प्रत्यभिज्ञारूपात् तत्सिद्धिमाशङ्क्य निराकरोति—*नच बालस्थविरेति* ॥ निराकरणप्रकारमेवाह—*परीक्षकाणामिति* ॥ तर्हीस्तु परीक्षकाणामेव देहादावहं-

## भामती

संधानाद् देहादिभ्यो भेदेनास्त्यात्मानुभव इति—वाच्यम् ; परीक्षकाणां खल्वियं कथा, न लौकिकानाम्। परीक्षका अपि हि व्यवहारसमये न लोकसामान्यमतिवर्तन्ते ; वक्ष्यत्यनन्तरमेव हि भगवान्भाष्यकारः— "पश्वादिभिश्चाविशेषात्" इति। बाह्या अप्याहुः—"शास्त्रचिन्तकाः खल्वेवं विवेचयन्ति, न प्रतिपत्तारः" इति। तदिह पारिशेष्याच्चिदात्मगोचरमहंकारम्—'अहमिहास्मि सदने' इति प्रयुञ्जानो लौकिकः शरीराद्यभेदग्रहादात्मनः प्रादेशिकत्वमभिमन्यते, नभस इव घट-मणिक-मल्लिकाद्युपाध्यवच्छेदादिति युक्तमुत्पश्यामः। नच—अहंकारप्रामाण्याय देहादिवदात्माऽपि प्रादेशिक इति—युक्तम् ; तदा खल्वयमणुपरिमाणो वा स्यात्? देहपरिमाणो वा? अणुपरिमाणत्वे, 'स्थूलोऽहं' 'दीर्घ' इति च न स्यात्, देहपरिमाणत्वे तु सावयवतया देहवदनित्यत्वप्रसङ्गः। किंचास्मिन्पक्षेऽवयवसमुदायो वा चेतयेत्, प्रत्येकं वाऽवयवाः? प्रत्येकं चेतनत्वपक्षे, बहूनां चेतनानां स्वतन्त्राणामेकवाक्यताऽभावादपर्यायं विरुद्धदिक्क्रियतया शरीरमुन्मथ्येत, अक्रियं वा प्रसज्येत। समुदायचैतन्ययोगे, वृक्ण एकस्मिन्नवयवे चिदात्मनोऽप्यवयवो वृक्णः, इति न चेतयेत्। नच—बहूनामवयवानामविनाभावनियमो दृष्टः ; यदैवावयवो विशीर्णस्तदा तदभावे न चेतयेत्। विज्ञानालम्बनत्वेऽप्यहंप्रत्ययस्य भ्रान्तत्वं तदवस्थमेव ; तस्य स्थिरवस्तुनिर्भासत्वादस्थिरत्वाच्च विज्ञानानाम्। एतेन—'स्थूलोऽहम्' 'अन्धोऽहम्' 'गच्छामी'त्यादयोऽप्यध्यासतया

## ऋजुप्रकाशिका

शब्दो गौणः, तत्राह—*परीक्षका अपीति* ॥ यद्यप्यस्ति परीक्षकाणां यौक्तिकं भेदज्ञानम्; तथापि तेन नापरोक्षाभेदभ्रम उच्छिद्यत इति भावः। "लोकसामान्यं नातिवर्तन्ते परीक्षकाः"इत्यत्र भाष्यकारोक्तिं प्रमाणयति—*वक्ष्यतीति* ॥ प्रायेणाभेदभ्रम एव, न भेदप्रत्यय इत्यत्र बाह्यवचनमपि संवादयति— *बाह्या अपीति* ॥ शास्त्रचिन्तका अपि लोकतोऽपि प्रतिपत्तार एवेति भावः। उपसंहरति—*तदिहेति* ॥ प्रादेशिकत्वभ्रमे दृष्टान्तमाह—*नभस इवेति* ॥ *ननु* आत्मनः सर्वगतत्वे खलु देहतादात्म्यभ्रमादात्मनि प्रादेशिकत्वप्रत्ययो भ्रमः स्यात्, न चात्मा सर्वगतः, किंतु प्रादेशिक एव ; अतो न प्रादेशिकत्वप्रत्यय आत्मनि भ्रम इत्याशङ्क्य निराकरोति—*नचेति* ॥ *अहंकारप्रामाण्याय = अहमिहैवेति प्रत्ययप्रामाण्याय। आत्मनः प्रादेशिकत्वेऽणुपरिमाणवत्त्वं वा, देहपरिमाणवत्त्वं वा वक्तव्यं स्यादित्याह—*तदा खल्विति* ॥ अस्तु अणुपरिमाणवत्त्वम्, तत्राह—*अणुपरिमाणत्व इति* ॥ देहपरिमाणवत्त्वपक्षं दूषयति—*देहपरिमाणत्वेत्विति*। देहपरिमाणत्वपक्षे वक्तव्यम्—किमवयवारब्ध आत्मा? उत अवयवसमुदायः? आद्यं दूषयति—*अनित्यत्वप्रसङ्ग इति* ॥ जन्यस्यानित्यत्वनियमादिति भावः। अवयवसमुदायस्याऽऽत्मत्वपक्षेऽपि किमवयवसमुदायस्य चैतन्यम्, तदवयवानां प्रत्येकं चैतन्यं वेति, दूषयितुं विकल्पयति—*अवयवसमुदायो वेत्यादिना* ॥ द्वितीयं दूषयति—*प्रत्येकं चैतन्यपक्ष इति* ॥ विरुद्धक्रियाभावेन शरीरोन्मथनम्, तत्राह—*अक्रियं वेति*। आद्येऽपि किमनेकावयवसंश्लेषलक्षणसमुदायापत्तिः शरीरोपाधिकी,? स्वत एव वा? काकतालीया वा? तत्राद्यं दूषयति—*समुदायचैतन्ययोग इति* ॥ *वृक्णे = भिन्ने। द्वितीयं दूषयति— *न च बहूनामिति*। तृतीयं दूषयति—*य एवेति* ॥ काकतालन्यायेन यादृच्छिकावयवसंश्लेषवद्यादृच्छिकविश्लेषोऽपि तन्न्यायेन भवेदिति स्वस्थानामेवाकस्माच्चैतन्यापत्तिरित्यर्थः। *ननु* विज्ञानस्यैवाहंप्रत्ययालम्बनत्वाद् अहंप्रत्ययस्य भ्रमत्वमिति क्षणिकवादिमतमाशङ्क्याह—*विज्ञानालम्बनत्वेऽपीति* ॥ विज्ञानमालम्बनं यस्य स तथोक्तः ; तत्त्वेऽपीत्यर्थः। भ्रान्तत्वे हेतुमाह—*तस्येति* ॥ अहंप्रत्ययस्येत्यर्थः। योऽहं पूर्वं स्थितः, स एवाहमधुनाऽप्यस्मीति पूर्वोत्तरकालावच्छिन्नस्थिरवस्तुन एवाहंप्रत्ययविषयत्वादित्यर्थः।

**तथाऽप्यन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्येतरेतराविवेकेनात्यन्तविवि-**

### भामती

व्याख्याताः। तदेवमुक्तक्रमेणाहंप्रत्यये पूतिकूष्माण्डीकृते भगवती श्रुतिरप्रत्यूहं कर्तृत्व-भोक्तृत्व-सुख-दुःख-शोकाद्यात्मत्वमहमनुभवप्रसञ्जितमात्मनो निषेद्धुमर्हतीति॥ तदेवं सर्वप्रवादि श्रुति-स्मृतीतिहास-पुराणप्रथितमिथ्याभावस्याहंप्रत्ययस्य स्वरूप-निमित्त-फलैरुपव्याख्यानम्—*अन्योन्यस्मिन्नित्यादि*॥ अत्र चान्योन्यस्मिन्धर्मिणि=आत्मशरीरादौ अन्योन्यात्मकताम्, अध्यस्य अहमिदम्=शरीरादीति। इदमिति च

### ऋजुप्रकाशिका

अस्तु तथापि विज्ञानानामेवाहंप्रत्ययविषयत्वमित्यत आह—*स्थिरत्वाच्चेति*॥ तन्मते विज्ञानानां क्षणिकत्वादित्यर्थः। यत् पूर्वं गौणवादिना मुख्य-गौण-वस्तुभेदग्रहमुपपाद्य "कृशोऽहं मन्दोऽहम्" इत्यादिप्रत्ययानां गौणत्वमुक्तम्, तदप्युक्तविधया भेदाग्रहे सति निरस्तमित्याह—*एतेनेति*॥ भ्रमो ह्यध्यासशब्दार्थः। एवं पूर्वोत्तरग्रन्थेषु सर्वत्र भ्रम एवाऽध्यासशब्दार्थो द्रष्टव्यः। भ्रमस्य तन्मतेऽध्यासत्वेन व्यवहारादध्यासतयेत्युक्तम्। एवमहंप्रत्ययस्य देहाहंकाराद्यविविक्तात्मविषयस्य भ्रमत्वेन तद्विषयाहंकारगतकर्तृत्वादेरात्मनि स्वाश्रयाहंकारतादात्म्याध्यासेनाध्यस्ततया कर्तृत्वादेरवास्तवत्वादकर्तभोक्तृ-शोकादिविधुराशनायाद्यतीताद्वितीयात्मतत्त्वं वेदान्तशास्त्रप्रतिपाद्यमित्याशयेन तच्छास्त्रविषयसिद्धिमुक्त्वा प्रयोजनसिद्धिमप्याह—*तदेवमुक्तेति*॥ पूति=दुर्गन्धि, कूष्माण्डफलमिव कृतः, पूतिकूष्माण्डीकृतः; तस्मिन् सतीत्यर्थः। एवमुक्तविधया तात्पर्यं वर्णयित्वा—*अन्योन्यस्मिन्नित्यादिभाष्यं* पदशो योजयति—*तदेवं सर्वप्रवादीति*॥ स्वरूप-निमित्त-फलैरित्युक्तम्, तत्र स्वरूप-निमित्त-फलानि कथ्यन्ते। *स्वरूपम्* = अन्योन्यात्मकत्वाध्यासोऽन्योन्यधर्माध्यासश्च। *निमित्तम्* = इतरेतराविवेकः। *फलम्* = व्यवहारः। भाष्ये अन्योन्यस्मिन्नित्युक्तम्, तद्विवृणोति—*अन्योन्यस्मिन् धर्मिण्यात्म-*

### वार्तिकम्

**त्वेनानुयोगितया सत्यत्वोपपत्तेर्न काचिदनुपपत्तिः। एवंच सति सत्यानृतरूपत्वमध्यासस्य सिद्धं भवति; अन्यथोभयोरपि स्वरूपतोऽध्यासेन मिथ्यात्वात्तदसिद्धिः स्यादिति। *ननु*—आभासवादमाश्रित्योभयोरपि मिथ्यात्वाभिधाने न कश्चिद्दोषः। न च—एवं सत्यानृतात्मकतानुपपत्तिरध्यासस्येति—वाच्यम्; रजतेदमंशयोरज्ञातशुक्तेरिवाऽऽवृतशुद्धचैतन्यस्यैवाधिष्ठानत्वात्तदुपपत्तेरिति—चेत्, *सत्यम्*; वादान्तराभिप्रायमेतत्। इत्थंभावमेवाभिनीय दर्शयति—*विषयिणस्तद्धर्माणां च विषयेऽध्यास इति*॥ यद्यपि चिदेकरसे न सन्ति धर्माः; तथापि सत्यज्ञानानन्तत्वादयः स्वरूपधर्मा विकल्पिताः सन्त्येवेत्यदोषः। अत एव स्वरूपसंसर्गाध्यासप्रकारभेदाद् द्विरध्यासशब्द एकस्मिन्नप्यध्यासे प्रयुक्तः। तस्माद्विषयविषयिणोस्तादात्म्यानुपपत्तेरध्यासो नास्तीति प्राप्तम्॥**

**एवं प्राप्ते परिहारमाह—*इति भवितुं युक्तम्; तथाऽप्यन्योऽन्यस्मिन्नन्योन्यात्मकतामन्योन्य-***

### भाष्यभावप्रकाशिका

विविक्षितम्। अत्र यद्यपीति पठितव्यम्। तेन यद्यपि भवितुं युक्तमिति योजना। अध्यासस्य नास्तित्वमयुक्तत्वाद्, अभानाद्वेतिविकल्प्याद्यमङ्गीकरोति—*तथापीति*॥

### प्रदीपः

तु सादृश्यज्ञानाभावाद् नात्मान्तःकरणयोरध्याससंभव इति शङ्का निरवसरैवेति द्वितीयकारणाभावशङ्कां सुसमाधां मत्वा भेदाग्रहाद् नाध्यास इति शङ्कावारणार्थमाह—*अन्योन्यस्मिन्निति—लोकव्यवहार इति च*॥ अत्यन्तविविक्तयोर्धर्मधर्मिणो-

### भामती

वस्तुतः, न प्रतीतितः । लोकव्यवहारः=लोकानां व्यवहारः, स चायमहमिति व्यपदेशः । इतिशब्द-

### ऋजुप्रकाशिका

शरीरादाविति* ॥ अहंकारादिरादिशब्दार्थः । *अन्योन्यात्मकतामध्यस्य=अन्योन्यतादात्म्यमध्यस्य । भाष्ये--*अग्रे अहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः इत्युक्तम्*, तत्र अहमिदमिति व्यवहारं पृथक्कृत्य तं व्यवहारं तादात्म्याध्यासफलत्वेन योजयति--*अहमिदं शरीरादीति* ॥

*ननु* अहमिदं शरीरमिति प्रतीतौ सत्यां खलु तथा व्यवहारः, न तथा प्रतीयते ; तथाच अहमिदमिति भाष्योक्तमयुक्तमित्यत आह---*इदमिति च वस्तुतो न प्रतीतित इति* ॥ अहमिति प्रतीताविदमित्यप्रतीतेऽपि शरीरेऽवास्तवत्वमनात्मत्वमस्तीतीदंशब्दप्रयोग इति भावः । भाष्ये लोकव्यवहार इत्युक्तम्, तत्र समासान्तरभ्रमं वारयति---*लोकव्यवहार इति* ॥ अभिज्ञा, अभिवदनमुपादानम्, अर्थक्रिया चेति चत्वारो व्यवहाराः, तन्मध्येऽभिवदनमेवात्र व्यवहारत्वेन विवक्षितमित्याह---*स चाहमिति व्यपदेश इति* ॥ भाष्ये 'अहमिदं ममेदमिती'त्यत्र इतिशब्दोऽहमिदमिति ममेदमिति इत्युभयत्रान्वितोऽस्ति, तत्र 'अहमिदमि'त्यनेनान्वितेनेतिशब्देन सूचितमर्थमाह---*इतिशब्दसूचितश्चेति* ॥ प्रमाय प्रमाणेनेत्यत्र प्रमाणेन प्रमायेति

### वार्तिकम्

**धर्मांश्चाध्यस्येतरेतराविवेकेनात्यन्तविविक्तयोर्धर्मधर्मिणोर्मिथ्याऽज्ञाननिमित्तः सत्यानृते मिथुनीकृत्या'हमिदम्' 'ममेदमि'ति नैसर्गिकोऽयं लोकव्यवहार इति* ॥' केचित्तु "इति भवितुं युक्तम्" इति ग्रन्थं पूर्वपक्षग्रन्थे योजयन्ति ; तन्न साध्विति प्रतिभाति ; "अध्यासो मिथ्या" इत्येतावतैव वाक्यपरिसमाप्तेर्निराकाङ्क्षत्वात्, कथञ्चिदुत्थाप्याकाङ्क्षयाऽध्यासो मिथ्येति भवितुं युक्तमित्यन्वयस्य कर्तुं शक्यत्वेऽपि 'इति'शब्दव्यवायाद् भिन्नवाक्यत्वप्रतीतेः, भिन्नलिङ्गयोः सामानाधिकरण्यानुपपत्तेः, सिद्धान्ते तु "तथापी"ति शब्दार्थस्य किञ्चिदभ्युपगतार्थसाकाङ्क्षत्वेन "सत्यमेवम्" इत्यादिपदवत् तत्प्रतिपादकत्वेनान्वयोपपत्तेरतिसमञ्जसम् । तत्र यत्तदोर्नित्यसम्बन्धाद् "इति भवितुं युक्तम्" इत्यतः प्राग् यद्यपीत्यध्याहार्यम् । इतिशब्दः प्रकृततादात्म्यानुपपत्तिपरामर्शितयैवंकारार्थः ।—यद्यप्येवं भवितुं युक्तम् ; तथापि नैसर्गिकोऽयं लोकव्यवहार इति सम्बन्धः ॥ अयमत्राशयः—किं विषयविषयिणोरुक्तविरोधात् पारमार्थिकं तादात्म्यं नोपपद्यत इत्युच्यते ? किं वाऽऽध्यासिकम् ? *तत्राद्ये पक्षे निरनुयोज्यानुयोगो नाम निग्रहस्थानमावहतीत्याह—*यद्यपीति* ॥ *भवितुं युक्तमिति* ॥ न ह्यस्माभिस्तयोः पारमार्थिकं तादात्म्यमभ्युपगम्यते, न वा तदन्यथानुपपत्तिगम्याध्यासस्य सत्यानृतात्मकता ; विरोधात्, न ह्यात्मन्यनात्मनस्तादात्म्यं पारमार्थिकं सत् स्वस्य सत्यानृतात्मकत्वमावहति ; पारमार्थिकत्वविरोधात् । अतो यद्यपि पारमार्थिकं तादात्म्यं तयोर्नोपपद्यत इत्येवं युक्तम्, किन्तु निरनुयोज्यानुयोगमात्रमेतदित्यर्थः । * द्वितीयेऽपि किं तत्र युक्तिसहमित्युच्यते ? किं वा नास्त्येव तदिति ? तत्राद्यस्त्वनुगुण एव तस्याध्यासिकत्व इत्याह—**

### भाष्यभावप्रकाशिका

पूर्वोक्तरीत्या युक्तिशून्यत्वमध्यासस्याङ्गीकृत्य, प्रतिभासमानत्वादपलापायोगादहं 'मनुष्य' इति प्रत्ययस्य देहव्यतिरिक्तात्मवादिमतेऽध्यासमन्तरेणोपपादनासम्भवाच्च तदनुरूपं कारणमेव कल्प्यमित्यभिसन्धायाऽध्यासं प्रतिजानीते---*तथापीत्यादिना लोकव्यवहार इत्यन्तेन भाष्येण* ॥

## पञ्चपादिकाविवरणम्

द्रष्टर्यहङ्कारादिशरीरान्तपदार्थाध्यासस्य सम्भवं प्राप्तमङ्गीकरोति—* यद्यप्येवमिति * ॥ निरुपाधिकभ्रम-कार्यदर्शनमेव गुणावयवसामान्याभावेऽपि केतकीगन्धसदृशस्सर्पगन्ध इतिवत् सादृश्यं वा शङ्खपीतिमादाविव कारणान्तरं वा कल्पयतीत्याह—* "तथापी"त्यादिना "एवमध्यासस्यापी"त्यभिप्राय इत्यन्तेन ग्रन्थेन * ॥

## ऋजुविवरणम्

'तथापी'त्यादिनाध्याससद्भाव उपालम्भार्हो न भवतीत्युक्तम्, तदयुक्तम्; सामाग्र्यभावेन ह्युपालम्भः कृतः, नच तन्निरूपणेन विनोक्तिमात्रेणानुपालम्भः सिध्यतीत्याशङ्क्याभिप्रायमाह—*निरुपाधिकभ्रमेति*॥ सोपाधिकेतूपधिमात्रो-

## वार्तिकम्

*यद्यपीति। भवितुं युक्तमिति*॥ तन्त्रेणैव पक्षयोरुत्तरम्। अलङ्कारोऽयमध्यासस्य, यद्युक्तिं न सहते; अनिर्वचनीयस्वरूपत्वात्, अन्यथा निर्वचनीयतया सत्यत्वापत्तेरध्यासत्वव्याघातात्। अतो विषयविषयिणो-राध्यासिकं तादात्म्यं न युक्तिसहमिति यदुच्यते, तदपि भवितुं युक्तम्; तस्य तन्मात्रशरीरत्वादित्यर्थः। *द्वितीयेऽपि किं प्रमाणाभावात्तन्नास्तित्वमवधार्यते? किं वा फलाभावात्? आहोस्वित् कारणाभावात्? कारणाभावेऽपि किमुपादानकारणाभावात्? किं वा निमित्तकारणाभावादिति? मैवम्; अध्यासे प्रमाणादि-चतुष्टयस्य विद्यमानत्वादित्यभिप्रेत्याध्यासोपपादकप्रमाणादिचतुष्टयं दर्शयन् तत्स्वरूपमाह—*तथापीत्यादि-ना*॥ तत्र"न्योऽन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्य" इत्यध्यासस्वरूपमाह। "इतरेतराविवेकेना-त्यन्तविविक्तयोर्धर्मधर्मिणोरि"ति तु तदुपादाननिमित्ते। "नैसर्गिकोऽयं लोकव्यवहारः" इति तत्प्रमाण-फले। "मिथ्याऽज्ञाननिमित्तः" इत्यादिना च तदुपादानमिति विभागः। *ननु*—एवं तर्हि अत्रैवाध्यासप्रमाण-स्य प्रदर्शितत्वादग्रे तत्सद्भावप्रमाणं न वाच्यम्, *नैष दोषः*; अत्र व्यवहारान्यथानुपपत्तिः प्रमाणत्वेन निर्दिश्यते, तत्र तु प्रत्यक्षमिति, प्रमाणभेदात्तत्प्रदर्शनोपपत्तेः। *ननु*—नैवमपि तदुपपत्तिः; तत्रापि प्रमातृत्वादिव्यवहारान्यथानुपपत्तेस्तत्प्रमाणत्वेनोपन्यस्तत्वादिति—चेत्, *सत्यम्*; परं त्वत्र साक्षादध्यास-जन्य 'मम'व्यवहारः प्रमाणत्वेन निर्दिश्यते, तत्र तु तन्नान्तरीयकप्रमातृत्वादिव्यवहार इति भेदः। यद्वा—अत्रापि "नैसर्गिकोऽयं लोकव्यवहारः" इति प्रत्यक्षं व्यवहारमुपन्यस्यताऽर्थात् प्रत्यक्षप्रमाणस्याप्युपन्यस्त-त्वात् संक्षेपेणात्रोक्तप्रमाणस्यैव तत्रोपपत्त्या विस्तरेण प्रतिपादनमिति सर्वं सुस्थम्॥

अत्र व्यवहारशब्देन—अभिज्ञावदनार्थक्रियोपादानेषु चतुर्षु व्यवहारेष्वभिज्ञावदने गृह्येते; योग्यत्वात्, तत्राप्युभयव्यवहारः शिष्यं प्रत्येव प्रमाणीक्रियते, वादिनं प्रति त्वभिवदनमात्रम्; अख्यातिवादिना तत्र ख्यातेरनङ्गीकारात्। अत्र *व्यवहरणम्=व्यवहारः, व्यवह्रतिर्वा व्यवहारः। व्यवहारान्तरहेतुत्वात् प्रथमा व्युत्पत्तिः, द्वितीया च स्वयं फलरूपत्वादिति ध्येयम्। *लोकनम्=लोकः। लोकश्चासौ व्यवहारश्चेति

## भाष्यभावप्रकाशिका

द्वितीयं प्रत्याह*—अयमिति*॥ मनुष्योऽहमिति प्रतीतेरध्यासस्वरूपापलापायोगाद् अस्यान्यदेहादि व्यतिरिक्तात्मवादे प्रमात्वाभावात्तदनुरूपं कारणं कल्प्यमिति भावः। अपरोक्षमध्यासं द्वेधा विभजन्विशेष्यं निर्दिशति—*लोकव्यवहार इति॥ लोक्यते मनुष्योऽहमिति ज्ञायत इति ज्ञानोपसर्जनोऽर्थाध्यसः, लोक-विषयो व्यवहार इत्यर्थोपसर्जनज्ञानाध्यासतोक्ता। कोऽयमध्यासः? यो विषयादिसिद्धिहेतुरित्याशङ्क्य तल्लक्षणमाह—* अन्योन्यस्मिन्नित्यादिना धर्मधर्मिणोरित्यन्तेन॥ अन्योन्यस्मिन्नन्योन्यात्मकता तद्धर्मा-

### भामती

सूचितश्च शरीराद्यनुकूलं प्रतिकूलं च प्रमेयजातं प्रमाय प्रमाणेन तदुपादानपरिवर्जनादिः। अन्योन्य-धर्मांश्चाध्यस्य अन्योन्यस्मिन्धर्मिणि देहादिधर्माञ्जन्म-मरण-जरा-व्याध्यादीनात्मनि धर्मिणि अध्यस्तदेहादि-भावे समारोप्य, तथा चैतन्यादीनात्मधर्मान्देहादावध्यस्तात्मभावे समारोप्य-ममेदं जरा-मरण-पुत्र-पशु-स्वाम्या-

### ऋजुप्रकाशिका

व्यत्यासेनान्वयः। *तदुपादानेति* ॥ शरीराद्यनुकूलोपादान-शरीरप्रतिकूलपरिवर्जनादिरित्यर्थः। भाष्ये— अन्योन्यधर्मांश्चाध्यस्येत्युक्तम्, तद्विवृणोति—*अन्योन्यधर्मांश्चाध्यस्य* *अन्योन्यस्मिन् धर्मिणीत्यादिना* ॥ देहादीत्यत्र 'अहंकार' आदिशब्दार्थः। व्याध्यादीनित्यत्र कर्तृत्वादिरादिशब्दार्थः। धर्मिणोः परस्परता-दात्म्याध्यासाभावप्रयुक्तधर्माध्यासाभावं परिहरन् धर्मितादात्म्याध्यासमुक्तं स्फोरयति—*अध्यस्तदेहादिभाव-इति* ॥ अहंकार आदिशब्दार्थः। आत्मनि धर्मिणि देहाहंकारादिगतधर्माध्यासमभिधाय देहादौ धर्मिणि आत्मगतधर्माध्यासमाह—*तथा चैतन्यादीनिति*॥ यद्यपि चैतन्यं आत्मस्वरूपमेव, न तद्धर्मः ; तथापि धर्मधर्मिभावकल्पनया तथोक्तम्। देहादावित्यत्र, अहंकार आदिशब्दार्थः। अत्रापि देहादावात्मधर्मा-ध्यासो धर्मितादात्म्याध्यासपूर्वकः, तदर्थमाह—*अध्यस्तात्मभाव इति*॥ धर्मितादात्म्याध्यासफलम्—'अहमिद-मि'ति व्यवहारमभिधाय धर्माध्यासफलीभूतं व्यवहारमाह—*ममेदं जन्ममरणेत्यादिना* ॥ अत्रापि व्यवहार-

### वार्तिकम्

लोकव्यवहारः, प्रत्यक्षव्यवहार इत्यर्थः। लोक इति वा व्यवहारो लोकव्यवहारः, 'मनुष्योऽहम्' 'देवोऽहम्' इत्यादिर्हि भवति व्यवहारः। लोकानां व्यवहारो लोकव्यवहार इति वा। सर्वो हि लोको देह-कलत्रादिष्वहंममेत्यभिमत्य व्यवहरति। तेन 'इदं शरीरम्' 'इदं कलत्रादी'तीदङ्कारास्पदत्वेन प्रत्यक्षेणानु-भूयमानेष्वनात्मस्वनात्मधर्मेषु च देह-कलत्रादिषु योऽयमहं ममेत्यात्मतया, तद्धर्मतया च लोकव्यवहारः, स सत्यानृते मिथुनीकृत्य भवति, नान्यथा ; तादृशस्वप्नव्यवहारवत् ; निर्विषयव्यवहारानुपपत्तेः। *ननु*—निर्विषयोऽपि व्यवहारो दृष्टः ; यथा "राहोः शिरः" "शशविषाणमि"ति ; तथाऽऽह च भगवान् पतञ्जलिः—"शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः"—इति, *सत्यम्* ; परन्तु अत्र प्रत्यक्षव्यवहारः पक्षीकृतः, न व्यवहारमात्रम्। *अत एव भगवता भाष्यकारेण—"अयम्" इति व्यवहारो विशेषितः। प्रत्यक्षेण हि तादात्म्यं तत्सम्बन्धं चानुभूय 'अहम्' 'ममेति' चाभिलपति। नचायं निर्विषयो वक्तुं शक्यः ; अतिप्रसङ्गात्। विषयाध्यक्षतैव व्यवहारस्य प्रत्यक्षताऽभिमता, न स्वरूपाध्यक्षता ; अतिप्रसङ्गात्, प्रत्यक्षपरोक्ष-व्यवहारविभागानुपपत्तेश्च, सर्वत्राभिज्ञावदनयोः स्वरूपतोऽप्रत्यक्षत्वात्। अस्तु तर्हि 'सिंहो देवदत्तः' इतिवद् गौणोऽयं व्यवहार इति, नेत्याह—* नैसर्गिक इति* ॥

### भाष्यभावप्रकाशिका

ध्यासलक्षणस्सत्यात्मासत्यान्तःकरणादिमिथुनीकरणीभूतो लोकव्यवहारस्तथापि वर्णित इति योजना। तत्रान्योन्यस्मिन्निति परस्पराधिष्ठानत्वमन्योन्यात्मकतामिति परस्परमध्यस्तता च कथ्यते। तत्रान्यस्मिन्न-न्यावभास इत्युक्ते प्रतिमायां देवतादृष्टिरपि भ्रान्तिः स्यात्, ततो विशिनष्टि—अन्योन्यस्मिन्निति ॥

तत्र देवतादृष्टिमात्रमारोप्यम्, न प्रतिमादृष्टिः ; "ब्रह्मदृष्टिरुत्कर्षादि"ति न्यायात्। पटे तन्तवः, स च तन्तुष्विति लोकवादिदृष्ट्या तन्तुपटयोरन्योन्याधारत्वधियोरध्यासत्वप्राप्तावुक्तम्—*अन्योन्यात्मकतामिति*।

### भामती

दीति व्यवहारो व्यपदेशः, इतिशब्दसूचितश्च तदनुरूपः प्रवृत्त्यादिः । अत्र चाध्यास-व्यवहारक्रियाभ्यां

### ऋजुप्रकाशिका

शब्दार्थों व्यपदेश इत्याह—*व्यपदेश इति* ॥ अहमिदमित्यन्वितेतिशब्दसूचितमर्थं पूर्वमभिधाय ममेदमित्यन्वितेतिशब्दसूचितसर्थमाह—*इतिशब्दसूचितश्चेति* ॥ *ननु* "भुक्त्वा व्रजति" इत्यत्र क्त्वाप्रत्ययो भोजनव्रजनक्रिययोरेककर्तृयुक्तः, अत्राध्यासव्यवहारयोरेककर्तृकत्वानभिधानादध्यस्य व्यवहार इति क्त्वाप्रत्ययोपेतप्रयोगोऽनुपपन्न इत्याशङ्क्याह—*अत्र चाध्यासव्यवहारक्रियाभ्यामिति* ॥ अध्यासश्च व्यवहारलक्षणक्रिया च ते, तथोक्ते ; ताभ्यामित्यर्थः । व्यवहारक्रियया कश्चित् व्यवहारकर्ता आक्षिप्तः, तस्यैवाध्यासकर्तृत्वादध्यस्य

### वार्तिकम्

सिंहाद् गृहीतभेदे हि देवदत्ते शौर्यादिगुणयोगात् कदाचित् केनचित् सिंहशब्दः प्रयुज्यते, न त्वगृहीतभेदे सर्वदा सर्वलोकेन ; तथा सति मुख्यत्वप्रसङ्गात्, गौणत्वव्याघातापत्तेश्च । यत्रापि सार्षपादौ सर्वदा सर्वजनीनस्तैलशब्दप्रयोगः, तत्रापि तिलविकारगृहीतभेद एव तस्मिन् भवति तत्प्रयोगः ; अन्यथा गौणत्वव्याघातादित्युक्तत्वात्, रूपगन्धादिभेदेन तयोः प्रत्यक्षेणैव भेदाध्यवसानात्, सर्वदा सर्वजनीनत्वं तु तत्प्रयोगस्य गुणिनि शुक्लादिशब्दवद् निरूढत्वात् । निरुढता त्वनादिवृद्धप्रयोगादित्यन्यदेतत् । नच—एवं शक्तिरेवास्तु, किं लक्षणयेति—वाच्यम् ; लक्षणया तत्प्रयोगे संभवति शक्तिकल्पने प्रमाणाभावात्, नानार्थकल्पनस्यान्याय्यत्वात्, अगत्या हि गवादिशब्दे तत्कल्पनात्, प्रकृते च लक्षणयाऽपि तत्प्रयोगोपपत्तावगतेरभावात्, गुणद्वाराऽभिधेयाविनाभावस्य विद्यमानत्वेन लक्षणासंभवात् । *ननु*—"सोमेन यजेत" इतिवद् मत्वर्थलक्षणया शुक्लादिशब्दो गुणिनि वर्तताम् ? किमिति तर्हि मत्वर्थीयोऽच्प्रत्ययः ? "मतुब्लोपो वा द्रष्टव्य"इति कात्यायनानुशासनं भवति' न हि लक्षणायां तदनुशासनमुपपद्यते, *नैष दोषः* ; संभवाभिप्रायत्वात्तस्य । संभवति हि शुक्लादिशब्दस्य गुणिन्यन्येनापि प्रकारेण साधुत्वमित्येवमनुशास्ति भगवान् कात्यायनः,न लक्षणापक्षं निवारयति ; लक्षणयाऽपि तत्र तत्साधुत्वोपपत्तेः । अस्तु वा शुक्लादिशब्दो गुणिनि यथा तथा, तैलशब्दस्तु सार्षपादिषु निरूढलक्षणयैवेत्यविवादम् । नचैवं देहादिभ्य आत्मभेदः प्रत्यक्षेणाध्यवसीयते ; अनादिसर्वजनप्रत्यक्षाभेदव्यवहारविरोधात्, अख्यातिवादिभिरपि सांख्यैर्दृश्यविशिष्टव्यवहारस्याङ्गीकरणात् । नच विरुद्धयोर्विषयविषयिणोरभेदव्यवहारः सत्यानृतमिथुनीकरणं विना, नवा सत्यानृतमिथुनीकरणं तयोः परस्पराध्यासं विनेति, तदिदमुक्तम्—*"अन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्य सत्यानृते मिथुनीकृत्याहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहार"इति* ॥

ममेति व्यवहारसिद्ध्यर्थम्—*अन्योन्यधर्मांश्चाध्यस्येत्युक्तम्* । *यद्वा*—अन्योन्यस्मिन्नन्योन्यात्मकतामन्यो-

### प्रदीपः

रितरेतराविवेकेन 'अहमि'ति अन्योन्यस्मिन्नन्योन्यात्मकताम्, ममेदमिति अन्योन्यधर्मांश्चाध्यस्य, सत्यानृते मिथुनीकृत्य, मिथ्याऽज्ञाननिमित्तोऽयं लोकव्यवहारो नैसर्गिक इति योजना * । अत्र अन्योन्यस्मिन् अन्योन्यात्मकताध्यासस्योदाहरणम् * अहमिति * ॥ अन्योन्यधर्मांश्चाध्यस्येत्यस्योदाहरणम् *ममेदमिति* ॥ अहमिदमिति भाष्ये इदं शब्दप्रयोगस्तु अहमध्यासेऽन्तःकरणांशोऽपि प्रतीयत इति सूचनेन इदं रजतमित्यादाविव भ्रमज्ञानस्य द्व्यंशघटितत्वं यदपेक्षितम्, तदबाधनिरूपणार्थम् । कुत्रचनांशद्वयं स्पष्टम्, कुत्रचनैकः स्पष्टोऽपरोऽस्पष्टः ; यथा अयो दहतीत्यादौ वह्न्यंशोऽस्पष्ट इति, अहमध्यासोऽपि न बाधित इति, इदंपदेन सूच्यते । लोकव्यवहार इत्यस्य प्राणिमात्रस्य व्यवहार इत्यर्थः तथाच व्यवहारकर्तैवाध्यासस्य मिथुनीकरणस्य च

## भामती

यः कर्तोन्नीतः स समान इति समानकर्तृकत्वेनाध्यस्य व्यवहार इत्युपपन्नम् ; पूर्वकालत्वसूचितमध्यासस्य व्यवहारकारणत्वं सूचयति—मिथ्याज्ञाननिमित्तो व्यवहारः । मिथ्याज्ञानम् = अध्यासः, तन्निमित्तः ।

## ऋजुप्रकाशिका

व्यवहार इति क्त्वाप्रत्ययोपेतः प्रयोग उपपन्न इत्यर्थः । *पूर्वकालेति* ॥ 'अध्यस्य व्यवहारः' इत्यत्र अध्यासस्य व्यवहारपूर्वकालीनत्वमुक्तं तत्सूचितमित्यर्थः । भाष्ये—उत्तरत्र विद्यमानं व्यवहारपदमाकृष्य तत्रैव भाष्ये पूर्वत्र स्थितेन मिथ्याज्ञाननिमित्त इत्यनेन संयोजयति—*मिथ्याज्ञाननिमित्तो व्यवहार इति* ॥ *ननु* एतावता व्यवहारस्य मिथ्याज्ञाननिमित्तकत्वोक्तावप्यध्यासनिमित्तकत्वं नोक्तमेवेत्यत आह—*मिथ्याज्ञान-मध्यास इति* । *तन्निमित्त इति* ॥ स मिथ्याज्ञानलक्षणोऽध्यासो निमित्तं यस्य सः, तन्निमित्त इत्यर्थः ।

## ऋजुविवरणम्

पपन्नं न कारणान्तरकल्पकत्वम्, तदर्थमाह—*निरुपाधिकेति* ॥ निरुपाधिकस्यापि कार्यमात्रस्य नाभिमत-

## तत्त्वदीपनम्

सादृश्यज्ञानस्य निरुपाधिकभ्रमव्यापकत्वे नाहंकारादेरात्मन्यध्यस्तत्वं सिद्ध्यति, सादृश्याभावादित्याशङ्क्य, भूयोऽवयवसामान्यसादृश्याभावेऽपि कार्यानुपपत्त्या सादृश्यान्तरं कल्प्यत इत्याह—*निरुपाधिकेति* ॥ केतकी-सर्पगन्धयोर्निर्गुणत्वान्निरवयवत्वाच्च गुणावयवसामान्याभावेऽपि केतकीगन्धसदृशः सर्पगन्ध इत्यनुभवाद्यथा सादृश्यान्तर-मास्थितम्, तथाऽत्रापीत्यर्थः ।

निरुपाधिकभ्रमेऽपि न सादृश्यानुगतिरित्याह—*शङ्खपीतिमादाविति* ॥ 'पयस्तिक्तमि'त्यादिभ्रम आदिशब्दार्थः । कारणान्तरमित्यज्ञानलक्षणमित्यर्थः । युष्मदित्यादिना किमध्यासस्य सत्त्वमपलप्यते ? उत प्रतीतिः ? इति विकल्प्याऽऽद्यं तथापीत्यङ्गीचकार, द्वितीयेऽपि किं कारणस्याऽपलापो विवक्षितः ? उत प्रतीतेः ? आद्येऽपि किं निमित्तस्य ? उतोपादा-नस्य ? न तावदाद्यः ; संस्कारस्य निमित्तत्वात्, प्रमाणानुभवसंस्काराभावेन विपरीतकार्याभावादर्शनादेवानुभव-संस्कार एव प्रयोजकः, स प्रकृतेऽपि सुसंपादः । न चेतरेतराश्रयत्वम् ; पूर्वानुभवसंस्कारस्योत्तरोत्तरभ्रमप्रयोजकत्वादित्यभि-

## भाष्यभावप्रकाशिका

'पटः शुक्लः' 'शुक्लः पटः' इति प्रमाव्यावृत्त्यर्थम्—इतरेतराविवेकेनेति । इत्थंभावे तृतीया ; भेदाग्रहेण, एकतापत्त्या वेत्यर्थः । अनेनाध्यासस्य स्वरूपं निमित्तं च कथ्यते । यथावभासं पारमार्थिकं किं न स्यात् ?

## वार्तिकम्

न्यधर्मांश्चाध्यस्य 'अहमिदम' 'ममेदमि'ति यन्मिथ्याज्ञानम्,तन्निमित्तो योऽयं प्रत्यक्षसिद्धो नवविधो नैसर्गिकः प्रमातृत्वादिरूपो लोकव्यवहारः, स सत्यानृते मिथुनीकृत्य भवतीति भाष्ययोजना ; "देहेन्द्रियादिष्वहंममाभि-मानहीनस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेः" इति भाष्यप्रवृत्त्यनुसारात् । *ननु* अनात्मन्यात्म-व्यवहारस्तद्धर्मेष्वात्मधर्मव्यवहारश्चेतरेतराविवेकादेव सत्यानृतमिथुनीकरणमन्तरेण सेत्स्यतीत्युक्तत्वाद् न तदन्यथानुपपत्त्या सत्यानृतमिथुनीकरणरूपाध्याससिद्धिरिति, नेत्याह—*मिथ्याऽज्ञाननिमित्त इति* ॥

## प्रदीपः

कर्तेति—'अध्यस्य' 'मिथुनीकृत्य चे'ति समानकर्तृकत्वाद् ल्यबुपपत्तिः । यद्यपि अध्यासो मिथुनीकरणं चैकम् ; तथापि प्रथमं सामान्यरूपेण, द्वितीयन्तु विशेषरूपेणेति न दोषः । *अयमिति* "अहमिति ममेदमित्यस्य परामर्शः । अत्र "अहमि"-त्याद्यध्यासपूर्वको'ऽहमि'त्याद्यध्यास इति वर्णनेन भ्रमान्तराद्भ्रमान्तरमिति सूचनेन भ्रमज्ञानकारणं संस्कारमात्रमत्राप्यविशिष्टमिति

**क्तयोर्धर्मधर्मिणोर्मिथ्याऽज्ञाननिमित्तः सत्यानृते मिथुनीकृत्य 'अहमिदम्' 'ममेद-मि'ति नैसर्गिकोऽयं लोकव्यवहारः ।**

### भामती

तद्भावाभावानुविधानाद् व्यवहारभावाभावयोरित्यर्थः । तदेवमध्यासस्वरूपं फलं च व्यवहारमुक्त्वा तस्य निमित्तमाह—*इतरेतराविवेकेन* ॥ विवेकाग्रहणेनेत्यर्थः । अथाविवेक एव कस्मान्न भवति ? तथाच नाध्यासः, इत्यत आह—अत्यन्तविविक्तयोर्धर्मधर्मिणोः । परमार्थतो धर्मिणोरतादात्म्यं विवेकः,

### ऋजुप्रकाशिका

तन्निमित्तत्वमेव व्यनक्ति—*तद्भावाभावेति* ॥ मिथ्याज्ञानलक्षणाध्यासभावाभावानुविधानादित्यर्थः । *ननु* —व्यवहारस्याध्यासाद् भेदे पूर्वापरभावेन व्यवहाराध्यासयोः कार्यकारणभावः स्यात् । नच भेदोऽस्ति । तथाहि—उपक्रमे *नैसर्गिकोऽयं लोकव्यवहारः* इत्युक्त्वा *एवमनादिरनन्तः* इत्याद्युपसंहारभाष्ये नैसर्गिकोऽ-ध्यास इत्यभिधानेन नैसर्गिकत्वविशिष्टाध्यासत्वप्रतीतेरध्यासव्यवहारयोरेकत्वेन पूर्वापरभावायोगाद् न कार्य-कारणभाव इति—चेत्, *न* ; कार्यभूतव्यवहारनैसर्गिकत्वेन तत्कारणीभूताध्यासस्यापि नैसर्गिकत्वमर्थसिद्ध-मिति, नैसर्गिकत्वविशिष्टकारणीभूताध्यासोपसंहारपरत्वादुपसंहारस्य विरोधाभावात् । न हि व्यवहारेऽध्यासे च नैसर्गिकत्वविशेषणं दत्तमित्येतावता तयोरभेद इति भावः । *ननु*—"अध्यस्य व्यवहारः" इत्यनेनैवाध्यास-व्यवहारयोः कार्यकारणभावस्योक्ततया 'मिथ्याज्ञाननिमित्तो व्यवहारः' इत्यनेन व्यवहारस्य मिथ्याज्ञानलक्षणाध्यास-कारणकत्वकथनं पुनरुक्तमिति—चेत् ; "सुप्तोत्थितः" इत्यादौ सुप्तेः पूर्वकालीनत्वेऽप्युत्थानाकारणत्ववद् "अध्यस्य व्यवहारः" इत्यत्राप्यध्यासस्य पूर्वकालीनत्वेऽपि व्यवहाराकारणत्वमेवेत्याशङ्कायां तन्निराकरणायाऽ-ध्यासस्य व्यवहारकारणत्वस्पष्टीकरणार्थत्वेन 'मिथ्याज्ञाननिमित्तो व्यवहारः' इत्यस्य पुनरुक्तिदोषाभावादिति द्रष्टव्यम् । व्यवहारं फलत्वेन प्रदर्श्य तस्य कारणमध्यास इत्युक्तम्, अध्यासस्य च किं कारणमिति विवक्षायां तत्कारणमाहेत्याह—*तदेवमिति* । *तस्य=अध्यासस्य । जातिव्यक्त्योरिवेतरेतरतादात्म्यम्, इतरेतरा-विवेक इति भ्रमः स्यात्, तद्वारणायार्थमाह—*विवेकाग्रहणेनेत्यर्थ इति* ॥ भेदाग्रहणेनेत्यर्थः । तथाच इतरेतराविवेकेनाध्यस्य=भेदाग्रहादध्यस्येति योजनीयम् । इतरेतराविवेको नाम = जातिव्यक्त्योरिवेतरेतर-तादात्म्यमेवास्तु, तथाचाध्यासाभाव एवास्त्विति चोदयति—*अथेति* ॥ *अविवेकः = तादात्म्यम् । वस्तुतोऽ-त्यन्तविविक्तयोस्तादात्म्यमयुक्तमित्याह—*अत आहेति* ॥ अत्यन्तविविक्तयोरित्युक्तम्, तत्र विवेकशब्दार्थ-

### वार्तिकम्

**अयमभिप्रायः—यो यो व्यवहारः, स सर्वोऽपि समानविषयकज्ञानपूर्वको दृष्टः, अयमपि व्यवहारत्वात् तथा मान्यः ; अन्यथाऽतिप्रसङ्गापत्तेः । विषयविषयिणोस्तादात्म्यव्यवहारस्तादात्म्यज्ञाननिमित्त एव सन् भवितुमर्हति । नच तद् ज्ञानं सत्यम् ; अतस्मिंस्तद्बुद्धिरूपत्वात् । नच विषयमिथ्यात्वमन्तरेण ज्ञानस्य मिथ्यात्वमुपपद्यते ; स्वरूपतस्तद्बाधादर्शनात् । नहि 'नेदं मम ज्ञानम्', 'नाभूद्वा मम ज्ञानमि'ति बाधं कश्चिदपि प्रत्येति, किन्तु 'नेदं रजतम्', 'नाहं मनुष्यः', 'मिथ्यैवैतावन्तं कालं रजतं मनुष्यत्वं चाभादि'ति ॥**

### भाष्यभावप्रकाशिका

इत्यत आह—*अत्यन्तविविक्तयोर्धर्मधर्मिणोरिति* ॥ धर्मिणोरतादात्म्यं विवेकः, धर्माणां चासङ्की-र्णता ॥ स्वरूपविवेकतिरस्कारेण भेदधीरध्यासः, नैवं शुक्लपटादिधीरित्यर्थः । स एवायमयमेव

## भामती

धर्माणां चासंकीर्णता विवेकः। स्यादेतत्—विविक्तयोर्वस्तुसतोर्भेदाग्रहनिबन्धनस्तादात्म्यविभ्रमो युज्यते, शुक्तेरिव रजताद्भेदाग्रहे रजततादात्म्यविभ्रमः, इह तु परमार्थसतश्चिदात्मनो न भिन्नं देहाद्यस्ति वस्तुसत्; तत्कुतश्चिदात्मनो भेदाग्रहः? कुतश्च तादात्म्यविभ्रमः? इत्यत आह—सत्यानृते मिथुनीकृत्य। विवेकाग्रहादध्यस्येति योजना। सत्यं चिदात्मा, अनृतं बुद्धीन्द्रियदेहादि, ते द्वे धर्मिणी मिथुनीकृत्य युगलीकृत्येत्यर्थः। नच संवृतिपरमार्थसतोः पारमार्थिकं मिथुनमस्तीत्यभूततद्भावार्थस्य च्वेः प्रयोगः। एतदुक्तं भवति—अप्रतीतस्यारोपायोगादारोप्यस्य प्रतीतिरुपयुज्यते, न वस्तुसत्तेति।

## ऋजुप्रकाशिका

माह—*परमार्थत इति* ॥ धर्मिणोर्विवेकशब्दार्थमभिधाय धर्माणां विवेकशब्दार्थमाह—*धर्माणां चेति* ॥ तथाच तादृशयोरपि धार्मिणोस्तादृशानामपि धर्माणां भेदाग्रहादध्यासः स्वीकार्य एवेति भावः। प्रकृते चिदचितोस्तादात्म्याध्यासमाक्षिपति—*स्यादेतदिति* ॥ *वस्तुसतोः* = परमार्थसतोः। दृष्टान्तमाह—*शुक्तिरिवेति* ॥ रजतं परमार्थसदिति तस्याभिप्रायः। *ननु* परमार्थसतोर्भेदाग्रहात् तादात्म्यारोपसत्त्वे कथं तदाक्षेपः? इत्याशङ्क्यान्यत्र सत्त्वेऽपि प्रकृते नेत्याह—*इह त्विति* ॥ परमार्थसतोरेव भेदाग्रहात् तादात्म्यारोप इति न नियमः; परमार्थापरमार्थयोरपि मिथुनीकरणेन तद्भेदाग्रहात् तादात्म्यभ्रमसंभवात्, नच शुक्तिरजतं दृष्टान्तः; शुक्तिरजतस्यापरमार्थत्वात्, इत्याशयवानाह—*अत आहेति* ॥ "सत्यानृते मिथुनीकृत्य अहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः" इति भाष्योक्त्या व्यवहारस्य मिथुनीकरणानन्तरभावित्वप्रतीतेर्मिथुनीकरणस्य व्यवहारहेतुत्वशङ्का स्यात्, तद्वारणाय तद्भाष्यं योजयति—*सत्यानृते मिथुनीकृत्य विवेकाग्रहादध्यस्येति योजनेति* ॥ विवेकाग्रहात् = मिथुनीकरणात्, भेदाग्रहः, ततोऽध्यास इत्यर्थः। सत्यानृतशब्दयोरर्थमाह—*सत्यं चिदात्मेति* ॥ अहङ्कार आदिशब्दार्थः। *ननु* मिथुनीकृत्येत्यस्य युगलीकृत्येत्यर्थ उक्तः, तदनुपपन्नम्; युगलस्य स्वतः सिद्धत्वेन तत्करणायोगादिति—चेत्, *न*; अध्यस्यतया बुद्धौ सन्निधापनस्यैव युगलीकरणशब्दार्थत्वेन तदुपपत्तेः। *ननु* "सत्यानृते मिथुनीकृत्ये"ति किमर्थमुक्तम्? मिथुनं कृत्वेत्येवोच्यतामित्यत आह—*नच संवृतीति* ॥ अनृतं संवृतिशब्दार्थः। पारमार्थिकापारमार्थिकयोरर्थयोः पारमार्थिकं मिथुनं न भवति, किं त्वपारमार्थिकमिवेत्यभूततद्भावार्थस्य च्वेः प्रयोगः; "अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः" इति सूत्रादित्यर्थः। *ननु* सत्यासत्ययोर्मिथुनीकरणेन तद्भेदाग्रहात् सत्यासत्यतादात्म्यारोप उक्तः, तदनुपपन्नम्; असत्यस्य आरोपायोगात्, अन्यथा नरशृङ्गादेरपि तथा स्यात्, इत्यत आह—*एतदुक्तं भवतीति*। *नच वस्तुसत्तेति*। *वस्तुसत्ता=वस्तुनः पारमार्थिकता, आरोपे नोपयुज्यत

## वार्तिकम्

एतेन—अतस्मिंस्तद्बुद्धित्यमेव ज्ञानस्य मिथ्यात्वम्, तच्च व्यधिकरणधर्मावच्छिन्नविशेष्यकज्ञानत्वमिति—*अपास्तम्*; 'नेदं रजतमि'त्यादिस्वरूपबाधानुपपत्तेः, 'नात्र रजतम्' इति संसर्गबाधप्रतीत्यापत्तेश्च। नचैवं दृश्यते, तस्मान्न तथा कल्पनमुचितम्। कथं च व्यधिकरणेन धर्मेण विशेष्योऽवच्छिद्यताम्? न ह्यन्यधर्मेणान्योऽवच्छिद्यते;- अतिप्रसङ्गापत्तेः, सर्वपदार्थसाङ्कर्यापत्तेश्च। *ननु*—नान्यधर्मेणान्योऽवच्छिद्यत इति ब्रूमः, किन्तु ज्ञानमेव तथाविधं दोषादुत्पद्यत इति—चेत्, *न*; किं निर्विषयकं ज्ञानमभ्युपगतं भवता? तथाच शून्यवादिनं प्रति दत्तो हस्तः स्यात्। दोषजन्यं तथेति चेत्, न; साधनाव्यापकत्वात्। न हि शून्यवादिनं प्रत्यदोषजन्यं ज्ञानं दर्शयितुं शक्यते; सर्वज्ञानस्य तन्मते दोषजन्यत्वात्, बाधितं तथेति चेत्, न; तं प्रत्यबाधितज्ञानस्यापि प्रदर्शयितुमशक्यत्वात्, शून्यज्ञानमबाधितमिति चेत्, न,

भामती

स्यादेतत्—आरोप्यस्य प्रतीतौ सत्यां पूर्वदृष्टस्य समारोपः, समारोपनिबन्धना च प्रतीतिरिति दुर्वारं

ऋजुप्रकाशिका

इत्यर्थः। नच—असत्यस्यारोपे नरशृङ्गादेरपि तथा स्यादित्युक्तमिति—वाच्यम्; अत्रानृतासत्यादिशब्देन नरशृङ्गादिवद् अलीकं नोच्यते, किंतु सदसद्विलक्षणमित्यदोषात्। प्रतीतस्यारोपे दोषमाशङ्कते—*स्यादेतदिति* ॥ द्वयोः परस्परापेक्षत्वे ह्यन्योन्याश्रयः, नचात्र तथा; आरोपपारम्पर्येण परस्परानपेक्षत्वादित्याशय-

पञ्चपादिका

एवाध्यासस्य युक्त इत्यर्थः। यद्यप्येवम्; तथापि *नैसर्गिकः = प्रत्यक्चैतन्यसत्तामात्रानुबन्धी। *अयम् =

पञ्चपादिकाविवरणम्

नैसर्गिकशब्दार्थमाह—*प्रत्यक्चैतन्यसत्तामात्रानुबन्धीति* ॥ कथम्? आत्मनि कर्तृत्व-भोक्तृत्वदोषसंयोग एवाध्यासः। तत्र भोक्तृत्वाध्यासः कर्तृत्वाध्यासमपेक्षते; अकर्तुर्भोगाभावात्, कर्तृत्वं च राग-द्वेषसंयोगाध्यासमपेक्षते; तद्रहितस्य कर्तृत्वाभावात्, दोषसंयोगश्च भोक्तृत्वमपेक्षते; अनुपभुक्तेऽतज्जातीये वा रागाद्यनुपपत्तेः, एवं बीजाङ्कुरवद्धेतुपरम्परयाऽनादित्वादध्यासस्य नैसर्गिकत्वमिति। लोकव्यवहारशब्दोऽध्यासाभिधायीति

ऋजुविवरणम्

कारणकल्पकत्वम्, तदर्थम्—*भ्रमरूपेति* ॥ *ननु* 'नैसर्गिके'त्यनेनैवास्मदर्थवदनुपालम्भः सिद्ध्यतीति, किं "प्रत्यक्चैतन्यसत्तामात्रानुबन्धी"त्यनेन? अर्थभेदाभावात्, इत्याशङ्कयाभिप्रायमाह—*नैसर्गिकशब्दार्थमिति* ॥ तात्पर्यपरत्वाद् ग्रन्थस्य। व्याख्याने च व्याख्येयस्येत्यन्तत्वं प्रायेण दृश्यते, तदभावान्न स्पष्टं व्याख्यानमिति—*शब्दार्थमाहेत्युक्तम्* ॥ कार्यस्य नैसर्गिकत्वं विरुद्धमिति चोदयति—*कथमिति* ॥ तथापीत्यस्मिन् ग्रन्थेऽध्यासात्मको लोकव्यवहार इति व्याख्यानं कृतम्, अतः—*"लोक इति मनुष्योऽहमि"ति* ग्रन्थः पुनरुक्त इत्याशङ्कयाभिप्रायमाह—*लोकव्यवहार-

तत्त्वदीपनम्

सन्धायोक्तम्—*नैसर्गिक इति; तदनुपपन्नम्; नैसर्गिकत्वे चैतन्यवत्स्वभावत्वेनोच्छेद्यतासंभवाद् इत्याशङ्कय, नैसर्गिकपदेनानादित्वं विवक्षितं न स्वभावत्वमित्याशयवानाह—*नैसर्गिकेति* ॥

प्रतीचो जडतां व्यावर्तयति—*चैतन्येति* ॥ तस्य तुच्छतां व्यावर्तयति—*सत्तेति* ॥ कार्योपहितसत्तानुबन्धित्वं व्यावर्तयति—*मात्रेति* ॥ साक्षिस्वरूपमनुसृत्यानवच्छिन्नाऽऽनन्दादिस्वरूपं सदा तिरस्कृत्य व्यवस्थितमित्याह—*अनुबन्धीति* ॥ द्वितीये बहुवक्तव्यत्वसद्भावात् प्रथमं पक्षान्तरं निरस्यति—*अयमिति* ॥ (टीकायाम्) अध्यास आक्षिप्तः, लोकव्यवहारश्च समाधीयते, इति वैयधिकरण्यशङ्कां निरस्यति—*युष्मदस्मदोरिति* ॥ अनादेः कथं कार्यत्वमिति शङ्कते—*कथमिति* ॥ प्रवाहरूपेणानादित्वं न स्वरूपेणेत्यविरोधं दर्शयितुमध्यासस्वरूपमाह—*आत्मनीति* ॥ अध्यस्यत इति कर्मपरोऽध्यासशब्दः। ततः किम्? इत्यत आह—*तत्रेत्यादिना* ॥ अनुपभुक्ते रागो नोत्पद्यत इति वदता भुक्तविषयो राग इत्युक्तं स्यात्, नच तत्संभवति; भुक्ते रागाभावादित्याशङ्कयाह—*अतज्जातीय इति* ॥ उपभुक्तासजातीय इत्यर्थः। भोक्तृत्वं च कर्तृत्वाद्यध्यासमपेक्षत इत्यनादित्वं सिद्धमित्याह—*एवमिति* ॥ कर्तृत्वादीनामन्यतमव्यासकालत्वं कार्यानादित्वम्। सुषुप्तादावपि तत्संस्कारसंभवादनादित्वं युक्तमित्यर्थः। अध्यासात्मको लोकव्यवहार इत्यत्र लोकव्यवहारस्याध्यासात्मकत्वं सिद्धमिति पुनस्तत्कथनं व्यर्थमित्याशङ्कयाध्यास-लोकव्यवहारयोर्भिन्नत्वात् कथं सामानाधिकरण्यम्? इति शङ्कानिरसनपुरःसरं तदेव स्पष्टीक्रियत इत्याह—*लोकव्यवहार इति* ॥ लोक्यत इति

## पञ्चपादिका

युष्मदस्मदोरितरेतराध्यासात्मकः *अहमिदं ममेदमिति लोकव्यवहारः* । तेन यथाऽस्मदर्थस्य सद्भावो नोपालम्भमर्हति, एवमध्यासस्यापीत्यभिप्रायः । लोक इति = मनुष्योऽहमित्यभिमन्यमानः प्राणिनिकाय उच्यते । व्यवहरणं व्यवहारः, लोक इति व्यवहारो लोकव्यवहारः ; मनुष्योऽहमित्यभिमान इत्यर्थः । सत्यानृते मिथुनीकृत्येति ॥ *सत्यम् = अनिदम्, चैतन्यम् । अनृतं युष्मदर्थः ; स्वरूपतोऽप्यध्यस्त-

## पञ्चपादिकाविवरणम्

दर्शयति—*लोक इति मनुष्योऽहमित्यादिना* ॥ व्यवहारः---अभिज्ञाऽभिवदनमुपादानमर्थक्रियेति चतुर्विधः । अतो मनुष्योऽहमिति ज्ञानाभिधाने व्यवहारशब्दमर्हत इति भावः ।

अन्यस्यान्यात्मनाऽवभासोऽविद्येत्युक्ते 'शुक्लः पट' इत्यादिप्रत्ययानामविद्यात्वप्रसङ्गो मा भूदिति सत्यस्य वस्तुनो मिथ्यावस्तुसम्भेदावभासोऽविद्येति स्वसिद्धान्तमङ्गीकृत्य "सत्यानृते मिथुनीकृत्ये"त्युक्तम्, तद् व्याचष्टे—*सत्यमनिदं चैतन्यमित्यादिना* । *ननु* क्त्वाप्रत्ययोपादानादर्थतः क्रियाभेदः पूर्वापरभावश्चाङ्गीकर्तव्यः,

## ऋजुविवरणम्

शब्द इति* ॥ कथं व्यवहारोऽभिमान इति व्याख्यानं युज्यते ? व्यवहारशब्दस्य हानोपादानयोः प्रसिद्धत्वात्, इत्याशङ्क्याभिप्रायमाह—*व्यवहारः—अभिज्ञेति* ॥ "सत्यानृते मिथुनीकृत्ये"ति भाष्यमसंबद्धम् ; न ह्यनेन रूपेणाध्यासो नैसर्गिकः प्रतीयते ; तादात्म्यप्रतीतेः, अनुपयुक्तं च ; अध्यासस्य नैसर्गिकत्वप्रदर्शनमुपयुज्यते, नतु सत्यत्वमिथ्यात्वप्रदर्शनम्, व्यर्थविशेषणञ्च ; व्यावर्त्याभावात्, असिद्धं च ; सत्यत्वमिथ्यात्वं न सिद्धवत्कीर्तितुं युक्तम्, "अतः सत्यमनिदं चैतन्यमि"ति व्याख्यानमप्यसंबद्धम् ; सत्यत्व-मिथ्यात्वासिद्धेः, इत्याशङ्क्याभिप्रायमाह—*अन्यस्यान्यात्मनेति* ॥ *अर्थत इति* ॥ वाच्यस्वरूपपर्यालोचनया, न तु प्रातीतिकः, परोपाधिको वेत्यर्थः । भवतु तावन्मात्रोपसंहारः ; तथाऽप्युपक्रमे पदसामर्थ्यादर्थभेदे निश्चिते तदेकदेशोपसंहार इति निश्चीयते ; उपक्रमानुरोधित्वादुप-

## तत्त्वदीपनम्

लोकः ; लोकशब्दस्य कर्मपरत्वात् । तत्साहचर्याद् व्यवहारास्पदस्यापि तादृक्त्वशङ्कां निरस्यति—*व्यवहरणमिति* ॥ उभयोः कर्मपरत्वे पौनरुक्त्यात्, पूर्वत्र कर्मव्युत्पत्त्या ज्ञानोपसर्जनार्थाध्यासो निर्दिष्टः, उत्तरत्रार्थोपसर्जनज्ञानाध्यास इत्यर्थः ।

अनेकधा समाससंभवाद् विवक्षितं समासं दर्शयति—*लोक इतीति* ॥ अर्थक्रियापरत्वं व्यावर्तयति—*मनुष्य इति* ॥ व्यवहारशब्दस्य हानोपादानयोः प्रसिद्धत्वात्कथमभिमानवाचकत्वेन व्याख्यानम्? इत्याशङ्क्याह—*व्यवहारोऽभिज्ञेति* ॥ अभिमानपदं चोपलक्षणमित्याह—*ज्ञानेति* ॥ अध्यासस्वरूपाद्यप्रदर्शकत्वात् "सत्यानृते" इति भाष्यं तद्व्याख्यानं चासंगतमित्याशङ्क्य, तद्व्यावर्त्यां शङ्कामाह—*अन्यस्येति* ॥ सत्यानृतविभागस्यासिद्धत्वात् "सत्यानृते मिथुनीकृत्ये"ति कथमुक्तम् ? इत्याशङ्क्याह—*स्वसिद्धान्तमिति* ॥ सत्यानृतपदयोर्वचनपरत्वं व्यावर्तयति—*सत्यमित्यादिना* ॥ कालत्रयबाधाभावोपलक्षितं वस्तु सत्यम्, तस्य ज्ञानकर्मत्वनिराचिकीर्षया—"अनिदमि"त्युक्तम्, तत्र हेतुमाह—*चैतन्यमिति* ॥ उभयोरध्यस्तत्वे कथं "सत्यानृतविभाग" इत्याशङ्क्य, एकस्य संसृष्टरूपेणाध्यस्तत्वम्, इतरस्य स्वरूपेणापीति युक्तो विभाग इत्याह—*स्वरूपत इति* ॥

अध्यासो मिथुनीकरणात्मको लोकव्यवहार इत्युक्तम्, तदाक्षिपति—*ननु क्त्वाप्रत्ययेति* ॥ प्रातीतिकक्रियाभेदादिव्यावृत्त्यर्थमर्थत इति विशेषणम् । "समानकर्तृकयोः पूर्वकाले" इत्यनेन सूत्रेण, एककर्तृकयोः पूर्वापरीभावेन स्थितयोः क्रिययोः पूर्वकाले धात्वर्थे क्त्वाप्रत्ययस्य विहितत्वात् क्रियाभेदादिरेष्टव्य इत्यर्थः । व्यवहारः क्रियत इति

### पञ्चपादिका

ध्यात्मिकेषु वस्तुषु तत्स्वरूपसत्तामात्रानुबन्धिन्यभ्युपगन्तव्या ; अन्यथा मिथ्यार्थावभासानुपपत्तेः ।

### पञ्चपादिकाविवरणम्

दिति । ततश्च ज्ञानेन समानाश्रयविषयं भावरूपमज्ञानं सिद्धम् । *शक्तिरित्यात्मपरतन्त्रतयाऽऽत्मनः सर्वकार्योपादानत्वस्य निर्वोढृत्वमाह । *तत्स्वरूपमात्मतत्त्वम्, तत्सत्तामात्रानुबन्धिनीत्यर्थः । *किंच* अर्थापत्तिरपि भावरूपाज्ञानसद्भावे प्रमाणमित्याह—*अन्यथा मिथ्यार्थावभासानुपपत्तेरिति* ॥ विशुद्धब्रह्मात्मनि शुक्तिकायां

### ऋजुविवरणम्

अप्रकाशितार्थप्रकाशकत्वादिति हेतुः । तत्र प्रकाशकत्वादित्युक्ते, विपक्षे स्मृत्यादौ हेतोर्वृत्तेरनैकान्तिकता, तदर्थम्—*अप्रकाशितार्थप्रकाशकत्वादिति* विशेषणम् । *यद्वा*—अप्रकाशितार्थप्रकाशकत्वादिति हेतुः । तत्र प्रकाशकत्वादित्युक्ते विपक्षे चैतन्ये वृत्तिः ; तदर्थमर्थेति विशेषणम् । अर्थप्रकाशकत्वादित्युक्ते स्मृत्यादौ, तदर्थम्—*अप्रकाशितेति* । नचात्र हेतुदृष्टान्तयोरेकप्रकाशरूपानन्वयः शङ्कनीयः ; तमोविरोध्याकारः प्रकाशशब्दवाच्यः, तेनाकारेणैक्यमुभयत्रास्तीति । प्रदीपप्रभावदिति दृष्टान्तः । उभयविकलो दृष्टान्तः, तद्व्यावृत्त्यर्थम्—*प्रथमोत्पन्नेति* । तथापि सौरालोकविततेऽपि देशे प्रथमोत्पन्नप्रदीपप्रभायामुभयविकलत्वम्, तदर्थम्—*अन्धकार इति* ॥ *ननु* अज्ञानसाधनमुपक्रम्य निवर्त्यविशेषसाधनेन किं प्रकृतानुपयोगेन ? *यद्वा*—साक्षादज्ञानसाधने संभवति किं प्रणाड्या तत्साधनेन ? वैयर्थ्यं चानुमानस्य ; प्रत्यक्षेणैव तत्सिद्धेरित्याशङ्क्याह—*ततश्चेति* ॥ *ननु* आत्मन एवोत्तरत्रोपादानत्वं वक्ष्यते, अतस्तद्विरोधः ; अथवा—अविद्याशक्तिरित्यसंबद्धम् ; ज्ञानसाधनस्य प्रस्तुतत्वात्, शक्तित्वनिरूपणस्याप्रस्तुतत्वाच्चेत्याशङ्क्याह—*शक्तिरित्यात्मेति*॥ तत्स्वरूपशब्देन सन्निहितत्वाद् बाह्याध्यात्मिकवस्तुपरामर्शेन भवितव्यम्; तथासति कथं तत्स्वरूपसत्तामात्रानुबन्धिनोऽज्ञानस्य तदुपादानत्वम् ? विरोधात्, अत उपादानं निरूपयितुं प्रक्रम्य कार्यस्वरूपसत्तामात्रानुबन्धित्वप्रतिपादनात्परस्परव्याहतो ग्रन्थः, इत्याशङ्क्य व्याचष्टे—*तत्स्वरूपमात्मतत्त्वमिति ॥ यदि-"अवश्यमि"त्यनेन प्रमाणद्वयवत्त्वमुक्तम्, कथमनन्तरग्रन्थेन हेतुरुच्यते ? वैयर्थ्यात्, अतः पूर्वग्रन्थे प्रतिज्ञा, उत्तरग्रन्थे हेतुरित्येकग्रन्थत्वप्रतीतेर्नैवं व्याख्यानं युज्यते, इत्याशङ्क्यावतारयति—*किञ्चार्थापत्तिर-

### तत्त्वदीपनम्

बाह्निकद्वितीयादिज्ञाने व्यभिचारव्यावृत्त्यर्थम्—*अप्रकाशितेति* ॥ *अर्थपदं तु* स्पष्टीकरणार्थम् । मध्यवर्तिप्रदीपप्रभायां साध्यसाधनवैधुर्यपरिहाराय—*प्रथमेति* विशेषणम् । सवितृकिरणव्याप्तप्रदेशस्थप्रदीपप्रभाव्यावृत्त्यर्थम्—*अन्धकार इति* ॥ किमनात्मज्ञानं धर्मि ? उत आत्मज्ञानं धर्मि ? नाद्यः ; अनात्मावरकस्याज्ञानस्यानङ्गीकारात् तत्साधने बाधापातात्, न द्वितीयः ; अनात्मज्ञाने व्यभिचारात् ।

अप्रकाशितार्थप्रकाशकत्वं च—किमप्रकाशितार्थप्रकाशकर्तृत्वम् ? उत करणत्वम् ? नाद्यः ; असिद्धेः, साधनवैकल्यप्रसङ्गात् । न द्वितीयः ; अत एव । ततो यत्किंचिदेतदिति केचित् । प्रतिपन्नस्यात्मज्ञानस्यानात्मज्ञानस्य च धर्मित्वमिति ब्रूमः । नच बाधापत्तिः ; घटाद्यवच्छिन्नचैतन्यं प्रत्यक्षादिविषयत्वेनोपेयते, तच्चाज्ञानावृतमिति कथं बाधः ? नच हेतोर्दुर्निरूपत्वम् ; प्रकाशशब्देन तज्जन्यो व्यवहारो लक्ष्यते ; ततश्चाप्रकाशितव्यवहारहेतुत्वं हेत्वर्थः । तस्य चोभयत्रानुगतत्वान्नासिद्ध्यादिरिति । अनुमाननिगमनार्थ इतिशब्दः ॥ प्रमेयमुपसंहरति । *ततश्चेति* ॥ अविद्यायाः शक्तिमत्त्वात्कथं शक्तिरित्यभिहितमिति ? तत्राह—*शक्तिरिति* । आत्मकारणत्वनिर्वोढृत्वादात्मपरतन्त्रत्वाच्च शक्तिमत्यामपि शक्तिशब्द उपचरित इत्यर्थः । बाह्यघटादेर्विषयत्वमाध्यात्मिकाहंकारस्य चाश्रयत्वमनुभवमाश्रित्योक्तम्—*बाह्याध्यात्मिकेष्विति* ॥ *वस्तुतस्तु* (टीकायाम्) "अविद्या तत्स्वरूपानुबन्धिनी"त्युक्तम्, तदनुपपन्नम् ; अनात्मतन्त्रत्वे तदुपादानत्वविरोधात्, इत्याशङ्क्य टीकार्थं स्पष्टयति—तत्स्वरूपमिति* ॥ *तेषाम्-अनात्मवस्तूनां स्वरूपमात्मतत्त्वम् ; अधिष्ठानत्वादारोपितसर्पादे रज्जुरिवेत्यर्थः । अनात्मविशिष्टा-

## पञ्चपादिकाविवरणम्

चाहङ्कार-रजताध्यासस्यार्थज्ञानात्मकस्य मिथ्याभूतस्य मिथ्याभूतमेव किंचिदुपादानमन्वेषणीयम्; सत्योपादानत्वे कार्यस्य कारणस्वभावतयाऽध्यासस्यापि सत्यत्वप्रसङ्गात्, तस्यापि मिथ्योपादानस्य सादित्वे तथाविधोपादानान्तरकल्पनाप्रसङ्गादनाद्येव तन्मिथ्योपादानमिति कल्पनीयम्। यच्चानादि स्वयं मिथ्या मिथ्योपादानमात्मसम्बन्धि च तदज्ञानमिति, मिथ्याध्यास एव तथाविधाज्ञानोपादानं कारणमन्तरेणानुपपद्यमानस्तत् कल्पयतीत्युक्तम्।

## ऋजुविवरणम्

पीति* ॥ *ननु* अर्थस्य मिथ्यात्वे सिद्धे तेन मिथ्योपादानकल्पना स्यात्, तदेवासिद्धं कथं मिथ्योपादानकल्पकम्? इत्याशङ्क्याभिप्रायमाह—*विशुद्धब्रह्मात्मनीति*॥ विशुद्धत्वादेव न तत्र बन्धसत्यतेत्यर्थः। *ब्रह्मात्मनी*-त्यनेनात्मगतत्वेन तत्कल्पने प्रमाणमुक्तम्; कार्यस्यातदाश्रयाज्ञानकल्पकायोगात्, तथापि कथमुपादानान्तरकल्पना? अर्थज्ञानयोः परस्परोपादानत्वेनार्थापत्तेरुपक्षीणत्वात्। *अथवा*—संस्कारादप्युत्पत्तिसंभवादधिष्ठानज्ञानाभावेन वोत्पत्तिसंभवादिति परपक्षान्मनसि निधायाह—*अर्थज्ञानात्मकस्येति* ॥ परस्परसहभावेन नोपादानत्वं संभवति; अर्थज्ञानात्मकत्वादेव न संस्काराभावयोस्तत्रोपादानत्वं संभवतीति भावः। *अथवा*—"मिथ्यार्थावभासानुपपत्तेरि"त्युक्तम्; नह्यज्ञानेन विनाऽवभासानुपपत्तिः; अवभासकारणमात्रापेक्षत्वादवभासस्य, नित्यचैतन्येनावभाससंभवान्न तदपेक्षाऽपि, अतोऽयुक्तोऽयं ग्रन्थः, इत्याशङ्क्य व्याचष्टे—*अर्थज्ञानात्मकस्येति* ॥ मिथ्यार्थस्य तदवभासस्य चानुपपत्तेरिति व्याख्यातम्। अर्थज्ञानात्मकत्वेऽपि नाभिमतोपादानकल्पकत्वम्, तदर्थम्—*मिथ्याभूतस्येति* ॥ तथाऽपि कथं भवदभिमताज्ञानसिद्धिः? विशुद्धत्वेनात्मन उपादानत्वाभावेऽप्यन्यस्य सत्यस्योपादानत्वसंभवेनार्थापत्तेरुपक्षीणत्वादिति, तत्राह—*सत्योपादानेति* ॥ अनेन कार्यस्य मिथ्यात्वं व्यापकविशेषाभावश्च दर्शितः। तथाऽपि मिथ्याभूतमेव किञ्चिद्भवेत्, नाज्ञानम्, तेन विनाऽनुपपत्त्यभावादित्याशङ्क्याह—*यच्चानादीति*॥ यच्चानादि तदज्ञानमित्युक्ते, आत्मादीनामज्ञानत्वं स्यात्, तदर्थमाह—स्वयं मिथ्येति* ॥ एवमप्यज्ञानात्मसंबन्धे निमित्तमात्रत्वेन पराभ्युपगतेऽमिथ्याभूतेऽपि स्यात्, तदर्थमाह—*मिथ्योपादानमिति* ॥ एवमपि स्वातन्त्र्यशङ्का स्यात्, तथा सति आत्मोपादानत्वविरोधः, निरधिष्ठानस्योपादानत्वासंभवः, कार्यस्यात्मगतत्वानुपपत्तिश्च, तदर्थमाह—*आत्मसंबन्धीति* ॥ संज्ञामात्रभेद इति भावः। टीकाकृता बाह्यस्याज्ञानविषयत्वं दर्शितम्, तदाक्षेप्तुं विषयलक्षणमाह—*ननु येन यस्येति* ॥ *ननु* केनचिदति-

## तत्त्वदीपनम्

त्मपारतन्त्र्यं व्यावर्तयितुं—*सत्तामात्रेत्युक्तम्* ॥ प्रत्यक्षानुमानाभ्यामविद्यासिद्धेस्तत्र हेत्वाकाङ्क्षाऽभावादन्यथेति ग्रन्थानुपपत्तिरित्याशङ्क्य, प्रमाणान्तरपरतया व्याचष्टे—*किं चेति* ॥ मिथ्यार्थतदवभासयोरनुपपत्तेरिति टीकार्थः।

अहंकारादि-तदवभासयोर्मिथ्यात्वासिद्धेः कथं तदनुपपत्त्याऽज्ञानसिद्धिरित्याशङ्क्य तात्पर्यमाह—*विशुद्धेति* ॥ ज्ञानस्यैवाध्यासः, नार्थस्येति मतं निरस्यति—*अर्थज्ञानेति* ॥ निरालम्बनज्ञानायोगादर्थोऽप्यध्यस्त इत्यर्थः। समीचीनज्ञानवद्यथार्थत्वान्नाध्यासत्वमित्याशङ्क्याह—*मिथ्याभूतस्येति* ॥ आत्मनि शुक्तौ च प्रतीयमानस्यार्थस्य सत्यत्वाऽनुपपत्तेः कल्पितत्वेन तज्ज्ञानमपि मिथ्येत्यर्थः। मिथ्यार्थावभासानुपपत्त्या मिथ्याभूतमुपादानमेष्टव्यमित्युक्तम्, तत्रान्यथोपपत्तिं निरस्यति—*सत्योपादानत्व इति* ॥ मृज्जन्यस्य घटस्य मृदात्मतावत् सत्योपादानस्य सत्यत्वं स्यादित्यर्थः। किं तदुपादानं सादि? उतानादि? नाद्यः; अनवस्थानात्, न द्वितीयः; तत्र प्रमाणाभावादित्याशङ्क्य, कल्पनालाघवादनाद्येव तदित्याह—*तस्यापीति* ॥ तथापि कथमज्ञानसिद्धिः? इत्याशङ्क्याह—*यच्चेति* ॥ आत्मव्यावृत्त्यर्थम्—*मिथ्येति* ॥ संसृष्टरूपेण तस्यापि मिथ्यात्वम्, तदर्थम्—*स्वयमिति* । प्रागभावं व्यावर्तयितुं—*मिथ्योपादानमिति* विशेषणम्। अनादि भावरूपं ज्ञानापनोद्यमज्ञानमित्युक्तं भवति। स्वातन्त्र्यं व्यावर्तयति—*आत्मेति* ॥ अर्थापत्तिं निगमयति—*इतीति* ॥ इतिशब्दोऽन्यथोपपत्त्यभावपरामर्शार्थः। "इत्युक्तमि"त्यत्र मिथ्यार्थावभासानुपपत्तेरित्यत्रेति शेषः।

## पञ्चपादिकाविवरणम्

*ननु* येन यस्यातिशय उत्पद्यते, स तस्य विषयः, नचाज्ञानेनानात्मन्यावरणातिशयजन्म ; प्रमाणाभावात्, अर्थानुपपत्तेश्च । न तावदवगते नीलार्थे तत्रावरणकृत्यमवगन्तुं शक्यते, अनवगते तु नतराम् । *ननु* अवगते सति पूर्वमावृतमित्यवगम्यताम्, *न* ; धारावाहिकविज्ञानगम्येऽर्थे पूर्वमवगतस्यापि पश्चादवगमदर्शनात् । *ननु* इदानीमेवावगतत्वं पूर्वमनवगतिं साधयति, *न* ; पूर्वावगतिमविज्ञायेदानीमेवावगतमित्यवधारणायोगात् । *ननु* पूर्वापरप्रत्यभिज्ञायां मध्येऽनवगतिरवगम्यत इति, *न प्रत्यभिज्ञानुपपत्तिर्मध्येऽनवगतिं साधयति* ; धारावाहिकेऽप्यात्मनि सदाऽवगते तद्दर्शनात्, मध्ये ज्ञानस्मृत्यभावादवगतिरवगम्यत इति चेत्, न ; अवगतेऽपि

## ऋजुविवरणम्

शयेन तद्विषयत्वव्यपदेशो घटते, अथवा—सावरणत्वेनैवाज्ञानस्य साधितत्वादावरणमेवातिशय इत्याशङ्क्याह—*नचाज्ञानेनेति* ॥ अर्थानुपपत्तेश्चेत्यनेनावरणस्य प्रयोजनमपि नास्तीत्युक्तम्, तत्र हेतोरसिद्धतामाशङ्क्य साधयति—*न तावदिति* ॥ विरोधादिति भावः । *नतरामिति* ॥ अस्यावरणमित्यवगमायोगादिति भावः । *नन्ववगते सतीति* ॥ इदानीमवगतिव्यवहारोऽनुपपत्त्या पूर्वानवगतिमवगमयतीति भावः । *ननु* अवगतेः प्रत्यभिज्ञोत्पद्यमानाऽनवगतिं साधयतीति चोदयति—*ननु पूर्वापरेति* । मध्ये ज्ञानस्मृतीति* ॥ विषयाभिज्ञाप्रत्यभिज्ञयोर्मध्ये ज्ञानस्मृत्यभावात्तदभावः, तदभावे च तद्व्याप्तावरणनिश्चय इति । *ननु* विषयसंबन्धिज्ञानं प्रतीयते—'त्वदुक्तमर्थं न जानामी'ति,

## तत्त्वदीपनम्

"बाह्याऽऽध्यात्मिकेष्वि"त्यत्रानात्मनोऽविद्याविषयत्वमुक्तम्. तदाक्षिपति—*नन्वित्यादिना* ॥ विषयत्वाभावं दर्शयितुं विषयलक्षणमाह—*येनेति* ॥ अज्ञानजनिताऽऽवरणातिशयशालित्वादनात्मनो विषयत्वमित्याशङ्क्याह—*नचेति* ॥ *अर्थानुपपत्तेः=प्रयोजनानुपपत्तेरित्यर्थः । आद्यं संग्रहवाक्यं विवृणोति—*न तावदित्यारभ्य नच स्वयमित्यतः* प्राक्तनग्रन्थेन । आवरणे किं प्रत्यक्षं मानम् ? उतानुमानम् ? आहो अनुपपत्तिः ? आद्येऽपि किमनात्मन्यधिगत आवरणमधिगम्यते, अथवाऽनुपलब्धे ? इति विकल्प्याऽऽद्यं प्रत्याह—*न तावदिति* । नीलावगमविरोधात्तत्राऽऽवरणं दुरधिगममित्यर्थः । द्वितीयं प्रत्याह—*अनवगतं इति* ॥ नीलप्रतिपत्तिं विना तत्राऽऽवरणं नानुभूयत इत्यर्थः । अशक्यश्चानुभव इत्याह—*नतरामिति* ॥ द्वितीयमुत्थापयति—*नन्ववगत इति* ॥ विमतम्, पूर्वमावृतम्, इदानीमवगतत्वात्, संमतवदित्यनुमानादावरणसिद्धिरित्यर्थः । किमिदानीमवगतत्वमात्रं हेतुः ? उत इदानीमेवावगतत्वम् ? नाद्य इत्याह—*न धारावाहिकेति* ॥ धारावाहिकज्ञानगस्य इदानीमवगतत्वमस्ति, न पूर्वमावृतत्वमिति तत्र व्यभिचारः । नच—तत्राप्युत्तरकालवैशिष्ट्यस्य प्रागज्ञातत्वान्न व्यभिचार इति—शङ्क्यम् ; विशेषणभूतार्थे व्यभिचारादित्यर्थः । द्वितीयमुत्थापयति—*नन्विदानीमेवेति* ॥ असिद्धो हेतुरित्याह—*न पूर्वेति* ॥ इदानीमेवावगतत्वे सिद्धे प्रागनधिगतत्वं सिद्ध्यति, तत्सिद्धाविदानीमेवावगतत्वसिद्धिरितीतरेतराश्रयाद्धेत्वसिद्धिरित्यर्थः । तृतीयमनुवदति—*ननु पूर्वापरेति* ॥ पूर्वापरकालसंबन्धविषयिणी तावत्प्रत्यभिज्ञा दृष्टा, सा च मध्येऽनवगतिमन्तरेण नोपपद्यते ; अन्यथा तत्रापि प्रत्यभिज्ञा स्यादित्यर्थः । अन्यथोपपत्त्या परिहरति—*न प्रत्यभिज्ञेति* ॥ धारावाहिकज्ञानगम्य आत्मनि पूर्वापरसम्बन्धिविषये प्रत्यभिज्ञादर्शनात् सदावगत आत्मन्यपीति योजना ।

अर्थापत्त्यन्तरमुद्भावयति—*मध्य इति* ॥ ज्ञानजन्या स्मृतिर्ज्ञानस्मृतिस्तस्या अभावादिति विग्रहः । पूर्वापरकालयोरनुभूतस्य स्मरणान्मध्यवर्तिनश्चास्मरणान्मध्येऽनवगतिः, अन्यथा तत्रापि स्मरणं स्यादित्यर्थः । अनवगत्यभावेऽपि स्मृत्यभावसंभवशङ्कां व्यावर्तयितुं—*ज्ञानेति विशेषणम्* ॥ अवगत्यङ्गीकृतौ तद्विनाशे संस्कारस्यावश्यंभावात्तन्मूला स्मृतिः स्यात्, नच सेत्यनवगतिरित्यर्थः । अस्मरणमन्यथोपपन्नमित्याह—*नावगत इति* ॥ पथि पतितोपलब्धतृणादिवदस्मरणसंभव इत्यर्थः । अनुभूयमानमावरणं कथं युक्तितो निरस्यत इति शङ्कते—*तथापीति* ॥

## पञ्चपादिकाविवरणम्

स्मृतिनियमाभावात् । तथाऽपि विषयानवगतिः प्रतीयत इति चेत्, सत्यं विषयैः सह साक्षिचैतन्येऽज्ञानाध्यासात्प्रतिभासः, नचाध्यस्तस्यावरणमस्ति ; द्विचन्द्रादिवत्प्रमाणगम्यत्वाभावात् । तस्मान्नास्त्यनात्मन्यावरणे प्रमाणम् । नच स्वयमेव प्रकाशहीनस्य जडस्यावरणार्थोऽपि सम्भवति । तस्मादतिशयाभावान्ना-

## ऋजुविवरणम्

संबन्धश्चाकारकत्वेन, अतः प्रतीतिः कथमपह्नूयते युक्त्या ? इति चोदयति—*तथापि विषयेति* ॥ अज्ञानविषययोस्संबन्धः प्रतीयते, स तु कार्यकारणलक्षण इत्याह—*सत्यं विषयैरिति*॥ अयं भावः*—परमार्थघटादीनां केवलसाक्षिवेद्यत्वं नास्ति ; संबन्धाभावात्, अतोऽज्ञानव्यावर्तकतया गृह्यमाणोऽज्ञानेन साक्षिचैतन्ये कल्पितः प्रतीयत इति । *ननु* अज्ञात एवेदानीं ज्ञात इति प्रमीयमाणेनैकतया प्रत्यभिज्ञायते, तत्कथं कल्पितत्वमिति ? रजतप्रत्यभिज्ञावदिति वदामः । *यद्वा*—परमार्थवस्तुन्यज्ञानव्यावर्तकाकारः कल्पितः प्रतीयते ; स्वरूपस्य साक्षिसंबन्धाभावात्, कल्पिताकारस्य तदात्मत्वात् प्रत्यभिज्ञाऽपि कथंचिद् घटते । *अथवा*—परमार्थमेव कल्पितसंबन्धात्प्रतीयते ; मुख्यसंबन्धाभावात् । भवतु कल्पितेऽप्यावरणमिति ? नेत्याह—*नचाध्यस्तस्येति* ॥ अयं भावः*—प्रमाणगम्यं हि वस्तु परमार्थत्वादप्रतीयमानमपि तिष्ठति, तदा कथंचिदावरणं कल्प्येताऽपि, साक्षिवेद्यस्य तु प्रतिभासमात्रविपरिवर्तित्वात् तस्य पूर्वोत्तरकालमनवस्थितस्यावरणयोगात् तदानीं प्रतीयमानत्वादेव नावरणम् । यदा परमार्थमेव कल्पितसंबन्धात्प्रतीयते, तदाऽपीयं प्रतीतिरप्रमाणभूता कथमावरणं गमयेत् ? कथमप्रमाणत्वम् ? प्रमाणसामग्रीबहिर्भावात् । *नच स्वयमेवेति* ॥ प्रकाशप्रसक्तौ सत्यां तत्प्रतिबन्धकावरणम्, तदत्र न संभवतीति भावः । यदि प्रतिबन्धो नास्ति, कथं तद्विषयत्वव्यपदेशः ?

## तत्त्वदीपनम्

प्रतीतिमङ्गीकरोति—*सत्यमिति* ॥ तर्हि प्रतीत्यनुसारेण प्रत्येतव्यमप्याश्रीयतामित्याशङ्क्याह—*विषयैरिति* ॥ अर्थप्रतिपत्त्यप्रतिपत्त्योः प्रमाणेनानवगतेः प्रतिपत्तुमयोग्यत्वात्साक्षिणा स्वाध्यस्तानवगतिरनुभूयत इति न त्वदिष्टसिद्धिः । नच घटोऽज्ञात इत्यनुभवाऽनुपपत्तिः, लौहित्यमुखयोः स्फटिकाचलप्रतिबिम्बितयोः परस्परसंबन्धो यथा भासते 'लोहितं मुखमि'ति, तथाऽज्ञानानात्मनोरात्मन्यध्यासात् परस्परसंबन्धप्रतिभासोपपत्तिरित्यर्थः । मानत आवरणाप्रतिपत्तावपि साक्षितस्तत्प्रतिपत्तिसंभवादर्थोऽनवगत इति प्रतिपत्तेर्मुख्यत्वमित्याशङ्क्याह—*नचाध्यस्तस्येति* ॥

आवरणभङ्गमन्तरेणार्थप्रतिपत्त्ययोगात्तद्भङ्गो वक्तव्यः, स च किं प्रमाणात् ? उत साक्षिणः ? नाद्य इत्याह—*द्विचन्द्रादिवदिति* ॥ न द्वितीयः ; साक्ष्यधीनसिद्धितया तन्निवर्त्यत्वायोगादित्यर्थः । मानासंभवसमर्थनमुपसंहरति—*तस्मादिति* ॥ अर्थानुपपत्तेरित्येतत्प्रपञ्चयति—*नचेति* ॥ निष्पादितक्रिये कर्मण्यविशेषाऽऽधायिनः साधनस्य साधनन्यायातिपातन्यायादावृतरूपेऽनात्मन्यज्ञानमावरणलक्षणमतिशयं कथमादध्यादित्यभिप्रायः ॥

विषयलक्षणविधुरतामुपपाद्याविषयत्वमुपसंहरति—*तस्मादिति*॥ विमतम्, नाज्ञानविषयः, तज्जनितातिशया-

## भाष्यभावप्रकाशिका

स इत्यैक्यप्रमां प्रत्याह—*विविक्तयोर्धर्मधर्मिणोरिति* ॥ औपाधिकभेदाभासतिरस्कारेण प्रत्यभिज्ञायामैक्यं प्रमीयते ; विविक्तयोर्धर्मिणोर्विवेकं तिरस्कृत्यैक्यधीर्भ्रान्तिरित्यर्थः । प्रत्यभिज्ञानेऽपि कालद्वयवैशिष्ट्यादस्ति विविक्ततेति, विविक्तपदस्यातद्व्यावर्तकत्वमाशङ्क्याह—*अत्यन्तेति* ॥

आत्मनो बुद्ध्यादेः स्वच्छत्वादिना साम्यादत्यन्तविवेकासिद्धिमाशङ्क्य जडत्वाजडत्वयोरत्यन्तविवेकाद्धर्मिणोऽपि तत्सिद्धिरित्याह—*अत्यन्तविविक्तयोर्धर्मधर्मिणोरिति* ॥ उक्तरूपयोर्धर्मधर्मिणोरन्योन्यस्मिन्नन्योन्यात्मतारूप इतरेतराविवेकात्मकोऽध्यास इति समुदायार्थः ॥

## पञ्चपादिका

सा च न जडेषु वस्तुषु तत्स्वरूपावभासं प्रतिबध्नाति ; प्रमाणवैकल्यादेव तदग्रहणसिद्धेः, रजतप्रति-

## पञ्चपादिकाविवरणम्

ज्ञानविषयोऽनात्मेति, तत्राह—*सा च न जडेषु वस्तुषु तत्स्वरूपावभासं प्रतिबध्नातीति* ॥ किंत्वन्यदेवाना-त्मन्यतिशयकार्यं कृत्वा तद्विषयमज्ञानमिति वक्ष्यत इत्यभिप्रायः । तत्र हेतुः—*प्रमाणवैकल्यादेवेति* ॥ अथवा चैतन्यप्रकाशेन जडानां नित्यवदन्वयान्नित्यवत्प्रकाशे प्राप्ते, सम्भवत्येवानात्मस्वावरणकृत्यमित्याशङ्क्याह—*प्रमाणवैकल्यादेवेति* ॥ अनात्मप्रमाणस्य चैतन्यस्य वैकल्यादावरणादेव विषयानवगतिसिद्धेर्न विषये पृथगावरणं कल्पनीयमित्यर्थः । इतश्च नानात्मन्यावरणमित्याह—*रजतप्रतिभासादिति* ॥ यद्यात्माश्रय-

## ऋजुविवरणम्

इत्याशङ्क्याभिप्रायमाह—*किन्त्वन्यदेवेति* ॥ "तत्र हेतुरि"ति स्पष्टोऽप्यवतारितस्तस्यार्थान्तरं दर्शयितुम् । *प्रमाण-वैकल्यादिति* ॥ चैतन्यस्यानुदयादित्यर्थः । कथमस्मिन् पक्षे प्रमाणवैकल्यमुच्यते ? जन्यप्रमाणस्याभासकत्वेन चोदितत्वात् तस्य च वैकल्यायोगादित्याशङ्क्य व्याचष्टे—*अनात्मप्रमाणस्येति* ॥ *ननु* एवं परस्परव्याहतिः स्यात् ; पूर्वग्रन्थे ह्यावरणं नास्तीत्युक्तम्, अत्र तदङ्गीकृतम् ; प्रमाणप्रतिबन्धाङ्गीकारात्तस्यैव चावरणत्वादित्या-शङ्क्याह—*न विषये पृथगावरणमिति* ॥ स्वरूपप्रतिबन्धः पूर्वं निराकृतः, न प्रमाणप्रतिबन्धः, इदानीं प्रमाण-प्रतिबन्धोऽङ्गीकृत इति न विरोधः ।

एतेन चानुमानेऽपि यदुक्तं दूषणं परैः । प्रमाणमात्रपक्षत्वं ब्रह्मज्ञानस्य चेष्यते ॥
पूर्वस्मिन् बाधितार्थत्वं साधारण्यं तथोत्तरे । प्रमाणाऽऽवरणेनैव प्रमेयोऽप्यावृतो यतः ॥
तेनात्रोभयपक्षत्वे न कार्या दूषणे मतिः । संभावनैव हेतोर्नो दृष्टिसृष्टिसमाश्रया ॥ इति ।

"रजतप्रतिभासादि"त्यनेन किं साध्यते ? न तावद्विषय आवरणनिराकरणम् ; साधकहेतूपन्यासाभावात् । नहि रजतप्रतिभासात्प्रागूर्ध्वमप्यविद्यायां स्थितायां मध्येऽवभासोऽनावरणं साधयति ; भिन्नकालत्वेनाविरोधात् । नाप्यर्था-

## तत्त्वदीपनम्

नाधारत्वात् ; व्यतिरेकेणाऽऽत्मवदित्युक्ते सिद्धसाधनमेतदित्याह—*तत्राहेति* ॥ तच्च तत् स्वरूपं चेति तत्स्वरूपम्, तस्यावभासस्तथोक्तस्तमिति विग्रहः । अज्ञानात्मकं यत्स्वरूपमनात्मवस्तु तस्यावभासमविद्या न प्रतिबध्नाति । तत्र हेतुमाह—*जडेष्विति* ॥ अचिद्रूपत्वेन तत्र प्रकाशाप्रसक्तेर्न तत्प्रतिबन्ध इत्यर्थः । चशब्दोऽवधारणार्थः—नैव प्रतिबध्नातीति । कथं तर्ह्यनात्मविषयत्वं निर्दिष्टमिति शङ्कते—*किंत्विति* ॥ आवरणानाधानेऽप्यज्ञा-नस्य विक्षेपहेतुत्वादनात्मविषयत्वं युक्तमित्याह—*अन्यदेवेति* ॥ रूपान्तरावभासहेतुरित्यत्र वक्ष्यत इत्यर्थः । अनात्मनः स्वत आवृतस्वरूपत्वे संप्रत्यज्ञात इति व्यवहारानुपपत्तेरज्ञातत्वमन्यनिमित्तं वक्तव्यमित्याशङ्क्यान्यथोप-पत्तेर्मैवमित्याह—*तत्रेति* ॥ अनात्मविषयान्तःकरणपरिणामानुदयलक्षणवैकल्यादित्यर्थः । शङ्कान्तरनिरासपरो वाऽयं ग्रन्थ इत्याह—*अथवेति* ॥ किं तच्छङ्कान्तरम् ? तत्राह—*चैतन्येति* ॥ स्वतः प्रकाशाप्रसक्तावपि नित्यचैतन्यसान्निध्यात् प्रकाशप्रतिबन्धलक्षणकृत्यसंभवात्कथं नाज्ञानविषयत्वमित्यर्थः ॥

"प्रमाणवैकल्यादि"त्यत्र प्रमाणशब्देन किं वृत्तिज्ञानं विवक्षितम् ? उतात्मस्वरूपम् ? आद्ये प्रश्नप्रतिवचनयोर्व्य-धिकरणता, द्वितीये तस्यानित्यत्वेन वैकल्यादित्यसंगतमित्याशङ्क्याह—*अनात्मेति* ॥ *प्रमाणस्य = साधकस्येति यावत् । चैतन्यस्य नित्यत्वेन वैकल्यानुपपत्तिमुक्तां धुनीते—*आवरणादिति* ॥ अनावृतचैतन्यस्य विषयसाधक-त्वात्तदावरणाद्विषयानवगत्युपपत्तेर्न पृथगावरणकल्पनमित्यर्थः ॥

टीकागतचशब्दार्थमाह—*इतश्चेति* ॥ आत्मावरकाज्ञाने सत्यपि तत्प्रतिपत्तिवदनात्मावरकाज्ञानमिति मतेऽपि

## पञ्चपादिका

भासात् प्रागूर्ध्वं च सत्यामपि तस्यां स्वरूपग्रहणदर्शनात्, अतस्तत्र रूपान्तरावभासहेतुरेव केवलम्।

## पञ्चपादिकाविवरणम्

मज्ञानमनात्मावरणं स्यात्, तदा, आवरणविनाशमन्तरेण विषयावभासायोगाद्विषयज्ञानेनात्माज्ञानं निवर्तेत। अतः सत्यामेवात्मन्यविद्यायां त्रिष्वपि कालेषु विषयस्वरूपप्रतिभासदर्शनान्नानात्मावरणमज्ञानमिति भावः।

## ऋजुविवरणम्

न्तरम्, तस्याः प्रतीतेरसङ्गतत्वप्रसङ्गाच्च, अतो व्यर्थंत्याशङ्क्याह—*इतश्च नानात्मनीति॥ *ननु*नानेनावरणं निराक्रियते; नहि रजतप्रतिभासात्प्रागूर्ध्वमज्ञानस्थितिमात्रं विषयावभासविरोधि, येन तद्दर्शनादनावरणं निश्चीयते, तथा प्रागूर्ध्वग्रहणमप्यप्रयोजकम्; प्रागूर्ध्वं विरोधितमसा छन्ने घटे मध्येऽवभासदर्शनात, किमुताविरोधिनोऽज्ञानस्य? यत्र क्वापि स्थितौ प्रतीतिः संभवेदिति कथंचिदेवं वक्तुं युक्तम्; "सत्यामपि तस्यामि"ति स्थितिमात्रेणैव कथंचिद्विरोधस्य शङ्कितुं शक्यत्वात्, तथा "सत्यामपि तस्यामि"ति किमुच्यत इति न ज्ञायते। न तावदात्मनि सत्यामिति विवक्षितम्; व्यधिकरणत्वापत्तेः, न ह्यन्यत्र स्थितौ रजतावभासोऽनावरणसाधकः। नापि रजते सत्यामपीति विवक्षितम्; प्रागूर्ध्वं तत्र स्थितायामप्यविद्यायां मध्येऽवभाससंभवादनावरणासाधकत्वात्। "स्वरूपग्रहणदर्शनादि"ति च न ज्ञायते—किमत्र स्वरूपं विवक्षितमिति? अतो नानावरणगमकः, इत्याशङ्क्याभिप्रायमाह—*यद्यात्माश्रयमित्यतः सत्यामित्यन्तेन*॥ पदव्याख्या *सत्यामपीति*॥ सत्यामेवात्मनीति। *तस्यामिति* व्याचष्टे—*अविद्यायामिति*॥ प्रागूर्ध्वग्रहणमुपलक्षणमिति दर्शयति—*त्रिष्वपि कालेष्विति॥ "स्वरूपग्रहणे"ति व्याचष्टे—*विषयस्वरूपेति॥

## तत्वदीपनम्

तत्प्रतीतिः किं न स्यात्? इत्याशङ्क्याऽस्मन्मते यदावृतं यत्र प्रतिभाति, तत् तत्रावृतमिति युज्यते, त्वन्मते तु न तथा; अनात्मप्रथायामप्यज्ञानस्य तदावरकत्वादित्याह—*यद्यात्मेति*॥ अस्त्वज्ञाननिवृत्तिः, को दोष इति चेत्? तत्र वक्तव्यम्—किमनात्मावरकमज्ञानमेकम्? उत नानेति? तत्राद्यं दूषयति—*अतः सत्यामेवेति*॥ त्रिष्वपि कालेष्वात्मन्यविद्यायां सत्यामेव विषयप्रतिभासदर्शनान्नाज्ञाननिवृत्तिर्युक्तेति योजना। रजतप्रतिभासात् प्राक्कारणत्वेन तत्समये तत्स्थितिहेतुत्वेनोत्तरत्र विपर्ययान्तरजनकत्वेनेति त्रिकालवर्तित्वमविद्याया इति न विषयज्ञाना-

## वार्तिकम्

तथात्वोपलब्धेः। अनिर्वचनीयपक्षाङ्गीकारे चास्मन्मतप्रवेशः; तस्मान्नास्मन्मतसाम्येन प्रत्यवस्थानं निर्वचनाभिमानिनस्तवोचितमिति। अथ—यथा 'सुरभि चन्दनम्' इति चाक्षुषविशिष्टज्ञाने सौरभेण न चक्षुषः संयुक्तसमवायः सन्निकर्षः; अयोग्यत्वात्, तेन तस्य तद्ग्रहानुपपत्तेः, योग्यत्वे वा तेन रसादिग्रहस्यापि प्रसङ्गात्, अतो लौकिकसन्निकर्षाभावाद् ज्ञानं सन्निधिर्वाच्यः; तथाच तत्र सौरभांशेऽलौकिकत्वेऽपि चन्दनांशे लौकिकत्वात् तदभेदस्तद्देशेऽपीति लौकिकवद् भासते, एवं प्रकृतेऽपि भविष्यतीति—चेत्, *न*; दृष्टान्तासिद्धेः। *तथाहि*—किं घ्राणचक्षुर्भ्यां संयुक्ते सुरभिचन्दने 'सुरभि चन्दनम्' इति चाक्षुषज्ञाने सौरभांशे ज्ञानप्रत्यासत्तिरङ्गीक्रियते? किं वा चक्षुर्मात्रसंयुक्ते? नाद्यः; उभयेन्द्रियसन्निकर्षाभ्यां विशिष्टैकज्ञानसंभवात्। नच—एकज्ञानस्योभयेन्द्रियजन्यत्वे चाक्षुषत्वघ्रातित्वाभ्यां जातिसाङ्कर्यं स्यादिति—वाच्यम्; तयोरुपाधित्वेन भूतत्व-मूर्तत्ववत् साङ्कर्यस्यादोषत्वात्, अनुपाधित्वेऽपि यद् यदिन्द्रियसन्निकृष्टविशेष्यकं ज्ञानम्, यदिन्द्रियविशेष्यसन्निकर्षजन्यं वा तत्तदिन्द्रियप्रयुक्तजातिमदिति नियमादेकजातस्यैवोपपत्तेस्तत्साङ्कर्याभावात्। तेन यदा 'सुरभि चन्दनम्' इति ज्ञानमुत्पद्यते, तदा चाक्षुषमेव तत्; विशेष्यचन्दन-चक्षुः

## पञ्चपादिकाविवरणम्

*ननु*—शुक्तिकाविषयमज्ञानमन्यदेव, तज्ज्ञानात्तन्निवर्तते, अन्यच्चात्मविषयमज्ञानमात्मनि दृश्यमानमिति, *तन्न* ; आत्माश्रयमात्मविषयं चाज्ञानमन्तरेणानात्मसु प्रतिविषयं भावरूपाज्ञानसद्भावे प्रमाणाभावात्, विषयाग्रहणस्य प्रमाणवैकल्यादप्युपपत्तेः । *किं च तर्ह्यतिशयमज्ञानजन्यमाश्रित्य बाह्याध्यात्मिकेषु वस्तुष्व-नात्मविषयमज्ञानं दर्शितमिति ? तदाह—*अतस्तत्र रूपान्तरावभासहेतुरेव केवलमिति* ॥

## तत्त्वदीपनम्

न्निवृत्तिर्युक्तेत्यर्थः । अत इत्येतन्नानात्मावरणमित्यनेन संबध्यते । द्वितीयमनुवदति—*ननु शुक्तिकेति* ॥ अन्यदेवेत्यत्रान्यदेवेति वीप्सा द्रष्टव्या । अतश्च ज्ञानेनाऽऽवरणभङ्गे विषयप्रतिभासः, अविद्यान्तरात्तु विपर्ययान्त-रोदयश्चाऽविरुद्ध इत्यर्थः । नचाऽऽवरणनिवृत्तौ शुक्तिप्रतिपत्तिवदात्मतत्त्वप्रतिपत्तिरपि स्यादित्यपि शङ्क्यमित्याह—*अन्यच्चेति* ॥ कल्पनागौरवप्रसङ्गान्नेयं कल्पना शोभां बिभर्तीत्याह—*तन्नेति* ॥ विषयाग्रहणव्यवहारानु-पपत्त्या तत्राप्यावरणकल्पनमित्याशङ्क्याह—*विषयेति* ॥ वृत्त्यनुदयाच्चैतन्याऽऽवरणाच्च विषयाग्रहणोपपत्तिरित्यर्थः ॥

अनात्मनोऽज्ञानविषयत्वं निराकुर्वतः पूर्वापरपराहतिः स्यादिति शङ्कते—*किं च तर्हीति* ॥ अज्ञानस्य तत्रातिशयान्तरजनकत्वात्तद्विषयत्वाभिधानं युक्तमित्याह—*तदाहेति* ॥ शुक्त्यज्ञानस्य तदनाच्छादकत्वेऽपि कथं रूपान्तरावभासजनकत्वमिति चेत्, तत्र वक्तव्यम्—किमनाच्छादकत्वाद्विपर्ययजनकत्वाभावः साध्यते ? आहो विपर्ययहेतुत्वं तदाच्छादकत्वमिति, तत्राऽऽद्यं निराकरोति—*हेतुरेवेति* ॥ शुक्त्यज्ञानस्य तदनाच्छादकत्वेऽपि विपर्यय-हेतुत्वं घटते, शुक्त्यवच्छिन्नचैतन्यस्याऽऽवरकत्वाच्छुक्त्यवच्छिन्नचैतन्यविषयप्रमाणोदयेनाऽऽवरणे निवृत्ते विपर्ययनि-वृत्तिप्रसिद्धेः । अतस्तदावरणेन विपर्ययजनकत्वं युक्तमित्यर्थः । विमतम्, शुक्त्याच्छादकम्, तत्र विक्षेपहेतुत्वात् ; यो यत्र विक्षेपहेतुः, स तदाच्छादकः, यथा चैतन्यस्येत्याशङ्क्य परिहरति—*केवलमिति* ॥ आच्छादकत्वाभावेऽप्युक्त-विधया विपर्ययजनकत्वोपपत्तेरप्रयोजको हेतुरित्यर्थः ॥

## वार्तिकम्

सन्निकर्षजन्यत्वात्, यदा तु चन्दने सौरभमिति, तदा भ्रान्तिरेव ; विशेष्यसौरभ-घ्राणेन्द्रियसन्निकर्ष-जन्यत्वात् । एतेन—'मधुरो गुडः' 'गुडे माधुर्यम्' इत्यादिप्रत्यया अपि—व्याख्याताः ॥ उक्तक्रमेण तेषां त्वाचत्व-रासनत्वादिसंभवात् । द्वितीयेऽपि तस्मिँश्चन्दनखण्डे पूर्वं चन्दनमुपलब्धम् ? न वा ? तत्राद्ये 'तदेवेदं सुरभि चन्दनमि'ति प्रत्यभिज्ञैव तत्र जायते ; तथानुभवात्, न 'सुरभि चन्दनम्' इत्यभिज्ञा ; तथानुभवाभावात्, न द्वितीयः ; तत्र सौरभस्यानुपलब्धेश्चन्दनत्वचाक्षुषत्वानुपपत्तेः । नहि चन्दनत्व-माकृतिव्यङ्ग्यम्, किं तर्हि ? ब्राह्मणत्वादिवद् यस्मिन् घ्राणसंयुक्त ईदृक सौरभमुपलभ्यते, तत्तद्योग्य-चन्दनमित्युपदेशव्यङ्ग्यम् । नच 'तद्योग्यम्' इत्युपदेशविशेषणं सौरभोपलम्भमात्रम्, न तत् प्रमामात्रम् ; असौरभे चन्दने सौरभभ्रान्त्या चन्दनत्व-चाक्षुषत्वाव्याप्तेः । एवं च सति यत्राचन्दने तादृशसौरभ-

## भाष्यभावप्रकाशिका

"अन्योन्यधर्मांश्चे"ति पृथग् धर्माध्यासकथनं विनाऽपि धर्म्यध्यासं केवलं धर्माणामपि—'अन्धोऽह-मि'त्यादौ धर्माध्यासप्राधान्यसूचनार्थम् । * ननु * इतरेतराविवेकार्थं द्वयोः स्वरूपतिरस्कारे कथ-मन्योन्यस्मिन्निति लक्षणांशसिद्धिः ? तत्सिद्धये द्वयोः स्वरूपस्थितौ कथमविवेकेनोपपत्तिः ? अत आह—*सत्येति* ॥ सत्यमनिदं चैतन्यम् ; संसृष्टरूपेणाध्यस्तत्वेऽपि स्वरूपेणानध्यस्तत्वात् । अनृत-महङ्कारादि ; स्वरूपतोऽप्यध्यस्तत्वात् । तदुभयमिथुनीकरणरूपोऽध्यास इति यावत् । असत्य-

## पञ्चपादिकाविवरणम्

*ननु* अत्राप्यनुपपत्तिः समाना, कथम् ? शुक्तिकाज्ञानं हि रूपान्तरावभासं निवर्तयत्तदुपादानमज्ञानमपि निवर्तयतीति ते मतम्, तत्र कथं शुक्तिकाज्ञानात्सहाज्ञानेनाध्यासे निवर्त्यमाने पुनरात्मन्यज्ञानं दृश्यते ? अतः प्रतिविषयमज्ञानभेदः, अध्यासस्याज्ञानानुपादानत्वं वा, उपादाननिवृत्तिमन्तरेणाध्यासनिवृत्तिर्वा समाश्रयणीयेति, *उच्यते* ; अस्मिन्पक्षे शुक्तिकादिज्ञानेन रजताद्यध्यासानां स्वकारणे प्रविलयमात्रं क्रियते, मुसलप्रहारेणेव घटस्य । अथवा—मूलाज्ञानस्यैवावस्थाभेदा रजताद्युपादानानि शुक्तिकादिज्ञानैस्सहाध्यासेन निवर्तन्त इति कल्प्यताम् ।

## ऋजुविवरणम्

*नन्वत्रापीति* ॥ आत्माश्रयाज्ञानमेकमेव, तच्च जडे विक्षेपमात्रं करोति, नावरणमित्यस्मिन्नपि पक्ष आत्मन्यज्ञानदर्शनानुपपत्तिस्तुल्यैव ; विक्षेपनिवर्तनेन तदुपादानस्याज्ञानस्य निवृत्तेरिति भावः । *ननु* विक्षेपपक्षे विषयज्ञानेन तद्गतरूपान्तरं निवर्त्यते, नत्वज्ञानम् ; तस्यावारकत्वाभावेनाविरोधात्, अतः कथमात्मन्यज्ञानदर्शनानुपपत्तिः ? इत्याक्षिपति—*कथमिति* ॥ यद्यप्यावारकत्वं नास्ति ; तथाऽपि भ्रान्तिनिवर्तकस्य तदुपादाननिवृत्त्या निवर्तकत्वमिति परिहरति—*शुक्तिकाज्ञानं हीति* ॥ कथं प्रतिविषयमज्ञानकल्पना ? आत्माज्ञानव्यतिरेकेण प्रतिविषयं भेदे प्रमाणाभावादिति, तत्राह—*अध्यासस्येति* । *ननु* अज्ञानानुपादानत्वमपि न संभवति ; स्वतः शुद्धचैतन्ये बन्धसंबन्धायोगात्, ज्ञाननिवर्त्यत्वायोगाच्चेत्याशङ्क्याह—*उपादाननिवृत्तिमन्तरेणेति* ॥ अस्मिन्न पक्ष इति* ॥ एकमेवाज्ञानमित्यभ्युपगम इत्यर्थः । *ननु* ज्ञानस्याज्ञानेन सह विरोधो दृष्टः ; न तत्कार्येण, अतः कथं तन्मात्रनिवृत्तिः ? इत्यपरितोषात् पक्षान्तरमाह—*अथवा मूलाज्ञानस्यैवेति* । *ननु* आत्माज्ञानव्यतिरेकेणाज्ञानान्तरसद्भावे प्रमाणं नास्तीत्युक्तमित्याशङ्क्याह—*अवस्थाभेदा इति* ॥ *ननु* अवस्थाभेदाभ्युपगमे तस्य शुक्तिज्ञानेन निवृत्तावनन्तरं भ्रान्तिर्न स्यात्, *मैवम्* ; अवस्थाऽऽनन्त्यात् । *ननु* समानाश्रयसमानविषयत्वेन विरोधसाम्यादेकेन ज्ञानेन सर्वावस्थानिवृत्तिः स्यात्, *मैवम्* ; अवस्थायौगपद्याभावात् । *ननु* तर्हि

## तत्त्वदीपनम

आत्माऽऽवरकमज्ञानमनात्मनि विक्षेपं जनयतीत्युक्तम्, तदाक्षिपति—*नन्वत्रापीति* ॥ अनात्मावरकत्वानङ्गीकारात् कथमनुपपत्तिसाम्यमिति शङ्कते—*कथमिति* ॥ पूर्वोक्तानुपपत्त्यभावेऽप्यनुपपत्त्यन्तरं दर्शयितुमद्वैतमतं दर्शयति—*शुक्तिकाज्ञानमिति* ॥ अस्तु को दोष इति ? तत्राह—*तत्रेति* ॥ अज्ञानस्यानुभूयमानत्वात कथं तत्प्रतिक्षेप इत्याशङ्क्याह—*अत इति* ॥ एकाज्ञानवादे तन्निवृत्तावज्ञानान्तराननुभवप्रसङ्गोऽतःशब्दार्थः । कल्पनागौरवप्रसङ्गान्न भेदकल्पनेत्याशङ्क्याह—*अध्यासस्येति* ॥ मिथ्याभूतस्य तस्योपादानतानुपपत्तेर्नायं पक्षः साधुरित्याशङ्क्याह—*उपादानेति* ॥ ज्ञानेनाज्ञाननिवृत्त्यनिवृत्त्योरपि नानुपपत्तिरित्याह—*उच्यत इति* । अनिवृत्तौ तावद्दोषाभावमाह—*अस्मिन्पक्ष इति* ॥

तर्हि सविलासाज्ञाननिवृत्तेर्बोधकत्वं कथं घटते ? इत्याशङ्क्य पक्षान्तरमाह—*अथवेति* ॥ "मायां तु प्रकृतिं विद्यादि"त्यादिवाक्यात् कल्पनालाघवानुगृहीतान्मूलाज्ञानमेकमेष्टव्यम्, तस्य चानन्ता अवस्थाः कल्प्यन्ते व्यवहारनिर्वाहाय । तत्र च कारणवैचित्र्यानुरोधेन काचिदवस्था रजताद्याकारेण विवर्तते, तस्यां चाधिष्ठानतत्त्वसाक्षात्कारान्निवृत्तायां विपर्यासनिवृत्तिरिति न किंचनावद्यमिति द्रष्टव्यम् ॥

## भाष्यभावप्रकाशिका

सर्पस्य सत्यरज्ज्वां तन्मात्रतया निमज्जनवदसत्याहङ्कारादेः सत्यचिन्मात्रतया निमज्जनादेकत्वधीः ; सत्यासत्ययोरात्मानात्मनोस्तर्कतो विविच्यमानत्वादन्योन्यस्मिन्निति लक्षणांशः संभवतीति भावः ।

## पञ्चपादिकाविवरणम्

कथं पुनर्लोके सहाज्ञानेनाध्यासस्य तत्त्वज्ञानान्निवृत्तेरप्रतिपत्तौ ब्रह्मज्ञानात्सहाज्ञानेनाध्यासस्य निवृत्तिर्दृष्टद्वारेण कल्प्यत इति ? नैष दोषः ; तत्त्वावभासविरोधिनोऽग्रहण-मिथ्याज्ञानादेस्तत्त्वज्ञानेन निवृत्तिदर्शनादिहापि तत्त्वावभासविरोधितयैव भावरूपाज्ञानादेः कल्प्यमानत्वात् तस्य ब्रह्मज्ञानान्निवृत्तेरुपपत्तेः । नचावरणपक्षोक्तदोष-

## ऋजुविवरणम्

कथमवस्थान्तरमुच्यते ? पूर्वावस्था हि यावद्बाधमनुवर्तमाना विरोधिबाधकज्ञानेन निवर्तमाना संस्कारमुत्पाद्य निवर्तते, तत्संस्कारसहकृतमज्ञानमवस्थान्तरमुत्पादयति, तच्च यावद्बाधमनुवर्तते इत्यानन्त्यात्, अथवा मुक्ताज्ञानस्य तत्तद्व्यावृत्तता तत्तदज्ञानमित्युच्यते, तद्रूपस्यैव विक्षेपजनकत्वात् ; सा च तज्ज्ञानेन निवर्त्तमाना संस्कारमुत्पाद्य निवर्तते, संस्कारश्चाज्ञानस्य पुनस्तद्व्यावृत्ततां करोति, एवमुत्तरोत्तरभ्रमसिद्धिः । केचित्—अज्ञानवदवस्थानामनादित्वम्—आहुः, तदसत् ; तथासत्येकेन तत्त्वज्ञानेन सर्वावस्थानिवृत्तिः स्यात ; एकविषयत्वात् । *ननु*—अनादित्वे विपयस्य युगपत्सर्वावस्थाविपयत्वं नास्तीति, किंचैकैकक्षणवच्छिन्नस्यैकैकावस्थाविपयत्वं कल्प्यते ; तावतैव कार्यसिद्धेः, तथासति यद्यत्क्षणवच्छिन्नविपयमज्ञानम्, तत्तत्क्षणवच्छिन्नविपयज्ञानेन निवर्तते ; अतो न सर्वनिवृत्तिः, *मैवम्* ; यत्क्षणे ज्ञानं नास्ति, तत्क्षणवच्छिन्नविपयाज्ञानकल्पना सर्वथा निष्प्रयोजनैव ; तथा बाधकज्ञानेन रजतोपादानाज्ञानानिवृत्तिप्रसङ्गः ; भिन्नविपयत्वात्तयोः । विस्तरभयादपरं नोक्तम् । रजताध्यासमात्रनिवृत्तिपक्षे चोदयति—*कथं पुनर्लोके इति ॥ दृष्टद्वारेणेति* ॥ *अयमर्थः*—शास्त्रतोऽज्ञानस्य बन्धनिवर्तकत्वेऽवगते विज्ञानमज्ञानस्यैव निवर्तकमिति व्याप्तिबलादज्ञानहेतुकत्वं कर्तृत्वादेर्निवृत्तिसिद्ध्यर्थमङ्गीकृतम्, यदा तु कार्यमात्रस्यैव लोके निवृत्तिः, तदा ब्रह्मज्ञानादपि कार्यमात्रनिवृत्तिर्भवेत्, न कारणनिवृत्तिः ; तस्या लोकेऽदर्शनात्, लोकव्याप्तिमूलत्वात् तस्येति ॥ *ननु* जडे विक्षेपोऽपि कथमङ्गीक्रियते ? आवरणपक्षदूपणसाम्यात् । *तथाहि*—ज्ञाते विपये विक्षेपो निश्चीयते ? अज्ञाते वा ? न ज्ञाते विक्षेपः ; निवृत्तेः नाज्ञाते ; 'अत्र विक्षेपः' इत्यवगमायोगादित्याशङ्क्याह—*नचावरणपक्षोक्तेति* ॥ रजतस्वरूपभ्रान्तिज्ञानमिदमाकाराति-

## तत्त्वदीपनम्

उपादाननिवृत्तिमन्तरेणोपादेयनिवृत्तिपक्षेऽनिर्मोक्षप्रसङ्ग इति चोदयति—*कथं पुनरिति* ॥ नच—ज्ञानादज्ञाननिवृत्त्यदृष्टावपि "तरत्यविद्यां विततम्" इत्यादिवाक्याद् ज्ञानावज्ञाननिवृत्तिरिति—वाच्यम् ; शास्त्रस्यापि दृष्टानुसारेणाज्ञाननिवृत्तिबोधकतानभ्युपगमादित्यभिप्रायेणाह—*दृष्टद्वारेणेति* ॥ ज्ञानस्य विरोधिनिवर्तकतया लोके दृष्टत्वादज्ञानस्यापि ज्ञानविरुद्धत्वात्तन्निवर्त्यता घटत इत्याह—*नैष इति* ॥ नीलार्थप्रतिपत्त्यप्रतिपत्त्योस्तत्रावरणस्य दुरधिगमत्ववद् विक्षेपस्यापि दुरधिगमत्वम् ; अधिष्ठाने प्रतिपन्ने विपर्ययस्यैवाभावात्, अनधिगते न तत्र विक्षेपाधिगतिरित्याशङ्क्याह—*नचाऽऽवरणेति* ॥ अधिष्ठानसामान्याऽऽकारसंघटिततया रूपान्तरं भ्रान्त्याऽधिगम्यते, तद्विशेषबोधस्य भ्रमविरोधित्वादिति कुत आवरणपक्षोक्तदोषप्रसङ्ग इत्यर्थः ॥

## वार्तिकम्

भ्रान्त्या चन्दनत्वभ्रान्तिः, तत्रोक्तोपदेशस्यातिव्याप्तिः स्यात् ; अतस्तन्मा भूदिति तद्योग्यमिति विशेषणस्य

## भाष्यभावप्रकाशिका

किं पुनरध्यासस्य कारणमित्याशङ्क्य—निमित्तमात्रम्, उपादानम्, निमित्तविशेषो वा पृच्छ्यत इति विकल्प्याद्यौ प्रत्याह—*मिथ्येति* ॥ *मिथ्याऽज्ञानमिति* कर्मधारयसमासः । मिथ्या च तदज्ञानम्, तन्निमित्तमुपादानं यस्येति विग्रहः । तत्र मिथ्येत्युक्ते भ्रान्तिज्ञानमिति शङ्का स्यात्,

## पञ्चपादिकाविवरणम

प्रसङ्गः ; विषयव्यावृत्तरूपान्तरस्य भ्रान्तिज्ञानेनावगमात् । *ननु* एवमप्यात्मन्यप्यज्ञाननिमित्तमावरणकृत्यं नास्ति, कथम् ? न तावदावरणं प्रकाशविलोपः ; स्वरूपस्यानपायात्, नापि सत एव प्रकाशस्य कार्यप्रतिबन्धः ; ज्ञानस्य विषयावभासात्मनोदितस्य स्वकार्ये प्रतिबन्धप्रतीक्षयोरभावात्, तस्माद् नैवात्मन्यपि भावरूपमज्ञानम् ;

## ऋजुविवरणम्

रिक्तं प्रतीयते, विक्षेपरूपं तु बाधकज्ञाने प्रतीयत इति भावः । यद्यपि जडे विक्षेप एव नावरणम्, तत्र च दूषणाभावः, विषयत्वव्यपदेशोऽपि घटते ; तथाच सति आत्मन्यपि नावरणमिति चोदयति—*नन्वेवमपीति* ॥ अज्ञानं निमित्तं यस्याऽऽवरणस्य तदज्ञाननिमित्तम् । यद्वा—अज्ञाने निमित्तम्, अज्ञाननिमित्तम्, आवरणमेव कृत्यम्, आवरणकृत्यम् । *अयमर्थः* —आत्मन्यावरणाभावे विक्षेपाभावः, विक्षेपाभावे चाज्ञानाभावः, अज्ञानाभावे च विषये विक्षेपोऽपि न स्यादिति ॥ *ननु* जडे प्रकाशप्रसक्त्यभावाच्चैतन्यप्रतिबन्धाच्चाप्रतिभाससंभवान्नावरणम्, आत्मनि तु चिद्रूपत्वेन सर्वदा प्रकाशप्रसक्तावनवभासनिमित्तमावरणं संभवत्येवेत्याक्षिपति—*कथमिति* । *प्रतीक्षेति* ॥ *अयमर्थः*—उत्पन्नस्य कार्योत्पादनसमर्थस्याऽप्यन्यापेक्षया कार्यकरत्वं प्रतीक्षा । सा न ज्ञाने संभवतीति ॥ *तस्माद् नैवात्मन्यपीति* ॥ आवरणेना-

## तत्त्वदीपनम्

अनात्मवदात्मनोऽज्ञानविषयत्वानुपपत्तिस्तज्जनितातिशयानिरूपणादिति शङ्कते—*नन्वेवमिति* । अज्ञानैक्येऽपीत्यर्थः । अनात्माऽऽवरणं विना तत्र विक्षेपसंभवेऽपीति वा । अज्ञानं निमित्तं यस्य तदज्ञाननिमित्तम् । आवरणं च तत्कृत्यं चेत्यावरणकृत्यम् । *ननु* आत्मनि प्रकाशाप्रसक्त्याऽऽवरणानुपपत्तावप्यात्मनि स्फुरद्रूप आवरणं संभवतीति चोदयति—*कथमिति* ॥ तत्र वक्तव्यम्—किमावरणं प्रकाशनाशः ? उत तत्कार्यप्रतिबन्धः ? इति । तत्राऽऽद्यं दूषयति—*न तावदिति* ॥ "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" इति स्वरूपानपायप्रतिपत्तेः स्वरूपविनाश आत्मनोऽपि विनाशप्रसङ्गाच्च नाऽऽद्यः पक्षो युक्त इत्यर्थः । द्वितीयं निरस्यति—*नापीति* ॥ विषयस्य स्फुरणं कार्यम्, विषयावभासात्मनोत्पन्नत्वान्न तत्प्रतिबन्धुं शक्यत इत्यर्थः । नयनादिकारकाणां सहकारिप्रतीक्षया कार्यकरत्ववद् ज्ञानस्यापि कार्यजनने कारकत्वात्सहकार्यपेक्षा, ततश्च प्रतिबन्धसम्भव इति शङ्कां व्यावर्तयति—*प्रतीक्षेति* ॥ ज्ञानस्य कारकत्वे सहकार्यपेक्षा, तदेवासिद्धम्, कार्यं कुर्वाणं कारकमित्युच्यते, न चेदमर्थाश्रयमतिशयमादधाति ; प्रध्वस्तादिषु तदसम्भवादित्यर्थः । आवरणासम्भवफलमाह—*तस्मादिति* ॥

## वार्तिकम्

वृत्तिलाभात् । कथं वा गन्धादेश्चाक्षुषत्वमङ्गीकुर्वता भवता स दोषः परिहरणीयः ? सन्निकर्षे लौकिकालौकिकत्वकल्पनापातात् । परिहारे च संयुक्तसमवाय एव तादृशविशेषकल्पनस्योचितत्वात्, तत्कल्पनमन्तरेणापि स्वतन्त्रपरतन्त्रग्राह्यत्वेन स्व-पर-विषयभेदात्तद्भेदोपपत्तेश्च । अपि च यदि ज्ञानप्रत्यासत्तिरङ्गीक्रियते, किमिति दीर्घशष्कुलीभोजनस्थले शतपत्रभेदनवदनुभवविरुद्धानि क्रमिकाणि पञ्च ज्ञानानि कल्प्यन्ते ? एकेनैव त्वगिन्द्रियेण रसनेन्द्रियेण वा लौकिकालौकिकसन्निधानाद् विशिष्टपञ्चविषयकैकज्ञानसंभवात् ।

## भाष्यभावप्रकाशिका

तन्निवृत्तये—अज्ञानमित्युक्तम् । अज्ञानमात्रग्रहणे च ज्ञानाभाव इति शङ्क्येत, अतो मिथ्येति विशेषणम् । अतोऽनिर्वचनीयतया भावलक्षणमनादि सिद्धं ज्ञाननिवर्त्यमज्ञानमिति दर्शितम् । *तन्निमित्तः=तदुपादान इत्यर्थः । अन्यस्यान्यात्मना प्रतीतिरध्यास इत्युक्ते नीलमुत्पलमित्यादिगुण-

## पञ्चपादिका

प्रत्यगात्मनि तु चितिस्वभावत्वात्स्वयम्प्रकाशमाने ब्रह्मस्वरूपानवभासस्यानन्यनिमित्तत्वात् तद्गतनिसर्ग-

## पञ्चपादिकाविवरणम्

अनुपयोगादिति, तत्राह—*"प्रत्यगात्मनि तु चितिस्वभावत्वात्स्वयंप्रकाशमाने" इत्यादिना "तस्यानवभासः" इत्यन्तेन ग्रन्थेन* ॥ अयमर्थः—'अस्ति, प्रकाशते' इत्याद्यभिज्ञादिव्यवहारं प्रति पुष्कलकारणे सति—'नास्ति न प्रकाशते चे'ति योऽयमात्मतत्त्वालम्बनो व्यवहारः, स भावरूपेण केनचिदात्मन्यावरणमन्तरेण नोपपद्यते ;

## ऋजुविवरणम्

ज्ञाननिश्चयः, तदभावे नेति । *ननु*आवरणमज्ञानं साधितम्, कथमाक्षेपः ? *उच्यते* ; नार्थापत्त्या तत्सिद्धिः ; उपादानोपक्षयात्, नानुमानेन ; आवरणानिरूपणेनाप्रसिद्धविशेषणत्वात्, प्रत्यक्षेणावरणासिद्धेरुक्तत्वात् । एवं चाज्ञानोपादानत्वमनुपपन्नं व्यर्थं च, तदेतदाह—*अनुपयोगादिति* ॥ *ननु* "प्रत्यगात्मनी"त्ययं ग्रन्थो नावरणं गमयति । *तथाहि*—चिद्रूपत्वेन स्वयंप्रकाशत्वसाधनं नावरण उपयुज्यते । न हि स्वयंप्रकाशे प्रतिबन्धादेवानवभास इति नियमः ; व्यभिचारात्, नाप्यनन्यनिमित्तत्वम् ; असिद्धत्वात्, इतरेतराश्रयप्रसङ्गाच्च—अनन्यनिमित्तत्वे सिद्धे प्रतिबन्धसिद्धिः, प्रतिबन्धे सिद्धेऽनन्यनिमित्तत्वसिद्धिरिति । नापि स्वयंप्रकाशत्वेनानन्यनिमित्तत्वसिद्धिः ; तत्रापि व्यभिचारात्, पुरुषान्तरसंवेदनादावनवभासस्य च सामान्येन कारणकल्पकस्य व्यापकविशेषाभावसहकृतस्यैवार्थविशेषसाधकत्वात् । तस्मात् प्रमाणानुपन्यासात् स्वरूपानिरूपणाच्च नावरणसिद्धिरनेनेत्याशङ्क्याह—*अयमर्थ इति* ॥ *नास्ति न प्रकाशते चेति योऽयमात्मतत्वावलम्बनो व्यवहार इति* अर्थापत्तौ सामान्यव्याप्तिप्रदर्शनम्, अनुमाने च धर्मिनिर्देशः, भावरूपेणेत्यनेनार्थापत्तौ तेन विनानुपपत्तिप्रदर्शनम्, अनुमाने च साध्यनिर्देशः । "आवरणातिशयमन्तरेणे"त्युक्तेरभावादेरप्यावरणत्वादन्यथोपपत्तिरसिद्धसाध्यता च स्यात्, तत्परिहारार्थम्—"भावरूपेणे"ति । "अस्ति प्रकाशते—इत्याद्यभिज्ञादिव्यवहारं प्रति पुष्कलकारणे सति 'नास्ति' 'न प्रकाशते चे'ति योऽयमात्मतत्त्वावलम्बनो व्यवहारः" इत्यनेनैवार्थापत्तौ व्यापकविशेषाभावप्रदर्शनम्, अनुमाने च हेतुनिर्देशः । "सति पुष्कलकारणे" इत्यादिनाऽन्यथोपपत्तिः परिहृता, अनुमाने च व्यतिरेकव्याप्तिरुक्ता । सत्यपि पुष्कलकारणे यद्यावरणेन विना "न प्रकाशते" इति व्यवहारो भवेत्, तथाच सति नायं व्यवहार आवरणसाधकः स्यात् ; तेन विनाप्युपपत्तेः, व्यतिरेकव्याप्तिश्च न सिद्ध्येत् । तदुक्तं भवति—यो भावरूपावरणातिशयनिमित्तो न भवति, नासौ सति पुष्कलकारणे "नास्ति न प्रकाशत इति व्यवहारः ; यथा सन्निहिते घटे प्रकाशत इति व्यवहार इति । अनुमानं वेति विषयव्याप्त्यर्थं पक्षान्तरप्रदर्शनम्, नापरितोषात् । तदुक्तम्—"सर्वव्याख्याविकल्पानान्त्विदमिष्टं प्रयोजनम् । पूर्वत्रापरितोषो वा विषयव्याप्तिरेव वा" ॥ इति । इदानीमवान्तरपदानुपयोगं परिहरति । तत्र व्यापकविशेषाभावहेत्वोः सिद्ध्यर्थं स्वयंप्रकाशत्व-

## तत्त्वदीपनम्

*ननु* प्रत्यक्षादिनाऽज्ञानमसाधि, अतः कथमाक्षेप इति ? तत्राह—*अनुपयोगादिति* ॥ नाज्ञानमदृष्टार्थम्, किंत्वावरणार्थम्, तच्चोक्तविधया दुर्निरूपमिति, कथमज्ञानसिद्धिरित्यर्थः । आवरणाभावे नित्यमुक्तत्वप्रसङ्गात् तदेष्टव्यमिति समाधत्ते—*तत्राहेति* ॥ आवरणदुर्निरूपत्वे चोदिते तत्प्रतिसमाधेयम्, नच प्रतिसमाधीयते, नचानवभासस्याऽऽवरणकल्पकत्वम् ; पुरुषान्तरसंवेदने व्यभिचारात्, 'प्रत्यगात्मनी'ति विशेषणकृत्यं च न पश्याम इत्याशङ्क्य तात्पर्यमाह—*अयमर्थ इति* ॥ 'नास्ति' न प्रकाशते चे'ति योऽयमात्मालम्बनो व्यवहारः, स आत्मन्यावरणमन्तरेण नोपपद्यत इति सम्बन्धः । नचैवंविधो व्यवहारोऽस्ति ; अहमिति सत्तास्फूर्तिदर्शनादित्याशङ्क्य कर्त्राद्यात्मकव्यवहारेऽप्यशनायाद्यतीतात्मनि नैवंविधो व्यवहार इत्याह—*आत्मतत्त्वेति* ॥ आवरणमन्तरेणापि पुरुषान्तरसंवेदनवत् तथा व्यवहारोपपत्तिरित्याशङ्क्याह—*अस्ति प्रकाशत इति* । अभावस्याऽऽवारकत्वं व्यावर्तयितुम्—*भाव-

भामती

स्यादेतत्—अद्धा पूर्वप्रतीतिमात्रमुपयुज्यत आरोपे, न तु प्रतीयमानस्य परमार्थसत्ता ; प्रतीतिरेव

ऋजुप्रकाशिका

इदं तु कार्यानादित्वं संस्कार-मिथ्याज्ञानयोर्निमित्तनैमित्तिकयोः, भ्रमोपादानानादित्वं तु देवताधिकरणे वक्ष्यत इति द्रष्टव्यम्। "सत्यानृते मिथुनीकृत्य" इत्यादिना आरोप्यस्यापरमार्थसत्त्वमारोप उपयुज्यत इत्युक्तम्, प्रतीतस्यैवारोपादारोप्यस्य प्रतीतिर्वक्तव्या, आरोप्यस्यासत्त्वे प्रतीतिरेव तस्यायुक्ता, प्रतीतिसत्त्वे चापरमार्थसत्त्वमेवायुक्तम् ; प्रतिभासमानस्यैव परमार्थसत्त्वात्, अत आरोप्यस्यासत्यत्वे प्रतीत्यभावेनारोपलक्षणोऽध्यास एवानुपपन्न इति,—'अध्यासो *नामे'त्यस्य भाष्यस्यावतारयति—*स्यादेतदिति* ॥ सदसद्विलक्षणमसत्यमित्यजानतोऽलीकमेवासत्यमिति च जानतोऽयमाक्षेपः ॥

नच—'युष्मदस्मदि'त्यादिनाऽध्यासस्याक्षिप्तत्वादत्रापि तदाक्षेपे पौनरुक्त्यमिति—वाच्यम् ; तत्र भेदाग्रहादाक्षेपः, अत्र त्वन्यथेति भेदात्। परमार्थसत्तेत्यनन्तरमुपयुज्यत इति शेषः। प्रतीयमानस्यापरमार्थसत्त्वैवोपयुज्यताम्, तत्राह—*प्रतीतिरेवेति* ॥ अपरोक्षेति शेषः। असतः प्रतीतिमात्रनिषेधेऽसत्त्ववादेऽसत्प्रतीतिर्न स्यात्, नचेष्टापत्तिः ; "अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि" इत्यङ्गी-

पञ्चपादिकाविवरणम्

सति पुष्कलकारणेऽसति चावरणे, सन्निहिते घटे 'प्रकाशते' इत्यादिव्यवहारदर्शनात्, अतो "नास्ति ब्रह्म, न

तत्त्वदीपनम्

रूपेणेत्युक्तम्* ॥ आवरणाभावेऽप्येवंविधो व्यवहारः किं न स्यात्? इत्याशङ्क्याह—*सति पुष्कलकारण इत्यादिना* ॥ सन्निहितेऽप्यर्थे कुड्यादिनाऽऽवृते 'प्रकाशते' इति व्यवहाराभावः, तदर्थम्—*असति चेति* ॥ एवमपीन्द्रियसंयोगाद्यभावे नैतादृशो व्यवहारः, तदर्थमाह—*सति पुष्कलेति* ॥ इन्द्रियसंयोगमात्रं पुष्कलकारणशब्दार्थः। मा भूत् तर्हि व्यवहार इत्याशङ्क्य तस्योपलभ्यमानत्वादावरणं कल्प्यमित्याह—*अत इति* ॥ अनुमानं वेत्यस्यायमर्थः—विमतो व्यवहारः, भावरूपाज्ञानप्रयुक्तावरणनिमित्तः, 'अस्ति प्रकाशते' इति व्यवहारपुष्कलकारणे सति तद्विपरीतव्यवहारत्वात् ; यन्नैवं न तदेवम्, यथा 'अस्ति प्रकाशते घटः' इति व्यवहार इति ॥

वार्तिकम्

दीयमानत्वात्। नच—पूर्वमगृहीतसौरभे घ्राणासंयुक्ते चन्दनखण्डे चन्दनत्वं चक्षुषा ग्रहीतुं शक्यते ; उक्तोपदेशशून्यस्य तद्बुभुत्सिकायास्तादृशसौरभोपलब्धेरभावात्। अत एव—तत्र ज्ञानप्रत्यासत्त्या सौरभोपलब्धिरपि—अपास्ता ; पूर्वं तत्र घ्रातेरभावात्। तादृशसौरभघ्रातिमात्रं प्रत्यासत्तिः, नतु तत्तद्घ्रातिरिति चेत्, न ; अतिप्रसङ्गात्। यत्र कुत्रापि गृहीतसौरभस्यालोचितमात्रे चन्दनखण्डे 'सुरभि चन्दनमि'-त्यनुभवः स्यात्, न चैवमस्ति ; तथानुभवाभावात्। यत्र तथा फलमुपलभ्यते, तत्रैव तादृशप्रत्यासत्तिः कल्प्यते, न सर्वत्रेति चेत्, एवं तर्हि नीलो घट इति चाक्षुषविशिष्टानुभवदर्शनात् किमिति तत्रापि न चाक्षुषी ज्ञानप्रत्यासत्तिरुपकल्प्यते। तत्रास्ति चक्षुषा संयुक्तसमवायरूपप्रत्यासत्तिः, अतो न तत्कल्पनमिति चेत्, स किं सौरभेण चक्षुषो दण्डवारितो भवता? तत्र तत्सत्त्वेऽप्ययोग्यत्वाद् न तेन तद्ग्रह इति चेत्, कोऽभिप्रायः? किं चक्षुष एव तद्ग्राहकत्वायोग्यत्वमुच्यते, किं वा संयुक्तसमवायस्य? नाद्यः ; तथासति ज्ञानप्रत्यासत्त्याऽपि न तस्य तद्ग्राहकत्वं स्यात्। नहि सेचनायोग्यो वह्निः केनाप्युपायेन तद्योग्यो भवति। नापि द्वितीयः ; अयोग्यतायाः फलाभावोन्नेयत्वात्, प्रकृते च फलस्य सत्त्वात्, फलसत्त्वेऽपि तस्यान्यथात्वकल्पने रूपग्रहणेऽपि तथा कल्पनप्रसङ्गस्योक्तत्वात्। *ननु*—गन्धादेश्चाक्षुषत्व एकेन्द्रिय-

### भामती

त्वत्यन्तासतो गगनकमलिनीकल्पस्य देहेन्द्रियादेर्नोपपद्यते। प्रकाशमानत्वमेव हि चिदात्मनोऽपि सत्त्वम्, न तु तदतिरिक्तं सत्तासामान्यसमवायः, अर्थक्रियाकारिता वा; द्वैतापत्तेः। सत्तायाश्चार्थक्रियाकारितायाश्च सत्तान्तरार्थक्रियाकारितान्तरकल्पनेऽनवस्थापातात् प्रकाशमानतैव हि सत्ताऽभ्युपेतव्या।

### ऋजुप्रकाशिका

कारादिति द्रष्टव्यम्। *ननु*—शशशृङ्गादिवद् नात्यन्तासद्देहादिः, किन्तु सदसद्विलक्षणोऽनिर्वाच्यः; तथाच प्रतीतिसंभवः, इत्यत आह—*प्रकाशमानत्वमिति* ॥ तथाच प्रतीयमानत्वे देहादेस्सत्त्वमेव स्यात्, न सदसद्विलक्षणत्वमिति भावः। *ननु*—न प्रकाशमानत्वं सत्त्वम्, किन्तु तदतिरिक्तसत्तासामान्यसमवायो वा, अर्थक्रियाकारित्वं वा तत्, इत्यत आह—*नत्विति* ॥ तदतिरिक्तसत्ताऽर्थक्रियाकारित्वयोरभ्युपगमे बाधकमाह—*द्वैतेति* ॥ तत्रेष्टापत्तिमाशङ्क्याह—*सत्तायाश्चेति* ॥ अतिरिक्तसत्ताभ्युपगम उक्तबाधकात् प्रकाशमानतैव सत्ताऽभ्युपेतव्येत्याह—*प्रकाशमानतैव हीति* ॥ फलितमाह—*तथाचेति* ॥ तर्हि नर-

### पञ्चपादिकाविवरणम्

प्रकाशते चे'ति व्यवहारोऽन्यथानुपपत्त्या भावरूपमज्ञानं गमयतीत्यर्थापत्तिरनुमानं वा समुदायार्थः। तत्सिद्ध्यर्थमात्मनि 'प्रकाशते' इत्यादिव्यवहारं प्रति पुष्कलकारणतां दर्शयति—*चितिस्वभावत्वादिति* ॥ किं तर्ह्यावरणमिति ? तत्राह—*ब्रह्मस्वरूपानवभासस्येति*॥ 'नास्ति न प्रकाशते' इति व्यवहारालम्बनयोग्यत्वस्य व्यवहारकार्य-

### ऋजुविवरणम्

साधनमित्याह—*तत्सिद्ध्यर्थमिति* ॥ "अनवभासस्ये"त्यनेन कारणान्तरसापेक्षत्वाद् यदस्य कारणं तदावरणमित्युक्तम्। तत्र सत्यनवभासे तन्निमित्तमावरणमित्युच्येत, स एव स्वरूपतो निरूपयितुं न शक्यते, प्रमाणं च नास्ति, पौष्कल्य-

### तत्त्वदीपनम्

एवं तात्पर्यमभिधायाक्षरार्थं दर्शयति—*तत्सिद्ध्यर्थमित्यादिना प्रत्यक्चितीत्यन्तेन ग्रन्थेन* ॥ विशेषणवैयर्थ्यमित्युक्तम्, तन्निरस्यति—*तत्सिद्ध्यर्थमिति* ॥ अर्थापत्त्यनुमाने तच्छब्दार्थः। जडे वस्तुन्यनवभासोऽग्रहणनिमित्तः, न तथाऽऽत्मनि; स्वप्रकाशत्वादित्यर्थः। आवरणं दुर्निरूपमित्युक्तमनुवदति—*किं तर्हीति* ॥ अनवभास एव दुर्निरूप इति, तत्राह—*नास्तीति* ॥ योग्यतायाः कल्पकमाह—*व्यवहारेति* ॥ अनात्मनि

### वार्तिकम्

परिशेषः स्यादिति—*चेत्, अस्तु नाम, का ते हानिः स्यात् ? कल्पनालाघवं च भवति। अत एव एकमेव त्वगिन्द्रियमिति सांख्यैकदेशिनो मन्यन्ते; एकस्यैव त्वगिन्द्रियस्य तत्तदधिष्ठानभेदेन तत्तद्विषयविषयकवृत्तिलाभात्। कथं वा गन्धादेश्चाक्षुषत्वमङ्गीकुर्वता भवता स दोषः परिहरणीयः ? सन्निकर्षे लौकिकालौकिकत्वकल्पनापातात्। परिहारे च संयुक्तसमवाय एव तादृशविशेषकल्पनस्योचितत्वात्, तत्कल्पनमन्तरेणापि स्वतन्त्रपरतन्त्र-ग्राह्यत्वेन स्व-पर-विषयभेदात्तद्भेदोपपत्तेश्च। अपि च यदि ज्ञानप्रत्यासत्तिरङ्गीक्रियते, किमिति दीर्घशष्कुलीभोजनस्थले शतपत्रभेदनवदनुभवविरुद्धानि क्रमिकाणि पञ्च ज्ञानानि कल्प्यन्ते ? एकेनैव त्वगिन्द्रियेण रसनेन्द्रियेण वा लौकिकालौकिकसन्निधानाद् विशिष्टपञ्चविषयकैकज्ञानसम्भवात्। लौकिकानुभवविशिष्टतयाऽनुभवस्तु सौरभांशेऽपि तुल्यः; अन्यत्राभिनिवेशात्। तस्मात् स्वसिद्धान्तभङ्गभीत्योक्तदोषभीत्या च न ज्ञानप्रत्यासत्तिरङ्गीकर्तुं युक्ता। अपि च कथं वा ज्ञानं चक्षुषो विषयेण

**भामती**

**तथाच देहादयः, प्रकाशमानत्वान्नासन्तः, असत्त्वे वा न प्रकाशमानाः ; तत्कथं सत्यानृतयोर्मिथुनीभावः ? तदभावे वा कस्य कुतो भेदाग्रहः ? तदसंभवे कुतोऽध्यासः ? इत्याशयवान्—आह आक्षेप्ता—कोऽयमध्यासो नाम ?। क इत्याक्षेपः। समाधाता—लोकसिद्धमध्यासलक्षणमाचक्षाण एवाक्षेपं प्रतिक्षिपति—**

**ऋजुप्रकाशिका**

शृङ्गादिवदसत्त्वमेवास्तु देहादीनामित्यत आह—*असत्त्वे वेति* ॥ तथाच प्रकाशमानत्वात् सन्त एव देहादय इति भावः। सत्त्वमस्तु, ततोऽपि किम् ? तत्राह—*तत्कथमिति* ॥ मिथुनीभावाभावोऽप्यस्तु, ततोऽपि किम् ? तत्राह—*तदभावे वेति* ॥ भेदाग्रहासंभवे किमित्यत आह—*तदसंभव इति* ॥ "कोऽयमध्यासो नामे"त्यत्र किंशब्द आक्षेपार्थः, न प्रश्नार्थ इत्याह—*क इत्याक्षेप इति* ॥ आक्षेपस्य दर्शितत्वादिति भावः ॥

अत्र "युष्मदस्मत्प्रत्ययगोचरयोः" इत्यारभ्य—"आह कोऽयमि"त्यतः प्राक्तनस्य भाष्यस्य सङ्क्षेपतस्तात्पर्यं कथ्यते*—भगवता बादरायणेन साधनचतुष्टयसम्पन्नं प्रति "अथाऽतो ब्रह्मजिज्ञासा" इति सूत्रेण मोक्षसाधनीभूतब्रह्मज्ञानफलकब्रह्मविचारकर्तव्यताप्रयोजकत्वेन ब्रह्मणो जिज्ञास्यत्वे उपदिष्टे, तत्र "द्वितीयाद्वै भयं भवति" इत्यादिबहुश्रुतिभ्यः सद्वितीयब्रह्मज्ञानादनर्थश्रवणेन सद्वितीयब्रह्मणोऽजिज्ञास्यत्वे स्थिते, तत्राद्वितीयत्वमभेदः, किमपेक्षया चाभेद इति वीक्षायामात्मनः सकाशाद् ब्रह्मणोऽभेद इति स्थिते,—तत्राऽऽत्मा देह इति कश्चित्, प्राण आत्मेत्यन्यः, इन्द्रियाण्यात्मेत्यपरे, बुद्धिरात्मेति केचित्, संशयात्मकं मनः, निश्चयात्मिका बुद्धिरिति मनसोऽवान्तरभेद एव बुद्धिः, देह-प्राणेन्द्रिय-मनो-बुद्ध्यतिरिक्तोऽहंप्रतीतिविषयोऽहंकार एव आत्मेति नैयायिकादय इत्येवं स्थिते,—देहात्मवाद्यभिमतस्य देहस्वरूपस्यात्मनः "स्थूलोऽहम्, कृशोऽहम्," इत्यादिप्रतीत्या स्थूलत्व-कृशत्वविशिष्टतयाऽनुभवाभिमताद् देहरूपात्मनोऽहंप्रतीतिविषयात् सकाशादस्थूलाकृशादिस्वरूपस्य ब्रह्मणोऽभेदायोगः ; एवं प्राणस्यानित्यत्वेन क्षुत्पिपासाविशिष्टत्वेन च क्षुत्पिपासारहितस्य नित्यब्रह्मणस्तदभेदायोगः ; एवं—"काणोऽहम्, बधिरोऽहम्" इत्यादिप्रतीत्या काणत्व-बधिरत्व-मूकत्वादिधर्मवत्तयाऽहंप्रतीतिविषयादिन्द्रियस्वरूपादात्मनः सकाशात् तद्विपरीतब्रह्मणोऽभेदायोगः ; एवं मनसो विकारित्वात् शोकहर्षादिमत्त्वाद्

**वार्तिकम्**

**सन्निकर्षः स्यात् ? सम्बन्धाभावात्। चक्षुस्संयुक्तमनस्संयुक्तात्मसमवेतज्ञानेन विषयविषयिभावसम्बन्धादस्ति परम्परासम्बन्ध इति चेत्, न ; अतिप्रसङ्गात्, इच्छादेरपि सन्निधित्वकल्पनाप्रसङ्गात्, तुल्ययोगक्षेमत्वात्। इच्छादेः साक्षात् सविषयकत्वाभावाद् ज्ञानद्वारमेव तद् वाच्यम्, तथाच तदेव सन्निधिः, नेच्छादिरिति चेत्, एवं तर्हि संस्कारः स्मृतिर्वाऽपि सन्निधिर्न स्यादित्यास्ताम् ॥ एतेन—सामान्यप्रत्यासत्तिरपि—अपास्ता ; अतिप्रसङ्गात्, सर्वसर्वज्ञतापत्तेश्च। नच तत्कल्पने प्रमाणमप्यस्ति। तथाहि—'अयं घटः' 'इदं द्रव्यम्' इत्यादिप्रत्यक्षप्रतीतौ पुरोवर्ति सामान्यविशेषात्मकं वस्तु भासते, न देशान्तरकालान्तरव्यवहितघटादिव्यक्त्यन्तरमपि, येन तद्भानार्थं चक्षुषः सन्निकर्षान्तराभावात् सामान्यं**

**भाष्यभावप्रकाशिका**

गुणितादात्म्यप्रत्ययादीनामध्यासात्मकता मा भूदिति विशिनष्टि—*सत्यानृते इति* ॥ सत्यमनिदं चैतन्यम्, अनृतमनात्मा ; स्वरूपतोऽध्यस्तत्वात्, आत्मा तु संसृष्टरूपेणैवाध्यस्तो न स्वरूपेणेति सत्यम् ॥

एतदेवाज्ञानं संस्कार-काल-कर्मादिरूपेण परिणतमध्यासनिमित्तमिति वक्तुं निमित्तग्रहणम्।

## ऋजुप्रकाशिका

बुद्धेश्चानित्यत्वाद् मनसो बुद्धेश्च सकाशादविकारि-नित्य-शोकहर्षादिशून्य-ब्रह्मणोऽभेदायोगः ; एवं देहेन्द्रिय-मनो-बुद्ध्यतिरिक्तस्याहंप्रतीतिविषयस्याहङ्कारस्यात्मनः—"अहं कर्ता, अहं भोक्ता" इति कर्तृत्व-भोक्तृत्वाश्रयतया प्रतीयमानत्वात् तदाश्रयाद् नैयायिकाद्यभिमतादात्मनः सकाशादकर्त्रभोक्तृब्रह्मणोऽभेदायोगः ; एवं ब्रह्मणस्तत्तदभिमतात्माभेदायोग इत्याशङ्किते, वस्तुतो देह-प्राणेन्द्रिय-मनो-बुद्ध्यहङ्कारातिरिक्त आत्मनि देह-प्राणेन्द्रिय-मनोबुद्ध्यहङ्कार-तादात्म्याध्यासेन *देहधर्माणाम्* स्थूलत्व-कृशत्वादीनाम्, *प्राणधर्माणाम्* क्षुत्पिपासादीनाम्, *इन्द्रियधर्माणाम्* काणत्व-बधिरत्वादीनाम्, *मनो-बुद्धिधर्माणाम्* शोकहर्षादीनाम्, *अहङ्कारधर्माणाम* कर्तृत्व-भोक्तृत्वादीनां च सर्वेषामात्मन्यध्यस्तत्वेन च वास्तवत्वायोगाद् देह-प्राणेन्द्रिय-मनोबुद्ध्यहङ्कारातिरिक्तान्निर्धर्मकादात्मनः सकाशाद् निर्धर्मकब्रह्मणोऽभेदो युज्यत एव। ब्रह्मणि सर्वज्ञत्वादिधर्माणां कल्पितत्वेन वास्तवत्वाभावाद् ब्रह्मणो निर्धर्मकत्वम्। एवमात्माभिन्ने सति ब्रह्मणि तस्य जिज्ञास्यत्वे स्थिते, केनचिदाक्षिप्तम्—आत्मनि देह-प्राणेन्द्रिय-मनो-बुद्ध्यहङ्कार-तादात्म्याध्यासे तद्धर्माध्यासे च सति खलु, वस्तुतो देहाद्यतिरिक्तादात्मनः सकाशाद् ब्रह्मणोऽभेदः

## वार्तिकम्

प्रत्यासत्तिः कल्प्येत ; प्रत्यक्षस्य सम्बद्धवर्तमानमात्रविषयकत्वात्। तथाचोक्तं वृद्धैः—"सम्बद्धं वर्तमानं च गृह्यते चक्षुरादिना"। इति। *ननु* अलौकिकप्रत्यक्षविषयं तत्, सत्यम् ; अलौकिकं त्वन्विष्यमाणमद्यापि नोपलभ्यते ; फलैकोन्नेयत्वात्, फलं तु न दृश्यत इत्युक्तम् ; अन्यथाऽन्योन्याश्रयापत्तेः—सामान्यप्रत्यासत्तिकल्पनायां प्रत्यक्षस्य देशकालान्तरव्यवहितविषयकत्वकल्पनम्, तत्कल्पने च सामान्यप्रत्यासत्तिकल्पनमिति। नच—सामान्यस्य बहुत्वादिवद्ग यावदाश्रयभानमन्तरेण भानं न संभवति, येन प्रत्यक्षे सामान्यभावान्यथानुपपत्तौ तद्भावसिद्धेर्नान्योन्याश्रय इति—वाच्यम् ; सामान्यस्य प्रत्येकपरिसमाप्यवृत्तित्वेन यावदाश्रयभाननियतभानाभावात्। *ननु*—सामान्यप्रत्यासत्त्यनङ्गीकारे व्याप्तिग्रहः कथं प्रत्यक्षेण स्यात्? यावद्धूमव्यक्तीनामसन्निकृष्टत्वादिति—चेत्, *न* ; वह्निसामान्यनिरूपितव्याप्तेर्धूमसामान्य एव ग्रहात्, तयोश्च धूमवह्निसामान्ययोस्संयुक्ततादात्म्येन संयुक्तसमवायेन वा यथामतं प्रत्यक्षत्वात्। न हि धूमव्यक्तिषु तद्ग्रहः, अननुगमात्, तदनुगमार्थं व्याप्यता-

## भाष्यभावप्रकाशिका

निमित्तविशेषप्रश्नं प्रतिवक्ति—*नैसर्गिक इति* ॥ प्रत्यक्चैतन्यसत्तामात्रानुबन्धी ; प्रवाहरूपेणानादिरिति यावत् ॥

नच—प्रवाहस्य प्रवाहिव्यतिरेकेणासत्त्वात् प्रवाहिव्यक्तीनां च सादित्वात् कुतो नैसर्गिकत्वमिति—वाच्यम् ; प्रवाहिव्यक्तीनाम् अन्यतमव्यक्त्या विना पूर्वकालानवस्थानं कार्येष्वनादित्वमित्यभ्युपगमात्। यद्वा—कारणरूपेणास्यानादित्वम्, कार्यात्मना नैमित्तिकत्वमित्युभयमविरुद्धम् ॥ "अध्यस्य मिथुनीकृत्ये"ति क्त्वाप्रत्ययो नाध्यासस्य पूर्वकालत्वमन्यत्वं च लोकव्यवहारादङ्गीकृत्य प्रयुक्तः ; लोकव्यवहारस्याध्यासात्मकतया क्रियान्तरत्वाभावात्, अतो वस्तुतोऽपौर्वापर्येऽपि विशेषणभेदेन कल्पितभेदं वस्तु तत्प्रतिपत्तिक्रमेण पौर्वापर्यं तदालम्बनमनुभवं च द्रढयितुमध्यासमभिनयेन दर्शयति—*अहमिति* ॥

## प्रदीपः

मत्वारोप्याज्ञानमप्यपरं स्वीक्रियते ; अज्ञानस्य चैतन्यमात्रगोचरत्वात्। भ्रमस्थलेऽधिष्ठानज्ञानकारणत्वमते तदकारणत्वमते

### ऋजुप्रकाशिका

स्यात् ? देहादितादात्म्याध्यास एवाऽऽत्मनि न संभवति ; आत्मनो देह-प्राणेन्द्रिय-मनो-बुद्ध्यहङ्कारेभ्यः पूर्वोक्तविधया भेदग्रहेण तत्तादात्म्याध्यासायोगात् । नच—आत्मनो देह-प्राणेन्द्रिय-मनो-बुद्धिभ्यो भेदग्रहणेऽप्यहङ्काराद् भेदो न गृहीत इत्यहङ्कारतादात्म्याध्यास आत्मनि युज्यत इति—वाच्यम् ; त्वन्मतेऽहंप्रत्ययविषयस्यैवात्मनोऽहङ्कारत्वेन तस्य दुःखित्वेनाप्रेमास्पदत्वरूपविरुद्धधर्माश्रयत्वेनैकस्य विरुद्धधर्मद्वयानाश्रयतयाऽहंप्रत्ययविषयस्येदमनिदमात्मकत्वेनेदमात्मकादहङ्कारादनिदमात्मकस्यात्मनो भिन्नत्वेन ग्रहणादहङ्कारादात्मनो भेदग्रहलाभेनात्मनोऽहङ्कारतादात्म्याध्यासासंभवः, अत एव तद्धर्माध्यासासंभवश्चेत्ययं "युष्मदस्मदि"त्यादेः "तथापी"त्यतः प्राक्तनस्य भाष्यस्याभिप्रायः ॥ देहेन्द्रियाहंकारादिभ्य आत्मनो यौक्तिकभेदग्रहेऽपि पण्डित-पामर-साधारण्येन देहेन्द्रियाहङ्कारादिभ्यो भिन्नतया विविच्यात्मनोऽग्रहेण भेदाग्रहात् तादात्म्याध्याससंभवः । अत एव च तद्धर्माध्याससंभव इत्ययं "तथापीत्यादेः" "आह कोऽयमध्यासो नामे"त्यतः प्राक्तनस्य भाष्यस्याभिप्रायः । "आह कोऽयं" भाष्यस्य त्वभिप्रायो विशद एव ।

### वार्तिकम्

**यच्छेदकाङ्गीकारे च तदेव व्याप्यमस्तु ; लाघवात् । तस्माद्यत्किञ्चिदेतत् । *एतेन*—कार्यकारणभावोऽपि—*व्याख्यातः ; तत्सामान्ययोरेव तत्त्वात् । नच—तयोरुभयोरपि नित्यत्वात् कथं कार्यकारणभाव इति—वाच्यम् ; न ह्यस्माभिराकृतिमन्तरेण सामान्यं वस्त्वन्तरमभ्युपगम्यते । नचाकृतेरपि पूर्वमसत्युत्पत्तिरभ्युपगम्यते, किन्त्वभिव्यक्तिमात्रं करणेन क्रियत इत्यविरोधलक्षणे वक्ष्यामः । तस्मान्नास्त्यलौकिकप्रत्यासत्तिः कुत्रापि । तथाच 'सुरभि चन्दनम्' इति यत्र विशिष्टबुद्धिरुत्पद्यते, तत्र पूर्वोक्तरीत्या घ्राण-चक्षुषोः सन्निकर्षाभ्यामेव तदुत्पत्तिः, न तु सौरभांशे ज्ञानप्रत्यासत्तिकल्पने प्रमाणमस्ति । *ननु* न घ्राणचक्षुषी, संभूयैकज्ञानजनके, परस्परनिरपेक्षज्ञानकारणत्वात्, चक्षुःश्रोत्रवदित्यनुमानविरुद्धमुक्तकल्पनमिति—चेत्, *न* ; अयं घटपदवाच्य इत्यङ्गुलीशब्दाभ्यां निर्दिष्टे चक्षुःश्रोत्राभ्यां वाचकानुविद्धवाच्यप्रत्यक्षदर्शनाद् दृष्टान्तस्य साध्यविकलत्वात् । एवं त्वक्श्रोत्रादिदृष्टांशेऽपि परं प्रति साध्यवैकल्यम ; तत्र स्पर्शशब्दवाच्योऽयं गुण इत्यादिप्रत्यक्षस्य दर्शयितुं शक्यत्वात् । तस्माद् दृष्टान्तासिद्धेर्न रजतांशे ज्ञानं**

### भाष्यभावप्रकाशिका

तत्र 'अहमि'ति कार्याध्यासेष्वाद्योऽध्यासः । तस्याध्यासत्वं चिदचिदात्मकतया युक्तत्वम् । 'इदमि'ति च भोक्तुर्भोगसाधनं कार्यकरणसंघातः कथ्यते । 'ममेदमि'त्यहंकर्त्रा स्वत्वेन तस्य संबन्धः । तयोश्च 'इदं ममेदमि'ति दृष्टयोरध्यस्तत्वमध्यस्तभोक्तृशेषत्वात् स्वप्नादावध्यस्तराजोपकरणवत् । तदेवं पूर्वभाष्योक्तरीत्या युक्तिशून्योऽप्यत्यन्तविविक्तयोरित्यादिना लक्षितः सत्यानृतमिथुनीकरणत्वरूपेण संभावितोऽध्यासो विशिष्टकारणप्रसूतो नैसर्गिकत्वादागन्तुकदोषानपेक्षोऽहमिदमित्यादिप्रकारैर्निरूपितः ॥

अयमित्यनुभवसिद्धतामाह । लोक्यत इति लोकः, प्राणिसमूहः । व्यवहरणं व्यवहारः । अभिज्ञाभिवदने लोकव्यवहारः । लोकव्यवहारो मनुष्योऽहमिति शब्दसञ्जल्पितोऽभिज्ञानमित्यर्थः ।

### प्रदीपः

चाधिष्ठानाज्ञानवशात् सर्वेषां भ्रमकाले समुद्भव इति स्वीकाराद् नारोप्ये चैतन्यसंसर्गाध्यासार्थमज्ञानान्तरमन्यद्वा स्वीकर्तव्यमिति सूचयन्नाह—*मिथ्याज्ञाननिमित्त इति* ॥ मिथ्याभूतं यदनिर्वचनीयमज्ञानम्, यद्वशान्मिथ्याभूतं शरीरादिकं विक्षिप्यते,

## वार्तिकम्

प्रत्यासत्तिः प्रमाणवती। अस्मन्मते च यथा रजताध्यक्षम्, तथा लक्षणभाष्ये वक्ष्यामः॥ तस्मात्सन्निध्य-भावाद् देशान्तरीयरजतभानानुपपत्तेर्नान्यथाख्यातिः संभवति॥

*अस्तु* तर्हि बुद्धिरेव रजतम्; संप्रयोगमन्तरेणापरोक्षत्वात्, उभयांशबाधकल्पनागौरवाच्च, लाघवा-दिदमंशरूपबहिष्ठत्वबाधकल्पनस्यैव युक्तत्वात्। ज्ञान-ज्ञेययोस्सहोपलम्भनियमादपि न रजतं बुद्ध्यति-रिक्तम्। तथाचोक्तम्—"सहोपलम्भनियमादभेदो नीलतद्धियोः॥" इति। तथाच बुद्ध्यतिरिक्तरजता-भावात् तस्याश्च सत्यत्वान्न विषयमिथ्यात्वेन ज्ञानस्य मिथ्यात्वमिति—चेत्, *न*; रजतस्य संविद्रूपत्वासिद्धेः। नच-संप्रयोगमन्तरेणापरोक्षत्वादिति हेतोस्तत्सिद्धिरिति—वाच्यम्; अन्यतरा-सिद्धत्वेन तस्यासाधकत्वात्, संप्रयोगः, संस्कारो दोषश्चेति कारणत्रितयजन्यत्वस्य तद्बुद्धेः परैरभ्यु-पगमात्। *ननु*—अधिष्ठानसंप्रयोगे सत्यपि परमते रजते नास्तीन्द्रियसंप्रयोग इति—चेत्, *न*; अन्यथाख्यातिवादिमते रजतेन लौकिकसन्निकर्षाभावेऽप्यलौकिकसन्निकर्षस्य विद्यमानत्वाद् "लौकिक-संप्रयोगमन्तरेणे"ति विशेषहेतोर्व्यर्थविशेषणत्वात्, सुरभि चन्दनमित्यादौ व्यभिचाराच्च, दृष्टान्तस्य साधन-विकलत्वाच्च, संविदोऽपि त्वन्मते मानसत्वात्संप्रयोगमन्तरेणापरोक्षत्वाभावात्। वेदान्तिमते नास्ति रजते संप्रयोगः, नापि साधनविकलो दृष्टान्त इति चेत्, सत्यम्; किं तावता? तथाऽप्यधिष्ठानसंप्रयोग-जन्यज्ञानविषयत्वाद्रजतस्य वेदान्तिनं प्रत्यपि 'संप्रयोगमन्तरेणापरोक्षत्वात्' इत्ययं हेतुरसिद्ध एव। अथ 'स्वेन संप्रयोगमन्तरेण' इति हेतुर्विशेषणीयः; तथाऽपि व्याप्तिग्रहानुपयोगाद् व्यर्थविशेषणता; अस्ति च स्वेनापि संप्रयोगोऽधिष्ठानाभिन्नत्वाद्रजतस्य। तस्मान्नायं हेतूरजतस्य ज्ञानाभेदसाधकः। यस्तु ज्ञान-ज्ञेययोरभेदे सहोपलम्भनियमो हेतुरुक्तः, सोऽपि विकल्पासहत्वादयुक्तः। यदि सहितयो-

## भाष्यभावप्रकाशिका

अथवा—लोकानां व्यवहारो लोकव्यवहारः। स चायमहमिति व्यपदेशः, इतिशब्दसूचितश्च तदनुरूपः प्रवृत्त्यादिः। अस्मिन्पक्षेऽध्यासव्यवहारक्रिययोरेककर्तृत्वादध्यस्य व्यवहार इति, अध्यासस्य व्यवहारात् पूर्वकालत्वमङ्गीकृत्याध्यस्य लोकव्यवहार इत्युक्तम्। अध्यासस्वरूपं कथ्यते—*अन्योन्यस्मिन्नन्योन्यात्म-कतामन्योन्यधर्मांश्चाध्यस्येति*॥ तस्य निमित्तमुच्यते—*इतरेतराविवेकेनेति*॥ चिद्रूपेण विवेकेऽपि तस्य नित्य-शुद्ध-बुद्ध-मुक्तानन्दस्वरूपेणानवभासनादध्यास इति भावः। 'अहमिदं' 'ममेदमि'त्यादिना चाध्यासस्य कार्यमभिधीयते। 'अहमिदमि'त्यत्रेदं शरीराद्यहमित्येकोऽध्यासः। इदमिति च वस्तुतो न प्रतीतितः; तथा मानाभावात्। अध्यस्येति पूर्वकालत्वसूचितमध्यासस्य व्यवहारकारणत्वं दर्शयति—*मिथ्येति*॥ *मिथ्याज्ञानम्*अध्यासस्तन्निमित्त इत्यर्थः॥

## प्रदीपः

तेनैवारोप्येऽप्यधिष्ठानतादात्म्याध्यासनिर्वाह इति भावना। अत्र मिथ्याज्ञानस्य निमित्तत्वसूचनेनान्तःकरणांशोऽविद्यावस्थाविशेष एव, न तत्परिणामविशेष इति, अन्तःकरणावच्छिन्नोऽपि जीवोऽनादिरिति पक्षः सूच्यते। अथवा—भामतीमतरीत्याऽविद्यायाः सर्वत्र निमित्तकारणत्वमेव, न तु परिणामिकारणत्वमिति पक्षः सूच्यते। विवरणमतेऽपि त्वज्ञानस्य परिणामिकारणत्वेऽपि दोष-विधया निमित्तकारणत्वस्यापि स्वीकारान्नाज्ञाननिमित्तत्वोक्तिविरोधः।

*वयं तु प्रतीमः*—अज्ञाननिमित्तमात्रत्वपक्ष एव सूत्रभाष्याद्यनुगुणः; अन्यथा प्रपञ्चगतजाड्यादिधर्मस्याज्ञानपरिणामत्व-प्रयुक्तत्वसंभवाद् ब्रह्मणश्चिद्रूपस्यापि विवर्तकारणतासंभवाद् "न विलक्षणत्वा"द्यधिकरणशङ्काद्यनुत्थितिः, ब्रह्मण एव परि-णामिकारणत्वमिति कृत्वाचिन्तयोक्ताधिकरणादिप्रवृत्तौ तु नाविद्यापरिणामत्वपक्षस्योत्थितिलेशोऽपीति॥

### वार्तिकम्

नियमेनोपलम्भ इत्युच्यते, तदा विरुद्धः; सहितयोरिति द्वित्वस्य भेदनियतत्वात्, परं प्रत्यसिद्धेश्च, ज्ञान-ज्ञेययोस्तथानभ्युपगमात्, चक्षुषोपलम्भे विषयालोकयोस्तथात्वेन व्यभिचाराच्च। अर्थैकोपलम्भ-विषयत्वनियमादिति हेत्वर्थः, सोऽप्यसिद्धः; ज्ञानस्य स्वप्रकाशत्वेनाविषयत्वात्, दृष्टान्तस्य साध्यविकलत्वाच्च। नहि रूप-रूपिणोरत्यन्तमभेदोऽस्माभिरङ्गीक्रियते। अपिच यदि रजतं बुद्धिरूपत्वेन सत्यं स्यात्, 'नेदं रजतमि'ति तद्बाधो न स्यात्। नच—लाघवादिदमंशस्यैव बाधो न रजतांशस्यापीति—वाच्यम्; वैपरीत्यस्यैव दर्शनात्; अन्यथा 'नेदं रजतम्' इति बाधानन्तरं किमिदमित्याकाङ्क्षानुपपत्तेः, 'इयं शुक्तिः' इति ज्ञानानुपपत्तेश्च; इदंत्वस्य बाधात्। किञ्चेदंत्वं संविदो भिन्नमभिन्नं वा? आद्ये किम्—सत्? असद्वा? पराभ्युपगतानिर्वचनीयं वा? नाद्यः; बाधानुपपत्तेः, अपसिद्धान्तापत्तेश्च; संविदमन्तरेण सतोऽनभ्युपगमात्। न द्वितीयः; अपरोक्षत्वानुपपत्तेः। नापि तृतीयः; अनभ्युपगमात्। नापि द्वितीयः; बाधानुपपत्तेः, संविदभिन्नत्वेन रजतवत्सत्यत्वात्। तस्मान्न रजतं बुद्धेराकारः। किं तर्हि? प्रतिपन्नोपाधावत्यन्ताभाव-प्रतियोगित्वादनिर्वचनीयमिति विषयमिथ्यात्वादुपपन्नं ज्ञानस्य मिथ्यात्वमिति॥

*ननु*—भवेदेतद्विषयमिथ्यात्वकल्पनम्, यदि ज्ञानमिथ्यात्वं भवेत्, न चैतदस्ति; तन्मिथ्यात्वे प्रमाणाभावात्। नच—विसंवादिविशिष्टव्यवहार एव तत्र प्रमाणमिति—वाच्यम्; स्वरूपतो विषयतश्चागृहीतसंसर्गज्ञानद्वयादेव तद्व्यवहारोपपत्तेरनुपपत्तेरभावेन तत्प्रमाणत्वासिद्धेः। तथाहि—पुरोवर्तिनि दुष्टेन्द्रियसंप्रयोगाद्द दोषेणैवोपप्लुतशुक्तित्वादिविशेषविषयमिदमिति ज्ञानमुत्पद्यते। उत्पन्ने च तस्मिन् सादृश्यदोषोपहततत्ताविषयं रजतमिति स्मरणमुत्पद्यते। तयोश्च निरन्तरोत्पन्नत्वाद् दोषोपहतविशेष-विषयत्वाच्च स्वरूपतो विषयतश्च विवेककारणाभावेनैकत्वमिति मानसाभिमानात् ताभ्यामिदं रजतमिति विशिष्टाभिलापादिव्यवहारो जायते; "तद्धेतोरेवे"ति न्यायात्। त्वयापि हि भ्रमं प्रत्यधिष्ठानज्ञानस्य कारणत्वाङ्गीकारात् तत्त्वेनेदं ज्ञानं पूर्वमभ्युपगन्तव्यम्, विशिष्टज्ञानस्य विशेषणज्ञानपूर्वकत्वेनारोप्यरजत-

### भाष्यभावप्रकाशिका

*ननु* एवं शरीरादेरवस्तुत्वात् कुतश्चितो भेदाग्रहः? कुतश्चाध्यास इति? तत्राह—*सत्यानृते इति*॥ *मिथुनीकृत्य = युगलीकृत्य। अप्रतीतस्याध्यासायोगादारोप्यस्य प्रतीतिरुपयुज्यते, न वस्तुसत्तेति भावः। परमार्थसतोऽपारमर्थिकेन परमार्थतो मिथुनीभावादभूतभावार्थस्येह प्रयोगः। *ननु* प्रतीतस्यारोपः, समारोपे च प्रतीतिरिति परस्पराश्रयत्वमित्याशङ्क्याह—*नैसर्गिक इति*॥ अनादिरित्यर्थः। व्यवहारस्यानादित्वकथनात् कारणस्याध्यासस्यानादितोक्ता। ततश्च पूर्वपूर्वाध्यासोपदर्शितस्य देहादेरुत्तरोत्तराध्यासहेतुत्वान्न परस्पराश्रयतेत्यर्थः। अत्र च प्रवाहरूपेण नैसर्गिकत्वम्, कार्यव्यक्तिरूपेण च नैमित्तिकत्वमित्यविरोधः॥

### प्रदीपः

*ननु*—धर्म्यध्यासे धर्माध्यासस्यार्थसिद्धत्वाद् व्यर्थं धर्माणां पृथगध्याससमर्थनमिति—चेत्, *अत्र रत्नप्रभाकाराः—अन्धत्वादीनामिन्द्रियधर्माणां धर्म्यध्यासस्यास्फुटत्वेऽपि अन्धोऽहमिति स्फुटाध्यास इति ज्ञापनार्थत्वान्न दोष इति समादधते। अत्र धर्म्यध्यासः परोक्षः, धर्माध्यासस्तु प्रत्यक्ष इति सूचनेनापरोक्षधर्माध्यासोऽपरोक्षधर्म्यध्यासव्यापक इति नियमविशेषस्तु न संमत इति सूच्यते। सति चैवमहमध्यासेऽपि धर्म्यध्यासस्यापरोक्षत्वसमर्थनेनान्तःकरणानिन्द्रियत्वपक्षः सूच्यत इति पञ्चपादिका-विवरणानुयायी पन्थाः। *भामत्यनुयायी तु मार्गः*—अन्तःकरणमपीन्द्रियमेव; धर्माध्याससामान्यव्याप्यो धर्म्यध्यास इति

## वार्तिकम्

स्मरणम्, असंसर्गाग्रहश्च ; तदग्रहस्य विशिष्टज्ञानोत्पत्तौ प्रतिबन्धकत्वात् । तथाच "तद्धेतोरेवास्तु हेतुत्वम्, मध्ये किं तेन" इति न्यायात् तेनैव प्रवृत्त्यादिव्यवहारसिद्धौ न तदर्थं विशिष्टज्ञानकल्पने प्रमाणमस्ति । *ननु* संवादिप्रवृत्तिस्थले विशिष्टज्ञानं प्रवर्तकं दृष्टम्, तदेवात्रापि प्रवर्तकं युक्तम् ; प्रवृत्तेः समानविषयकज्ञान-पूर्वकत्वनियमात्, लाघवानुमानभ्यां च प्रवृत्तित्वेन कार्यतायां समानविषयकविशिष्टज्ञानत्वेन कारणता-ग्रहे लाघवं भवति, अनुगमश्च ; प्रवृत्तिमात्रत्वेन हेतुत्वग्रहात्, संवादिप्रवृत्तित्वेन कार्यतायां तत्त्वेन विसंवादिप्रवृत्तित्वेन कार्यतायामगृहीतसंसर्गकज्ञानद्वयत्वेन च हेतुताग्रहे गौरवात्, कार्यताकोटौ कारणता-कोटौ चाधिकस्य निवेशेऽननुगमाच्च, सामान्यतः कार्यतावच्छेदकस्य कारणतावच्छेदकस्य चैकस्या-भावात् । *वह्निवद्भविष्यतीति—चेत्, न ; तत्रापि सामान्यतोऽनुगमस्य सत्त्वात् । *अथ* मन्यसे यथा वह्नि-त्वेन कार्यतायां सामान्यतः तृणारण्यादिषु कारणतावच्छेदकाभावेऽपि तार्णाऽऽरण्यादिवह्नित्वेन कार्यतायां तृणत्वारणित्वादिना कारणता गृह्यते, गौरवाननुगमौ च न दोषौ ; प्रामाणिकत्वात्, तद्वत्प्रकृतेऽपि भविष्यतीति, *तन्न* ; तत्रापि वह्नित्वेन कार्यतायामिन्धनत्वेन सामान्यतः कारणताग्रहात्, "यद्विशेषयोः कार्यकारणभावग्रहस्तत्सामान्ययोरपी"ति नियमभावात् । तस्मादुक्तदोषाद् विसंवादिप्रवृत्तावपि विशिष्ट-ज्ञानं न्याय्यमिति चेत्, न ; इदंरजतज्ञानत्वेन सामान्यतः प्रवर्तकत्वादभेदस्य सत्त्वादननुगमाभावात्, 'इदं रजतम्' इति विशिष्टज्ञानत्वापेक्षया तत्त्वस्य लघुत्वाच्च । नच—एवमिदंरजतज्ञानयोर्भेदे गृहीतेऽपि तत्त्वेन प्रवर्तकत्वं स्यादिति—वाच्यम् ; भेदाग्रहस्यापि प्रवृत्तिहेतुत्वात् तदभावे तत्प्र-वर्तकत्वानुपपत्तेः, कार्यस्य सामग्र्यधीनत्वात्, विशिष्टज्ञाने सत्यपि भेदग्रहे प्रवृत्त्यदर्शनात् । *ननु* कारणैकरूप्ये कथं प्रवृत्त्ययाथार्थ्ययाथार्थ्याभ्यां भेदः स्यात् ? नैष दोषः ; सदसत्त्वाभ्यामसंसर्गस्य विशेषितत्वात् कारणैकरूपणासिद्धेः—सदसंसर्गाग्रहाद्विसंवादिनी प्रवृत्तिः, असदसंसर्गाग्रहात्तु संवादिनी प्रवृत्तिरिति तयोः कारणभेदः । तस्माद् भ्रमस्थले प्रवृत्तेरयाथार्थ्येऽपि न ज्ञानस्यायाथार्थ्यम् ; उक्त-प्रकारेण सत्यविषयकत्वात् । नच—एवं 'नेदं रजतम्' इति बाधानुपपत्तिः ; नहि 'नेदं रजतम्' इति पुरोवर्तिनि रजतं रजतज्ञानं च बाध्यते, किं तर्हि ? इदंरजतयोस्तज्ज्ञानयोश्च भेदं बोधयता तेन पुरोवर्तिनि रजतार्थिप्रवृत्तिर्बाध्यते । तत्र यत्र प्रवृत्त्युत्तरकालं भेदग्रहः, तत्र सदसंसर्गाग्रह-जन्यत्वविचारणेन प्रवृत्तेरयाथार्थ्यावधारणमेव बाधः, यत्र तु प्रवृत्तेः पूर्वमेव भेदग्रहः, तत्र कारणा-भावेन प्रवृत्त्यभाव एव बाध इत्यनवद्यम् । प्रयोगश्च—विवादगोचरापन्नं रजतज्ञानम्, यथार्थम्, धीत्वात्, संप्रतिपन्नरजतधीवदिति ; अन्यथा धियोऽविश्वसनीयत्वेन तदधीनसर्वपुरुषार्थानुकूल-संसारमात्रोच्छेदप्रसङ्गः । तथाचोक्तम्—"अहो बत महानेष प्रमादो धीमतामपि । ज्ञानस्य व्यभि-

## प्रदीपः

नायमेव नियमः, किन्तु अपरोक्षधर्म्यध्यासव्याप्योऽपरोक्षधर्माध्यास इति नियमोऽपि स्वीक्रियते । "अन्धोऽहमि"त्यादि-धर्म्यंशेऽप्यपरोक्षाध्यास एवेत्यादि न्यायरत्नावल्यां विस्तृतम् । तथाचैतन्मतरीत्या धर्माध्याससमर्थनं स्फुटप्रतीत्यर्थम् । अथवा----धर्माध्यासस्यैव दुःखनिदानत्वात् तदुपयोगितयैव धर्म्यध्याससमर्थनाद् न दोष इत्याद्यन्यत्र व्यक्तम् । अत्र"अहमिदम्" इतीदंशब्दप्रयोगेणान्तःकरणस्यापि स्फुटत्वमुपन्यस्तमितीन्द्रियमात्रं प्रत्यक्षमिति वान्तःकरणमनिन्द्रियमिति वा स्वीकर्तव्यम् । तत्र प्रथमः पक्षो भामतीकाराणाम् , द्वितीयस्तु विवरणाचार्याणामिति पक्षद्वयमपि न भाष्यानारूढम् ॥

*ननु*---सर्वं ज्ञानं प्रमा, न तु भ्रमात्मकं ज्ञानमेकमपि, "इदं रजतमि"ति तु ज्ञानद्वयमेव । एकम्—इदमित्यनुभवात्मकम् , अपरम्---रजतमिति प्रमुष्टतत्ताकस्मरणमात्रम् । ज्ञानद्वयमपीदं "इदं रजतमि"ति प्रमासजातीयाकारत्वाद् भिन्नतयाऽगृह्यमाणं

## पञ्चपादिका

सिद्धाविद्याशक्तिप्रतिबन्धादेव तस्यानवभासः। अतः सा प्रत्यक्चिति ब्रह्मस्वरूपावभासं प्रति-

## पञ्चपादिकाविवरणम्

दर्शनादेव कल्प्यमानस्येत्यर्थः। नचाधिष्ठानप्रतिबन्धमन्तरेण तत्र विपर्ययकार्यमुपपद्यते। अविद्यासम्बन्धत्वा-देवावरणस्यानिरूपिताकारता च युक्तेति भावः। *ननु* प्रमाणवैकल्यादेवात्राप्यग्रहणमिति, नेत्याह—*अनन्यनिमित्तत्वादिति* ॥ अतोऽनवभासात्पुष्कलकारणे सति परिशेषादिदमायातमित्याह—*तद्गतनिसर्ग-सिद्धाविद्याशक्तिप्रतिबन्धादेव तस्यानवभास इति* ॥ मूर्तद्रव्यान्तरस्यासम्भवादिति भावः। अतः कार्य-दर्शनोन्नेयमावरणकृत्यं विपर्ययं चात्मनि कुर्वाणमज्ञानं भावरूपमेवोभयकारणत्वान्यथानुपपत्त्या कल्प्यत इत्याह—*अतः सा प्रत्यक्चितीति* ॥

## ऋजुविवरणम्

मात्रं च नावरणसाधकमित्याशङ्क्याभिप्रायमाह—*नास्ति न प्रकाशत इतीति* ॥ यद्वा—"स्वरूपानवभासस्ये"त्यनेना-नवभासस्यावरणत्वमुक्तम्। सिद्धे ह्यस्तित्वे तस्यावरणत्वं निरूप्येत, तदस्तित्वमेव कथम्? इत्याशङ्क्याभिप्राय उक्तः—*नास्ति न प्रकाशत इतीति* ॥ *ननु*—व्यवहारदर्शनाद्धेतुः कल्पितः, कथं तस्यावरणत्वमिति? तदाह—*नचाधिष्ठा-नेति* ॥ यद्वा—तत्रापि विक्षेपमात्रमेवाङ्गीक्रियताम्, तावतैव विपरीतव्यवहारस्याप्युपपत्तेः, इत्याशङ्क्याह—*नचा-धिष्ठानेति* ॥ *ननु*—व्यवहारदर्शनात् कल्पितयोग्यत्वस्य कथमावरणत्वम्? आवरणस्य निरूपणासहत्वेन तत्स्वरूपे पृष्टे योग्यतारूपत्वे तद्धेतुत्वे वा निरूपणासहत्वस्य तदवस्थत्वात्, प्रमाणविषयस्य चानिरूपितत्वायोगादित्याशङ्क्याभिप्राय-माह—*अविद्यासंबन्धत्वादेवेति* ॥ *ननु प्रमाणवैकल्यादेवेति* ॥ पुरुषान्तरसंवेदनवदिति चोद्याभिप्रायः। अन्यत्वा-भावादिति परिहाराभिप्रायः। *ननु* एवमप्यज्ञानमेव कस्मात् प्रतिबन्धकं भवेत्? इत्याशङ्क्यावतारयति—*अतोऽ-नवभासादिति* ॥ तथाऽपि पारिशेष्यमसिद्धम्, लोकप्रसिद्धद्रव्यान्तरमेव कस्मान्न भवतीत्याशङ्क्याभिप्रायमाह—*मूर्त-द्रव्यान्तरस्येति*। एवमपि कथं परिशेषः? अभावादेरपि संभवादित्याशङ्कानिवृत्तौ तात्पर्यमाह—*अतः कार्यदर्शनो-

## तत्त्वदीपनम्

प्रतिबन्धमन्तरेण विक्षेपवदात्मनि विक्षेपोऽस्तु, किं प्रतिबन्धेनेत्याशङ्क्यानवच्छिन्नसंविद्रूपाऽऽनन्दात्मनि प्रतिबन्धं विना विक्षेप एव नोल्लसति। अन्यत्र स्वत एव प्रतिबद्धत्वान्न प्रतिबन्धापेक्षेत्याह—*नचेति* ॥

आत्मा स्फुरद्रूप आवृत इत्येतद्विरुद्धमित्याशङ्क्य, किमावरणप्रतीतिर्निरस्यते? उत यौक्तिकत्वम्? नान्त्यः; अङ्गीकृतेः, इत्याह—*अविद्येति* ॥ चशब्देनाप्रतीतिपक्षं निरस्यति। अहमज्ञो मामन्यं च न जानामीत्यावरणानुभवान्न तन्निरास इत्यर्थः। स्वयंप्रकाशेऽपि पुरुषान्तरसंवेदने यथाऽग्रहणम्, तद्वदत्रापीत्याह—*ननु प्रमाणेति* ॥ तत्र भिन्नत्वात् प्रमाणवैकल्यादग्रहणं युक्तम्, अत्र तु ब्रह्मणः प्रत्यक्त्वान्मैवमित्याह—*नेत्याहेति* ॥ अज्ञानादन्यद् निमित्तं यस्य न विद्यते तदनन्यनिमित्तम्, तस्य भावस्तत्त्वम्; तस्मादित्यर्थः। हेत्वसिद्धिमुक्तां निरस्यति—*अत इति* ॥ निमित्तान्तरदुर्निरूपत्वमतःशब्दार्थः। कुड्यादेरपि व्यवधायकत्वदर्शनात् कथमज्ञानमेव व्यवधायकम्? तत्राह—*मूर्तेति* ॥ ब्रह्मणः प्रत्यक्स्वरूपत्वान्न मूर्तद्रव्यं तद्व्यवधायकमित्यर्थः ॥

तथाऽपि कथं भावरूपाज्ञानसिद्धिरित्याशङ्क्याह—*अत इति* ॥ भावरूपेणेत्यत्र तात्पर्यार्थः कथितः, अत्र

## वार्तिकम्

चारित्वे विश्वासः किन्निबन्धनः" ॥ इतीति पूर्वपक्षसंक्षेपः। *अत्रोच्यते*; ज्ञानद्वयात्प्रवृत्त्यसिद्धिः; अति-प्रसङ्गात्। अगृहीतभेदाद् ज्ञानद्वयात् प्रवृत्तिः, अतो नातिप्रसङ्ग इति चेत्, न; भेदाग्रहस्य प्रवृत्त्यहेतुत्वात्,

## पञ्चपादिका

बध्नाति, अहङ्काराद्यतद्रूपप्रतिभासनिमित्तं च भवति, सुषुप्तादौ चाहङ्कारादिविक्षेपसंस्कारमात्रशेषं स्थित्वा

## पञ्चपादिकाविवरणम्

*ननु* अग्रहण-मिथ्याज्ञान-तत्संस्कारेभ्योऽन्यदज्ञानं नाम न पश्यामः, त एव च जीवस्य स्वयंप्रकाशमानमपि ब्रह्मस्वरूपावभासं प्रतिबध्नन्तीति, नेत्याह—*सुषुप्तादौ चेति* ॥ तत्राप्यविद्याशक्तिः संस्कारमात्रशेषं तिष्ठतीति

## ऋजुविवरणम्

ज्ञेयमिति* ॥ *नन्वग्रहणेति* ॥ अयं भावः—विक्षेपकार्यस्यादर्शनादिति मा भूद् विक्षेपः, आवरणादज्ञानं निश्चीयत इति चेत्, न; अन्यथासिद्धत्वादित्याह—*त एव जीवस्येति* ॥ संस्कारमात्रमेव शेषो यस्याज्ञानस्य, तदज्ञानं संस्कारमात्रशेषमिति व्युत्पत्त्या ज्ञानाभावः प्रतीयते, तन्निवृत्त्यर्थमाह—*तत्राप्यविद्याशक्तिरिति* ॥ विक्षेपस्य संस्कारो विक्षेपसंस्कारः, विक्षेपसंस्कारमात्रं शेषो यस्मिन् अज्ञान इति व्युत्पत्तिः प्रदर्शिता। मात्रग्रहणेन विक्षेपस्यैव संस्काररूपेणावस्थानम्, आवरणे तु स्वेन रूपेणावस्थानमिति विभागः प्रदर्शितः। *संस्कारमात्रशेषम् = विक्षेपसंस्कारयुक्त-

## तत्त्वदीपनम्

त्वक्षरार्थ इत्यपौनरुक्त्यम्। अज्ञानशब्दार्थपर्यालोचनयाऽग्रहणाद्येवाज्ञानमिति शङ्कते—*नन्वग्रहणेति* ॥ अज्ञान-मित्यत्र नञः किमभावोऽर्थः? उत तद्विरोधी? आहो तदन्यः? आद्ये ग्रहणाभावः स्यादित्याह—*अग्रहणेति* ॥ द्वितीये ग्रहणनिवर्त्यभ्रान्तिज्ञानमेव स्यादित्याह—*मिथ्याज्ञानेति* ॥ तृतीये संस्कारः स्यादित्याह—*तत्संस्कारेति* ॥ आवरणानुपपत्त्या ग्रहणादिविलक्षणं ग्रहणनिवर्त्यमज्ञानमित्याशङ्क्यान्यथोपपत्तिमाह—*त एवेति* ॥ विक्षेपहेतुत्वमपि तेषामेवेति चशब्दार्थः। अज्ञानशब्दस्यान्यथा व्युत्पत्तेर्मैवमित्याह—*नेत्याहेति* ॥ संस्कारमात्रमेव शेषो यस्याज्ञानस्य तत्संस्कारमात्रशेषमिति ज्ञानाभावः प्रतीयत इत्याह—*तत्रापीति* ॥ अहंकारादिविक्षेपस्य विपरीतरूपस्य संस्कारमात्रस्य शेषो यस्मिन् तत्तथोक्तम्, शेषशब्दो भावप्रधानः। तच्छेषत्वं यथा स्यात्तथा सुषुप्त्यादौ स्थित्वा जागरादौ कर्मवशाद्विक्षेपरूपेण प्रादुर्भवति, ततश्चानवभासविक्षेपहेत्वज्ञानमेष्टव्यम्; इतरथा संस्कारमात्राद्विक्षेपप्रादुर्भावासम्भवात् सुषुप्त्यादौ मुक्त्यापत्तेश्चेति टीकार्थः ॥

## वार्तिकम्

प्रतिबन्धकाभावस्य हेतुत्वनिराकरणात्। कथं वा तव मते भेदाग्रहोऽपि? स्वरूपभेदस्य स्वप्रकाशयोर्ज्ञानयोः स्वयमेव ग्रहात्, स्वरूपातिरिक्तभेदस्याख्यातिवादिभिरनङ्गीकारात्, अङ्गीकारे वा तस्यापि स्वप्रकाशाभ्यां ज्ञानाभ्यां स्वयमेव ग्रहात्, ज्ञानान्तरेण तद्ग्रहे च धर्मिप्रतियोगिग्रहमन्तरेण तद्ग्रहासंभवाद् ज्ञानस्वप्रकाशत्वहानेः। यदि ब्रूयात्—ग्रहण-स्मरणज्ञानयोर्विवेककारणस्य विशेषविषयत्वस्य दोषेणापहाराद् न भेदग्रहः—इति, को हेतुः? किं ते विशेषविषयत्वरहिते ज्ञाने एव न भवतः? न वा स्वप्रकाशः? येन भेदग्रहो न स्यात्। कथं वा विशेषविषयत्वं भेदग्रहकारणम्? तथा सति प्रत्यभिज्ञाभ्रमस्थले 'तदेव रजतम्' इति तत्ताया ग्रहाद् भेदग्रहप्रसङ्गः। यदि ब्रूषे—तत्र स्मृतेर्विशेषविषयत्वे सत्यपि ग्रहस्य तथात्वाभावान्न भेदग्रह इति, सत्यं ग्रहणं विशेषविषयत्वाभावाद् न स्वात्मानं स्मृतेर्विविञ्च्यात्, स्मृतिस्तु तस्मादात्मानं विविञ्च्यादेव; विशेषविषयत्वात्, अथ दोषेण तयोर्विशेषविषयत्वापहाराद् भेदविषयत्वमप्यपहृतमिति न तयोर्भेदग्रह इति चेत्, न; तथा सति स्वयमेव ते न स्याताम्; स्वस्यैव स्वभेदग्रहत्वात्। अथ ज्ञानयोर्विवेककारणे सत्यप्यर्थयोस्तदभावात् तदविवेकेनैव

## पञ्चपादिकाविवरणम्

न संस्कारादय एवाज्ञानमित्यर्थः। कथम्? न तावत्सुषुप्तादौ स्वयंप्रकाशब्रह्मस्वरूपानवभासः पुरुषान्तर-संवेदनवद् द्रष्टुर्भिन्नत्वादिति शक्यं वक्तुम्; एकत्वश्रुतेः, नापि मिथ्याज्ञानप्रतिबन्धात्; तत्र तस्याभावात्, नापि तत्संस्कारप्रतिबन्धात्; भ्रान्तिसंस्काराणां तत्त्वावभासप्रतिबन्धकत्वाभावात्, सत्स्वपि रजतभ्रमसंस्कारेषु शुक्तिकावबोधदर्शनात्, नाप्यग्रहणप्रतिबन्धात्; स्वरूपग्रहणस्य नित्यत्वात् स्वयंप्रकाशमाने संवेदने तद्विषय-कादाचित्काग्रहणस्याप्रतिबन्धकत्वात्, नापि कर्मणां स्वरूपावभासविरोधिता; सर्वदाऽणुमात्रस्यापि चैतन्य-स्यानवभासप्रसङ्गात्, अज्ञानेऽपि तुल्यमिति चेत्, न; तस्य स्वविषयचैतन्यावभासं प्रत्यप्रतिबन्धकत्वात्, नचाज्ञानस्येव कर्मणां नित्यवत्साक्षिचैतन्येनावभास्यता, येन तदवभासकतया साक्षिचैतन्यमप्रतिबद्धं प्रकाशेत।

## ऋजुविवरणम्

मित्यर्थः॥ कथं वा संस्कारादीनामज्ञानत्वाभावः? कथं वा स्वरूपानवभासेनाज्ञानकल्पनम्? अन्यथासिद्धेरित्याक्षिपति—*कथमिति*॥ अनन्यथासिद्धानवभाससामर्थ्यादज्ञानं कल्प्यत इति निदर्शयितुमन्यथासिद्धिं निराकुर्वन् वाचः क्रमवर्तित्वात् स्थूलत्वाच्च भेदस्य तमेवादौ निराकरोति—*न तावदिति*॥ *तत्र तस्याभावादिति*॥ बोधप्रत्य-स्तमयरूपत्वात्सुषुप्तेरित्यर्थः॥ "नापि तत्संस्कारप्रतिबन्धादि"त्यनेन संस्कारस्य कथं प्रतिबन्धकत्वं निराक्रियते? संस्काराद्प्यग्रहणानुवृत्तेर्वक्ष्यमाणत्वात्, *नैष दोषः*; अज्ञानसंस्कारस्य तदुपपत्तेर्ज्ञानसंस्कारस्य न तथेति वैषम्यम्। अथवा—तत्र संस्कारशब्दोऽविद्यालेशपर इत्यनवद्यः। *ननु*—संस्कारस्याप्रतिबन्धकत्वे निश्चिते संस्कारत्वादिहाप्रति-बन्धकत्वम्, तदेव सन्दिग्धम्; प्रतिबन्धसमये संस्कारस्यापि संभवादित्याशङ्क्याह—*सत्स्वपि रजतेति*॥ "अग्रह-णमि"ति स्वरूपग्रहणाभावः? कदाचिद् ग्रहणाभावो वा? इति विकल्प्य प्रथमपक्षं दूषयति—*स्वरूपग्रहणस्येति*॥ न द्वितीय इत्याह—*स्वयंप्रकाशमान इति*॥ तद्विषयाग्रहणे विद्यमानेऽपि स्वरूपग्रहणप्रयुक्तव्यवहारदर्शनादिति भावः। तर्हि कर्मणां प्रतिबन्धकत्वमस्त्वित्याशङ्क्याह—*नापि कर्मणामिति*। *ननु* अज्ञानस्येव कर्मणामपि स्वाभासप्रति-बन्धकत्वं नास्ति, अतः कथं सर्वानवभास इति? तत्राह—*नचाज्ञानस्येवेति*॥ *ननु* सर्वस्य साक्षिवेद्यत्वात्

## तत्त्वदीपनम्

सुषुप्त्यादावज्ञानस्य कल्पकाभावात्कथं तत्रावस्थानमिति टीकार्थानभिज्ञः शङ्कते—*कथमिति*॥ ब्रह्मा-नवभासानुपपत्त्या तत्राज्ञानसिद्धिः। नचान्यथासिद्धिः। तथाहि—किं भिन्नत्वादनवभासः? उत मिथ्याज्ञानात्? आहो तत्संस्कारात्? अथवाऽग्रहणात्? किं वा कर्मणः? उतान्यस्मात्? इति विकल्प्याद्यं निरस्यति—*न तावदिति*॥ नच—अनन्यनिमित्तत्वाद्धित्यत्रास्य कल्पस्य निरस्तत्वात् पुनस्तन्निरसनमनुपपन्नमिति—शङ्क्यम्; मतभेदेन पुनर्निरास-सम्भवादित्यर्थः। द्वितीयं दूषयति—*नापीति*॥ सुषुप्तेः सर्वकार्यप्रविलयरूपत्वात्तत्र मिथ्याज्ञानाभाव इत्यर्थः। तृतीयं दूषयति—*नापि तत्संस्कारेति*॥ प्रतिबन्धकत्वाभावे हेतुमाह—*सत्स्वपीति*॥ विमतः, न तत्त्वा-वभासप्रतिबन्धकः, संस्कारत्वात्; रजतभ्रमसंस्कारवदित्यर्थः। चतुर्थं दूषयति—*नाप्यग्रहणेति*॥ किमग्रहणं स्वरूपग्रहणस्याभावः? उत आगन्तुकस्य? नाद्य इत्याह—*स्वरूपेति*॥ स्वरूप इति हेतुगर्भविशेषणम्। द्वितीयं प्रत्याह—*स्वयंप्रकाशमान इति*॥ कादाचित्कग्रहणाभावेऽप्यात्मनः स्फुरणान्न तस्य प्रतिबन्धकत्वमित्यर्थः। पञ्चमं निरस्यति—*नापीति*॥

अनवच्छिन्नाऽऽनन्दात्मचैतन्यस्यानवभासप्रसञ्जनमिष्टमिति शङ्कां निरस्यति—*अणुमात्रस्येति*॥ अज्ञान-प्रतिबन्धे सत्यपि यथा चिन्मात्रावभासस्तथा, तथा कर्मप्रतिबन्धपक्षेऽपीत्याशयेन शङ्कते—*अज्ञानेऽपीति*॥ वैषम्यान्नैतदित्याह—*न तस्येति*॥ अज्ञानस्य चित्प्रतिभास्यत्वान्न चित्प्रतिबन्धकत्वमित्यर्थः। स्वं विषयो यस्य चैतन्यावभासस्य स तथोक्तः। कर्मणामपि चिद्भास्यत्वान्न चित्प्रतिबन्धकत्वमित्याशङ्क्य, किमेतत्त्वन्मतमाश्रित्यो-

## पञ्चपादिकाविवरणम्

नच कर्माणि स्वाश्रयावभासविरोधीनीति प्रमाणमस्ति । संस्कारत्वाच्च कर्मणां भ्रान्तिसंस्कारवदप्रतिबन्धकता । तस्मात् सुषुप्तादौ स्वरूपानवभासव्यवहारोऽग्रहण-मिथ्याज्ञान-तत्संस्कार-कर्मभ्योऽन्यदेव किंचित्प्रतिबन्धकमज्ञानं कल्पयतीत्यर्थः । *ननु* द्रव्यान्तरमेव प्रतिबन्धकं कल्प्यताम्, किमज्ञानकल्पनयेति, नैतत् ; ब्रह्मज्ञानात्प्रतिबन्धनिवृत्तिमन्तरेण स्वविषयावभासायोगात्, ज्ञाननिवर्त्यस्य चाज्ञानत्वात् ॥

## ऋजुविवरणम्

कर्मणामपि साक्षिवेद्यत्वम्, तथाच सति किञ्चित्प्रकाशते, किंचित्प्रतिबध्यते, इत्याशङ्क्याह—*नच कर्माणीति* ॥ कर्मणां निश्चिते प्रतिबन्धकत्वे कथंचिदेवं कल्प्येत, तदेवासिद्धमिति भावः । *ननु* अनवभासे किञ्चित्कारणं कल्पनीयम्, तत्र कर्मणां सर्वकारणत्वात्तेषामेव कारणत्वम् ; क्लृप्तत्वादित्याशङ्क्याह—*संस्कारत्वादिति* ॥ स्वपक्ष-

## तत्त्वदीपनम्

च्यते ? उत मन्मतमिति विकल्प्याऽऽद्यं प्रत्याह—*न चाज्ञानस्येति* ॥ फलोदयानुपपत्तिगम्यत्वात्कर्मणामित्यर्थः । द्वितीयं प्रत्याह—*नचेति* ॥ न केवलं प्रतिबन्धकत्वे मानाभावः, अस्ति वैपरीत्ये मानमित्याह—*संस्कारत्वादिति* ॥ विमतानि, न प्रतिबन्धकानि, संस्कारत्वात् ; भ्रान्तिसंस्कारवत् । नचासिद्धिः ; कर्मशब्देन यागादिसूक्ष्मरूपाभिधानादित्यर्थः । प्रतिबन्धकान्तरस्य चानिरूपणादनादिभावरूपाज्ञानमेष्टव्यमित्याह—*तस्मादिति* ॥ अखण्डतमोगुणस्य तत्प्रतिबन्धकत्वान्न परिशेषादज्ञानसिद्धिरिति शङ्कते—*ननु द्रव्यान्तरमिति* ॥ प्रमाणाभावान्नैवमित्याशङ्क्य, "ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युते"त्युभयसिद्धस्य तमसः प्रतिबन्धकत्वसम्भवान्नाज्ञानकल्पनमित्याह—*किमज्ञानेति* ॥ विकल्पासहत्वान्नैवमित्याह—*नैतदिति* ॥ द्रव्यान्तरं नित्यम् ? अनित्यं वा ? नाद्य इत्याह—*ब्रह्मेति* ॥ कुम्भप्रतिपत्तिप्रतिबन्धकसंतमसध्वंसे कुम्भोपलम्भवत् प्रतिबन्धकभङ्गे ब्रह्मप्रतिपत्तिर्वक्तव्या, नच नित्यत्वे तद्भङ्गः सुकर इत्यर्थः । द्वितीयेऽपि तत्किं कर्मणा निवर्त्यते ? उत ज्ञानेनेति ? नाद्यः ; मानाभावात्, अयुक्तेश्चेत्यभिप्रेत्य द्वितीयं दूषयति—*ज्ञानेति* ॥

## वार्तिकम्

ज्ञानयोरप्यविवेक इति चेत्, न ; एकस्मिन्नपि घटादावविविक्तेऽर्थे विविक्तानेकज्ञानदर्शनात्, अनेकस्मिन्नपि विविक्तेऽर्थेऽविविक्तसमूहालम्बनज्ञानदर्शनाच्च । नार्थाविवेकेन ज्ञानाविवेकः संभवति ; उभयतो व्यभिचारात् । कथं वाऽर्थयोरप्यविवेकस्तव मते संभवति ? ग्रहण-स्मरणाभ्यां तयोः स्वरूपग्रहात् । स्वरूपग्रहेऽपि विशेषो न गृहीत इति चेत्, मा गृह्यताम् ; किं तावता ? स्वरूपभेदस्य तु गृहीतत्वाद्विवेकावश्यंभावात् । न हि स्वरूपातिरिक्तो वैधर्म्यं भेदस्त्वयाऽङ्गीक्रियते, येन तदग्रहादविवेकः स्यात् । तदङ्गीकारेऽपि न भवत उक्तदोषान्निस्तारं पश्यामः ; स्मृतिविषयाद्रजताद्वैधर्म्यस्यापि पुरोदेशवर्तित्वरूपेदंत्वस्य शुक्तौ ग्रहात् । न हि स्मृते कदापि पुरोदेशवर्तित्वं गृहीतं भवति ; स्मृतित्वभङ्गापत्तेः । स्मृत्या रजते तदग्रहेऽपि प्रत्यक्षेण तद्विषये तस्मिन् तद्ग्रहादिदंत्वस्य तत्रापि सत्त्वेन न तद्विधर्मतेति चेत्, न ; शुक्तिगतेदंत्वाद् रजतगतेदंत्वस्य भिन्नत्वात् तद्विधर्मत्वोपपत्तेः । न हि पुरोवर्तित्वमनुगतमेकमस्ति, येन तत्साधर्म्यं स्यात् ; शुक्ति-रजतयोः पुरोदेशसंयोगयोर्भिन्नत्वात् । संयोगयोरस्ति संयोगत्वेन साधर्म्यमिति चेत्, किमागतं शुक्ति-रजतयोः ? परम्परासम्बन्धाया जातेरेवोपाधित्वादस्ति तथाऽपि परम्परया साधर्म्यमिति चेत्, एवं तर्हि सर्ववैधर्म्योच्छेदप्रसङ्गः ; परम्परया सर्वस्य सर्वसाधर्म्यकल्पनासंभवात् । अथ इदंत्वयोर्भिन्नत्वेऽपि सादृश्यादविवेक इति चेत्, न, सादृश्यस्याविवेकाहेतुत्वात् ;

### पञ्चपादिकाविवरणम्

अत्र कश्चित्—भेदाभेदाभ्यां सर्वसंकरवादी वेदान्तार्थगहनसम्प्रदायहीनो दुर्ज्जनरमणीयां वाचं जल्पति—न किलाग्रहण-मिथ्याज्ञान-तत्संस्कारेभ्योऽन्यत् सकलसंसारबीजभूतमवस्थात्रयेऽप्यनपाय्याऽऽसंसारविमोक्षादृण्डायमान-

### ऋजुविवरणम्

साधनं कृत्वा परपक्षं दूषयितुमाह—*अत्र कश्चिदिति* ॥ वेदान्तार्थश्चासौ गहनश्चेति वेदान्तार्थगहनः, तत्र संप्रदायहीनः। अथवा—वेदान्तार्थे गहनः संप्रदायहीनः, गहनश्चासौ संप्रदायहीनश्चेति विग्रहः। सम्यक् संप्रदायशून्य]

### तत्त्वदीपनम्

तत्र स्वपक्षं प्रसाध्य परपक्षं प्रतिक्षेप्तुं तमुत्थापयति—*अत्रेति* ॥ भाट्टमताद्विशेषमाह—*सर्वेति* ॥ पञ्चस्थलेष्वेव भेदाभेदौ भाट्टमते, अस्य तु सर्वत्रेति विशेषः। जल्पने हेतुमाह—*वेदान्तार्थेति* ॥ वेदान्तव्याख्यातृत्वात्तस्यापि संप्रदायवित्त्वम्, तत्राह—*गहनेति* ॥ वेदान्तार्थश्चासौ गहनश्चेति वेदान्तार्थगहनः, तत्र संप्रदायहीन इत्यर्थः। वेदान्तार्थे गहनो यः संप्रदायस्तद्धीन इति वा विग्रहः। तर्हि तज्जल्पननिरासप्रयासो मुधा, तत्राह—*दुर्जनेति* ॥ *दुर्जनाः=श्रौत-स्मार्तमार्गाननुसारिणः। जल्पनमाह—*न किलेति* ॥ संसारकार्यानुपपत्त्याऽज्ञानं कल्प्यते, इत्याशङ्क्य परमार्थत्वान्न तस्याज्ञानकार्यत्वमित्याह—*सकलेति* ॥ "सता सोम्य तदा सम्पन्नो भवति" इत्यादिवाक्यात् सुषुप्तौ ब्रह्मभावप्रतिपत्तेर्नाज्ञानलक्षणं प्रतिबन्धकमस्ति, ततश्च न तस्य संसारहेतुत्वमित्याह—*अवस्थात्रयेऽपीति* ॥ "एतं ब्रह्मलोकं न विदन्ति" "सति संपद्य न विदु"रिति चाज्ञानस्थितिप्रतिपत्तेर्वचनान्तरस्य च विक्षेपाभावाभिप्रायत्वादज्ञानस्य कथं संसारहेतुत्वाभाव इत्याशङ्क्याह—*आसंसारेति*॥ संसारविमोक्षात् प्रागविच्छिन्नम्, उत्तरकाले च विच्छिन्नमज्ञानं नेत्यर्थः। चित्प्रकाशस्याविरोधित्वाद् जडप्रकाशस्य च सुतरामविरोधित्वान्नाज्ञाननिवृत्तिसम्भव इत्यर्थः ॥

### वार्तिकम्

तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वस्य सादृश्यत्वात्, प्रत्युत सादृश्यग्रहे विवेकस्यैव संभवात्। अन्यथा गो-गवययोः सादृश्यग्रहेणाविवेकादुपमानोच्छेदापत्तेः। तवापि मते सादृश्यस्याविवेकाहेतुत्वे कथं भ्रमहेतुत्वमिति चेत्, न; संस्कारोद्बोधद्वारैव तस्य तथात्वकल्पनात्, नाविवेकद्वारा; अविद्याया एव तद्द्वारत्वात्। अधिष्ठानावृतिमन्तरेणान्याविवेकस्य भ्रमहेतोरनभ्युपगमात्, पराभ्युपगतविवेकाग्रहस्य प्रतिबन्धकाभावत्वेन कारणत्वानुपपत्तेरित्युक्तत्वाच्च। *एतेन*—शुक्तिरजतारम्भकशुक्ल-भास्वरद्रव्ययोः सादृश्यादविवेकः—*प्रत्याख्यातः* ॥ तस्मान्न शुक्तिरजतेदमंशयोरविवेकात्तयोरविवेकः। किञ्च कथं वेदंरजतविषये ग्रहण-स्मरणे प्रवर्तके भवतः? न तावत् प्रत्येकम्; अतिप्रसङ्गात्, अनिष्टेऽपीदमिति ज्ञानदर्शनात्, अतीतेऽपि रजते रजतमिति ज्ञानभावाच्च। नापि मिलिते; युगपद् ज्ञानद्वयासंभवेन तयोर्मेलनासंभवात्, परमते मनसः क्रमकारिकारणत्वात्। निरन्तरोत्पन्नयोस्तयोर्विनश्यदवस्थयोः प्रवर्तकत्वमिति चेत्, न; घट इति पट इति च तादृशघटपटज्ञानयोरप्येकतरस्मिन् प्रवर्तकत्वप्रसङ्गात्, सादृश्यज्ञानादिना व्यवधानेन तयोर्निरन्तरोत्पन्नत्वासंभवाच्च। अस्तु वा निरन्तरोत्पत्तिः; तथापि तादृशयोर्ज्ञानयोः कुत्रापि प्रवर्तकत्वादर्शनान्न तत्कल्पने प्रमाणमस्ति। दृष्टं सुरभि चन्दनमित्यत्रेति चेत्, न; तत्रापि ज्ञानैक्यस्य प्रदर्शितत्वात् ॥

*एतेन*—प्रत्यभिज्ञाया ग्रहण-स्मरणरूपज्ञानद्वयात्मत्वम्—*प्रत्युक्तम्*; तथा सति ग्रहण-स्मरणाभ्यां परस्परविषयानाकलनाद् न तया स्थायित्वसिद्धिः। *तद्विषयस्सन्नेवेति चेत्, न; तत्र वस्तुतो विद्यमानविषयत्वेऽपि तेन स्वविषयविद्यमानत्वस्याग्रहात्। न हि स्मरणं स्वविषयविद्यमानतां गृह्णाति;

## पञ्चपादिकाविवरणम्

मज्ञानं नामास्ति, किन्तु भ्रान्तिज्ञानमग्रहणं वाऽज्ञानम्—इति, *अयं प्रष्टव्यः*—केयं भ्रान्तिरिति ? अहंकारादिशरीरपर्यन्तेऽनात्मन्यात्मबुद्धिरिति चेत्, अहो विस्मरणशीलता सर्वत्र सङ्कीर्णचेतसः। खण्डो गौरित्यादिभेदाभेदप्रत्ययं प्रमाणमुपपादयन् 'अहं मनुष्यः' इति प्रत्ययं भेदाभेदविषयं किमित्युपेक्षसे? 'नाहं मनुष्यो ब्रह्मास्मी'ति प्रत्ययसामर्थ्यादिति चेत्, तन्न; 'नायं खण्डो गौः; किंतु मुण्डो गौरि'ति प्रत्ययेऽपि खण्ड-मुण्डाभ्यां गोत्वस्याभेदवत् शरीर-ब्रह्मभ्यां जीवस्याभेदप्रत्ययस्यापि प्रामाण्योपपत्तेः। इदं रजतवद् भ्रान्तिरिति चेत्, न; खण्डो गौरित्यत्रापि तथात्वप्रसङ्गात्, 'नायं खण्डो गौः, किंतु मुण्डः' इति व्यक्त्यन्तरे खण्डस्य गोत्वोपाधौ निषेधप्रत्ययसामर्थ्यात् तत्र व्यवहारानुच्छेदात् प्रामाण्यमिति चेत्, तत्—'अहं मनुष्यः' इत्यत्रापि तुल्यम्;

## ऋजुविवरणम्

इत्यर्थः। *इदं रजतवद्भ्रान्तिरिति*॥ *अयं भावः*—प्रतिपन्नोपाधौ निषेधाद्रजतमिथ्यात्ववज्जीवोपाधावेव निषेधान्मिथ्यात्वम्, खण्डे तु व्यक्त्युपाधौ निषेधादभ्रान्तित्वमिति। *ननु* खण्डे व्यक्त्यन्तरे निषेधादर्शनादभ्रान्तत्वमुक्तमित्याशङ्क्याह—*गोत्वोपाधाविति*॥ व्यक्त्यन्तरावच्छिन्नगोत्वोपाधौ निषेधो न व्यक्तौ; मुण्डव्यक्तौ खण्डत्व-

## तत्त्वदीपनम्

किं तर्ह्यनवभासनिमित्तमिति शङ्कते—*किंत्विति*॥ अग्रहणाद्येवानवभासनिमित्तमित्याह—*भ्रान्तीति*॥ चशब्दात्संस्कारस्याज्ञानत्वमुक्तम्। भ्रान्तेरज्ञानत्वे निरस्तेऽर्थात्तत्संस्कारस्याज्ञानत्वं निरस्तं स्यात्, अग्रहणं त्वयोग्यतया प्रतिषिद्धमित्यभिप्रेत्य भ्रान्तिं निरस्यति—*अयं प्रष्टव्य इति*॥ भिन्नाभिन्नविषयत्वेन सर्वप्रत्यययाथार्थ्यान्न भ्रान्तिसिद्धिरिति किंशब्दार्थः॥

प्रश्नं मत्वोत्तरमाह—*अहंकारेति*॥ सिद्धान्ती सोपहासमाशयमाविष्करोति—*अहो इति*॥ विस्मरणशीलत्वमाह—*खण्ड इति*॥ विमतम्, प्रमाणम्, भिन्नाभिन्नविषयत्वात्; खण्डो गौरिति प्रत्ययवदित्यर्थः। विमतम्, अप्रमाणम्, निषिध्यमानविषयत्वात्; इदं रजतमिति प्रत्ययवदित्यनुमानविरोधं शङ्कते—*नाहमिति*॥ निषिध्यमानविषयत्वमात्रं हेतुः ? उत प्रतिपन्नोपाधौ निषिध्यमानविषयत्वम् ? नाद्यः; व्यभिचारादित्याह—*तन्न, नायमिति*॥ द्वितीयमनुवदति—*इदंरजतवदिति*॥ इदमि प्रतिपन्नं रजतं तत्रैव निषिध्यते—नेदं रजतमिति यथा, तथाऽऽत्मनि प्रतिपन्नं मनुष्यत्वं तस्मिन्निषिध्यत इति तस्य भ्रान्तित्वम्। 'खण्डो गौरि'त्यस्य तु तद्वैपरीत्यान्न भ्रान्तित्वमित्यर्थः। एषोऽपि हेतुस्तत्र व्यभिचरतीत्याह—*न; खण्डो गौरिति*॥ गोत्वोपाधौ प्रतिपन्नस्य खण्डस्य न तत्र निषेधः, किंतु मुण्ड इति न तत्र व्यभिचार इत्याशङ्क्याह—*नायं खण्ड इति*॥ किं खण्डस्य केवलमुण्डे निषेधः ? उत गोत्वोपहिते ? नाद्यः; अप्रसक्तेः, 'इह भूतले घटो ने'त्यन्यत्र भूतलसंसृष्टतया प्रतिपन्नस्य स्मर्यमाणस्यान्यत्र निषेधो दृष्टः, नच खण्डः कदाचिदपि मुण्डे प्रसक्त इति कथं निषिद्ध्यते ? द्वितीये गोत्वोपहिते मुण्डे खण्डस्य निषेधसमये विशेषणीभूतगोत्वे निषेधः समाश्रितः स्यात्, यथेदमि प्रतिपन्नमिदंत्वोपहितशुक्तिव्यक्तौ निषिध्यते, तद्वत्। तथाच प्रतिपन्नोपाधौ निषिध्यमानविषयखण्डज्ञाने व्यभिचार इत्यर्थः। गोत्वमुपाधिर्यस्य व्यक्त्यन्तरस्य तद्गोत्वोपाधि, तस्मिन्निति विग्रहः। गोत्वमेवोपाधिर्गोत्वोपाधिस्तस्मिन्निति वा। अनुच्छिन्नव्यवहारत्वमुपाधिरिति चोदयति—*तत्रेति*॥ नायं खण्डो गौरिति निषेधप्रत्ययोत्तरकालमपि खण्डे गोव्यवहारो लक्ष्यते। नच तथा ब्रह्मसाक्षात्कारादूर्ध्वं मनुष्यत्वव्यवहार इत्यर्थः। साधनव्यापकत्वान्नायमुपाधिः साधुरित्याह—*तदहमिति*॥ साक्षात्कारोत्तरकालमपि प्रारब्धकर्मानुरोधादहं मनुष्य इति व्यवहारदृष्टेः साधनव्यापकत्वेन प्रामाण्यं स्यादित्यर्थः॥

## वार्तिकम्

तत्र तस्यौदासीन्यात्, अन्यथा स्मृतेः प्रत्यक्षतापत्तेः, रजतादिविषयत्वानुपपत्तेश्च। *एतेन*—अयमिति विद्यमानविषयकानुभवसमानविषयत्वात् स्मृतेरर्थात्तद्विषयविद्यमानत्वसिद्धिरिति—*अपा-

### पञ्चपादिकाविवरणम्

मोक्षावस्थायामपि सर्वात्मत्वात् तव सर्वशरीरेन्द्रियाद्यभिमानव्यवहारानुच्छेदात्। जातिव्यक्ति-गुणगुणि-कार्यकारण-

### तत्त्वदीपनम्

प्रारब्धकर्मसमाप्तेरूर्ध्वं व्यवहारस्योच्छेदान्न साधनव्यापकत्वमित्याशङ्क्याह—*मोक्षेति* ॥ "तत् केन कं पश्येत्" इति मुक्तौ सकलव्यवहारोच्छेदप्रतिपत्तेः कथमनुच्छेदः? इत्याशङ्क्यास्मन्मते सर्वस्यावोधविलासत्वात्तद्ध्वंसे ध्वंसः, तव तु समस्तस्य परमार्थत्वादनुच्छेद इत्याशयेनाह—*तवेति* ॥ भिन्नाभिन्नविषयत्वमसिद्धमिति शङ्कते *जातिव्यक्तीति* ॥

### घातिकम्

स्तम्* ; स्वप्रकाशयोर्ज्ञानयोः परस्परं स्वेन ज्ञानान्तरेण वा समानविषयत्वग्रहासंभवादर्थात् तद्ग्रहासिद्धेः। तस्मात् स्थायित्वमभ्युपगच्छता पूर्वानुभवसंस्कारेन्द्रियाभ्यामुभयकालानुयायिविषयकमेकमेव 'सोऽयम्' इति ज्ञानं जायत इत्यकामेनाप्यभ्युपगन्तव्यम्॥ अस्त्वेवमनात्मनि ; तद्व्यतिरेकेणानात्मनः स्थायित्वा-सिद्धेः, नात्मनि तु तदभ्युपगन्तव्यम्। तद्व्यतिरेकेणापि ग्रहण-स्मरणाभ्यामेव तत्स्थायित्वसिद्धेः। तथाहि—स्मरणविषयपूर्वानुभवाश्रयतयाऽऽत्मनः सिद्धः पूर्वकालसम्बन्धः, स्मरणाश्रयतया चैतत्काल-सम्बन्ध इत्युभयकालसम्बन्धाद् आत्मनः स्थायित्वसिद्धिरिति चेत्, न ; स्मरणस्य पूर्वानुभवविषय-विषयकत्वनियमात्, पूर्वानुभवस्य तु स्वाविषयकत्वेन स्मृतिविषयत्वानुपपत्तेः। *ननु* पूर्वानुभवस्य स्वाविषयकत्वेऽपि स्वप्रकाशतया तत्र भानात् पूर्वानुभवे भासमानत्वस्यैव स्मृतिविषयत्वे प्रयोजकत्वात्, न तद्विषयतया भासमानत्वस्य ; गौरवात्, अतोऽस्ति तद्बीजपूर्वानुभवस्यापि स्मृतिविषयत्वमिति चेत्, न ; तथा सत्यात्मनोऽपि स्मृतिविषयत्वप्रसङ्गः ; तस्याप्याश्रयतया पूर्वानुभवे भासनात्। न चैतदिष्टम् ; अपसिद्धान्तापत्तेः, आत्मनो ज्ञानविषयत्वानङ्गीकाराद् अनात्मज्ञानाश्रयतयैव तज्-ज्ञानाङ्गीकारात्। अपिच विद्यमानं हि स्वप्रकाशं ज्ञानमाश्रयतयाऽऽत्मानं भासयति, नाविद्यमानम् ; तस्यास्वप्रकाशत्वेन स्मृतिविषयत्वानुपपत्तेः। तथाच विद्यमानस्य पूर्वानुभवस्य स्मृतिविषयत्वेऽपि न स्वाश्रयतया स्वकालसम्बन्ध्यात्मभासकत्वं स्मृतिकालेऽस्ति। एवं च सति नानात्मस्मृत्याश्रय-तयाऽऽत्मन उभयकालसम्बन्धसिद्धिः। अन्यदृष्टस्यान्येनास्मरणात् तदन्यथानुपपत्त्या तयोरेककर्तृ-कत्वसिद्धेस्तत्सिद्धिरिति, चेत्, सत्यं सिद्धयति तदर्थापत्त्या ; किमागतं प्रत्यक्षेण तत्स्थायित्वानु-भवस्य? अनुभूयते च प्रत्यक्षेण स्थायित्वम्—'योऽहं ह्यो रूपमद्राक्षम्, सोऽहमद्य स्मरामी'ति। तस्मादात्मनो ग्रहण-स्मरणाभ्यां प्रत्यक्षस्थायित्वव्यवहारसमर्थनार्थं प्रवृत्तस्य तवार्थापत्तिं प्रदर्शयतो लज्जैव दूरं गता, यतोऽर्थान्तरं नाम निग्रहस्थानं पश्यन्नपि न गणयसि। तस्माद् न कुत्रापि ग्रहण-स्मरणाभ्यां विशिष्टव्यवहारोऽस्तीति सिद्धम्। एवं च सति ज्ञानप्रमाणत्वकल्पनं निर्मूलमेव। अपिच कुत्रचिद् ज्ञानद्वयं प्रवर्तकम्, कुत्रचिदेकमित्यननुगमः। इदंरजतज्ञानत्वेनानुगमान्नैवमिति चेत्, न ; अतिप्रसङ्गात्, 'नेदं रजतम्' इति ज्ञानस्यापि प्रवृत्तिहेतुत्वापत्तेः, तत्रापीदंरजतविषयकज्ञानस्य विद्यमानत्वात्। भेदग्रहस्तु तत्र प्रतिबन्धक इति चेत्, सत्यं प्रतिबन्धसत्त्वे कार्यं न जनयेत्, वनस्थ-दण्ड इव घटम्, तज्जननयोग्यता तु दण्डस्येव तस्यापि स्यादेव ; हेतुतावच्छेदकस्य गृहीतत्वात्। नचैवं सति तस्य प्रवृत्तिविरोधित्वेन तद्धेतुत्वं स्वतोऽपायि ; अनङ्गीकारात्, प्रवृत्तिबाधकत्वा-भ्युपगमाच्च, अपिच कथमेकस्यैव 'नेदं रजतमि'ति ज्ञानस्य प्रतिबध्यप्रतिबन्धकभावः स्यात्? तद्भावस्य

### पञ्चपादिकाविवरणम्

विशिष्टस्वरूपांशांशि-सम्बन्धा यत्र विद्यन्ते, तत्र भेदाभेदौ, न शरीरात्मनोः ; तेषामभावादिति चेत्, तर्हि शरीर-शरीरिसम्बन्धोऽपि गुणगुण्यादिवद् भेदनिमित्तं किं न स्यात् ? अन्यथा सर्वसङ्करवादितया क्षपणकशिष्यता चिरकालसमुपार्जिता बाध्येत । अस्ति च चेतनस्वरूप-शरीरयोः कार्यकारणभावः ; चेतनस्वरूपांशस्य ब्रह्मत्वात्, अतो न ते भ्रान्तिरस्ति॥

### ऋजुविवरणम्

प्रतीत्यभावात्, तदुपाधिनिषेधायोगादित्यर्थः । *तर्हि शरीरशरीरीति* ॥ अयं भावः*—सामानाधिकरण्याद् गुण-गुण्यादिषु पञ्चसु तादात्म्यं निश्चीयते, तदत्राप्यस्तीति शरीरशरीरित्वनिमित्तं तादात्म्यमभ्युपगन्तव्यमिति । *ननु* अन्यथासिद्ध्यप्रतिपत्त्या गुण-गुण्यादिषु तादात्म्यमङ्गीकृतम्, अत्र तु तेन विनापि कथंचित्प्रतीतिघटनान्न तदभ्युपगम्यत इत्याशङ्क्याह—*सर्वसंकरेति* ॥ क्षपणकाः सर्वत्र तादात्म्यं वदन्ति । तदनुसारिणापि तथैवाभ्युपगन्तव्यमिति भावः । *ननु*न्यायसहकृतप्रतीतिबलात्तादात्म्यं निश्चीयते, सा च पञ्चस्वेव, नेतरत्र ; नियामकाभावेनातिप्रसङ्गादित्याशङ्क्याह—*अस्ति चेति* ॥

### तत्त्वदीपनम्

अत्यन्तभेदेऽत्यन्ताभेदे च जाति-व्यक्त्यादिभावस्यासंभवाद् भेदाभेदावित्यर्थः । "तेषामभावादि"त्यस्यैषोऽर्थः—न तावच्छरीरात्मनोर्जाति-व्यक्तिता, उभयोर्द्रव्यत्वात्, अत एव न गुण-गुणिभावः ; नापि कार्य-कारणता ? शरीरस्य भौतिकत्वात्, नापि विशिष्टस्वरूपता ; दण्डवैशिष्ट्यस्य चैत्रतन्त्रतावत् शरीरस्यात्मातन्त्रत्वात्, नचांशांशिता ; आत्मनो निरवयवद्रव्यत्वादिति । किं तेषां मिलितानां प्रयोजकत्वम् ? उत प्रत्येकम् ? नाद्यः ; मेलनस्य क्वचिदप्यभावादिति चेतसि निधाय चरमं निरस्यति—*तर्हि शरीरेति* ॥ नच प्रयोजकगौरवप्रसङ्गः ; त्वयापि तत्स्यैष्टव्यत्वादित्यर्थः । शरीरात्मनोर्भेदाभेदानङ्गीकारे राद्धान्तविरोधोऽपीत्याह—*अन्यथेति* ॥ जातिव्यक्त्यादीनामन्यतमस्य प्रयोजकत्वमित्यभिनिवेशश्चेत्सोऽपि सुसंपाद इत्याह—*अस्ति चेति* ॥ सकलस्य ब्रह्मकार्यत्वान्न जीवकार्यतेत्याशङ्क्य, जीवस्य तदभेदाद् जीवकार्यत्वमप्यस्तीत्याह—*चेतनेति* ॥ असिद्ध्यादिदोषवैधुर्यादनुमानं निरवद्यमित्युपसंहरति—*अत इति* ॥ अथवा—असिद्ध्यादिदोषवैधुर्यालोचनयाऽपि भ्रान्तित्वं प्रतिक्षिपति—*अत इति* ॥

### वार्तिकम्

भिन्नाश्रयत्वात् । यदि स्यात्, ततो निवृत्तिरपि न स्यात्, प्रवर्तकांशेन निवर्तकांशस्यापि प्रकरणसमवत् प्रतिबन्धसंभवात्, विनिगमकहेत्वभावात् । अथैतद्दोषजिहीर्षया स्वाभावाविषयकेदंरजतज्ञानत्वेन प्रवर्तकत्वं वाच्यम् ; तथाच सति गौरवम् । अपिच प्रवृत्तिविशेष्य इष्टतावच्छेदकवैशिष्ट्यावगाहि ज्ञानं प्रवर्तकम्, नान्यत् ; अतिप्रसङ्गादिति सर्वेषामभ्युपगमः । तथाच "यत्सामान्ययोः कार्यकारणभावग्रहः, तद्विशेषयोरपि तथा" इति न्यायाद् इदमि रजतत्ववैशिष्ट्यावगाहि ज्ञानं तदर्थप्रवृत्तौ कारणं युक्तम् ; अनुगमात्, न तद्वैशिष्ट्यज्ञानद्वयम् ; उक्तन्यायविरोधात्, उक्ताननुगमगौरवाभ्यां च । *एतेन*—'तद्धेतोरेवे'ति न्यायात् पराभ्युपगत 'विशिष्ट' इति ज्ञानहेतोर्ज्ञानद्वयादेव विशिष्टव्यवहारसिद्धेर्न तत्कल्पनं युक्तम्, प्रमाणाभावादिति—*अपास्तम्* ; तत्कल्पनामन्तरेण विशिष्टव्यवहारस्यैवासिद्धेः । नचाधिष्ठानज्ञानवदारोप्यज्ञानमपि भ्रमहेतुरित्यङ्गीकृतमस्माभिः, येनोक्तन्यायानवतारोऽपि संभवति ; तत्संस्कारहेतुत्वस्यैव वक्ष्यमाणत्वात्, विशेषणज्ञानस्य विशिष्टव्यवहाराहेतुत्वात्, उभयभानसामग्रीत एव तत्सिद्धेः, "तद्धेतोरि"ति न्यायस्य निरङ्कुशतया तत्रैव प्रवृत्तेः । अपिच त्वयापि विशिष्टप्रवृत्ति-

## पञ्चपादिकाविवरणम्

किंच भ्रान्तिज्ञानमन्तःकरणपरिणामश्चेत्, तदाऽऽत्माश्रयाऽविद्या न स्यात्, अन्तःकरणपरिणाम एवात्मन्यध्यस्त इति चेत्, तथाऽप्यन्यथाख्यातिवादिनः संसर्गस्य शून्यत्वादात्माविद्यासम्बन्धो न स्यात्। न चात्मपरिणामो भ्रान्तिः; अपरिणामित्वात्। नच ज्ञानगुणस्य द्रव्यस्य पुनर्ज्ञानगुणान्तराकारेण परिणामः सम्भवति; अवान्तरजातीयस्यैकस्मिन् द्रव्ये गुणद्वयस्य युगपत्समवायायोगात्, नहि पटे शौक्ल्यं युगपत्स-

## ऋजुविवरणम्

*ननु* मुख्यकार्यकारणभावे सत्येव तादात्म्यम्, नान्यत्र; अतिप्रसङ्गात्, अतश्च भ्रान्तिरेवेत्याशङ्क्याभ्युपगम्य दूषणमाह—*किंच भ्रान्तिज्ञानमिति*॥ कथमपरिणामित्वमित्याशङ्क्याह—*नच ज्ञानगुणस्येति*॥ कथमयोग

## तत्त्वदीपनम्

'अहं मनुष्यः' इत्यादिप्रत्ययानां याथार्थ्यान्न भ्रान्तित्वमित्यवोचत्, संप्रति समवायिकारणपर्यालोचनयाऽपि भ्रान्तित्वं प्रतिक्षिप्यत इत्याह—*किंचेति*॥ किं भ्रान्तिरन्तःकरणपरिणामः? आहो आत्मपरिणामः? इति विकल्प्याद्यमनूद्य दूषयति—*भ्रान्तिज्ञानमित्यादिना*॥ मृज्जस्य घटस्य तन्त्वनाश्रयत्ववदात्माश्रयत्वमज्ञानस्यान्तःकरणपरिणामत्वे न स्यादित्यर्थः। जपाकुसुमलौहित्यस्य स्फटिकेषु स्फुरणवदात्मन्यज्ञानप्रतिभाससंभव इति शङ्कते—*अन्तःकरणेति*॥

भेदाभेदमतेऽध्यास एव न संभवतीत्यभ्यधायि, संप्रति तमङ्गीकृत्योत्तरमाह—*तथापीति*॥ भ्रान्तेरात्मसंबन्धः सन्? असन् वा? न तावत्सत्त्वमित्याह—*अन्यथाख्यातीति*॥ नाप्यसत्त्वम्; परोक्षप्रत्ययानुपपत्तेरित्यर्थः। द्वितीयं प्रत्याह—*नचेति*॥ निरवयवद्रव्यत्वेन परिणामायोग्यत्वादिति हेत्वर्थः। परिणामत्वमङ्गीकृत्य ज्ञानान्तराकारेण परिणामोऽयुक्त इत्याह—*न चेति*॥ सुप्तोत्थितस्य 'न किंचिदवेदिषमि'ति परामर्शाद् ज्ञानमुन्नेयम्, तच्च नित्यम्; करणविरमेऽपि भावात्, तथा चैकज्ञानाश्रयस्य ज्ञानान्तराऽऽकारेण न परिणतिरित्यर्थः। त्वन्मते ज्ञानस्य गुणत्वम्? उत द्रव्यत्वम्? नाद्य इत्याह—*ज्ञानगुणस्येति*॥ नित्यज्ञानगुणस्येत्यर्थः। प्रतिज्ञातेऽर्थे हेतुमाह—*एकस्मिन्निति*॥ एकद्रव्याश्रितरूपरसाख्यगुणद्वयव्यावृत्त्यर्थमवान्तरेति विशेषणम्। कटकाधारहेम्नस्तदैव रुचकाकारानाधारत्ववन्नित्यज्ञानाश्रयस्य ज्ञानान्तराश्रयत्वानुपपत्तेर्द्रव्यत्वपक्षोऽपि दुर्युक्तिक इत्यर्थः। भ्रान्ति-

## वार्तिकम्

हेतुत्वसिद्ध्यर्थं ज्ञानयोरसंसर्गाग्रहाद् मानस एकत्वाभिमानोऽङ्गीक्रियते। सोऽयं भवतो बकबन्धनप्रयासः। अतो वरं सर्वजनीनप्रतीतिसिद्धमर्थयोरेवैकं ज्ञानमभ्युपगम्यताम्, किं कुसृष्ट्या? न हि रजत इव शुक्तावपि 'इदं रजतमि'ति प्रतीतौ लौकिकाः परीक्षकाश्च कंचिदपि विशेषं प्रतियन्ति, स्वभावं प्रच्छादयतो भवतो मन्दबुद्धेरन्ये। नच—व्यवहार एव तथा न ज्ञानमिति—वाच्यम्; व्यवहारस्यापि व्यवहर्तव्यज्ञानपूर्वकत्वात्तादृशज्ञानमन्तरेणासिद्धेः। अविवेकश्च न व्यवहारः। नचाविवेकोऽपि संभवति, इत्युक्तमेवाधस्तात्। अपिच स्मरणाद्विविच्य स्वसाक्षिकमेव 'इदं रजतमि'त्यनुभवो भासते, तत्कुतो रजतस्मरणप्रसङ्गः? दोषेण स्मरणाभिमानप्रमोषाद् ग्रहणेनाविवेकात् स्मरणमेव तथा भासत इति चेत्, न; विकल्पासहत्वेन स्मरणाभिमानप्रमोषासिद्धेः। *तथाहि*—कस्तावत् स्मरणाभिमानो नाम? किं स्मृतिरेव? किं वा तद्गतो विशेषः? तद्ग्राह्यगतो वा? तत्फलगतो वा? आहो स्वित् स्मरामीति तद्विषयाभिमानो वा? नाद्यः; तथाऽऽत्मनि स्मृतेरेवानुत्पत्ते रजतावभासो न स्यात्। द्वितीयेऽपि स किं पूर्वानुभवविषयत्वम्? तद्देशकालविषयत्वं वा? स इत्याकारो वा? नाद्यः; स्मृतेः पूर्वानुभवविषय-

## पञ्चपादिकाविवरणम्

मवैति । तस्मादनादिसिद्धमिथ्याज्ञानानभ्युपगमे न काचित्सर्वसङ्करवादिनोऽविद्या सम्भवति । अनादिमिथ्याज्ञानसम्बन्धोऽप्यात्मन्यज्ञानवत्काल्पनिकत्वादाकाशकार्ष्ण्यवदात्मनः कूटस्थतां न विहन्तीत्यलमतिप्रसङ्गेन । अत्र च प्रत्यक्षानुमानार्थापत्तयोऽनादिभावरूपाज्ञाने प्रमाणत्वेनोपन्यस्ताः । तत्रैवंभूतेन कारणरूपेण कार्य-

## ऋजुविवरणम्

इत्याशङ्क्यादर्शनादित्यभिप्रायेणाह—*नहि पट इति* ॥ *ननु*आत्मनो मिथ्याज्ञानसंबन्धोऽङ्गीकर्तुं न शक्यते ; कूटस्थत्वात्, तत्संबन्धे च विकारित्वप्रसङ्गादित्याशङ्क्याह—*अनादिमिथ्याज्ञानेति* ॥

*ननु*उपरिष्टादप्यज्ञानसाधनं क्रियते, अतः पौनरुक्त्यमित्याशङ्क्याह—*अत्र चेति* ॥ अज्ञानस्वरूपसाधनमत्र क्रियते, तत्र त्वधिष्ठानद्रष्टृप्रमाणविभागाभावाद् दोषत्रयाभावान्नाध्यास इत्याक्षिप्ते, अज्ञानस्यैव प्रमाणादिदोषत्वं तद्विभागहेतुत्वं चोपपद्यत इत्युक्तम्—"उच्यते, विद्यत एवे"त्यादिना । अत्राज्ञानरूपेण नैसर्गिकत्वमित्युपसंहर्तुमज्ञानसद्भाव उक्तं प्रमाणं व्यवहितत्वात्परामृशति—*अत्र चेति* ॥ यद्वाऽर्थापत्त्यनुमानप्रत्यक्षाणामसाधारणविषयभेदमाह—*अत्र च प्रत्यक्षेति* ॥ अत्र टीकाकारेणाविरोधेनोपसंहारः कृतः ; सोऽनुपपन्नः ; अज्ञानसाधनमात्रेण विरोधस्यापरिहृत-

## तत्वदीपनम्

ज्ञानासंभवेऽपि संस्कारोऽग्रहणं वा किं न स्यादिति शङ्कामुपसंहारव्याजेन निरस्यति—*तस्मादिति* ॥ मिथ्याज्ञानाभावान्न तत्संस्कारसंभवः, नाप्यग्रहणम् ; ग्रहणस्य स्वभावतया तदभावासंभवादित्यर्थः ॥

कूटस्थेऽज्ञानसंबन्धासंभवमाशङ्क्याह—*अनादीति* ॥ अथवा—आत्मन्यज्ञानाभ्युपगमे ज्ञानेन निरासो वक्तव्यः, नच स सम्भवति ; धर्मान्यथात्वे आम्रफलवद्धर्मिण्यन्यथात्वप्रसक्तेः, इत्याशङ्क्य धर्मस्य समारोपितत्वान्मैवमिति परिहरति—*अनादीति* ॥ इष्टानिष्टसाधनज्ञानपूर्विके प्रवृत्तिनिवृत्ती, ते च न सर्वसंकरमते संभवतः ; संकीर्णत्वात्सर्वस्येत्यादिदोषग्रहग्रस्तत्वाज्जीवनमपि दुर्लभमित्यभिप्रेत्योपसंहरति—*अलमतिप्रसङ्गेनेति* ॥ अज्ञानस्योत्तरत्रापि साध्यमानत्वात्पौनरुक्त्यमित्याशङ्क्य परिहरति—*अत्रेति* ॥ उत्तरत्र प्रमाणान्तरस्योच्यमानत्वान्न पौनरुक्त्यमित्यर्थः । प्रागसतो निमित्ताधीनसत्ताकत्वं नैमित्तिकत्वमिति द्वितीयं कल्पं निराकुर्वन्नज्ञानसाधनफलमाह—*तत्रैवंभूतेनेति* ॥ टीकायामतःशब्दो मिथ्याज्ञाननिमित्त इत्यनेन संबध्यते, कार्यस्य सुषुप्त्यादौ कारणात्मनाऽवस्थितस्य पुनः समयान्तरेऽभिव्यक्तिरतःशब्दार्थः ॥

## वार्तिकम्

विषयकत्वनियमेन पूर्वानुभवविषयत्वासिद्धेरुक्तत्वात् । *एतेन*—तद्ग्राह्य-फलगतौ विशेषौ—*निरस्तौ* ; अनुभवग्राह्य-फलयोरेव तद्ग्राह्यफलत्वात् । नापि द्वितीय-तृतीयौ ; प्रत्यभिज्ञाभ्रमे तद्रूपयोः सत्त्वेऽपि विवेकाभावदर्शनात् । नापि पञ्चमः ; उक्ताभिमानस्य ग्रहण-ग्रहीतृ-ग्राह्येभ्यः स्मरण-स्मर्तृ-स्मार्य-विवेकाधीनत्वेन तदधीनविवेकासिद्धेः, तद्विवेकमन्तरेण तत्र स्मरामीत्यभिमानानुवेधानुपपत्तेः । तस्मान्न त्वदभिप्रेतस्मरणाभिमानं पश्यामः, यत्प्रमोषादविवेकेन 'स्मरणस्य' ग्रहणवदवभासनमिति । *एतेन*—दोषेण तत्ताप्रमोषो भवतीत्यपि—*प्रत्याख्यातम्* ; सत्यपि दोषे प्रत्यभिज्ञाभ्रमस्थले तददर्शनात्, असत्यपि च दोषे पदजन्यपदार्थस्मृतौ तद्दर्शनात् । *ननु*—एवं तर्हि स्मृतेरत्रैव यावदनुभूतविषयत्वनियमो भज्येत, शक्तिग्रहरूपपूर्वानुभवविषयतद्देश-काल-तच्छक्तीनां पदार्थस्मरणेनाविषयीकरणात्, विषयीकरणे वा तेषामपि पदार्थत्वप्रसङ्गात् । नच—अनुभूतविषयत्वमेव स्मृतेर्नियम्यते, न यावदनुभूतविषयत्वमिति—वाच्यम् ; तथा सति विनिगमककारणभावाद् न्यूनविषयत्ववदधिकविषयत्वस्यापि सम्भवादुक्त-

### पञ्चपादिका

पुनरुद्भवति, इत्यतो नैसर्गिकोऽप्यहङ्कार-ममकारात्मको मनुष्याद्यभिमानो लोकव्यवहारो मिथ्याऽज्ञान-निमित्त उच्यते, न पुनरागन्तुकत्वेन ; तेन नैसर्गिकत्वं नैमित्तिकत्वेन न विरुध्यते ॥

*"अन्योन्यधर्मांश्चे"ति* पृथग्धर्मग्रहणं धर्ममात्रस्यापि कस्यचिदध्यास इति दर्शयितुम् । *इतरेतराविवेकेनेति* ॥ एकतापत्त्यैवेत्यर्थः । कस्य धर्मिणः कथं कुत्र चाध्यासः ? धर्ममात्रस्य वा क्वाध्यासः ? इति भाष्यकारः स्वयमेव वक्ष्यति । "अहमिदं ममेदमि"त्यध्यासस्य स्वरूपं दर्शयति । अहमिति

### पञ्चपादिकाविवरणम्

रूपेण च नैमित्तिकत्व-नैसर्गिकत्वे न विरुद्धे इत्युपसंहरति—*अतो नैसर्गिकोऽप्यहङ्कार इति* ॥ *"अन्योन्य-धर्मांश्चे"त्यादिरध्यासस्वरूपं दर्शयतीत्यन्तो ग्रन्थः स्पष्टार्थः* ॥

### वार्तिकम्

नियमस्यैवासिद्धेरिति—चेत्, *न* ; पदार्थस्मृतेः शक्तिग्रहमूलघटमात्रानुभवस्यैव मूलत्वात् तन्नियम-सिद्धेः । नच—एवं रजतस्मरणमपि देश-कालादिरहितरजतमात्रानुभवमूलमस्तु, तथाच तस्य स्मृतित्वेऽपि न तत्तोल्लेख इति—वाच्यम् ; त्वया तस्य तथात्वानङ्गीकारात्, अङ्गीकारे वा पदार्थ-स्मृतिवदेव दोषाप्रतिबद्धस्मरणाभिमानत्वाद्द दोषकल्पने प्रमाणाभावाच्च विवेकग्रहः स्यादिति । 'नेदं रजतमि'ति बाधानुपपत्तेरपि नाख्यातिवादः साधुः ; तेनेदमि रजताभावावगाहनात्, प्रसक्तस्यैव प्रति-षेधात् । नचाख्यादिवादे तत्प्रसक्तिः संभवति ; अविवेकमात्रस्य तेनाङ्गीकारात् । *ननु*—उक्तम्—'नेदं रजतमि'ति प्रतियोगिसमानाधिकरणाभावप्रत्ययश्चेद्द 'घटः पटो ने'तिवदिदं-रजतयोरन्योन्याभाव एव तद्विषयः, न तस्मिंस्तदत्यन्ताभाव इति—चेत्, *सत्यम्* ; अस्तु नामैवम् ; तथाऽपि तादात्म्येन प्रसक्तस्यैवा-न्योन्याभावप्रतियोगित्वात् तत्प्रसक्तिः स्यादेव । न ह्यन्योन्याभावस्य तत्प्रतीतिविषयत्वाभ्युपगमेऽस्माकं काचि-द्धानिरस्ति, किन्त्वनुगुण एव ; रजततादात्म्यारोपस्यैव तत्राङ्गीकारात् । नचान्यत्वेवात्राप्याहार्यतस्तत्प्र-सक्तिः, तथा सति तद्वदेव तत्प्रतीतेर्बाधत्वप्रसिद्ध्यनुपपत्तेः । नचाहार्यारोपोऽपि त्वयाऽङ्गीक्रियते ; तथा सति तद्वदेवान्यत्रापि तत्प्रसङ्गादख्यातिवादहानापत्तेः, नचात्यन्ताभावान्योन्याभावयोराजानतो भेदोऽप्यस्ति । *तथाहि*—यदा हि तादात्म्यमवच्छेदकीकृत्य स्वसमानाधिकरणतया घटात्यन्ताभावः पटे गृह्यते—'घटः पटो ने'ति, तदाऽन्योन्याभाव इति व्यपदिश्यते । अन्योन्यभावः परस्परतादात्म्यम् ; तदत्यन्ताभाव इति यावत् । नच—एवमन्यान्यात्यन्ताभाव इति व्यपदेशः स्यात्, नान्योन्याभाव इति—वाच्यम् ; अभावान्तरस्य तादात्म्यप्रतियोगिकस्यासंभवादत्यन्तेतिविशेषणकृत्याभावात्तथा व्यपदेशासिद्धेः । स यदाऽन्यसंसर्ग-मवच्छेदकीकृत्य प्रतियोगितावच्छेदकव्यधिकरणतया गृह्यते—'पटे घटो नास्ति' 'पटे घटतादात्म्यं नास्ती'ति वा, तदाऽत्यन्ताभावव्यपदेशं स एव लभते ; तत्रात्यन्तपदस्य प्राक्कालाद्यवच्छिन्नप्रागभावादिवारकत्वेन सार्थकत्वात्, कालत्रयानवच्छिन्नत्वस्यात्यन्तपदार्थत्वात्, तस्य चोभयत्र तुल्यत्वात् । अतस्तयोर्व्यपदेश-भेदमात्रम्, न स्वरूपभेद इति युक्तमुत्पश्यामः । *ननु*—अन्योन्याभावात्यन्ताभावयोरभेदे कारणेऽपि कार्यात्यन्ताभावः स्यात् ; तत्र कार्यान्योन्याभावस्य विद्यमानत्वादिति—चेत्, *न* ; कार्यकारणयोस्तादा-त्म्यादन्योन्याभावासिद्धेः । न हि ययोस्तादात्म्यम्, तयोस्तदत्यन्ताभावरूपान्योन्याभावः संभवति ; व्याघातात् । यदि भवता कारणयोरन्योन्याभावोऽङ्गीक्रियते, स्वीक्रियतां तर्हि तत्र तदत्यन्ताभावोऽपि ;

## पञ्चपादिका

तावत्प्रथमोऽध्यासः । *ननु* अहमिति निरंशचैतन्यमात्रं प्रतिभासते, नांशान्तरमध्यस्तं वा,

## पञ्चपादिकाविवरणम्

निष्कलङ्कचैतन्यैकताने निरंशानन्दैकरसेऽज्ञानादिसाक्षिण्यनादिसिद्धेऽप्यज्ञानाध्यासे, कादाचित्कमध्यासमाश्रि-

## ऋजुविवरणम्

त्यादित्याशङ्क्य, तन्निवृत्तौ तात्पर्यमाह—*तत्रैवंभूतेनेति* ॥ कथम्—'अहमि'त्यध्यासस्वरूपप्रदर्शनम् ? अहंकारादीना-मप्यनध्यस्तत्वस्योक्तत्वादित्याशङ्क्याऽऽत्मसामानाधिकरण्यप्रतीत्या तदात्मत्वं प्रतीयते ; तच्चाध्यस्तमिति वक्तुं सत्यतः तदात्मतां निराकरोति—*निष्कलङ्केत्यादिना* ॥ आत्मनस्तद्रूपता स्वाभाविकी स्यात्? आगन्तुकी वा ? आगन्तुकत्वेऽपि सहेतुका वा ? निर्हेतुका वेति विकल्पे स्वाभाविकत्वं न संभवतीत्याह—*चैतन्यैकतानेति* ॥ द्वितीयं दूषयति—*निष्कलङ्केति* ॥ तृतीयं निराकरोति—*निरंशेति* ॥ न हि निरवयवं स्वतः परिणमत इत्यर्थः । *ननु* चैतन्यैक-तानेऽप्यानन्दरूपत्ववत्प्रपञ्चस्वरूपताऽपीत्याशङ्क्याह—*आनन्दैकरस इति* ॥ आत्मनि प्रपञ्च एव मा भूदित्याशङ्क्याह—*अज्ञानादीति* ॥ प्रतीयते प्रपञ्चः, परमार्थत्वं च न संभवतीति ; मिथ्येत्यर्थः । अथवा—चैतन्यैकतानेऽप्यानन्दै-करसत्ववत्प्रपञ्चैकरसत्वमपि स्यादिति, नेत्याह—*अज्ञानादीति* ॥ तर्ह्यहमध्यासस्य प्राथम्योक्तेरज्ञानस्यानध्य-स्तत्वमित्याशङ्क्याह—*अनादिसिद्धेऽपीति* ॥ कथमनादिसिद्धेऽप्यध्यासान्तरेऽहमध्यासस्य प्राथम्यमित्याशङ्क्याह—*कादाचित्कमिति* ॥ *अत्र संग्रहः*—

सिद्धे हि सर्वस्य मृषात्वरूपे युज्येत वक्तुं प्रथमत्वमत्र । तदात्मकत्वप्रतिभासनेन सत्यं तदेवेति निवारणाय ॥
स्वाभाविकं तस्य तदात्मकत्वमागन्तुकत्वेऽपि सहेतुकं वा । निर्हेतुकं वेति विकल्पमध्यमन्निष्कलङ्केति निराकरोति ॥
आद्यस्य पक्षस्य निवारणाय चिदेकतानत्वमनंशता तु । तृतीयपक्षस्य निवारणार्थमानन्दसाम्येन तदात्मकत्वम् ॥
आनन्दैकरसत्वेन निवार्य पुनरेव हि । प्रपञ्चैकरसत्वं तत्साक्षित्वेन निरस्यते ॥
अज्ञानमेवं न भवेदनादि नाध्यस्तरूपं यदि वा भवेत्तत् । प्राथम्यहानिर्यदि वाहमः स्यात्त्रेधेति शङ्कोत्तरभागवार्या ॥

*अथवा*—अहमध्यसस्य प्राथम्यप्रतीतेरज्ञानमनध्यस्तमेव भवत्वित्याशङ्क्याज्ञानेन विनाऽध्यासान्तरासंभवात् तदध्यासोऽङ्गीकर्तव्य इति प्रतिपाद्यते । कथमसंभवः ? उच्यते ; अध्यासे सर्वत्र दोषः, अधिष्ठानविशेषाप्रतिभासः, अधिष्ठानस्य द्व्याकारत्वमित्याद्यपेक्षितम्, तदत्र न संभवतीत्याह—*निष्कलङ्केत्यादिना* ॥ निष्कलङ्केति दोषाभाव उक्तः । 'चैतन्यैकताने''त्यनेनाप्रतिपत्त्यभावः । ''निरंशे''त्यनेनाधिष्ठानसामान्यविशेषद्वष्ट्रादिविभागाभावः । *ननु* आनन्दाकारोऽप्रतीयमानोऽस्त्येव, ततो द्व्याकारत्वमपि संभाव्यते, किमज्ञानेन ? इत्याशङ्क्याह—*आनन्दैक-रसेति* ॥ अज्ञानाभावे तदप्रतीतिरपि न संभवेदिति भावः । *ननु*एवमपि कारणान्तरमेव सिद्धेयत, नाज्ञानमे-वेत्याशङ्क्याह—*अज्ञानादिसाक्षिणीति* ॥ अज्ञानं च तदादि च कारणं चेत्यज्ञानादि, तस्य साक्षिणीति ; अज्ञानाव-भासक इत्यर्थः । तर्ह्यज्ञानमनध्यस्तमेष्टव्यम्, प्राथम्यं वाऽहमध्यासस्य हेयम् ; परस्परविरोधात्, इत्याशङ्क्याह—

## तत्त्वदीपनम्

अनवभासहेत्वज्ञानाध्यासस्य प्राथम्यादहंकाराध्यासस्य कथं प्राथम्यमुक्तमित्याशङ्क्याह—*निष्कलङ्के-त्यादिना* ॥ अज्ञानाध्यासेऽनादिसिद्धेऽपि कादाचित्कमध्यासमाश्रित्य प्राथम्यमाहेति संबन्धः । अनवभास-स्याऽऽगन्तुककलङ्कनिमित्तत्वं निराकर्तुमाद्यं विशेषणम् । अवभासहेत्वभावादनवभासं व्यावर्तयितुम्—*चैतन्येति* ॥ निरंशेंऽशस्य दुःखरागादेः स्वतोऽसंभवात्तद्धेतुत्वेनाप्यज्ञानाध्यास आश्रयणीय इत्याह—*निरंशेति* ॥ बोधैकस्वरूपेऽ-ज्ञानादेः स्वतोऽसंभवादध्यस्तत्वं वक्तव्यमित्याह—*अज्ञानादीति* ॥ संशयादिरादिशब्दार्थः ॥

## पञ्चपादिका

*यथाऽध्यस्तांशान्तर्भावः, तथा दर्शयिष्यामः* । *ननु* 'इदमि'त्यहङ्कर्तुर्भोगसाधनं कार्यकरणसङ्घातोऽ-

## पञ्चपादिकाविवरणम्

त्याह—*अहमिति तावत्प्रथमोऽध्यास इति* ॥ *ननु* 'इदं रजतमि'तिवदध्यासे द्वैरूप्य'मह'मित्यत्रापि वक्तव्यम्, 'अहमि'ति चैकरूपेणावभासते, अतो नाध्यास इति चोदयति—*नन्वहमिति निरंशचैतन्यमात्रमिति* ॥ यथा

## तत्त्वदीपनम्

अहमित्यत्र ग्रन्थे अंशान्तराभावमाशङ्क्यांशान्तरं समर्थितम्, तदसंगतम्; पूर्वपक्षसिद्धान्तानुपयोगादित्याशङ्क्यांशान्तरनिरसनमध्यासाभावोपयोगीत्याह—*नन्विदं रजतमिति* ॥ अंशान्तरसिद्धावध्याससिद्धिरिति सिद्धा-

## वार्तिकम्

उक्तन्यायस्यैवात्यन्ताभावरूपत्वात् । नचैतावताऽस्माकं किंचिदनिष्टं प्रसञ्जितं भवति; कार्यमिथ्यात्वस्याभ्युपगमात्, प्रतिपन्नोपाधावत्यन्ताभावप्रतियोगित्वस्यैव मिथ्यात्वात् । नच तार्किकमतेऽपि काचिदनुपपत्तिरस्ति; तैरपि संयोगादि-तदत्यन्ताभावयोरेकाधिकरणत्वाङ्गीकारात् । अवच्छेदकभेदेन तदङ्गीकरणमविरुद्धमिति चेत्, न; अवच्छेदकभेदेऽप्यधिकरणाभिन्नत्वाद्विरोधावश्यंभावात् । *ननु*—एकाधिकरणत्वमात्रं न तयोर्विरुद्धम्; कपिसंयोग-तदभावयोरेकस्मिन्नेव वृक्षे युगपदनुभवात्, विरोधो हि नाम क संप्रत्ययः? यन्न प्रमाणेनाधिगम्यते, अधिगम्यते च तयोरेकत्रावस्थितिरबाधितप्रत्यक्षानुभवेन; अतो न तद्विरुद्धम् । किं तर्हि? एकावच्छेदेन तद्विरुद्ध्यते; अप्रतीतेः । न ह्यग्रावच्छेदेन मूलावच्छेदेन वा संयोगतदभावौ युगपदेकस्मिन् वृक्षेऽनुभूयेते—'अग्रे मूले वा वृक्षः कपिसंयोगी भवति न भवति चेति, अपि त्वग्रे वृक्षः कपिसंयोगी, मूले न' इति । *एतेन*—विरुद्धाविरुद्धत्वे शीतोष्णत्वे इवैकत्र विरुद्धे इति—*अपास्तम्*; प्रमाणेन तयोरव्याप्यवृत्तित्वबोधनात् । अवच्छेदकभेदेन देशभेदादिति चेत्, न; अवच्छेदकभेदेऽपि देशभेदस्य वक्तुमशक्यत्वात् । यद्यग्रादिदेशे वृक्ष एकदेशेन वर्तेत, देशान्तराभावेऽपि वा संयोगादिवद्व्यासज्य, तत एवमवकल्प्येत । न चैवमस्ति; देशानवस्थानात्, संयोगादिवदेवैकदेशग्रहेणावयव्यध्यक्षानुपपत्तेश्च । न हि व्यासज्यवृत्ति संयोगादि यावदाश्रयग्रहमन्तरेण गृह्यते; अपसिद्धान्तापत्तेश्च । न हि तार्किकैरवयवेष्वेकदेशेनावयविनो वृत्तिरभ्युपगम्यते, किं तर्हि? व्यक्तिषु घटत्वादिवत् कात्स्न्येन । तथाच तदवच्छिन्ने कृत्स्ने वृक्षे संयोगस्य तदभावस्य च वर्तनादव्याप्यवृत्तित्वम्; अवच्छेदकभेदेन देशभेदकल्पनानुपपत्तेः । अपि चैकदेशावच्छिन्ने घटे संयोगो भवन् तदेकदेशे भवति? कृत्स्ने वा? नाद्यः; तत्संयोगस्य देशनिष्ठत्वेनावयविन्यभावात्; अन्यथैकदेशे संयोग इत्येव न स्यात्? देश-देशिनोरत्यन्तभेदाभ्युपगमात्, न द्वितीयः; तथासति कृत्स्नवृत्तित्वेनाव्याप्यवृत्तित्वानुपपत्तेः । अपि च निरवयवे ह्याकाशे देशाभावात् कथं संयोगस्याव्याप्यवृत्तित्वं भवद्भिः स्थापनीयम्? समवायदेशाभावेऽपि संयोगदेश आकाशादेरप्यस्तीति चेत्, न; अन्योन्याश्रयापत्तेः—संयोगस्याव्याप्यवृत्तित्वसिद्धौ तत्प्रतियोगिनो भूधरादेरव्याप्यवृत्तित्वेनाकाशदेशत्वम्, सिद्धे च तस्याकाशदेशत्वे तदवच्छेदेन संयोगस्याव्याप्यवृत्तित्वमिति । अपिचाकाशसंयोगो भूधरादिदेशेषु विद्यमानस्तान् व्याप्य वर्तते? अव्याप्य वा? नाद्यः; आकाशेऽपि तस्य व्याप्यवृत्तित्वप्रसङ्गात् । न चैक एव संयोगिनि व्याप्य वर्ततेऽन्यस्मिन्न व्याप्येति कुत्रचिद् दृष्टम्, नवाऽभ्युपगम्यते भवता व्याप्यवृत्तित्वेन; अव्याप्यवृत्तित्वस्वभावहानप्रसङ्गात्, तत्स्वभावत्वस्य संयोगेऽप्यङ्गीकारात् । नच—संयोगस्योभया-

## पञ्चपादिकाविवरणम्

द्वैरूप्येणाध्याससम्भवः, तथा वक्ष्यत इत्याह—*यथाध्यस्तांशान्तर्भाव इति*॥ *ननु* अन्तःकरणेन्द्रियाणामात्मनः पृथक्सत्त्वोपलब्ध्यभावादध्यस्ततयैव सिद्धेरात्मतत्त्वावबोधेन च स्वरूपतो विलयश्रवणात्स्वरूपेण संसृष्टरूपेण चात्मन्यध्यस्ततया सिद्धिस्तु, शरीरं पुनरिन्द्रियैरिदंबुद्धिगृहीतत्वात्केवलसाक्षिवेद्यत्वाभावादुत्क्रान्तेऽप्यात्मनि

## ऋजुविवरणम्

*अनादिसिद्धेऽपीत्यादिना* ॥ "यथाऽध्यस्तांशान्तर्भावः" इत्यनेनाध्यस्तांशान्तर्भावो वक्ष्यत इत्येतावन्मात्रमुक्तम्। तत्र चोद्यबीजनिराकरणस्यास्पष्टत्वात् स्पष्टीकरोति—*यथा द्वैरूप्येणेति* ॥ *ननु* इदमित्यनेन शरीरेन्द्रिययोरप्यध्यस्तत्वं न संभवतीति चोदितम्, तदयुक्तम्; अन्तःकरणन्यायेन तयोरप्यध्यस्तत्वसिद्धेः, पृथक् चोद्यानुपपत्तेरित्याशङ्क्यान्तः-करणेन्द्रिययोरेव समानन्यायेन मिथ्यात्वम्, न शरीरस्य; चोद्यमपि तद्विषयमेवेत्यभिप्रायं दर्शयति—*अन्तःकरणे-न्द्रियाणामिति* ॥ *पृथक्सत्त्वोपलब्ध्यभावादिति* ॥ इदन्तयाऽऽत्मनोऽन्यतया पृथक्सत्त्वप्रतीतिर्नास्ति, तेनात्मन्यध्य-स्ततेति। *ननु* पृथक् सत्त्वाभावे तदसत्त्वमेव भवेत्, न त्वात्मन्यध्यस्ततेति, तत्राह—*अध्यस्ततयैवेति* ॥ *अथवा*—पृथक्सत्त्वोपलब्ध्यभावादित्यसिद्धो हेतुः; 'मे मनः' 'ममेन्द्रियाणी'ति प्रतीतिदर्शनादित्याशङ्क्याह—*अध्यस्ततयैव सिद्धेरिति* ॥ साऽपि प्रतीतिराध्यासिकी, न प्रमाणभूतेति भावः। *ननु* सिद्धे मिथ्यात्वे साक्षिमात्रवेद्यतया तदध्यस्तत्वम्, तदभावे चानुमानागम्यत्वेन नाध्यस्तप्रतीतिविषयत्वं वक्तुं शक्यत इत्याशङ्क्याह—*आत्मतत्त्वावबोधेनेति* ॥ *अथवा*—पृथक्प्रतीत्यभावात्तदात्मकत्वेन प्रतीतेः संबन्धाध्यासो भवतु, स्वरूपं त्वनध्य-स्तमेव, यथाऽऽत्मनः केवलस्योपलब्ध्यभावादुपाधिसंसृष्टतयैव प्रतीतेरसंबन्धाध्यासोऽङ्गीकृतः, तद्वदित्याशङ्क्याह—*आत्मतत्त्वावबोधेनेति* ॥ "कार्यकरणसंघात"इत्यनेन शरीरमेव विवक्षितं द्योतयति—*शरीरं पुनरिति* ॥ *ननु* इदंबुद्धिगृहीतत्वं रजतेन्द्रियादिष्वप्यस्ति, नाप्यनध्यस्तत्वम्; अतः शरीरस्यापि कथमनेनाध्यस्तत्वनिराकरण-मित्याशङ्क्याह—*केवलसाक्षिवेद्येति* ॥ *ननु* नायं सिद्धान्तिनः सिद्धो हेतुः; केवलसाक्षिवेद्यत्वस्याप्यङ्गी-कारात्, तथा सिद्धे सत्यत्वे केवलसाक्षिवेद्यत्वाभावः, तदभावे तु सत्यत्वसिद्धिरित्याशङ्क्याह—*उत्क्रान्तेऽपीति* ॥ यदि शरीरं साक्षिण्यध्यस्तं भवेत्, तर्हि तदात्मोत्क्रान्तौ तेन सह गच्छेत्, प्रलीनं वा भवेत्, नतु तदुपलभ्येतेति भावः। *ननु* साक्षिणः सर्वगतस्योत्क्रान्तिर्न संभवति, स्वप्नवद्गमनभ्रममात्रत्वात्, अतश्चाव्यतिरेकादात्मन्यध्यस्त-मिति; अथवा—तदज्ञानपरिकल्पितमन्यदेवेति वक्तुं शक्यते; तथा सति पृथगुपलब्धिरसिद्धेयदित्याशङ्क्य साधयति—

## तत्त्वदीपनम्

न्तप्रयोजनमाह—*यथेति* ॥ वक्ष्यत इति* ॥ अहंकारटीकायामित्यर्थः। अहंकाराध्यासमाश्रित्य शरीराध्यास आक्षिप्तः—"नन्विदमि"त्यत्र, स नोपपद्यते; तस्य जडत्वेनाहंकारसमानयोगक्षेमत्वादित्याशङ्क्य तात्पर्यमाह—*न त्वन्तःकरणेति* ॥ न केवलं पृथगुपलब्ध्यभावः, अपि त्वभेदेनेत्याह—*अध्यस्ततयेति* ॥ अधिष्ठानतत्त्वबोधापोद्य-त्वादप्यध्यस्तत्वं युक्तमित्याह—*आत्मतत्त्वेति* ॥ "न तस्य प्राणा उत्क्रामन्ती" त्यादिषु लयश्रवणादित्यर्थः। ततो वैलक्षण्यमाह—*शरीरं पुनरिति* ॥ अध्यस्यमानमधिष्ठानसमानरूपाधिकृततयोपलभ्यते, इदं त्वन्यथेत्याह—*इद-मिति* ॥ आरोपितस्य केवलसाक्षिवेद्यत्वं दृष्टम्, तच्च नेत्याह—*केवलेति* ॥ तत्र हेतुमाह—*इन्द्रियैरिति* ॥ शुक्त्यारोपितं रूप्यं न ततोऽन्यत्रोपलभ्यते, इदं त्वन्यथेत्याह—*उत्क्रान्त इति* ॥

## वार्तिकम्

श्रितत्वाविशेष एकस्मिन् पक्षपातो युक्तः; येन तमाश्रित्याव्याप्यवृत्तिस्वभावत्वं स्यात्, अन्यमाश्रित्य तु व्याप्यवृत्तित्वमिति—वाच्यम्; तादृशपक्षपाते प्रमाणाभावात्, विपरीतप्रसङ्गस्योक्तत्वाच्च। न द्वितीयः; आकाशाव्यापकत्वप्रसङ्गात्; सर्वमूर्तसंयोगित्वस्य विभुत्वेनाभ्युपगमाद्व मूर्तैकदेशवृत्तिसंयोगाधार-

### पञ्चपादिका

वभासते, ममेदमिति चाहङ्कर्त्री स्वत्वेन तस्य सम्बन्धः, तत्र न किञ्चिदध्यस्तमिव दृश्यते, *उच्यते* ; यदैवाहङ्कर्ताऽध्यासात्मकः, तदैव तदुपकरणस्यापि तदात्मकत्वसिद्धिः । न हि स्वप्नावाप्तराज्याभिषेकस्य राज्ञो राज्योपकरणं परमार्थसद्भवति,एवम हङ्कर्तृत्वप्रमुखः क्रिया-कारक-फलात्मको लोकव्यवहारोऽध्यस्तो

### पञ्चपादिकाविवरणम्

पृथगुपलब्धेर्भूतेषु लयश्रवणाच्च नाध्यस्ततया सिद्धमिति चोदयति—*नन्विदमित्यहंकर्तुरिति* ॥ शरीर-व्यतिरिक्तं ममबुद्धिगृहीतं सुतरामनध्यस्तमित्याह—*ममेदमिति चेति* ॥ शरीरादिपदार्थस्वरूपस्य मिथ्या-कल्पितकर्तृ-भोक्तृ-प्रमातृ-दोषसंयुक्तात्मार्थतयैव कार्यतया भोग्यतया प्रमेयतया द्वेष्यतया च तादर्थ्येनैव सृष्टत्वात्स्व-रूपेणापि मिथ्यात्वं स्वप्नदृष्टान्तेनानुमातुं शक्यत इत्याह—*उच्यते यदैवाहं कर्तेत्यादिना* ॥ दार्ष्टान्तिकं दर्शयति—*एवमहंकर्तृत्वप्रमुख इति* ॥

### ऋजुविवरणम्

*भूतेषु लयेति* ॥ अध्यस्तस्याज्ञानोपादानत्वेन तत्रैव लयो भवेत्, न भूतेष्विति भावः । *ननु* कथमहं कर्तुरुपकरणत्वेन कल्पितत्वसिद्धिः ? व्यभिचारात्, न ह्यन्तःकरणोपकरणत्वमेषां प्रसिद्धम्, तदेवात्र संनिहितत्वात् तच्छब्देन प्रतीयते ; अथवाऽहंकर्तुरेवाध्यस्तत्वमसिद्धम् ; तस्यात्मरूपत्वात्, नापि तदुपकरणत्वमेषाम् ; अनपेक्षितत्वात्, अनिरूपितत्वाच्च । "तदात्मकत्वसिद्धिरि"ति साध्यनिर्देशश्चायुक्तः ; सिद्धसाध्यत्वादिदूषणप्रसङ्गात् । साध्यविकलश्च दृष्टान्तः ; तादात्म्याभावात्, "तदात्मकत्वमि"त्यनेन सन्निहिताध्यासात्मकत्वनिर्देशेऽपि तदुपकरणत्वादिसंबन्धो मिथ्या भवेत्, न स्वरूपमिति । "नहि स्वप्नावाप्ते"त्यादिकीर्तनमपि न युज्यते ; तत्कथं तदुपकरणत्वेनाभिमतमिथ्यात्वसिद्धिरित्या-

### तत्त्वदीपनम्

किंच शरीरस्याऽऽत्मन्यध्यस्तत्वे तत्रैव लयः स्याद् रशनापरिकल्पितसर्पादिवत्, नान्यत्र, अन्यत्र च लयः श्रूयते —"पृथिवीं शरीरम्" इत्यत्र, अतोऽपि नाध्यास इत्याह—*भूतेष्विति* ॥ अध्यस्तताप्रतीत्यभावेऽपि कल्पितोपकरण-त्वाच्छरीरादेः कल्पितत्वमुक्तम्, तदचारु ; कल्पितोपकरणत्वस्यासिद्धेरित्याशङ्क्याह—*शरीरादीति* ॥ शरीरादि-पदार्थस्वरूपस्य तादर्थ्येन सृष्टत्वात् स्वरूपेणापि मिथ्यात्वमनुमातुं शक्यत इति संबन्धः । *तादर्थ्येन=आत्मार्थत्वेने-त्यर्थः । आत्मन आप्तकामत्वात्कथं शरीरादेस्तदुपकरणत्वम् ? तथा कल्पितोपकरणत्वं चोपेक्षितं स्यादित्या-शङ्क्य तादर्थ्येनेत्येतद्विवृणोति—*मिथ्येति* ॥ मिथ्या चासौ कल्पितश्चेति मिथ्याकल्पितः, स च कर्ता च भोक्ता च प्रमाता च दोषसंयुक्तश्चात्मा चेति तथोक्तः । ज्ञानबाध्यत्वं मिथ्याशब्दार्थः । समारोपितत्वं कल्पितपदार्थः ॥

शरीरादेरात्मार्थत्वं प्रपञ्चयति—*कार्यतयेति* ॥ कार्यतादीनां कर्त्रादिभिर्यथाक्रममनुषङ्गः । विमतम्, कल्पितम्, कल्पितोपकरणत्वात् ; स्वप्नप्राप्तच्छत्रादिवदित्यर्थः । छत्रादेरेव कल्पितत्वं नोपक्रियमाणस्येति दृष्टान्तवैषम्यमाशङ्क्य दृष्टान्तान्तरमुक्तं टीकायामिति द्रष्टव्यम् । ऐन्द्रियकत्वादेः स्वाप्नवदुपपत्तिः । "पृथिवीं शरीरम्" इत्यत्र शरीरस्य

### वार्तिकम्

त्वेन तथात्वानुपपत्तेः । अपिच कथं वा संयोगि द्रव्यमाकाशस्य देशः स्यात् ? न हि कुण्डे बदरवदुपर्यधोभावेनाकाशस्य तत्र वृत्तिः संभवति ; विभुत्वहानिप्रसङ्गात् । कल्पिता देशा भविष्यन्तीति चेत्, न ; तथा सति तद्वृत्तित्वेन संयोगादेरपि कल्पितत्वप्रसङ्गः । *एतेन*—आत्मगुणा अपि पराभ्युपगताः सुख-दुःखादयः—*प्रत्याख्याताः* द्रष्टव्याः ; समानन्यायत्वात् ।

## पञ्चपादिका

नित्य-शुद्ध-बुद्ध-मुक्तस्वभाव आत्मनि । अतस्ताद्दग्ब्रह्मात्मानुभवपर्यन्ताद् ज्ञानादनर्थहेतोरध्यासस्य निवृत्तिरुपपद्यते, इति तदर्थविषयवेदान्तमीमांसारम्भ उपपद्यते ।

## पञ्चपादिकाविवरणम्

द्रष्टरि दृश्यावभासस्याविद्याध्यासत्वे शास्त्रीयविषय-प्रयोजनसिद्धिः फलिष्यतीत्याह--*अतस्ताद्दग्ब्रह्मात्मानुभवपर्यन्तादिति* ॥ ताद्दग्ब्रह्मात्मानुभवो बन्धनिवृत्तिश्चोपपद्यत इत्यर्थः । विषय-प्रयोजनसिद्धौ किमायातमिति ? शास्त्रारम्भकर्तव्यता सिद्धेत्याह---*तदर्थविषयवेदान्तमीमांसारम्भ इति* ॥ *ते एव = ब्रह्मात्मानुभवबन्धनिवृत्ती, अर्थः = प्रयोजनं विषयश्च यस्य वेदान्तमीमांसारम्भस्येति विग्रहः । "सर्वलोकप्रत्यक्षः" इत्यन्तस्योत्तरभाष्यस्य तात्पर्यमाह---*आह कोऽयमिति* । इदानीं विभज्यावान्तरतात्पर्यं कथयति---*तत्रापीति* ॥

## ऋजुविवरणम्

शङ्क्यावतारयति—*शरीरादिपदार्थेति* ॥ 'नित्यशुद्धे'त्यादिविशेषणोपादानं स्वतः परतो वा संबन्धासंभवप्रदर्शनार्थम्, ताद्दशाधिष्ठानज्ञानस्य विरोधिविषयत्वेन बाधकत्वप्रदर्शनार्थं च । *ननु* "ब्रह्मात्मानुभवपर्यन्तादि"त्यनेन प्रयोजनमात्रमेव निर्दिष्टम्, न तु विषय इत्याशङ्क्य, व्यावर्तकत्वेनापि तन्निर्देशादिति व्याचष्टे—*ताद्दग्ब्रह्मात्मानुभवेति* ॥ स एवार्थौ विषयो यस्येति विग्रहशङ्का स्यात, तथा सति प्रयोजनाभावाद् न वेदान्तारम्भोपपत्तिरिति, तदर्थं व्याचष्टे—*ते एव ब्रह्मात्मानुभवेति* ॥

## तत्त्वदीपनम्

भूतेषु नाऽऽत्यन्तिको लयो निर्दिष्टः ; तथाऽऽत्मोत्क्रान्ताविपि शरीरोपलम्भो युक्तः ; चिदधिष्ठानस्य तत्रापि भावादित्यर्थः । प्रयोजनस्यैवोपसंहरणादविवक्षितत्वं विषयस्येत्याशङ्क्योपलक्षणपरतया व्याचष्टे—*ताद्दगिति* ॥ नित्यशुद्धादिलक्षणं वस्तु ताद्दक्पदार्थः । स चासावर्थश्चेति तदर्थः । स विषयो यस्यासौ तदर्थविषय इति विग्रहः । शङ्कां व्यावर्तयति—*ते एवेति* ॥ ब्रह्मात्मा चासावनुभवश्चेति तथोक्तः । अर्थशब्दस्य विषयवाचित्वं व्यावर्तयति —*अर्थ इति* ॥

## वार्तिकम्

अपिच माऽऽस्तां तदग्रावच्छेदेन वृत्ते कपिसंयोगस्य समवायसम्बन्धेनात्यन्ताभावः; संयोगेन त्वस्त्येव ; न हि संयोगः संयोगसम्बन्धेन कालत्रयेऽपि तत्रास्ति । नच—अत्र प्रतियोगिन ऐक्येऽभावभेदोऽस्ति, येन संयोगेन तदत्यन्ताभावे सत्यपि समवायेन न तदभावः स्यादिति—*वाच्यम् ; * न हि 'भूतले घटो-नास्ती'ति युगपत् संयोग-समवायाभ्यां भूतले घटात्यन्ताभावप्रतीतौ तद्भेद उत्प्रेक्षितुमपि शक्यते, किं पुनः प्रत्येतुम् ? नच—नैवं ताभ्यां युगपत् प्रतीतिरस्तीति—वाच्यम् ; अनुभवविरोधात् । प्रतियोगितदवच्छेदकयोरभेदे तदत्यन्ताभावभेदकल्पने प्रमाणाभावाच्च, स्वरूपेण संसर्गमात्रस्यैव तदवच्छेदकत्वदर्शनात् संयोगत्वादेस्तत्राभानात् । नच—संयोगसंयोगस्य कुत्रचिदप्रसिद्धेर्न तेन तदत्यन्ताभावोऽस्तीति—वाच्यम् ; आकाशसमवायस्य कुत्रचिदप्रसिद्धावपि तेन तदत्यन्ताभावस्य केवलान्वयिनोऽङ्गीकारात्, तद्वत्संयोगेन संयोगात्यन्ताभावस्याविरुद्धत्वात् । संयोगिनां घटादिद्रव्याणां च स्वसमवायिकारणे संयोगेनात्यन्ताभावस्य सर्वसिद्धत्वात्, संसर्गभेदेऽप्यत्यन्ताभावाभेदादित्युक्तत्वात् । *एतेन*—प्रागभाववति कथमत्यन्ताभावः ? तयोस्सादेश्यविरोधादिति—*अपास्तम्* ; तयोरप्यभेदात् । एक-

## पञ्चपादिका

"आह कोऽयमध्यासो नामे"त्याद्यारभ्य अध्याससिद्धिपरं भाष्यम्। तत्रापि "कथं पुनरविद्यावद्विषयाणी"त्यतः प्रागध्यासस्वरूप-तत्सम्भावनाय, तदादि तत्सद्भावनिर्णयार्थमिति विभागः। *यद्येवं* तत्स्वरूप-तत्सम्भावनोपन्यासः पृथक् कर्तव्यः; न ह्यनिर्ज्ञातरूपमसम्भाव्यमानं च निर्णीयते चेति,

## पञ्चपादिकाविवरणम्

लक्षण-सम्भावनापरभाष्यमाक्षिपति—*यद्येवमिति* ॥ किमिति लक्षणसम्भावने नापेक्ष्येते इति ? तत्राह—*न ह्यनिर्ज्ञातरूपमिति* ॥ प्रमाणमेव हि प्रमेयमन्यस्यान्यात्मनावभासमध्यासं व्यवस्थापयत् स्वदेश-

## ऋजुविवरणम्

उत्तरावध्यनिर्देशात् कियत्तत्प्रतिपादकमिति न ज्ञायते, तदर्थमाह—*सर्वलोकेति* ॥ "अध्याससिद्धिपरमि"त्यनेन तात्पर्यमुक्तम्, अवान्तरव्याख्यानं तु तत्र तत्र भविष्यति। अतः—"तत्रापि" इति पुनरुक्तमित्याशङ्क्याह—*इदानीं विभज्येति* ॥ "न ह्यनिर्ज्ञातरूपमि"त्यनेन लक्षण-संभावनयोरभावे न मानं निर्णायकमित्युक्तमिव प्रतिभाति, अनिर्ज्ञातरूपस्यासंभावितस्य च निर्णयो नास्तीत्युक्तत्वात्, तथा सति हेतुसाध्ययोः परस्परविरोधः, तदर्थं व्याचष्टे—*प्रमाणमेवेति* ॥ अध्यक्षानुभवनिर्णये विशेषतो दुःसंपादमित्यन्वयः प्रतिभाति, तथा सति दूरतोऽध्यक्षदृष्टे तदपेक्षा

## तत्त्वदीपनम्

शास्त्रारम्भस्य सिद्धत्वादक्षरव्याख्यानमेव क्रियताम्—अथशब्द आनन्तर्यार्थ इत्यादि, किम्—आहेत्यादिना—इतिशङ्कानिवृत्त्यर्थमाह—*कोऽयमित्यादीत्युक्तम्* ॥ तत्राऽऽदिशब्देन—"अस्यानर्थहेतोरि"त्येतदप्युपात्तमिति शङ्कां निवारयितुमाह—*सर्वलोकेति* ॥ "आह कोऽयमि"त्यादेरध्यासपरत्व एकेन भाष्येणाध्याससिद्धेः किं बहुभिरित्याशङ्क्याध्यासलक्षणादिपरत्वान्न वैयर्थ्यमित्युक्तं 'तत्रापी"त्यत्र, तदनुपपन्नम्; अध्यासपरत्वं लक्षणादिपरत्वं चैकम् ? उत नाना ? प्रथम उत्तरवैयर्थ्यम्, द्वितीये पक्षे परस्परपराहतिः; एकस्योभयपरत्वानुपपत्तेरित्याशङ्क्याह—*इदानीमिति* ॥ लक्षणादिनाऽध्यासस्य प्रतिपिपादयिषितत्वाल्लक्षणादावान्तरतात्पर्यम्, अध्यासे महातात्पर्यमिति न व्याहतिरित्यर्थः। "कथं पुनः प्रत्यगात्मनी"त्यतः प्राक्तनं स्वरूपम्, तदारभ्य संभावनापरमिति टीकार्थः। अन्यतःसिद्धाध्यासोपस्थापकत्वेऽपि यथा "तथाऽपी"त्यादिभाष्यस्यार्थवत्त्वम्, तद्वल्लक्षणादिभाष्यस्यापीत्याशङ्क्याह—*लक्षणेति* ॥ तथाऽपीत्यादेरध्यासानुवादेन विषयादिपरत्वादर्थवत्त्वम्, न तथाऽस्य; लक्षणादिपरत्वात्; नच तद्युज्यते; अन्यत एव लक्षणादिसिद्धेरित्यर्थः। प्रमाणभाष्यस्यासंभावितासंकीर्णबुद्धिजनकत्वाभावान्न लक्षणादि व्यर्थमिति चोदयति—*किमिति* ॥ अर्थासंभावनादिबुद्धिजननाद्वैयर्थ्यमित्याह—*तत्राहेति* ॥

अनिर्ज्ञातस्यासंभावितस्य च निर्णयोऽनुपपन्न इति वदता लक्षणसंभावने अपेक्षिते इत्युक्तं स्यात्, तथाच विरोधः, इत्याशङ्क्य लक्षणादेरनपेक्षितत्वं न ब्रूमः, किंतु प्रमाणबलादेव तत्सिद्धिरित्याह—*प्रमाणमिति* ॥ "यत्र त्वस्य

## वार्तिकम्

एव ह्यत्यन्ताभावो यदा प्रतियोगिप्राक्काले प्राक्कालीनत्वसंसर्गेण गृह्यते, तदा तदवच्छिन्नप्रतियोगित्वात् प्रागभाव इति व्यपदेशं लभते, यदा विद्यमानकाले प्रतियोगितादात्म्यसंसर्गेण, तदाऽन्योन्याभाव इति व्यपदेशम्, तदुत्तरकाले चेत्, तदुत्तरकालीनत्वसंसर्गेण विद्यमानः, प्रध्वंस इति व्यपदेशमिति नास्त्यभावभेदः। अत एवाभावस्य स्वतो निर्विशेषत्वमाहुर्वृद्धाः; अन्यथोभयोरपि सविशेषत्वाविशेषाद् भावाभावपरिभाषामात्रापत्तेः। एवं घट-पटादिप्रतियोगिभेदेऽपि नाभावो भिद्यत इत्यूह्यम् ॥

## पञ्चपादिका

दुःसम्पादं विशेषतोऽध्यक्षानुभवनिर्णये, *उच्यते* ; न देहेन्द्रियादिष्वहं-ममाभिमानवत एव प्रमातृत्व-

## पञ्चपादिकाविवरणम्

कालोपाधौ सम्भावितरूपं सर्वतो व्यावृत्तासाधारणरूपञ्च व्यवस्थापयति, किं पृथग्लक्षण-सम्भावनोपन्यासेनेत्यर्थः। *ननु* अनुमानादिप्रमाणनिर्ज्ञातेषु वस्तुमात्रेषु विशेषलक्षण-सम्भावने पृथगपेक्ष्येते, इत्यत आह—*दुःसंपाद-मिति*॥*विशेषत इति*॥ असाधारणाकारेण ; व्यावृत्ततयेत्यर्थः। तत्र द्रष्टुरन्यस्य दृश्येनान्यात्मनावभासो विद्यत

## ऋजुविवरणम्

न स्यात्, तदर्थं व्याचष्टे—*असाधारणाकारेणेति* ॥ "उच्यते" इत्यनेन प्रमाणाभावे मिथ्यात्वसिद्धिर्नास्तीत्युक्तम्, तदयुक्तम् ; प्रमाणोक्तौ तदसिद्ध्ययोगात्, इत्याशङ्क्य व्याचष्टे—*तत्र द्रष्टुरिति* *न तस्याविद्येति*॥ तत्राविद्योपादानत्वे

## तत्त्वदीपनम्

सर्वमात्मैवाऽभूत्तत्केन कं पश्येत्" इति व्यावृत्तिसंभावनयोर्निराकरणात्कथं संभावनादीत्याशङ्क्याह—*स्वदेशेति* ॥ यद्यप्यात्मसाक्षात्कारादूर्ध्वं सर्वस्यासंभावितत्वादि ; तथापि व्यवहारावस्थायां संभावितत्वादि घटत इत्यर्थः। प्रमाणसिद्धेऽपि संभावनादेः पृथगपेक्षादर्शनाल्लक्षणादिकमर्थवदिति शङ्कते—*ननु अनुमानादीति* ॥ प्रत्यक्षकार्य-लिङ्गेन कारणमात्रप्रतिपत्तौ तद्विशेषब्रह्मपरमाण्वादिषु यथा लक्षणादिकमर्थ्यमानं दृष्टमित्यर्थः।

*ननु* प्रत्यक्षदृष्टेऽपि धरित्र्यादौ लक्षणाद्यपेक्षादर्शनादध्यक्षानुभवनिर्णये विशेषतो दुःसंपादमिति कथमुक्तम्? तत्राह—*विशेषत इति* ॥ सामान्यतोदृष्टे लक्षणाद्यपेक्षायामप्यसाधारणाऽऽकारेण व्यावृत्ततया दृष्टौ नान्यापेक्षेत्यर्थः। प्रमाणभाष्येणाहंममाभिमान एव सिद्ध्यति, नाध्यास इति कथम्? तयोरैक्यादित्याशङ्क्य समुदायतात्पर्यमाह—*तत्रेति* ॥ *तत्र* = प्रमाणभाष्ये। ज्ञानापनोद्यत्वमविद्यात्वम्, प्रतिभासमात्रशरीरत्वं भ्रान्तिता, सत्यानृतमिथुनी-करणात्मकत्वमध्यासत्वम्, सदसद्विलक्षणत्वं मिथ्यात्वम् ॥

## वार्तिकम्

*ननु* एवं तर्हि अभावाद्वैताभ्युपगमात् शून्यवादप्रसङ्गो भवेत्, *भवेदयमभावाद्वैताभ्युपगमे दोषः* ; यद्यस्माभिस्तत्प्रतियोगिनो भावा अनिर्वचनीया नाभ्युपगम्येरन्, न वा न तदधिष्ठानं सद्रूपं ब्रह्माभ्युपगम्येत, न चैतदस्ति ; अभावस्य साधिष्ठानत्व-सप्रतियोगिकत्वनियमेन तदुभयाभ्युपगमात्। नच—तावताऽभावे-नैव ब्रह्मणः सद्वितीयत्वं स्यादिति—वाच्यम् ; अविद्यावरणशक्तेरेवाभावत्वेनाभ्युपगमात्, तस्याश्चा-निर्वचनीयत्वेन सद्वितीयत्वाविरोधात्। अत एव "विद्यमानस्य सतः प्रतिबन्धकान्तररहितस्य प्रका-शार्हस्य 'अस्ति' 'प्रकाशते' इति व्यवहारयोग्यस्य 'नास्ति' 'न प्रकाशते' इति व्यवहारासाधारणकारण-मावरणमाहुर्वृद्धाः। तेनाज्ञाता चितिरेव सर्वकारणं सत् सर्वत्रानुगततया तत्तदभावबुद्ध्यालम्बनत्वेन प्रतीयत इति समञ्जसम्। विरोधोऽपि तस्य भावैस्सहोपपद्यते ; अभिव्यक्त्यनभिव्यक्त्योर्युगपदेकेन रूपेणैकत्र विरोधात्, अनभिव्यक्त्यवस्थाया एवाभावत्वात्। अत एवोपादानकारणमेव प्रागवस्थापन्नं प्रागभाव इति वदन्ति वृद्धाः। तान्त्रिका अपि कैवल्यावस्थापरिणामं प्रलयमाहुः। श्रुतिरपि—"असदेवेदमग्र आसीत्" इत्यादिः, तामेव कार्याभावरूपाव्यक्तावस्थामाह। *ननु* एवं सत्यव्यक्तावस्थायाः सर्वोपादानत्वात् कार्येणाविरोधः स्यादिति—*चेत्*, न ; अवस्थाया निमित्तत्वेऽप्युपादानत्वाभावात्, विरोध्यवस्थान्तरेण तद्विरोधोपपत्तेः, अवस्थावत एवोपादानत्वात्, तस्य च सतः कार्यकालेऽपि सत्यस्य

### पञ्चपादिका

प्रदर्शनमात्रेण तस्याध्यासात्मकता सिद्धयति ; तत्कस्य हेतोः ? लोके शुक्तिरजत-द्विचन्द्रादिवदध्यासा-

### पञ्चपादिकाविवरणम्

इत्येतावति प्रमाणं वक्ष्यते, न तस्याविद्याभ्रान्त्यध्यासमिथ्यात्वे, अतस्तत्प्रमाणेन न सिद्धयतीति परिहरति— उच्यते—*न देहेन्द्रियादिष्वित्यादिना* ॥

*ननु* अन्यस्यान्यात्मनावभासप्रमाणेनैव तन्मिथ्यात्वमपि सिद्धयति, प्रमेयैक्यादिति चोदयति—*तत्कस्य हेतोरिति* ॥ नानुभवादेवेति परिहरति—*लोक इति* ॥ *ननु* प्रमाणे सति किमित्यनुभवाभावः ?

### तत्त्वदीपनम्

सिद्धान्त्याशयमजानानश्चोदयति—*नन्वन्यस्येति* ॥ "निमित्तकारणहेतुषु सर्वासां प्रायदर्शनमि"ति कात्यायन-स्मरणात् *कस्य हेतोरिति* कस्माद्धेतोरित्यर्थः । गूढाभिसन्धिरेव परिहरति—*नानुभवादेवेति* ॥ प्रमाणे सत्यपि अनुभवो नेति व्याहतमिति चोदयति—*ननु प्रमाण इति* ॥ मिथ्यात्वविषयं प्रमाणमेव नेति स्वाशयमाविष्करोति— *प्रमाणेति* ॥ बाधे सत्यध्यासानुभवो भवतीति कथम् ? तस्याध्यासनिवर्तकत्वादित्याशङ्क्याह—*बाधा-

### वार्तिकम्

प्रदर्शितत्वात्, बाल्य-यौवनयोरिव व्यक्ताव्यक्तावस्थयोर्विरोधे सत्यपि तद्वतोरेकत्वेनाविरोधोपपत्तेः । *अयमत्र संक्षेपः*—

भावाभावौ पदार्थौ द्वौ लोकविज्ञानगोचरौ । तत्र भावो भवत्यात्माऽभावसंसर्गवर्जितः ॥
सर्वेषां नो निरातङ्क'मिदं सर्वमि'ति श्रुतेः । अभावः खल्वविद्या स्यात् तदावरणरूपिका ॥
"तम आसीदिदं सर्वम्" "असदेवे"ति च श्रुतेः । नित्यं भावं समाश्रित्य लब्धात्मा देश-कालतः ॥
विच्छिद्यानात्मतां नीत्वा संजगाम प्रपञ्चताम् ।

सर्वथाऽपि नास्त्यन्योन्याभावात्यन्ताभावयोर्भेदः । 'तथाच नेदं रजतम्' इति प्रतीतेरस्ति रजतप्रतीति-बाधकत्वमिति । अस्तु वाऽत्यन्ताभावान्योन्याभावयोर्भेदः परमते ; तथाऽपि तैरण्यकार्य-कारणादन्योन्या-भावस्य तदत्यन्ताभावनियतत्वाभ्युपगमाद् 'नेदं रजतम्' इत्यन्योन्याभावे सति तन्नियततया तदत्यन्ता-भावबोधाद् बाधावश्यंभावात् । सर्वथाऽपि बाधप्रत्ययस्य सर्वानुभवसिद्धत्वात् तदन्यथानुपपत्याऽपि 'इदं रजतम्' इति मिथ्याप्रत्ययोऽभ्युपगन्तव्यः । *एतेन*—विवादाध्यासिताः सर्वे प्रत्ययाः, यथार्थाः, प्रत्ययत्वात् ; प्रमितिवदित्यनुमानमपि—*अपास्तम्* ; बाधानुभवविरोधेन कालात्ययापदिष्टत्वात्, अबाधितविषयत्वस्याविसंवादिप्रवृत्तिजनकत्वस्य चोपाधित्वाच्च । नच सर्वत्र प्रमाणार्थेऽविश्वासप्रसङ्गः ; स्वतः प्रामाण्यग्रहेण विश्वासोपपत्तेः ; अन्यथा तवापि मते किं संवादिप्रवृत्तिजनकमिदमेकं ज्ञानम् ? किं वा विसंवादिप्रवृत्तिजनकमगृहीतसंसर्गं ज्ञानद्वयम् ? इत्यविश्वासात् प्रवृत्त्यनुपपत्तिरित्यलमतिविस्तरेण । तस्मादस्ति मिथ्याज्ञानम् । तथाच सम्यगुपसंहृतम्—"विषयमिथ्यात्वादुपपन्नं ज्ञानस्य मिथ्यात्वमि"ति । तेनैवं लक्षण-प्रमाणाभ्यां सत्यानृतात्मकेऽध्यासे निरूपिते तदुपादान-निमित्तयोर्जिज्ञासायामाह—*इतरेतरा-विवेकेनात्यन्तविविक्तयोर्धर्मधर्मिणोरिति* । *अत्यन्तविविक्तयोः=ज्ञानत्वाज्ञानत्वाभ्यां सत्यानृतत्वाभ्यां च ; *धर्म-धर्मिणोः=परमात्माविद्याशक्त्योः ; *इतरेतराविवेकेन=तादात्म्येन, अध्यस्येति योजना । तथाच परमात्माविद्याशक्त्योरनाद्यध्यास एवाहंकाराद्यध्यासस्यापादानम्, निमित्तं च पूर्वपूर्व-तदध्यास-संस्काररूपत्वेनेत्युक्तं भवति । "धर्म-धर्मिणोरि"त्यनेन प्रधानवादो निराकृतः ; धर्मस्य स्वातन्त्र्यानुपपत्तेः ।

वार्तिकम्

"अत्यन्तविविक्तयोरि"त्यनेन पारमार्थिकधर्मधर्मित्वं निराकृतम्; अत्यन्तविविक्तयोर्गवाश्वयोरिव पारमार्थिकधर्मधर्मित्वानुपपत्तेः॥

तेनेदमपि सूचितं भवति:—आत्माज्ञानयोर्धर्म-धर्मिभावेनैव तादात्म्याध्यासः, न परस्परात्मत्वरूपेणेति। नच—एतावताऽऽत्मन्यज्ञानस्य संसर्गाध्यासमात्रम्, न स्वरूपतोऽध्यास इति—वाच्यम्; संसर्गाध्यासेऽपि कामादिवत्स्वरूपाध्यासाविरोधात्, भ्रमे भासमानवैशिष्ट्यप्रतियोगिनो मिथ्यात्वस्य साधितत्वात्, परस्परैक्याध्यासे च 'अहमज्ञः' इत्याश्रयाश्रयिभावेन प्रतीत्यनुपपत्तेः, शक्ति-शक्तिमद्व्यवहारभेदानुपपत्तेश्च। नचैवमात्मन आनन्दादिस्वरूपप्रथाप्रसङ्गः; "आनन्दभुक् चेतोमुखः" इत्यादिश्रुतेस्तत्प्रथाया इष्टत्वात्, निर्विशेषतत्स्वरूपप्रथायास्तु तयैवावृतत्वादनुपपत्तेः॥

*एतेन*—शुद्धचिन्मात्रस्याविद्याविषयत्ववत्तदाश्रयत्वमपि—*व्याख्यातम्*; धर्मतया तत्रैवाविद्याया अध्यासात्। नच—क्रियाज्ञानयोराश्रयविषयभेददर्शनात् कथमविद्यायास्तदभेद इति—वाच्यम्; न ह्येकत्र यद् दृष्टम्, तेनान्यत्रापि भवितव्यमिति नियमोऽस्ति। तथा सति शुक्लायां गवि शुक्लरूपस्य दर्शनात् कृष्णायामपि तत्कल्पनप्रसङ्गः। *यदि ब्रूयात्*—न वयमाश्रय-विषयभावौ भिन्नयोरेकत्र दृष्टावित्यन्यत्रापि तौ तथा कल्पयामः, येनोक्तातिप्रसङ्ग आपाद्येत; किं तर्हि? भिन्नयोरेव तौ क्रियादौ दृष्टावित्याश्रय-विषयभावयोर्भेदनियतत्वादविद्यायामपि भिन्नाभ्यामाश्रय-विषयाभ्यां भवितव्यम्; अत एव तयोर्भेदनियतत्वदर्शनात्—'जीवाश्रया ब्रह्मपरा ह्यविद्या तत्त्वविन्मते'ति—*केचिदाहुरिति*, तन्न; आश्रय-विषयभावयोर्भेदनियतत्वासिद्धेः, तमसि व्यभिचारात्। दृष्टं हि तमः स्वाश्रयमेवापवरकं विषयीकृत्यावृणोतीति। अपिच तमस्त्वादेवाविद्याया बाह्यतमोवदभिन्नाश्रय-विषयत्वं सिद्ध्यति। नचाविद्यायास्तमस्त्वमसिद्धम्; "तमसा गूढम्" "तम आसीत्" इत्यादिश्रुतेः सर्गाद्यकालीनमूलकारणभूतायामविद्यायां तमःशब्दप्रयोगात् तस्यास्तत्त्वसिद्धेः, प्रकाशाऽऽवारकस्यैव तमःशब्दप्रवृत्तिनिमित्तत्वात्, तस्य चाविद्यायामपि भावात्। *एतेन*—जीव-ब्रह्मविभागकल्पनात्तद्भेदसमर्थनमपि—*प्रत्याख्यातम्*; स्वरूपतो जीव-ब्रह्मणोर्भेदासिद्धेश्च। अविद्याश्रयत्व-विषयत्वोपाधिभेदेन तत्कल्पनायां चान्योन्याश्रयापत्तेः—सिद्धे हि जीव-ब्रह्मणोर्भेदे तदाश्रय-विषयभावसिद्धिः, तस्यां च जीव-ब्रह्मभेदसिद्धिरिति। अनादित्वान्नायं दोष इति चेत्, न; निष्प्रमाणत्वेनान्धपरम्पराप्रसङ्गात्॥

अपिच कोऽयं जीवो नाम भवदभिमतः? यदाश्रयाऽविद्या कल्प्यते, न तावच्चिन्मात्रम्; अनभ्युपगमात्, अभ्युपगमे वा विवादाभावादस्मदभिमतसिद्धिः। नाप्यविद्याश्रयः; आत्माश्रयापत्तेः—अविद्याविशिष्टस्याविद्याश्रयत्वेनांशतोऽविद्यायामविद्यावर्तनात्। 'अविद्याश्रयः' इत्यनेनाविद्योपलक्षितस्तदाधारमात्रमुच्यते; तथाच नात्माश्रय इति चेत्, न; तथा सति तदुपलक्षितचैतन्यस्य तदाश्रयविषयसाधारण्यात् तद्भेदानुपपत्तेरस्मदिष्टसिद्धेः। न ह्यविद्यामनन्तर्भाव्य तदुपलक्षितचिन्मात्रमाश्रय-

प्रदीपः

रजतार्थिनामिदंकाराभिमुखीं प्रवृत्तिं जनयति, "इदं रजतमि"ति प्रमावत्; अतोऽध्यास एवाप्रसिद्ध इति, कथमहमित्यध्याससंभवः? इत्यध्याससामान्याक्षेपमुखेनाह—*आह कोऽयमिति*। अध्यास इति कोऽयं पदार्थ इति योजना। किंशब्द आक्षेपार्थः। अध्यासो न संभवतीत्याक्षेपतात्पर्यम्॥ यद्वा *ननु* 'इदं रजतमि"ति ज्ञानानन्तरं रजतार्थिनामिदंकाराभिमुखप्रवृत्तिनिर्वाहो हि सत्यस्थलीयेदंरजतमितिज्ञानवद् इदंपदार्थस्य रजततादात्म्यप्रतीतिं विना न संभवति; ज्ञानद्वयत्वे हि रजतस्मरणाद् आपणाभिमुख्येव प्रवृत्तिः स्यात्। "नेदं रजतमि"ति बाधज्ञानमपि रजतस्य बाधं गोचरयद् ज्ञानद्वयत्वपक्षे

### पञ्चपादिका

नुभवाभावात्। बाधे हि सति स भवति, नेह स विद्यते। तस्मादध्यासस्य लक्षणमभिधाय तल्लक्षण-व्याप्तस्य सद्भावः कथनीयः॥

### पञ्चपादिकाविवरणम्

प्रमाणभेदादित्याह—*बाधे सतीति*॥ बाधानुपपत्तिर्मिथ्यात्वे प्रमाणम्; प्रत्यक्षानुमानव्यवहारानुपपत्त्यागमा आत्मन्यनात्मावभासे प्रमाणमिति भावः। *ननु* इहापि बाधनिमित्तमितरेतरविवेकमन्तरेणान्यस्यान्यात्मनाऽवभासोऽयमित्यवगन्तुं न शक्यते; अन्यथा स्वस्यैव स्वेनात्मनावभासः किं न स्यादिति? नेत्याह—*नेह स विद्यत इति*॥ यौक्तिकज्ञानादिना परोक्षविवेकमाश्रित्य परस्परात्मनाऽवभासनिश्चयः। अपरोक्षबाधस्य भ्रान्तिप्रतिभासोच्छेदिनोऽभावान्न स्पष्टो मिथ्यात्वाध्यवसाय इति भावः। अतोऽविद्यात्वस्पष्टीकरणाय लक्षण-

### ऋजुविवरणम्

कारणत्रयजन्यत्वे सत्य-मिथ्यासंभेदत्वे ज्ञाननिवर्त्यत्वे च प्रमाणं नोच्यत इत्यर्थः। *ननु* प्रमाणे सत्यनुभवेन भवितव्यमिति चोदिते, "बाधे ही"ति परिहारो व्यधिकरणः; प्रकृतं विहायान्यस्योक्तत्वात्, केन मिथ्यात्वानुभवो भवतीत्यपृष्टत्वाच्चेत्याशङ्क्यावतारयति—*प्रमाणभेदादिति*॥

*प्रमाणभेदादित्यस्यायमभिप्रायः*—एकस्मिन्नपि वस्तुन्युभयथाऽनुभवे प्रमाणभेदापेक्षा दृष्टा, स्वरूप-घटयोरिति। *ननु* "बाधे ही"ति कथमुक्तम्, नहि बाधो मिथ्यात्वानुभवहेतुः, किन्तु निवर्तक एव, निवृत्तिर्वा; अथवा—बाधान्मिथ्यात्वानुभव उक्तः; नत्वन्यस्यान्यात्मत्वे तन्मिथ्यात्वे च प्रमाणभेद उक्तः; अतस्तत्र दर्शनमनेन न क्रियते, इत्यसंबद्धमुक्तमित्याशङ्क्याभिप्रायमाह—*बाधानुपपत्तिरिति*॥ *ननु* बाधपुरस्सरेणैव प्रमाणप्रवृत्त्या भवितव्यम्, तथाच सति लक्षणादिवैयर्थ्यं तदवस्थमेवेत्यभिप्रायेण चोदयति—*नन्विहापीति*॥ "नेह स विद्यते" इत्यनेन न बाधो निषेध्यः; बाधाभावेऽन्यस्यान्यात्मनाऽवभासोऽपि न सिद्ध्यतीत्युक्तत्वात्, नापि मिथ्यात्वानुभवबाधे सति, मिथ्यात्वस्य सिद्धत्वात्, अतः सङ्कटमित्याशङ्क्याभिप्रायमाह—*यौक्तिकज्ञानादिनेति*॥ तर्हि मिथ्यात्वस्यापि सिद्धत्वाल्लक्षणादिवैयर्थ्यं तदवस्थमित्याशङ्क्याह—अपरोक्षबाधस्येति*॥ "लक्षणमेवे"त्यनेन प्रमाणमात्रेण नालमित्युक्तम्, *यद्वा*—लक्षणं वक्तव्यमेवेत्यर्थः।

### तत्वदीपनम्

नुपपत्तिरिति*॥ सत्यत्व आत्मवद् बाधानुपपत्तेर्न मिथ्यात्वमित्यर्थः। 'अहं मनुष्यः' इत्यादिप्रत्यक्षं प्रत्यक्षशब्दार्थः। विवादाध्यासितो व्यवहारः, अध्यासनिबन्धनः, व्यवहारत्वात्; पश्वादिव्यवहारवदित्यनुमानम् = अनुमानशब्दार्थः। प्रमातृत्वादिव्यवहारो व्यवहारशब्दार्थः। "अष्टवर्षं ब्राह्मणमुपनयीत" इत्यादिरागमः॥

आत्मन्यनात्मावभासिप्रमाणस्य बाधपुरस्कारेण प्रवृत्तत्वान्न प्रमाणान्तरापेक्षा मिथ्यात्व इति चोदयति—*नन्विहापीति*॥ अन्यस्यान्यात्मताप्रतिपत्तौ विवेकप्रतिपत्तिर्नापेक्ष्यते; अनुपयोगाद् इत्याशङ्क्योपयोगमाह—*अन्यथेति*॥ 'बाधाभाव इतरेतरविवेकाप्रतिपत्तेरितरेतराऽवभास एव न सिद्ध्येत्' इत्युक्तम्, तस्य कः समाधिः? इत्याशङ्क्याह—*यौक्तिकेति*॥ नच—एतावतैव मिथ्यात्वसिद्धेः प्रमाणान्तरं व्यर्थमित्यपि-शङ्क्यम्; अपरोक्षभ्रमस्यापरोक्षप्रत्ययं विनाऽनिवृत्तिरित्याशयेनाह—*अपरोक्षबाधस्येति*॥ बाधकप्रत्ययं विना मिथ्यात्वासिद्धिश्चेत्, स एव सम्पाद्यताम्; किं लक्षणेनेत्याशङ्क्याह—*अत इति*॥ लक्षणमेव वक्तव्यमित्यस्यायमर्थः—न प्रमाण-

### वार्तिकम्

विषयत्वयोर्भिन्नाधिकरणत्वसिद्धये भेत्तुं शक्यते; तद्भेदकोपाधेरभावात्। तदुपलक्षितत्वानुपलक्षितत्वे एव स्तस्तद्भेदकोपाधी इति चेत्, न; एवं हि सत्यविद्योपलक्षितत्वविशिष्टेऽविद्याश्रय इत्युक्तं भवति।

## पञ्चपादिका

*ननु* एवमपि तल्लक्षणस्य वस्तुनः सद्भावमात्रमिह कथनीयम्; न हि यत्र यस्य सद्भावः प्रमाणतः प्रतिपन्नः, तत्रैव तस्यासम्भावनाशङ्का, येन तद्विनिवृत्तये तत्सम्भावनाऽपरा कथ्येत;

## पञ्चपादिकाविवरणम्

मेव वक्तव्यमित्याह--*तस्मादध्यासस्येति* ॥ तर्हि लक्षण-प्रमाणाभ्यामेव वस्तुनिर्णयसिद्धेः प्रमाणेनैवासम्भावनानिराकरणात् सम्भावना पृथगू न वक्तव्येति चोदयति--*नन्वेवमपीति* ॥ सत्यपि प्रमाणसामर्थ्ये प्रत्यक्षाव-

## तत्त्वदीपनम्

मात्रेणालम्, किं तु लक्षणेनापि भवितव्यमिति। प्रसिद्धाध्यासलक्षणेऽभिहिते तल्लक्षणव्याप्तत्वादहंममाभिमानोऽप्यध्यास इति सेत्स्यति, ततश्च बाधकप्रत्यय इति तदुपयोगितया लक्षणं कथ्यत इत्यर्थः ॥

लक्षणमङ्गीकृत्य संभावनामाक्षिपति—*तर्हि लक्षणेति* ॥ संभावनां विना निर्णयासिद्धेः साऽपि वक्तव्येति शङ्कायामाह—*प्रमाणेनेति* ॥ प्रामाणिकस्याप्यसंभावनयाऽपोद्यत्वमुक्तं टीकायाम्, तत् कथम्? असंभावितत्वे प्रामाणिकत्वानुपपत्तेः, प्रामाणिकत्वे वाऽसंभावितत्वाभावादित्याशङ्क्य द्वयमप्यनुभूयत इति परिहरति—*सत्यपीति* ॥ नीरन्ध्रसवितरि निर्दुष्टकरणस्य कथं छुपिरप्रतिभासः? इत्याशङ्क्याहष्टवशादित्याह—*औत्पातिक

## वार्तिकम्

तदुपलक्षितत्वोपलक्षितत्वस्य तदभ्युपगम उपलक्षणानवस्थानात्, तथाच पूर्ववदात्माश्रयः; अविद्योपलक्षितशरीरेऽविद्याया विशेषणतया प्रवेशात्, तत्रापि तस्या उपलक्षणत्वे पूर्ववदुपलक्षणानवस्थानात्, अविद्योपलक्षितत्वाभावप्रसङ्गाच्च। *ननु* एवं तर्ह्यन्तःकरणविशिष्ट एव जीवोऽस्तु, तदाश्रयाऽविद्या भविष्यति। नच—सुषुप्तिकालेऽन्तःकरणाभावेन तदभावप्रसङ्ग इति—वाच्यम्; तत्र संस्काररूपेण तस्य विद्यमानत्वात्तदभावासिद्धेरिति—*चेत्*, न; अन्तःकरण-तत्संस्कारयोरविद्याकार्यत्वेन तदात्मलाभाधीनत्वात्स्वाश्रयलाभमन्तरेणाविद्याया आत्मलाभासंभवात्, शक्तित्वाद्द मिथ्यावस्तुनोऽधिष्ठानसत्तयैव सत्तावत्त्वाच्चान्योन्याश्रयापत्तेः। नच—एवं बीजाङ्कुरवदनादित्वान्नान्योन्याश्रय इति—वाच्यम्; वैषम्यात्। न हि यदेव बीजमङ्कुरं जनयति, स एवाङ्कुरस्तस्य बीजस्य कारणं दृष्टम्, येनान्योन्याश्रयः स्यात्। किं तर्हि? अङ्कुरान्तरम्, तस्य च बीजान्तरमित्यनादित्वान्नान्योन्याश्रयः; नाप्यनवस्था दोषः; दृष्टत्वेन प्रामाणिकानवस्थाया अदोषत्वात्। इह चान्तःकरण-तत्संस्कारप्रवाहः सर्वोऽपि मूलाविद्याकार्यः, अतस्तदात्मलाभाधीनात्मलाभत्वात् कथं नान्योन्याश्रयः? कार्याधीनकारणसत्तानुपपत्तेश्च, कारणत्वव्याघातात्, अनन्यथासिद्धनियतपूर्वसत्त्वस्यैव तत्त्वात्। अनवस्थादोषश्च स्यात्; बीजाङ्कुरवदत्र तथात्वादृष्टत्वेन प्रमाणाभावात् ॥ 'अहमज्ञः' इति प्रत्यक्षेणान्तःकरणविशिष्टेऽविद्याप्रतीतेः कथमत्र तथात्वादर्शनमिति *चेत्*, न; तथा सति 'मनुष्योऽहं न जानामि' इत्यादिप्रतीतेरपि दर्शनादन्तःकरणविशिष्टस्येव मनुष्यदेहादिविशिष्टस्याप्यज्ञानाश्रयत्वप्रसङ्गात्। नच—एवमस्तु; अन्तःकरणवद्देहादेरपि प्रमातृकोटिप्रवेशात् प्रमातुर्जीवस्यैव ज्ञानाश्रयत्वाभ्युपगमात् सुषुप्तेऽन्तःकरणसंस्कारवद्देहस्य तदाश्रयसंस्कारस्य वा विद्यमानत्वात् तद्विशिष्टस्याविद्याश्रयत्वाविरोधादिति—वाच्यम्; देवादिभानकाले मनुष्यत्वाद्यवच्छेदाभावेनाज्ञानाश्रयत्वानुपपत्तेः। नच—देहत्वादिकमेव तदवच्छेदकम्, न मनुष्यत्वादि; तथाच देहत्वादेर्देवदेहादावपि सत्त्वेनानुगमाद्द नाननुगमात्तदाश्रयत्वानुपपत्तिरिति—वाच्यम्; देहत्वादेस्तत्प्रतीतावभासनादवच्छेदकत्वानुपपत्तेः। यो हि धर्मो यत्प्रतीतौ विशेषणतयोपलक्षणतया वा भासते,

## पञ्चपादिका

*सत्यमेवम् :—विषयविशेषस्तु प्रयत्नेनान्विच्छद्भिरप्यनुपलभ्यमानकारणदोषे विज्ञानेऽवभासमानोऽपि पूर्वप्रवृत्तेन सकललोकव्यापिना निश्चितेन प्रमाणेनासम्भाव्यमानतयाऽपोद्यमानो दृश्यते। तद्यथौत्पातिकः सवितरि सुषिः, यथा वा माहेन्द्रजालकुशलेन प्रासादादेर्निगरणम्, एवमविषयेऽसङ्गे

## पञ्चपादिकाविवरणम्

भासनमप्यसम्भाव्यमानतया निराकृतमनुभूयत इत्यनुभवमेवावलम्ब्य परिहरति--*सत्यमेवमिति ॥ औत्पातिक इति* ॥ अदृष्टव्यतिरिक्तकारणशून्य इत्यर्थः ॥

*ननु* प्रमाणेनैव क्वचिदसम्भावना तिरस्क्रियते, यथाऽऽकाशगमने पक्षिणाम्; क्वचिदसम्भावनया प्रतिभासोऽपरोक्षोऽपि निरस्यते, यथा सवितृसुष्यादौ; तत्रात्मन्यनात्मावभासः कं पक्षमवलम्बतामित्यसम्भावनापक्षमेवेति विशेषं दर्शयति--*एवमविषयेऽसङ्ग इति* ॥ अधिष्ठानस्याध्यस्यमानेन सहैकज्ञानविषयत्वं

## ऋजुविवरणम्

*ननु*—नौत्पातिकत्वं सुषेः; अनिष्टद्योतकाभिधायित्वात्, उत्पातशब्दस्यानिष्टाभिधानेऽपि न तद्धितसंभवः। नच

## तत्त्वदीपनम्

इति* ॥ भविष्यदनिष्टमुत्पातस्तत्सूचक औत्पातिक इत्यर्थः। असंभावनया प्रामाणिकस्याप्यपवादवत् प्रमाणेनासंभावनाऽप्यपोद्यमाना दृष्टा, तद्वत्किं न स्यात्? इति चोदयति—*ननु प्रमाणेनेति* ॥ असंभावनाबाहुल्यादसंभावनया प्रामाणिकस्याप्यपवादो युक्त इत्याह—*असंभावनेति* ॥

अविषय इत्यत्र विषयशून्यत्वमुच्यते? विषयत्वराहित्यं वा? नाद्यः; शब्दादेर्भावात्, नेतरः; अस्मत्प्रत्ययविषयत्वादित्यत्राह—*अधिष्ठानस्येति* ॥ अविद्यादिसङ्गित्वादसङ्गित्वमसिद्धमित्याशङ्क्याह—*द्रष्टृव्यतिरिक्तस्येति* ॥ अध्यासनिमित्तस्यानन्दादेः स्वरूपस्य गुणस्य चाङ्गीकृतेः "केन चिदि"त्याद्यनुपपन्नमित्याशङ्क्याह—*अधिष्ठानेति* ॥

## वार्तिकम्

स एव तदवच्छेदको भवति, नान्यः; अतिप्रसङ्गात्। नच देहत्वमज्ञानाश्रयविशेषणतयोपलक्षणतया वा केनचित् कदाचिदप्यनुभूयते—'देहोऽज्ञः' 'देहोऽहमज्ञ'इति वा; न वा प्रमाणान्तरात् प्रमीयते, येन तदवच्छेदकत्वं स्यात्। किं तर्हि? 'मनुष्योऽहमज्ञः' 'देवोऽहं न जानामि' इत्येवं मनुष्यत्वादेस्तद्विशेषणतया तदुपलक्षणतया या प्रतीतिरस्ति। तच्चाननुगतमेवेत्यवोचाम। अस्तु वा देहत्वमवच्छेदकम्; तथाऽपि देहाध्यासस्याविद्यात्मलाभाधीनत्वान्न पूर्वोक्तदोषनिस्तारः। *अथ* मास्तु मनुष्यदेहादेरविद्याश्रयकोटौ प्रवेशः; अननुगमात्, सामानाधिकरण्यप्रतीतिस्तु तदाश्रये देहादेरध्यासादिति—चेत्, एवं तर्ह्यन्तःकरण-तत्सामानाधिकरण्यप्रतीतेरपि तुल्ययोगक्षेमता; देहादिवदविद्याश्रय एवान्तःकरणाध्यासात्। अन्तःकरणविशिष्टाश्रयत्वे चाविद्याया दोष उक्त एव। तस्मान्नान्तःकरणविशिष्टाश्रयाऽविद्या, किं तर्हि? शुद्धचिन्मात्राश्रयेति सिद्धम्। कथं तर्हि जीवेश्वरविभागसिद्धिः? नैवम्; "तत्त्वमसि" "अहं ब्रह्मास्मि" इत्यादितदभेदप्रतिपादकश्रुतिशतविरोधेन तद्विभागासिद्धेः। श्रुतिविरोधात् पारमार्थिकतद्विभागाभावेऽपि व्यवहारदर्शनात् काल्पनिकस्तद्विभागोऽस्त्येवेति चेत्, सत्यम्; तत्र काऽनुपपत्तिः? एकस्मिन्नपि शुद्धचिदात्मन्यविद्याश्रयत्वविषयत्व-कृताज्ञत्व-सर्वज्ञत्वधर्मभेदात् तद्विभागव्यवहारोपपत्तेः। *ननु* तदाश्रय-विषययोश्चिन्मात्रत्वाविशेषात् कथं तद्धर्मव्यवस्थेति—चेत्, *नैष दोषः*; मुख-सूर्यादिबिम्ब-प्रतिबिम्बयोर्मुख-सूर्यादिमात्रकत्वाविशेषेऽप्यवदातत्व-श्यामत्व-कम्पाकम्पादिधर्मव्यवस्थावत्तयोरेकत्वेऽ-

## पञ्चपादिका

केनचिदपि गुणादिनाऽध्यासहेतुना रहिते निष्कलङ्कचैतन्यतयाऽन्यगतस्याप्यध्यासस्यापनोदनसमर्थेऽ-

## पञ्चपादिकाविवरणम्

वक्तव्यम्, तदभावान्नाध्याससम्भव इत्याह—*अविषय इति* ॥ द्रष्टृव्यतिरिक्तस्य कृत्स्नस्य कार्यकारणसंघातस्याध्यासात्मकत्वेन द्रष्टर्येव काचादिवद्दोषानुषङ्गो वक्तव्यः, तदभावान्नाध्याससम्भव इत्याह—*असङ्ग इति* ॥ अधिष्ठानस्याध्यस्यमानेन गुणावयवसादृश्यं वक्तव्यम्, तदभावान्नाध्याससम्भव इत्याह—*केनचिदपि

## तत्त्वदीपनम्

चैतन्यस्याधिष्ठानत्वान्न तन्मात्रज्ञानमारोपविरोधि, इदमाकारज्ञानवदित्यत आह—*अधिष्ठानेति* ॥ सामान्यविशेषभावेन भेदात्सामान्यज्ञानमविरोधि, विशेषज्ञानं तु विरोधि, न तथाऽत्र, सामान्यादिभेदाभावादित्यर्थः । अविषयादि-

## वार्तिकम्

ष्यज्ञत्व-सर्वज्ञत्वादिधर्मव्यवस्थोपपत्तेः । *एतेन*—एकाविद्यापक्षे कथं बन्ध-मोक्षव्यवस्था स्यादित्यपि—*अपास्तम्* ; शुद्धचिदेकरसेऽज्ञदृष्ट्या जीवेश्वरविभागवद्बद्ध-मुक्तविभागोपपत्तेः । *ननु* एकाविद्यैकजीवपक्षे शुकस्य मोक्षश्रवणात् तत्तत्त्वज्ञानेन सविलासाविद्याविनाशादिदानीं संसारोपलम्भो न स्यात् । *एतेन*—एतावता कालेन कोऽपि न मुक्त इति—*अपास्तम्* ; शुकादिमुक्तिप्रतिपादकश्रुति-स्मृतिविरोधात्, अन्यथैतावता कालेन चेद्वेदान्तश्रवणादिना कस्यचिदपि विज्ञानं नोत्पन्नम्, उत्पन्नाद्वा तस्मान्न मोक्षः प्राप्तः, तर्ह्यस्माकमिदानीन्तनानां पूर्वतनापेक्षयाऽल्पमेधसां तेन विज्ञानमुत्पत्स्यते, उत्पन्नाद्वा तस्माद् मोक्षो भविष्यतीति का प्रत्याशेत्यनध्यवसायात् श्रवणादौ कोऽपि न प्रवर्तेतेति—चेत्, *न* ; दत्तोत्तरत्वात् । उक्तं हि—"शुद्धचिदेकरसेऽज्ञदृष्ट्या जीवेश्वरविभागवद् बद्ध-मुक्तव्यवस्थोपपत्तेरि"ति । *तथाहि*—किं विद्वद्दृष्ट्या बद्ध-मुक्तव्यवस्था प्रतिपाद्यते ? अविद्वद्दृष्ट्या वा ? नाद्यः ; तद्दृष्ट्या तदभावात् । "यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः" ॥ "यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येदि"त्यादिश्रुतेः । अपिच यद्दृष्ट्या जगदेव कालत्रये नास्ति, तत्र दूरत एव बन्ध-मोक्षव्यवस्थेति । द्वितीये तु न काचिदनुपपत्तिः । यथा हि स्वप्नेऽज्ञ एकोऽपि सन् 'शुको मुक्तः' 'विष्णुशर्मा बद्धः' 'अयं मे पितेयं मे माता' 'अयमहं जितामित्रो मृतां भार्यां शोचामी'ति बहुविधं द्वैतं कल्पयित्वा व्यवहरति ; तथा जागरेऽपि तादृशं बहुविधं द्वैतं कल्पयित्वा व्यवहरतीति न काचिदनुपपत्तिरस्ति । न हि बन्ध-मोक्षादिकल्पना पारमार्थिकी ; "ब्रह्म तं परादात् योऽन्यत्रात्मनो ब्रह्म वेद" "सर्वं तं परादात् योऽन्यत्रात्मनः सर्वं वेद" । "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इत्यादिश्रुतिशतविरोधात् । भगवानपि वासुदेव इममर्थमाह—"*बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुतः । गुणस्य मायामूलत्वाद् न मे मोक्षो न बन्धनम्" इति* ॥ *एतेन*—एकस्य मुक्तौ द्वितीयस्याज्ञानस्यैवाभावात् कस्य दृष्ट्या तत्कल्पना स्यादिति—*अपास्तम्* ॥ परमार्थदृष्ट्यैकमुक्तेरेवाभावात् । *एतेन*—अनध्यवसायोऽपि—निरस्तः ; अज्ञस्य बद्ध-मुक्तादिभेदेन नानात्वदृष्टेर्विद्यमानत्वेनानध्यवसायानुत्पत्तेः, कर्मकाण्डवन्मोक्षशास्त्रस्य कल्पनाविषयत्वेऽप्यविद्यादशायां प्रामाण्योपपत्तेः, विद्यादशायां तु तद्वदेव तत्प्रामाण्यानभ्युपगमात् । अत एव भगवान् भाष्यकारो मोक्षशास्त्रस्याप्यविद्यावद्विषयत्वं वक्ष्यति । तस्मादुक्तप्रकारेणैकाविद्यापक्षे बन्ध-मोक्षव्यवस्थोपपत्तेर्न तदर्थं निष्प्रामाणिक्यनेकाविद्याकल्पना युक्ता ॥

## पञ्चपादिका

ध्यासावगमोऽविभाव्यमानकारणदोषो विभ्रम इत्याशङ्क्येत, तन्मा शङ्कीति, सद्भावातिरेकेण सम्भवोऽपि पृथक् कथनीयः; *तदुच्यते*; "आह कोऽयमध्यासो नामे"ति किंवृत्तस्य प्रश्न आक्षेपे च

## पञ्चपादिकाविवरणम्

गुणादिनेति* ॥ अधिष्ठानयाथात्म्यावभासोऽध्यासविरोधी, तद्भावाच नाध्याससम्भव इत्याह—*निष्कलङ्कचैतन्यतयेति* ॥

*ननु* आत्मन्यविषयादिरूपेऽनवगते नासम्भावनाबुद्धिः, अवगते तु नाध्यास एव तिष्ठति, कुतोऽसम्भावनाबुद्धिरिति, *नैतत्सारम्*; आत्मन्यविषयादिरूपे परोक्षावभासोऽसम्भावनाबुद्धिहेतुः, अपरोक्षावभासोऽध्यासस्य निवर्त्तक इत्युक्तत्वात्। उपसंहरति—*तन्मा शङ्कीति*—*तदुच्यते* ॥ तत्=त्रितयं लक्षणं सम्भावना प्रमाणं क्रमेणोच्यत इत्यर्थः। अनन्तरभाष्यस्य तात्पर्यमाह—*आह कोऽयमिति* ॥

## ऋजुविवरणम्

निर्निमित्तत्वम्; विरोधात्, नाप्यदृष्टजन्यत्वम्; दोषजन्यत्वेनैव मिथ्यात्वप्रसङ्गात्, कारणानुपलम्भेऽप्यौत्पातिकत्वाङ्गीकारात्, अतो दोषजन्यतया विषयापह्नवः, न त्वसंभावनामात्रेणेत्याशङ्क्य व्याचष्टे—*औत्पातिक इति* ॥ *अदृष्टेति* ॥ सिद्धे मिथ्यात्वेऽदृष्टसिद्धिः, न तु पूर्वमिति भावः। "तदुच्यते" इत्यत्र तच्छब्देन प्रकृतसंभावनानिर्देशशङ्का स्यात्; सन्निहितत्वात्, तथा सत्यनन्तरं लक्षणप्रदर्शनमसम्बद्धम्, तदिति तृतीयलिङ्गनिर्देशोऽप्ययुक्तः स्यात्, तां व्यावर्तयति—*तत्त्रितयमिति* ॥ त्रितयमुच्यत इति प्रतिज्ञायानन्तरमेकमेव वक्तुमनुचितम्, लक्षणनिरूपणे

## तत्त्वदीपनम्

रूपात्मन्यनधिगतेऽसंभावनाबुद्धिः? उताधिगते? इति विकल्प्योभयथाऽप्यसंभव इत्याह—*नन्वात्मनीति* ॥ द्वितीयं पक्षमादायोत्तरयति—*नैतत्सारमिति* ॥

अधिगतेऽध्यास एव न तिष्ठतीति यदुक्तम्, तदेव विवेचनीयम्—अविषयादिरूपात्मनि किं परोक्षतया प्रतिपन्नेऽध्यासनिवृत्तिः? उतापरोक्षतया? इति विकल्प्य, आद्ये नानुपपत्तिरित्याह—*आत्मनीति* ॥ परोक्षतयाऽवभासस्याध्यासाविरोधित्वान्नाध्यासनिवर्तकत्वम्, ततश्चासंभावनाबुद्धिः स्यादित्यर्थः। द्वितीयस्त्वङ्गीक्रियत इत्याह—*अपरोक्षेति* ॥ *उक्तत्वादिति* ॥ "यतो ज्ञानमज्ञानस्यैव निवर्तकमि"त्यत्रेत्यर्थः। संभवस्य प्रकृतत्वात्तच्छब्देन संभवपरामर्शः शङ्क्येत, न च संभवति; तच्छब्दस्य नपुंसकत्वात्, इत्याशङ्क्य परिहरति—*तत् त्रितयमिति*॥ लक्षणादीनामन्यतमस्यापि वैयर्थ्याभावात्तल्लक्षणादित्रितयमप्युच्यत इत्यर्थः। "स्मृतिरूपः" इत्यत्र लक्षणमेवोच्यते, नेतरे इत्याशङ्क्याह—*क्रमेणेति*॥ किंशब्दस्याक्षेपे प्रश्ने च प्रयुज्यमानत्वात्स किमर्थ इति न ज्ञायते, तत्राह—*किंवृत्तस्येति* ॥ किंशब्दादुपरि वृत्तः किंवृत्तः, तस्येति यावत्। उभयत्र प्रयोगेऽप्येकस्मिन् वाक्ये नैकस्य शब्दस्योभयार्थत्वम्, यथा गोशब्दस्याऽनेकत्र प्रयोगेऽप्येकस्मिन् प्रयोग ऐकार्थ्यनियमः, तद्वदित्याशङ्क्याह—*उभयस्येति* ॥ 'अध्यासः' इत्युक्ते सामान्यज्ञानात्प्रश्नः, 'आत्मनी'त्युक्ते विशेषज्ञानादाक्षेप इत्यर्थः। तन्त्र्यते व्युत्पाद्यतेऽनेनेति तन्त्रशब्दः शास्त्रवाची?

## वार्तिकम्

"इन्द्रो मायाभिः पुरुरूप ईयते" इति मायाबहुत्वश्रुतेर्न निष्प्रामाणिकी तत्कल्पनेति चेत्, न; मायाकार्येन्द्रियवृत्तीनामेव मायाभिरित्यनेनाभिधानात्, "युक्ता ह्यस्य हरयः शता दश" इति वाक्यशेषे तत्परत्वाध्यवसानात्, लोकेऽपि मायाकार्य इन्द्रजालादौ मायाशब्दप्रयोगदर्शनात्, स्मृतावपि "*माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद*" ॥ इत्यादौ तत्र तत्प्रयोगात्, एकाविद्याप्रतिपादकश्रुति-स्मृतिविरोधाच्च। श्रुतिस्तावत्—"अजामेकां लोहित-शुक्ल-कृष्णां बह्वीः प्रजाः सृजमानां सरूपाः। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः।" 'मायां तु प्रकृतिं विद्यादि'त्यादिः। स्मृतिश्च—

## वार्तिकम्

“दैवी ह्येषा गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते”॥ इत्यादिः। न हि प्रतिजीवं मायाभेदे “अजो ह्येको जुषमाणोऽनुशेते। जहात्येनां भुक्तभोगामजोऽन्यः” “मायामेतां तरन्ति ते” इत्येकस्या मायाया अनेकजीवसम्बन्धित्वमुपपद्यते। मायाया ईश्वरशक्तित्वादीश्वरैक्येन तदैक्येऽपि प्रतिजीवमस्त्यविद्याभेद इति चेत्, न; प्रतिजीवं कार्याविद्याभेदापत्त्यामिद्धापत्तेः, अनाद्यविद्यायास्तु मायैक्येन भेदानुपपत्तेः। नच तस्या मायैक्यासिद्धिः; “तरत्यविद्यां विततां हृदि यस्मिन् निवेशिते। योगी मायाममेयाय तस्मै योगात्मने नमः”॥ इति मायाऽविद्ययोः सामानाधिकरण्यश्रवणादैक्यसिद्धेः। नच—एवं सति मायाऽविद्याशब्दयोः पर्यायत्वात् कथं सामानाधिकरण्यमिति—वाच्यम्; स्वाश्रयव्यामोहकत्वाव्यामोहकत्वप्रवृत्तिनिमित्तभेदेन पर्यायत्वासिद्धेः। अपिच यदि मायाऽविद्ययोर्भेदः, तर्हि तव मते “मायाभिः” इति बहुवचनानुपपत्तिः; ईश्वराश्रितमायाया एकत्वात्, तदभ्युपगमे चाविद्याभेदेन जीवभेदवन्मायाभेदेनेश्वरभेदप्रसङ्गात्। तस्माद् वृत्तिभेदेन कार्यभेदेन वा बहुवचनं समर्थनीयम्। तथाच “मायाभि”रिति बहुत्वश्रवणादविद्याबहुत्वं साधु समर्थितं स्यात्। *ननु* मायाऽविद्ययोरभेदे कथमीश्वराश्रिता माया स्यात्? ईश्वरस्याविद्यावत्त्वे चानीश्वरत्वप्रसङ्गात्, तदाश्रयत्वविषयत्वकृतजीवेश्वरविभागव्यवहारानुपपत्तेश्चेति—*चेत्*, न; सिद्धान्तापरिज्ञानविजृम्भितत्वादुक्ताशङ्कायाः। कथम्? इत्थम्; तमस्त्वादेवाश्रय-विषयभेदोऽविद्याया नास्तीत्युक्तम्, तत्र विस्मर्तव्यम्। एवंच सति य एवाश्रयश्चिन्मात्रः, स एव विषय इति स्थितम्। तत्र न तावदविद्यामायेतिनामनी तस्याः स्वरूपप्रयुक्ते भवतः। किं तर्हि? स्वाश्रयव्यामोहाव्यामोहकर्तृत्वप्रयुक्ते। तत्कर्तृत्वाकर्तृत्वे च गुणभेदात्; त्रिगुणात्मकत्वादविद्यायाः। तथा सत्त्वांशप्राधान्ये सैव मायेत्युच्यते; सत्त्वस्य प्रकाशरूपत्वेन स्वाश्रयानावारकत्वात्। अतस्तदाश्रयोऽनावृतचिन्मात्रः। स च गुणोपाधितः सर्वज्ञत्वादिगुणयोगादीश्वर इति गीयते, तद्विषयश्च जीव इति; स्वगुणीभूतरजस्तमोंऽशेन तदाश्रयचिन्मात्रस्य जीवरूपस्याऽऽवृत्याऽऽकाशादिरूपेण विक्षेपणात्; “स इह प्रविष्टः” “हन्तानेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी”त्यादिश्रुतेः। सैव यदा रजस्तमआधिक्यात् स्वाश्रयस्वरूपमावृत्य व्यामोहयन्त्यविद्याख्यां लभते, जीवाश्रितेश्वरविषया भवति; मुग्धचैतन्यस्य जीवत्वात्। *तत्रायमर्थसंक्षेपः*—

भिन्ना यद्यपि नाविद्या मायातो वस्तुतः क्वचित्। तथाऽपि गुणवैषम्यात् तयोर्नाम विकल्प्यते॥
सत्त्वात्मिका तु मायाख्यां लभते कार्यगौरवात्। स्वाश्रयामोहहेतुत्वात् सार्वज्ञ्यादिगुणार्पणात्॥
स्वाश्रये सैव तमसा रजसा च स्वमाश्रये। मोहयन्ती त्वसार्वज्ञ्यदुःखित्वादिगुणार्पणात्॥
अविद्याख्यां च लभते नातो भेदस्तयोः क्वचित्। मायाऽविद्याविभागेन शिरोराहुविभागवत्॥
विषयाश्रययोस्तस्या भवेद् भेदविकल्पनम्। परमार्थतस्तु नैवास्ति भेदश्चिन्मात्रतः स्वतः॥
जीवाश्रया ब्रह्मपदा त्वविद्या तत्त्वविन्मता। ब्रह्माश्रया जीवपदा माया सैव प्रकीर्तिता॥

## प्रदीपः

न समञ्जसम्; अतो नाख्यातिवादोऽयं विकल्पसह इति चेत्, भवतु नाम नाख्यातिवादः संभवदुक्तिक इति, न तु तावता सत्यानृतमिथुनीकरणरूपोऽध्यासः संभवति; देशान्तरीयरजतस्य ज्ञानलक्षणप्रत्यासत्त्या सन्निकृष्टस्य संसर्गाध्यासमात्रं भ्रमे कल्प्यत इत्यङ्गीकारादन्यथाख्यातिवाद एव श्रेयान्। अस्मिन् हि पक्षे “नेदं रजतमि”ति रजतसंसर्ग एव बाध्यते, न रजतमिति, नेदंकाराभिमुखप्रवृत्त्यनुपपत्तिः, न वा “नेदं रजतमि”ति बाधानुपपत्तिः। अङ्गीकृतं ह्यनिर्वचनीयख्यातिवादिभिरपि चैतन्यस्यान्तःकरणे संसर्गाध्यासमात्रेणापि परस्पराध्यासव्यवहार इति। तथाच पुरोऽवस्थितेदंपदार्थसंसर्गमात्रं रजते यथा कल्प्यते,

### वार्तिकम्

तस्मान्नेशस्याविद्यावत्त्वेनानीशतापत्तिः, नापि जीवेश्वरविभागव्यवहारानुपपत्तिः। तथाच प्रतिजीवं मायाया अभेदेऽप्यविद्याभेदोऽस्तीत्यपेशलं वचः। *ननु*—तत्रापि मते "अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः।" "मायामेतां तरन्ति ते" इति श्रुतिस्मृती विरुद्ध्येते; अनेकजीवानङ्गीकरणादिति—*चेत्*, न; अविद्ययैवाविद्वद्दृष्ट्या तद्भेदकल्पनस्योक्तत्वात्। यथा ह्यविद्याया विषय एक एवेश्वरः सन् भूत-भौतिकनानाजडप्रपञ्चाकारेणाविद्वद्दृष्ट्या विकल्प्यते, तथैक एव तदाश्रयो जीवः सन्नविदुषा नानाचेतनाकारेण विकल्प्यते। तथाच श्रुतिः—"विज्ञानं चाविज्ञानं च सत्यं चानृतं च सत्यमभवत्" इत्यदोषः। *ननु* नानाविद्यापक्षेऽप्यविद्वद्दृष्ट्यैव कल्पिता जीवभेदाः; अत एकाविद्यापक्षे न ततः कश्चिदपि विशेष इति—*चेत्*, न; अविशेषासिद्धेः, एकाविद्यापक्ष एकस्यैवाविदुषो जीवस्य तद्भेदकल्पकत्वात्, नानाविद्यापक्षे त्वविद्वांसो बहव इत्यस्ति पक्षयोर्महान् विशेष इति। नच—एवं सति कोऽसावज्ञ इत्यनिर्धारणात् श्रवणादावप्रवृत्तिरिति—*वाच्यम्*, अज्ञानस्य स्वसाक्षिकत्वेन तदनवधारणासिद्धेः।

अपिच बन्ध-मोक्षादिव्यवस्थोपपत्त्यर्थं हि त्वया नानाऽविद्या कल्प्यते। नच तत्कल्पनेऽपि तदुपपत्तिरस्ति; वैपरीत्यात्। *तथाहि*—शुकाविद्ययाऽयं विद्यमानाकाशादिप्रपञ्च आरब्धो वा? न वा? तत्राद्ये तद्विद्यया तस्य सविलासाविद्या निवृत्ता? न वा? न चेत्, कथं तस्य मोक्षः? बन्धस्य विद्यमानत्वात्। विनिवृत्ता चेत्, कथमन्येषामिदानीं प्रपञ्चोपलब्धिः स्यात्? नच--अयं प्रपञ्चस्तं प्रति निवृत्तोऽपि माऽस्मदादीन् प्रति निवृत्तदिति—वाच्यम्; भाव-निवृत्त्योः पुरुषानपेक्षवस्तुधर्मत्वात्। न हि घटो ध्वस्तः कंचित् प्रत्यध्वस्तो भवति, नापि विद्यमानः कंचित्प्रत्यविद्यमानो भवतीति लोके दृष्टम्। नच—अविद्यानिवृत्तावपि प्रपञ्चो न निवर्तत इति—वाच्यम्; उपादाननिवृत्तौ कार्यनिवृत्तेरावश्यकत्वात्। नच—तन्निवृत्तावपि खण्डपटवदवशिष्टाभिरविद्याभिः पुनरारब्धः प्रपञ्चो भविष्यतीति—वाच्यम्; खण्डपटवदेव जगद्वैलक्षण्यप्रसङ्गात्, प्रतिसर्गं च श्रुति-स्मृतिभ्यां तदैकरूपतावधारणात्। *ननु* यः प्रपञ्चस्तदविद्यारब्धः, स तु निवृत्त एव, अयं च दृश्यमानः प्रपञ्चो बद्धजीवान्तराविद्यारब्धः; प्रतिजीवं प्रपञ्चभेदात्, अतो विद्यमानप्रपञ्चस्य तदविद्यानारब्धत्वान्नोक्तदोष इति—चेत्, न; प्रतिजीवमाकाशादिप्रपञ्चभेदकल्पने प्रमाणाभावात्, सर्वोपनिषत्स्वाकाशादिक्रमेणैकदैव प्रपञ्चस्योत्पत्तिश्रवणात् तद्व्याकोपापत्तेश्च। अत एव पुराणेषु कुत्रचिदनेकब्रह्माण्डश्रवणं तदर्थवादत्वेन, कल्पभेदाभिप्रायेण, दृष्टिसृष्टिवादाभिप्रायेण वा नेयम्; अन्यथा सर्वोपनिषद्व्याकोपापत्तेः।

अपिच यदि प्रपञ्चभेदः स्यात्, शुकाविद्यारब्धप्रपञ्चस्येदानीमसत्त्वाद् न तत्र कोऽपि बद्धोऽस्ति, अस्मदारब्धविद्यमानप्रपञ्चे तु न कोऽपि मुक्तोऽस्तीति बन्ध-मोक्षव्यवस्था भवता साधु समर्थिता

### प्रदीपः

एवं ज्ञानलक्षणप्रत्यासत्तिसन्निकृष्टरजतसंसर्गमात्रमेवेदंपदार्थेऽपि स्वीक्रियताम्, किमिति मिथ्यारजतान्तरकल्पनम्? अन्यथाख्यातिवादिनां वाऽऽक्षेपमनुवदति—*आह कोऽयमध्यासो नामेति*॥ *अयमध्यासः=सत्यानृतमिथुनीकरणरूपः। को नाम? किमाक्षेपे। एतादृशोऽध्यासो न संभवति। सत्यं भ्रमज्ञानं प्रमातिरिक्तं वर्तते---"इदं रजतमि"त्यादिरूपम्, परन्तु नात्र सत्यानृतमिथुनीकरणमिति भावः। असत्ख्यातिवाद आत्मख्यातिवादो वा लोकवेदविरुद्धत्वाद् नाशङ्कामप्यर्हतीति तु हृदयम्। अथवेमावपि वादावन्यथाख्यातिवादस्यैवावान्तरभेदाविति न दोषः। आक्षेपद्वयमपि समाधत्ते---*स्मृतिरूपः परत्र पूर्वदृष्टाव-

वार्तिकम्

स्यात्। न हि विद्यमानानादिभवे कश्चिदपि मुक्तोऽस्ति, यदि मुक्तोऽस्ति, तर्हि न प्रपञ्चभेदः। तत्र चोक्तो दोषः। नच प्रपञ्चान्तरवर्ती जीवोऽस्मद्दृष्टिपथमवतरितुं योग्यो भवति ; अस्मदविद्याश्रय-विषय-कोटावप्रवेशात्, स्वाविद्याश्रय-विषयकोटिप्रविष्टस्यैव स्वदृश्यत्वात्, तत्कार्यजडाजडप्रपञ्चयोरपि तदाश्रय-विषयकोटिप्रविष्टत्वादित्युक्तत्वात्, तत्कोटिप्रवेशाभ्युपगमे च जीवान्तरस्य स एवैकाविद्यैकजीववादी नामान्तरेण भवताऽभ्युपगतः स्यात्। अपिच स च मुक्तो जीवो बद्धजीवेश्वराभ्यां भिन्नतयाऽवतिष्ठते ? अभिन्नतया वा ? नोभयथाऽपि मोक्ष उपपद्यते। भिन्नतयाऽवस्थानेऽद्वैतभावाभावादमोक्षः ; तद्भावस्यैव मोक्षत्वात्। द्वितीये तु नियन्तृ-नियम्यभावापन्नाभ्यां जीवेशाभ्यां भेदाद् हिरण्यगर्भभावापत्तिवत् पुनः संसार एव, न कैवल्यम्। *ननु* यथा जीवेश्वरयोः स्वरूपत एकत्वेऽपि न परस्परधर्मसङ्करः ; तत् कस्य हेतोः ? तयोरुपाधिभेदस्योक्तत्वात्, तद्वद् बद्ध-मुक्तजीवयोर्बद्धत्व-मुक्तत्वोपाधिभेदाद् धर्मासाङ्कर्यं भविष्यतीति—चेत्, न ; मुक्तमापाद्यतस्तन्मुक्तत्वस्याद्याप्यसिद्धत्वादुपाधिभेदासिद्धेः। अपिच 'तत्त्वमसी'त्यादिवाक्याज्जायमानमभेदज्ञानमीश्वरगतनियन्तृत्वसर्वज्ञत्वाद्यौपाधिकधर्मं निवर्तयति ? न वा ? न चेत्, जीवगतकर्तृत्वादिकमपि न निवर्तयेत् ; अविशेषात्। निवर्तयतीति चेत्, एवं तर्हि कथमन्यं प्रति तदीशितृत्वं स्यात् ? प्रतिजीवं भेदकल्पने चेश्वरभेदप्रसङ्गः। तदप्रसक्तौ च शुद्धाशुद्धयोरभेदज्ञानानुपपत्तिरित्यास्ताम्। सर्वथाऽपि नास्त्यविद्याया नानात्वकल्पने मानमुपपत्तिर्वेत्ये-कैवाविद्या, तदुपाधिकश्चैक एव जीव इति सिद्धम्॥

सा चानाद्या ; अनाद्यहङ्कारादिकार्यप्रवाहहेतुत्वात्, स्वतन्त्रचिदुपाधित्वाच्च। स्वातन्त्र्यं च चिदन्यानधीनत्वम् ; अहङ्कारादेश्चिदुपाधित्वेऽपि तदुपाधित्वस्याविद्याधीनतया चिदन्यानधीनत्वाभावात्। नच—चिदिति विशेषणं व्यर्थम् ; अन्यानधीनत्वमित्यनेनैवाहङ्कारादेर्वारणादिति—वाच्यम् ; तद्वारणेऽप्यसंभव-वारणार्थत्वात् सार्थकत्वोपपत्तेः ; अन्यथाऽविद्यायाश्चिदधीनात्मलाभेन तदुपाधित्वादन्यानधीनत्वाभावेना-संभवापत्तेः॥

सोऽयमनादित्वसाधनाय प्रयुक्तो व्यतिरेकी हेतुरविद्याया लक्षणं भवति। मिथ्यात्वं च दृश्यत्व-जडत्व-परार्थत्वादिभ्यः शुक्तिरजतादिवत्। यथा चैतेषां मिथ्यात्वगमकत्वम्, तथा प्रतिपादितमस्माभि-रद्वैतामृतकन्द इति नात्र प्रपञ्च्यते। मिथ्याज्ञानोपादानत्वादप्यविद्याया मिथ्यात्वम् ; कार्यस्योपादानानु-सारित्वात्, मिथ्याभूतमिथ्याज्ञानस्य सत्योपादानत्वानुपपत्तेः। यथाच मिथ्याज्ञानस्य मिथ्यात्वमविद्यो-पादानत्वं च, तथा सर्वमावेदितम्। इदमपि व्यतिरेकित्वादविद्याया लक्षणं वेदितव्यम्॥

एतेन अभाववैलक्षण्यमप्यविद्यायाः सिद्धं भवति ; अभावस्योपादानत्वानुपपत्तेः। *ननु*—अविद्या प्रमाणसिद्धा ? न वा ? न चेत् ; आश्रयासिद्धिरनादित्वादिसाधकानामुक्तहेतूनाम्। अथ प्रमाण-सिद्धा, तर्हि प्रमाणसिद्धस्य सत्यत्वेन धर्मिग्राहकप्रमाणविरोधात् कालात्ययापदिष्टता तस्मिन् मिथ्यात्व-

प्रदीपः

भास इति*॥ स्मृतिरूपः=स्मृतिसदृशः, न तु स्मृतिरेवांशतोऽपीत्यख्यातिवादनिरासः। *परत्र=अधिष्ठाने। *पूर्वदृष्टावभासः=पूर्वदर्शनजन्यसंस्कारोद्बोधितस्यैवाभासः, न तु पूर्वदृष्टसंसर्गमात्रस्यावभासः। अनेन चान्यथाख्यातिवादो निरस्यते। अन्यथाख्यातिवादे रजतज्ञानमलौकिकप्रत्यक्षमेव, न लौकिकप्रत्यक्षमित्यापद्येत। नचेदं कोऽप्यलौकिकं प्रत्यक्षमनुभवति। लौकिकप्रत्यक्षता तु विनेन्द्रियसम्प्रयोगं न संभवतीत्यनिर्वचनीयं रजतं तत्रोत्पद्यते। अनिर्वचनीयन्तु चक्षुःसम्प्रयुक्तेदं-माकारवृत्त्यभिव्यक्तसाक्षिचैतन्याध्यस्तत्वात्साक्षिभास्यं प्रत्यक्षतामर्हतीत्यनिर्वचनीयख्यातिरेव युक्ता, नान्यथाख्यातिरिति

वार्तिकम्

साधकहेतोरिति—*चेत्,* न ; तमस आलोकग्राह्यत्ववत्तद्विरोधित्वादविद्यायाः प्रमाणाग्राह्यत्वेऽपि सर्वजनीननित्यानुभवसिद्धत्वादाश्रयासिद्ध्यभावात्। नच प्रमाणसिद्धस्यैव धर्मित्वमिति नियमोऽस्ति ; मिथ्याज्ञानविषयस्यापि शुक्तिरजतादेर्धर्मित्वदर्शनात्, उभयवादिसंप्रतिपन्नतयोपस्थितिविषयस्यैव धर्मित्वोपपत्तेः। नच—अविद्यायास्सर्वजनीननित्यानुभवसिद्धत्वमसिद्धम् ; तथा सति प्रमाणप्रवृत्त्यनुपपत्तेः। सर्वो लोकः—'अहमज्ञः' 'घटं पटं च न जानामि' इति स्वाश्रयां तत्तद्विषयविषयामज्ञाततामनुभूय तत्तद्विषयज्ञानार्थं तत्तद्योग्यप्रमाणं व्यापारयति ; अनधिगतार्थविषयत्वात् प्रमाणानाम्। अधिगते तु फलाभावात् तद्व्यापारणानुपपत्तेः। न हि छिन्ने वृक्षे व्याप्रियमाणोऽपि कुठारश्छिदान्तरं साधयति ; एकावच्छेदेनैकस्मिन् विषये युगपत्फलद्वयासंभवात्। नच तामभावयत् करणं भवति ; करणस्य फलनियतत्वात्। अतो द्वैधीभावाभावमनुभूय कुठारव्यापारणवदज्ञाततामनुभूयैव प्रमाता प्रमाणं व्यापारयतीति सिद्धम्। नच तदनुभवः प्रमाणेन भवितुमर्हति ; अन्योन्याश्रयात्—प्रमाणप्रवृत्तावज्ञाततानुभवः, अज्ञाततानुभवे च प्रमाणप्रवृत्तिरित्यन्योन्याश्रयः। प्रमाणान्तरेण तु तदज्ञाततानुभवे तस्यापि तदनुभवपूर्वकप्रवृत्तेश्चक्रकाद्यापत्तेः, तत्तत्प्रमाणेनैव विषयवेदनात् पूर्वप्रमाणलोपापत्तेश्च। अभ्युपेत्यैतदुक्तम्। वस्तुतस्तु—प्रमाणफलेनाज्ञातताया विरोधाद् न तद्विषयिणी प्रमाणप्रवृत्तिः संभवति। न ह्यालोकफलेन विरुद्धं तमस्तद्विषयो भवति ; विषयविषयिभावस्याविरोधनिरूप्यत्वात्॥

*ननु* अवघात-पेषणादीनां व्रीहिविरोधित्वात् कथं तद्विषयतेति—*चेत्*, *न* ; तदवयवानामेव तत्फलाधारत्वेन तद्विषयत्वात् तेषां व्रीहिविषयत्वासिद्धेः। अत एव—"व्रीहीनवहन्ती"त्यादौ व्रीहिशब्देन प्रकृतापूर्वसाधनीभूतं द्रव्यं लक्ष्यते" इत्यभिहितं पूर्वकाण्डे। तस्मात् प्रमाणप्रवृत्तेः पूर्वमज्ञाततानुभवस्य सर्वसिद्धत्वात् तस्यैवं प्रमाणजन्यत्वासंभवेन नित्यत्वसिद्धेः सिद्धमविद्याया नित्यानुभवसिद्धत्वमिति॥

*एतेन*—ज्ञानप्रागभाव एवाज्ञातता, न भवदभिमताऽविद्येति—*परास्तम्*, यद्यस्मदभिमतोऽभावोऽज्ञाततोच्यते, तर्हि नामान्तरमात्रमेतत् ; "नेत्यनृतमि"ति श्रुतेः, *"भावाभावौ पदार्थौ द्वौ लोकविज्ञानगोचरौ* ॥" इत्यादिवचनेनाभावमात्रस्याविद्यात्वप्रापणात्। अथ वाद्यभिमताभावोऽज्ञाततेत्युच्यते, तत्र तस्य तन्मते प्रमाणैकवेद्यत्वात् प्रमाणप्रवृत्तेः पूर्वं प्रमाणाव्यापारात् तज्ज्ञानानुपपत्तेः ; अन्यथाऽन्योन्याश्रयादित्युक्तत्वात्। *ननु* मन इन्द्रियं योग्यानुपलब्धिसहकारेण 'घटं न जानामी'ति तदज्ञाततां ग्रहीष्यति ; पश्चात्तद्विषयचक्षुरादिव्यापारसंभवात् कुतोऽन्योन्याश्रयः ? इति—*चेत्*, *न* ; एवमप्यनवस्थाया आवश्यकत्वात्—अज्ञातताग्रहणार्थं मनोव्यापारणाय तदज्ञातताग्रहोऽपेक्ष्यते, पुनस्तदज्ञाततात्ग्रहार्थमपि तदज्ञाततग्रह इत्यनवस्था। नचान्योन्याश्रयोऽपि परिहृतो भवति ; अज्ञाततग्रहे मनोव्यापारः, मनोव्यापारे चाज्ञाततग्रह इत्यन्योन्याश्रयस्यावश्यकत्वात्। नच मनसाऽभावग्रहोऽपि संभवति ;

प्रदीपः

भावः। अनिर्वचनीयख्यातौ परस्पराध्यासस्वीकारेऽपि परत्रेतिसप्तमीप्रयोगादधिष्ठानं सर्वदाऽधिष्ठानमेव, नाऽऽरोप्यमिति सूत्रनद्वाराऽधिष्ठानवैषम्यस्यारोप्ये ज्ञापनेन सत्यानृतमिथुनीकरणमेवाध्यास इति सूच्यते। यद्यप्यनिर्वचनीयख्यातिवादे न पूर्वदृष्टं भासते ; किन्तु तत्सजातीयमेव ; तथाऽपि प्रातिभासिक-व्यावहारिक-साधारणरजतत्वमेकमिति सिद्धान्ताद् न पूर्वदृष्टपदानुपपत्तिः। अथवा—व्यावहारिकरजततादात्म्यापन्नमेव प्रातिभासिकमिदंपदार्थेऽध्यस्यत इति प्राचीनाचार्यसिद्धान्तविरोधः। आक्षेपसमाधानार्थतया योजनावसरे "स्मृतिरूपः" इति वाक्ये 'अध्यासः' इत्यनुषञ्जनीयम्। तथाचाध्यासः

## वार्तिकम्

सन्निकर्षाभावात्। नच—संयुक्तविशेषणताख्यः सन्निकर्षोऽस्तीति—वाच्यम्; विशेषणताया अतिप्रसञ्जकत्वेन सन्निकर्षत्वानुपपत्तेः; अन्यथा रूपादीनामपि तेन सम्बन्धेन ग्रहोपपत्तेः संयुक्तसमवायादिकल्पनावैयर्थ्यापत्तेः।

*ननु* एवमपि रूपत्वादिग्रहे संयुक्तसमवेतविशेषणत्वादिसम्बन्धे वक्तव्ये तद्घटकतया संयुक्तसमवायादेः सम्बन्धत्वमङ्गीकर्तव्यम्; असम्बद्धस्य परम्परासम्बन्धघटकत्वायोगात्, अन्यथा परम्परासम्बन्धत्वानुपपत्तेः। तथाच रूपत्वादौ संयुक्तसमवेतविशेषणत्वरूपपरम्परासम्बन्धसिद्ध्यर्थमवश्यं रूपादौ संयुक्तसमवायोऽभ्युपगन्तव्यः, न संयुक्तविशेषणत्वम्; तस्योक्तसम्बन्धाघटकत्वात्। एवं च सति रूपादिषु संयुक्तसमवाये सिद्धे रूपत्वादिष्वपि संयुक्तसमवेतसमवाय एव सम्बन्धोऽस्तु; सत्त्वात्, न विशेषणतात्वरूपसम्बन्धविशेषकल्पनमुचितम्; अतो नातिप्रसङ्ग इति—चेत्, *न*; अभावत्वादाविव रूपत्वादावपि संयुक्तविशेषणविशेषणत्वस्य सत्त्वात् तेनैवान्यत्र क्लृप्तेन तद्ग्रहोपपत्तौ संयुक्तसमवेतविशेषणताऽकल्पनाद् न तद्घटकतया रूपादौ संयुक्तसमवायप्रसक्तिः; अतिप्रसङ्गावश्यकत्वात्। नच संयुक्तसमवायाभ्युपगमे विरोधः; तेषां विशेषणताघटकत्वेनैवाङ्गीकारात् केन सम्बन्धेन विशेषणतेति प्रश्ने संयुक्तसमवायादिनेति तत्प्रदर्शनार्थत्वात्; अतो नोक्तदोष इति—चेत्, न; एवमपि नाभाव इन्द्रियसम्बद्धविशेषणतासम्बन्धो भवेत्, भावाभावयोः सम्बन्धानिरूपणादसम्बद्धस्य विशेषणत्वायोगात्। न ह्यसम्बद्धयोर्विशेष्य-विशेषणभावः प्रमाणगोचरः, संभवी वा; तथा सति हिमवद्विन्ध्ययोरपि विशेषणविशेष्यभावप्रसङ्गात्॥

*अथ* भावाभावयोः सम्बन्धान्तराभावेऽपि स्वरूपसम्बन्धसत्त्वादुपपन्नो विशेषणविशेष्यभाव इति—चेत्, *न*; स्वरूपस्यातिप्रसञ्जकत्वेन सम्बन्धत्वानुपपत्तेः, हिमवद्विन्ध्ययोरपि स्वरूपाविशेषात्॥ यत्र यत्र विशिष्टप्रतीतिर्दृश्यते तत्रैव स्वरूपस्य सम्बन्धत्वं कल्प्यते; फलबलकल्प्यत्वात्, हिमवद्विन्ध्ययोस्तु परस्परवैशिष्ट्यबोधाभावाद् न तत्कल्पनम्। अत एव सम्बन्धान्तरमन्तरेण विशिष्टधीजनकसम्बन्धत्वं स्वरूपसम्बन्धनिर्वचनमाहुर्वृद्धा इति चेत्, एवं तर्हि शुक्तौ 'इदं रजतमि'ति विशिष्टप्रतीतिदर्शनात् तत्र तत्कल्पनं स्यात्। नच—एवमस्त्विति—वाच्यम्; तथा सत्यभावप्रतीतिवत्तत्प्रतीतेर्बाधो न स्यात्। नच—एवं सम्बन्धान्तरेणैव तत्र विशिष्टप्रतीतिर्बाध्यते, न स्वरूपसम्बन्धेनेति—वाच्यम्; तथा सति भ्रम-प्रमाविभागो न स्यात्, प्रमायामपि विद्यमानसम्बन्धात् सम्बन्धान्तरेण बाधासंभवात्। *अथ*—शुक्तौ रजतस्य स्वरूपसम्बन्धसत्त्वेऽपि तादात्म्यसम्बन्धाभावात् तेन चेदं रजतमिति प्रतीतौ 'नेदं रजतमि'ति बाधो

## भाष्यभावप्रकाशिका

प्रतिभास्यत्वेन प्रत्यक्षत्वाद् ज्ञेयाध्यासो ज्ञानाध्यासश्च न शक्योऽपह्नोतुमित्यसत्यत्वाद् बन्धस्य विषयादिसंभवादारभ्यमिदं शास्त्रमित्यभिसन्धिः॥ शास्त्रारम्भहेतुविषयादिसाधकमध्यासमाक्षेपसमाधिभ्यां संक्षिप्य तमेव लक्षण-संभावना-सद्भाव-प्रमाणैः स्फुटीकर्तुं चोदयति—*आहेति*॥

## प्रदीपः

स्मृतिरूपः पूर्वदृष्टावभासरूपः सर्वत्र दृश्यते। स चानिर्वचनीयख्यातिवाद एव संभवति, नाख्यातिवादे; न चान्यथाख्यातिवादे वेति निष्कृष्टं योजनम्॥

### वार्तिकम्

युज्यते, प्रमायां तु येन सम्बन्धेन प्रसक्तम्, तेन विद्यमानत्वाद् न बाधप्रतीतिरिति—चेत्, *न* ।
तादात्म्यस्य स्वरूपाव्यतिरेकात्, व्यतिरेकेऽपि 'कुण्डे बदरमि'तिवद् 'भूतले घटो नास्ती'ति युतसिद्धयो-
र्भूतल-घटाभावयोराधाराधेयभावप्रतीतेः स्वरूपसम्बन्धविषयत्वव्याख्यानवत् 'शुक्ताविदं रजतमि'ति
तादात्म्यप्रतीतेस्तथा व्याख्यातुं शक्यत्वात्। बाधदर्शनान्नैवं व्याख्यायत इति चेत्, एवं तर्हि शुक्ति-
रजतप्रतीतिर्मैवं व्याख्यायि, देहात्मप्रतीतिस्तु तथा व्याख्यायताम्; तत्र बाधादर्शनात्। अविदुषां तत्र
बाधाभावेऽपि पण्डितरूपाणामस्ति बाध इति चेत्, किमत्र तेषां बाधकारणम्? भवत्कल्पितं स्वरूप-
सम्बन्धं किं ते न पश्यन्ति? तद्दर्शनेऽपि सम्बन्धान्तरादर्शनात् तत्र तेषां बाधोदय इति चेत्, तत्किम-
भावबुद्धौ तेषां संयोगादिसम्बन्धान्तरदर्शनमस्ति, येन तत्र बाधोदयो न स्यात्। तस्मात् स्वरूपसम्बन्ध-
कल्पनं न युक्तियुक्तं पश्यामः॥

तथाच सम्बन्धाभावान्नाभावस्य विशेषणत्वमुपपद्यते; अतो नेन्द्रियस्याभावेन सम्बन्धुं विशेषण-
तासन्निकर्षकल्पनं घटते। न केवलं सन्निकर्षाभावादेवाभावो नाध्यक्षगोचरः, अहेतुत्वादपि स तथेत्यव-
गन्तव्यम्; जन्याध्यक्षस्य विषयजन्यत्वनियमात्—प्रागभावे सति कार्यमुत्पद्यते, असति च नेति;
अन्यथा जातजनिप्रसङ्गापत्तेरिति तर्कसहितान्वय-व्यतिरेकाभ्यामभावहेतुत्वावगमात् कथमेवमिति
चेत्, न; व्यतिरेकासिद्धेः। सत्स्वेव हि प्रागभावेतरसकलहेतुषु तद्व्यतिरेको ग्राह्यः; अन्यथा तद्व्यति-
रेकादेव कार्यव्यतिरेकसिद्धौ प्रागभावव्यतिरेकग्रहानुपपत्तेः। तत्र च हेतुत्वविशिष्टानामेव हेतुत्वं वाच्यम्,
न तदुपलक्षितानाम्; विशिष्टहेतुत्वे संभवति तदुपलक्षणकल्पनाया अन्याय्यत्वात्। नच—एवं विशिष्टस्य
हेतुत्वे हेतुत्वस्यापि हेतुत्वप्रसङ्गोऽस्ति बाधक इति—वाच्यम्; हेतुत्वविशिष्टस्यैव हेतुत्वाभ्युपगमात्,
हेतुत्वे हेतुत्ववैशिष्ट्याभावात्तत्प्रसङ्गानुपपत्तेः॥

तथाच हेतुत्वस्यानन्यथासिद्धनियतपूर्ववर्तित्वरूपत्वेन प्राक्कालघटितत्वात् प्रागभावकालावच्छिन्न-
कालस्यैव प्राक्कालत्वात् प्रागभावे तदभावेन तदितरसकलहेतूनामेवाभावात् कार्यव्यतिरेकसिद्धौ प्रागभाव-
व्यतिरेकग्रहसिद्धेः। *एतेन*—जातजनिप्रसङ्गोऽपि—*अपास्तः*; तदितरहेतूनामेवाभावात् तत्प्रसङ्गा-
सिद्धेः। नच—एवं कालोऽपि न हेतुः; हेतुत्वकोटौ प्रवेशादिति—वाच्यम्; तत्कोटौ प्रवेशेऽपि
'इहेदानीं घट उत्पत्स्यते' 'इहेदानीं घट उत्पद्यते' इत्यादिप्रत्यक्षेण तद्धेतुत्वावगमात्, प्रागभावस्य
तथात्वावगमप्रमाणाभावात्। *ननु*—घटः, स्वप्रागभावजन्यः, तन्नाशत्वात्; यो यन्नाशो भवति, स
तज्जन्यः, यथा घटनाशो घटजन्य इत्यनुमानमेवास्ति तस्य कारणत्वावेदकमिति—*चेत्*, न;
व्यभिचारात्। घटनाशो हि घटप्रागभावस्यापि नाश इत्यस्ति भवतामभ्युपगमः; अन्यथा घटप्राग-

### भाष्यभावप्रकाशिका

शास्त्रस्य तत्त्वनिर्णयार्थतयाऽनुवादत्वात् तत्र गुरुशिष्ययोरधिकारात् पुरस्थितमिव शिष्यं गृहीत्वा
परोक्तिरिति। "आह कोऽयमि"त्यारभ्य "कथं पुनः प्रत्यगात्मनी"त्यतः प्रागध्यासस्वरूपलक्षणपरं
भाष्यम्; तस्मादारभ्य "तमेतमविद्याख्यमि"त्यतः प्राक्तनं तत्संभावनाय; एतदादि सर्वलोकप्रत्यक्ष

### प्रदीपः

*ननु* अनिर्वचनीयख्यातिवाद एव यद्यभिमन्यते, तर्हि निरूप्यतां किंलक्षणकोऽयमध्यास इति लक्षणप्रतिपादनपरो
वाऽयं ग्रन्थः—*आह कोऽयमध्यासो नामेति*। किंशब्दोऽत्र प्रश्नाभिप्रायः। कीदृशोऽयमनिर्वचनीयख्यात्यभिमतोऽ-

### पञ्चपादिका

प्रयोगदर्शनादुभयस्य चेह सम्भवात् तन्त्रेण वाक्यमुच्चरितम्। तत्रापि प्रथमं प्रश्नस्य प्रतिवचनं स्वरूप-

### पञ्चपादिकाविवरणम्

*तन्त्रेणेति*। युगपदर्थद्वयविवक्षयेत्यर्थः। *उभयस्य चेह सम्भवादिति*। लक्षणप्रश्नस्य सम्भावनाक्षेपस्य

### ऋजुविवरणम्

तु को विशेषः? अविशेषेण प्रतिज्ञातत्वादित्याशङ्क्याह—*क्रमेणेति*॥ *ननु*एकशेषादौ पदे तन्त्रोच्चारणं दृश्यते, न वाक्ये इत्याशङ्क्य व्याचष्टे—*युगपदर्थद्वयेति*॥ अथवा तन्त्रेणेत्ययुक्तम्; वाक्यस्य तन्त्रता नामार्थद्वयसाधारण्यम्, "साधारणं भवेत् तन्त्रमि"त्युक्तत्वात्, नच सकृदुच्चरितस्य वाक्यस्यार्थद्वयं संभवति विना वाक्यभेदेन, आवृत्त्यङ्गीकारे च न तन्त्रता। "पृष्टमिति मत्वा प्रत्युक्त"मित्याद्यभिप्रायवर्णनं चायुक्तं स्यात्, अतो न वाक्ये तन्त्रता, नोच्चारणे; वाक्यभेदापत्तेः, तेन न तन्त्रतेत्याशङ्क्य व्याचष्टे—*तन्त्रेणेति युगपदिति*॥ "उभयस्य चेहे"त्यत्र सन्निहितत्वाद् लक्षणस्येहशब्देन निर्देशशङ्का स्यात्, तथा सति लक्षणविषय एव सम्भवोऽपि स्यात्, नाध्यासविषयः, तन्निवृत्त्यर्थम्, अथवा—किंविषयः प्रश्नः? किंविषयश्चाक्षेप इति न ज्ञायते, तदर्थमाह—*लक्षणप्रश्नस्येति*॥ प्रमाणैस्तर्केण च

### तत्त्वदीपनम्

किं वा तन्त्र्यत इत्यर्थवाची? आद्ये तन्त्रशब्दस्य व्यर्थता, द्वितीयेऽसंभवः; अर्थेन वाक्योच्चारणायोगात्, इत्याशङ्क्याह —*तन्त्रेणेति*॥ आग्नेयाद्यनेकोपकारकत्वेन सकृत्प्रयाजाद्यनुष्ठानवत् प्रश्नाक्षेपार्थद्वयविवक्षया सकृदुच्चारणमित्यर्थः। प्रश्नाक्षेपयोर्विषयं दर्शयति—*लक्षणेति*॥ प्रश्नोत्तरस्योच्यमानत्वात् प्रश्नार्थः किंशब्द इति शङ्कते—*उभयमत्रेति*॥ अत्रोभयं विवक्षितं चेत्, प्रतिवचनसमये संभावना किं न प्रदर्श्यत इति संबन्धः॥

### वार्तिकम्

भावनाशस्य घटस्य नाशे तत्प्रागभावस्य पुनरुन्मज्जनप्रसङ्गः। एवं च सति घटनाशस्य घटप्रागभाव-नाशत्वेऽपि तज्जन्यत्वाभावादित्यस्ति हेतोर्व्यभिचारः। नच—तत्राप्यस्ति तज्जन्यत्वमिति—वाच्यम्; तत्पूर्वकाले तदभावात्तज्जन्यत्वानुपपत्तेः। नच—घट एव तद्व्यापार इति—वाच्यम्; स्वनाशव्यापारत्वस्य कुत्राप्यदर्शनात्। ज्ञानादेः संस्कारजनने स्वनाशो व्यापारो दृष्ट इति चेत्, न; संस्कारस्यैव तन्ना-शकत्वात्। तज्जनने नाशव्यापारत्वासिद्धेः, अन्योन्याश्रयाच्च—प्रागभावस्य जनकत्वसिद्धौ घटनाश-जनने तत्प्रागभावस्य घटव्यापारत्वेन व्यभिचाराभावादुक्तानुमानसिद्धिः, तत्सिद्धौ च प्रागभावस्य जन-कत्वसिद्धिरिति, व्यापारद्वारा नाशजनकत्वादर्शनाच्च; अन्यथा घटादेरपि स्वध्वंसजनने व्यापारकल्पना-पत्तेः। *एतेन*—न पक्षे पक्षसमे वा व्यभिचारोद्भावनं युक्तमिति—*अपास्तम्*; तत्र बाधादेव तत्साधनानुपपत्तेर्व्यभिचारावश्यकत्वात्। *एतेन* "भावो यथा तथाऽभावः कारणं कार्यवन्मतः" इति—*अपास्तम्*; कार्यत्वं विना चेत् प्रध्वंसाभावस्यात्मलाभादिवदात्मलाभः स्यात्, न कल्पयेदेव तत्कार्यत्व-मपि। नचैवमस्ति; तस्यानादित्वे भावकार्यासत्त्वापत्तेः। नचैवं कारणत्वं विना काचिदनुपपत्ति-रस्ति, येन तदपि कार्यत्ववदभावस्य कल्प्येत। नच कार्यत्वमेव कारणत्वगमकम्; चरमध्वंसे व्यभि-चारात्; अन्यथा चरमत्वव्याहतेः। अभ्युपेत्य च प्रध्वंसकार्यत्वमेवमुक्तम्, न त्वस्माभिर्निरन्वयकार्य-प्रध्वंसोऽभ्युपगम्यते; कार्यस्य कारणात्मनाऽवस्थानस्यैव तत्त्वात। योऽपि ब्रह्मात्मैक्यविज्ञानात् सविलासा-

### पञ्चपादिका

माख्याय पुनस्तस्यैव सम्भवमाक्षिप्य प्रतिविधत्ते। तत्रैवम्भूते विषये श्रोतॄणां सुखप्रबोधार्थं व्याचक्षाणाः प्रतिवादिनं तत्रस्थमिव समुत्थाप्य तेनाक्षिप्तमनेन पृष्टमिति मत्वा प्रत्युक्तम्, पुनरसौ स्वाभिप्रायं विवृणोतीति आक्षेपमवतार्य प्रतिविधानं प्रतिपद्यते। सर्वत्रैवंविधे ग्रन्थसन्निवेशे एष एव व्याख्याप्रकारः॥

### पञ्चपादिकाविवरणम्

च सम्भवादित्यर्थः। उभयमत्रैव विवक्षितं चेत्सम्भावनैव प्रथमं किन्न प्रदर्श्यत इत्यत्राह—*तत्रापीति*॥ स्वरूपमाख्यायेति प्राथम्ये हेतुः।

*ननु* आहेति परोक्तिकथनं किमर्थमिति? अर्थनिर्णयप्रधानत्वाद्वादकथाशास्त्रम्। तत्र "प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः" इति वादिप्रतिवादिभ्यां गुरुशिष्याभ्यां वा पक्षप्रतिपक्षपरिग्रहेण क्रियमाणार्थनिर्णयावसाना वादकथाऽत्र प्रवृत्तेति दर्शयितुं परोक्तिकथनमित्याह—

### ऋजुविवरणम्

साधनं स्वपक्षस्योपालम्भः परपक्षस्येति *सिद्धान्ताविरुद्ध* इति विशेषणम्। "तेनाक्षिप्तमनेन पृष्टमिति मत्वे"त्यत्रोभयस्य

### तत्त्वदीपनम्

"न तावदयमेकान्तेनाविषय" इत्यत्र संभावना प्रादर्शीत्याशङ्क्याह—*प्रथममिति*॥ प्रथमदर्शने हेतुर्नोक्त इत्याशङ्क्याह—*स्वरूपमिति*॥ परोक्तेः प्रयोजनं पृच्छति—*नन्वाहेति*॥ वादकथात्वद्योतनार्थं परोक्तिरिति वक्तुं शास्त्रस्य वादरूपतामाह—*वादेति*॥ तत्र हेतुमाह—*अर्थनिर्णयेति*॥ अर्थनिर्णयः प्रधानमुद्देश्यं यस्य तदर्थनिर्णयप्रधानम्, तस्य भावस्तत्त्वम्; तस्मादित्यर्थः। अर्थनिर्णयपरत्वमात्रेण कथं वादत्वमिति शङ्कायां तत्स्वरूपमाह—*तत्रेति*॥ कथा त्रिविधा—वादो जल्पो वितण्डा चेति; तासां कथानां मध्ये वादः प्रदर्श्यते। पक्षश्च प्रतिपक्षश्चेति पक्ष-प्रतिपक्षौ, तयोः परिग्रहो यस्मिन्नसौ तथोक्तः। तावत्युक्ते जल्प-वितण्डयोः प्रसङ्गः, तदर्थं—*प्रमाणतर्केति*॥ प्रमाणं च तर्कश्चेति प्रमाण-तर्कौ, ताभ्यामेव स्वपक्षस्थापनं परपक्षोपालम्भश्च यस्मिन् स तथा निर्दिष्टः। जल्प-वितण्डयोस्तु छल-जाति-निग्रहैरपि साधनोपालम्भः, अत्र तु न तथेत्यर्थः।

*सिद्धान्ताविरुद्धः* इत्युक्त्याऽपसिद्धान्तनिग्रहप्रवेशमाह। *पञ्चावयवेति* विशेषणेन न्यूनाधिकोक्त्याऽसिद्धादिहेत्वाभासानां प्रवेशः सूचितः। यद्वा—स्वमतसाधन-परकीयसाधनदूषण-स्वपरसाधनदूषणसमर्थनापशब्दादिशब्ददोषलक्षणैः पञ्चभिरवयवैर्युक्त इत्यर्थः। भवत्वेवं वादस्वरूपम्, प्रकृते तु किमायातम्? इति वीक्षायामाह—*वादीति*॥ *एवंभूत इति*॥ दुरधिगमवस्तुविषय इत्यर्थः। स्वरूपविषयत्वेन प्रश्नोत्तरस्य प्राथम्यं चेत्, तर्ह्यनवसरदुःस्थोऽयमाक्षेप इति कस्मान्नोक्तम्? इत्याशङ्क्य, एवं कथने श्रोतुः कुण्ठितमतितया प्रतिवचनार्थप्रतिपत्तिर्न स्यादित्यभिप्रायेणैवं

### वार्तिकम्

विद्याध्वंसः, सोऽपि नाऽऽत्मस्वरूपाद् अधिष्ठानतत्त्वज्ञानाद्वा व्यतिरिच्यते। तस्मात्—"भावो यथा तथाऽभावः" इत्यादेरसत्प्रलापमात्रत्वाद् नाभावस्य हेतुत्वमस्त्विति। अतोऽहेतुत्वादप्यभावो नाध्यक्षगोचर इति॥

नच—'भूतले घटो नास्तीत्याद्यभावप्रतीतेः प्रत्यक्षत्वस्यानुभवसिद्धत्वात् कथमेवमिति—वाच्यम्; तत्प्रतीतेरनुपलब्धित्वेन प्रत्यक्षत्वानुभवस्य भ्रान्तत्वात्। *ननु* सतोरेवालोक-चक्षुषो 'भूतले घटो नास्ती'ति प्रतीतिर्जायते, नासतोः; अन्धकारे निमीलिताक्षान्धयोर्वा तत्प्रतीत्यदर्शनात्। तथाचान्वयव्यतिरेकाभ्यां चक्षुषस्तद्धेतुत्वसिद्धावन्यत्र क्लृप्तकारणभावत्वात्तस्यैव कारणत्वं युक्तम्, नानुपलब्धेः;

वार्तिकम्

प्रमाणान्तरकल्पनागौरवादिति—*चेत*, न; प्रतियोगिग्राहकेन्द्रियजन्यधर्मिज्ञानस्यैवानुपलब्ध्याऽभावज्ञानहेतुत्वात् तद्धर्मिज्ञानहेतुत्वेन चक्षुरालोकान्वय-व्यतिरेकयोरन्यथासिद्धेस्तयोरभावज्ञानाहेतुत्वात्, अनुपलब्धेरेव तत्कारणत्वात्, प्रामाणिकगौरवस्येष्टत्वात्, अन्यथाऽनुमानादेरपि प्रत्यक्षेऽन्तर्भावप्रसङ्गाच्च चार्वाकशिष्यतापत्तिः। घटवति भूतले घटाभावभ्रमे कारणान्तराप्रसरेणानुपलब्धेरेव कारणत्वकल्पनादन्यत्रापि तत्कारणत्वोपपत्तेः॥

नच—धर्मिज्ञानस्य प्रतियोगिग्राहकेन्द्रियजन्यत्वनियमोऽसिद्धः, 'वायौ रूपं नास्ती'त्यादौ व्यभिचारादिति—वाच्यम्; उक्तनियमादेव तदानुपलब्धत्वासिद्धेः, अन्यथान्योन्याश्रयात्—धर्मिज्ञानस्य प्रतियोगिग्राहकेन्द्रियजन्यत्वनियमासिद्धौ 'वायौ रूपं नास्ती'त्यादिप्रतीतेरानुपलब्धत्वसिद्धिः, तत्सिद्धौ चोक्तनियमासिद्धिरिति॥ *ननु*—यत्र यदापादयितुं शक्यते, तत्र तदभावस्तदनुपलब्धिगोचर इति नियमसत्वात्—'यदि स्तम्भः पिशाचः स्यात्, तर्ह्युपलभ्येते'ति स्तम्भपिशाचत्ववद् यदि वायौ रूपं स्यात्, तर्ह्युपलभ्येतेति वायावुपलब्धिगोचरतयाऽऽपादनस्य कर्तुं शक्यत्वात् कथं तत्र तदभावो नानुपलब्धः स्यादिति—*चेत्*, न; दृष्टान्त-दार्ष्टान्तिकयोरुभयोरप्यापादनासिद्धेः। *तथाहि*—दृष्टान्ते तावद् यदि स्तम्भः पिशाचः स्यात्, तर्ह्युपलभ्येतेत्यापादनं न कर्तुं शक्यते; पिशाचभावापन्नस्य स्तम्भस्यातीन्द्रियत्वेनोपलम्भायोग्यत्वात्—'नोपलभ्येत' इति वैपरीत्यापादनस्यैव संभवात्, यथाऽऽरोपमेवाभावप्रतीतौ प्रतियोगिनो भानात् प्रकारान्तरेणापादनस्य 'स्तम्भः पिशाचो ने'ति प्रतीतावहेतुत्वादनुपपत्तेः। दार्ष्टान्तिकेऽपि यदि वायौ रूपं स्यात्, तर्ह्युपलभ्येतेत्यापादनं न शक्यते कर्तुम्; रूपवतोऽपि चक्षुरादेरनुपलम्भेन व्यभिचारात्। न चोद्भूतमिति व्याप्यं विशेषणीयम्; तथाऽप्युद्भूतरूपवति परमाण्वादौ व्यभिचारात्। नच—महतीत्यपि धर्मि विशेषणीयमिति—वाच्यम्; तथाऽपि मध्यन्दिनवर्तिनि नक्षत्रादौ व्यभिचारात्। अनभिभूतमिति पुनर्व्याप्यं विशेषणीयमिति चेत्, न; तादृशारोपस्य वायौ रूपं नास्तीति प्रतीत्यहेतुत्वात्, यथाऽऽरोपमेवाभावप्रतीतौ प्रतियोगिनो भानमित्युक्तत्वात्, धर्मिण्युपलभ्यत्वे सति तद्योग्ये प्रतियोग्यनुपलम्भस्यैवानुपलब्धित्वाद् वायौ तदभावाद्रूपाभावाध्यक्षत्वानुपपत्तेः। *एतेन*—अनुपलब्धेः करणत्वे कथं नाभावो हेतुरिति—*अपास्तम्*; धर्मिज्ञानस्य प्रसङ्गस्य चानुपलब्धिलक्षणापेक्षस्य भावत्वात्, रूपस्यैवाऽनुपलब्धत्वादुपलम्भाभावस्य प्रतिबन्धकाभावत्वेनान्यथासिद्धेः। *एतेन*—श्रोत्रे शब्दाभावाध्यक्षताऽपि *प्रत्युक्ता*; तस्मान्नाभावोऽध्यक्षगोचरः। किं तर्हि? आनुपलब्ध एवेति स्थितम्। तथाच 'न जानामी'त्यपरोक्षानुभववशात् सिद्धा तदतिरिक्ताऽविद्या। सेयमुक्तविधा सर्वाध्यासोपादानं तत्संस्काररूपेण निमित्तमिति सिद्धः प्रमाण-फल-निमित्तोपादानैरध्यास इति॥

निरूपितस्तावत् संक्षेपतः प्रमाण-फल-साधनैस्सत्यानृतात्मकोऽध्यासः। अथेदानीम्—"आह कोऽयम्" इत्यादिभाष्येण पूर्वपक्षसमाधानाभ्यां स एव विस्तरेण प्रपञ्च्यमानः स्थूणानिखननन्यायेन दृढीक्रियते। प्रयोजनं च विनेयस्य तत्तच्छङ्काशूकनिवृत्त्या श्रद्धोत्पादः। श्रद्धा चानुकूलमतेर्ज्ञानिमित्याह भगवानाम्नायः—'श्रद्धत्स्व सौम्ये'ति, तथा 'श्रद्धावित्त"इति श्रुतेः। न हि संक्षेपतः प्रथमं तावद्वस्तुनः

भाष्यभावप्रकाशिका

इत्यन्तं तत्संभवनिर्णयायेति विभागः। समाधानभाष्येऽध्यासलक्षणनिर्देशोऽपि प्रसिद्धाध्यासलक्षणे निर्णीते प्रागुक्तलक्षणस्य तद्विशेषतया सिद्धिरिति मत्वा प्रसिद्धाध्यासं पृच्छति—*कोऽयमिति*॥

## वार्तिकम्

सोपकरणस्याप्रदर्शनेन तदनुपस्थितौ तस्मिन् तदुपकरणे वा शिष्यस्य शङ्कोदयो भवति ; धर्मिज्ञानसाध्यत्वात्तस्य। नच तदुदयमन्तरेण निराकाङ्क्षं प्रति तन्निरासपूर्वकं विस्तरेण तद्वस्तूपवर्णनं भवति। नच शङ्कानिरासमन्तरेण श्रद्धोत्पादः, न वा तदुत्पादमन्तरेण शतश उपदिष्टमपि वस्तुतत्त्वमध्यवसातुमर्हति ; "श्रद्धत्स्व सौम्य" इत्युदाहृतश्रुति-स्मृतिभ्यां श्रद्धायाः शमादिवत्तदङ्गत्वावगमात्। अतः संक्षेपत उक्त्वा विस्तरेण तत्प्रतिपादनं कर्तव्यमिति ॥

तत्र चोच्यते—

सत्यानृतात्मकत्वं यत् कृतमध्यासलक्षणम्। ज्ञानाध्यासे तदव्याप्तेर्मिथ्यातादात्म्यहानतः ॥

सत्यानृतात्मकत्वरूपमध्यासस्वरूपं निरूपयता भवताऽर्थात्तदेवाध्यासस्य स्वरूपलक्षणमित्यभिहितं भवति। नचैतद्युक्तम् ; ज्ञानाध्यासेऽव्याप्तेः। न ह्यारोपितरजतज्ञानस्य साक्षिणः सत्यानृतात्मकत्वमस्ति ; तस्य सत्यैकरूपत्वात्। नच—मिथ्याविषयेणैव तत्तादात्म्यमिति—वाच्यम् ; विषय-विषयिभावानुभवविरोधात्। *ननु* विषय-विषयिणोरेवान्तःकरणात्मनो'रहमि'ति परस्परतादात्म्याध्यासो वर्णितः, *सत्यमेवम्* ; तत्र तथाऽस्तु ; परस्परविषय-विषयिभावविनिमयानुभवादन्तःकरणस्य चैतन्यविषयत्वं तत्स्पष्टीकरणार्थत्वेन विषयित्वं च, एवं चैतन्यस्यापि विषयत्वं विषयित्वं चेति विनिमयः। *एतेन*—बुद्धिवृत्तीनामपि तत्प्रतिफलितानुभवेन सह विनिमयो—*व्याख्यातः* ; तयोरपि परस्परैक्यस्य सर्वानुभवसिद्धत्वात्। अत एव बुद्धिवृत्तय एव क्षणिका आत्मान इति बौद्धा भ्रान्ता बभूवुः। नचैवं रजततदनुभवयोः परस्परतादात्म्यानुभवोऽस्ति ; 'रजतं जानामी'ति विषय-विषयित्वेनैव परस्परविविक्ततया तयोरनुभवात्, पुरोवर्तिनैव रजततादात्म्यानुभवात् ; अन्यथाऽऽत्मख्यात्यापत्तेः। *ननु* विषयेण तादात्म्याननुभवेऽपि रजतज्ञानस्येदमाकारान्तःकरणवृत्त्या सह तदनुभवात् तयोरेव तादात्म्याध्यासोऽस्तु। तथाच शुक्तिरजतयोर्विशिष्टैकज्ञानविषयत्वेन परस्परतादात्म्याध्यासोऽपि सिद्ध्यति ; अन्यथा भिन्नज्ञानविषयत्वादख्यातिवादवत् तदनुपपत्तेरिति—चेत्, *सत्यम्* ; तथाऽपि न सत्यानृतात्मकत्वं रजतज्ञानस्य सिद्ध्यति ; प्रमाणजनितेदमाकारान्तःकरणवृत्तेर्व्यावहारिकत्वात्, तद्विषयतयाऽधिष्ठानवद् रजतस्य सत्यत्वापत्तेश्च। *एतेन*—अर्थमिथ्यात्वेनैव ज्ञाने मिथ्यात्वव्यवहारोपपत्तौ न तत्स्वरूपमिथ्यात्वकल्पनं युक्तमिति—*अपास्तम्* ; तथाहि—

यथा ज्ञेयस्य सत्यत्वे नानृतं ज्ञानमिष्यते। तथा ज्ञानस्य सत्यत्वे नानृतं ज्ञेयमिष्यताम् ॥
परस्परानृतत्वेन परस्परानृतत्वतः। अतो द्वयानृतत्वं हि वक्तव्यं भ्रान्तिरूपकम् ॥

तथाचोक्तं वृद्धैः—"ज्ञानोपसर्जनोऽर्थोऽर्थोपसर्जनं वा ज्ञानमध्यस्यते" इति। बाधप्रत्ययोऽप्युभयानृतत्वमनुकूलयति ; अन्यथा तदनुपपत्तेः। तथाहि—बाधो हि नाम पूर्वप्रत्ययस्य प्रत्ययान्तरेण मिथ्यात्वाध्यवसानम्। तद्यथा—बर्हिर्निषिद्धय शराणाम्, सर्वस्वदक्षिणादिप्रत्ययानामदक्षिणादिप्रत्ययैर्मिथ्येत्यध्यवसानं वा बाध इत्युच्यते। "शरमयं बर्हिर्भवती"ति शरादिप्रत्ययास्तु बाधका इति, तद्वद् 'इदं रजतमि'ति प्रत्ययस्ये'यं शुक्तिरेव न रजतमि'ति प्रत्ययेन 'मिथ्यैवैतावन्तं कालं रजतमभात्' 'मिथ्यैव रजतमिति ज्ञानमभूत्' इति मिथ्यात्वाध्यवसानं बाध इत्युच्यते, शुक्तिप्रत्ययस्य बाधकत्वमिति। तच्च मिथ्यात्वाध्यवसानं विषय-विषयिणोः प्रदर्शितानुभवरीत्या मुख्यमेव ; अतः कस्य मिथ्यात्वेन कस्य मिथ्यात्वमिति विनिगन्तुमशक्तेरुभयमिथ्यात्वमेव बाधप्रतीतिर्गोचरयति ; अन्यथा तत्प्रतीतिबाधापत्तेः। तस्मादु-

वार्तिकम्

भयाध्यासो वाच्यः। नच ज्ञानाध्यास उक्तलक्षणमस्ति; आरोपितरजतादिज्ञानस्य साक्षिचैतन्यरूपत्वेन सत्यैकरूपत्वादनृतांशाभावात्। अतस्तत्राव्याप्तं सत्यानृतात्मकत्वरूपमध्यासलक्षणमित्यभिप्रेत्याक्षिपति—*आह कोऽयमध्यासो नामेति* ॥ *यद्वा*—पूर्वोक्तरीत्या लक्षणस्य ज्ञानाध्यासेऽसम्भवं मन्वानः पृच्छति—*आह कोऽयमिति* ॥

अत्र केचित् किंवृत्तस्याक्षेपार्थत्वं प्रश्नार्थत्वं च तन्त्रेण व्याचक्षते। तन्न बुद्ध्यामहे। तथाहि—यदि तावद् यथा दर्श-पूर्णमासौ सकृदनुष्ठितौ निमित्तार्थत्वं कामार्थत्वं च प्रतिपद्येते; यथा वा प्रयाजादीनि तदङ्गानि सकृदनुष्ठितान्याग्नेयादित्रयार्थत्वं प्रतिपद्यन्ते; तद्वत् सकृदुच्चरितः किंवृत्त उभयार्थमभिधत्त इत्युच्यते, तन्न; "सकृदुच्चरितः शब्दः सकृदर्थं बोधयति" इति न्यायबाधापत्तेः। *अथ* उभयार्थाभिधानसामर्थ्ये सत्यपि सैन्धवादिशब्दवदुभयार्थत्वात् किंवृत्तः सकृदुच्चरित उभयार्थमभिधत्त इति नोच्यते, उक्तन्यायविरोधात्, किं तर्हि? श्रुत्यर्थाभ्यामुभयार्थत्वं तस्योच्यत इति, तदपि न; आक्षेप-प्रश्नयोः परस्पराविनाभावाभावेनार्थापत्त्यसंभवात्। *एतेन*—श्रुति-लक्षणाभ्यां तदुभयोपस्थापकत्वमिति—*अपास्तम्*; परस्पराविनाभावाभावात्, अभिधेयाविनाभूत एव लक्षणाप्रवृत्तेः। तथाचोक्तम्—*"अभिधेयाविनाभूते प्रवृत्तिर्लक्षणेष्यते*। *लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणते"ति* ॥ अभिधेये लक्षणावृत्त्यनुपपत्तेश्च ॥ *छत्रिवद् भविष्यतीति चेत्*=*अथ* मन्यसे यथा छत्रिशब्दोऽच्छत्रिणीव च्छत्रिण्यपि स्वाभिधेये लक्षणया वर्तते—'छत्रिणो गच्छन्ती"त्यत्र; तद्वदत्रापि भविष्यतीति चेत्, न; तद्वल्लक्षणाप्रवृत्तिनिमित्तान्तराभावात्। तत्र ह्यभिधेयाविनाभूतैकसार्थवाहित्वरूपमस्ति छत्र्यच्छत्रिसाधारणं लक्षणायाः प्रवृत्तिनिमित्तमभिधेयतावच्छेदकच्छत्रित्वातिरिक्तम्। नचैवमाक्षेपप्रश्नोभयानुगत एको धर्मोऽस्ति लक्ष्यतावच्छेदकः, येन तद्योगादभिधेयेऽपि लक्षणा स्यात्, अविनाभावस्तु तयोर्नास्त्येवेत्युक्तम्—न ह्याक्षेपमन्तरेण प्रश्नो नास्ति, न वा प्रश्नमन्तरेणाक्षेप इति। विनेय-प्रज्ञाभिमानिनोराक्षेपप्रश्नावन्तरेण प्रश्नाक्षेपयोर्दर्शनात्। अस्तु वाऽविनाभावः; तथाऽपि श्रुति-लक्षणाभ्यामुभयोपस्थापनमिति गतम्; लक्षणयैव छत्रिन्यायेन तदुभयोपस्थापनसंभवात्, युगपद्वृत्तिद्वयविरोधात्। लक्षणाया असंभवस्तूक्त एव; उच्चारणतन्त्रताविवक्षायां तु वाक्यभेदप्रसङ्गः। तस्मादाक्षेप-प्रश्नयोरन्यतर एवात्र किंवृत्तस्यार्थः। तत्राप्याक्षेपार्थमेवाभिप्रेत्य भाष्यकारेण किंवृत्तः प्रयुक्त इत्यध्यवसीयते; संभावनाभाष्ये हि किंवृत्तस्याक्षेपार्थत्वनिश्चयात् तत्र प्रश्नासंभवात्, "विशये प्रायदर्शनात्" इत्युक्तत्वात्, सत्यानृतात्मकत्वरूपाध्यासत्वलक्षणस्याभिहितत्वात्, प्रश्नानुपपत्तेश्च, प्रश्नस्याज्ञातविषयत्वनियमात्। "आह" इति परोक्तिर्विचारशास्त्रस्य वादकथाप्रतिरूपकत्वसूचनार्था, शास्त्रस्य तदैकरूप्येण तत्त्वनिर्णयहेतुत्वात् ॥ *तथाहि*—"प्रमाण-तर्कसाधनोपालम्भः पञ्चावयवोपपन्नः सिद्धान्ताविरुद्धः पक्ष-प्रतिपक्षपरिग्रहो वादः" इति हि वादलक्षणमक्षपादीयम्। नच विचारशास्त्रमुक्तलक्षणादेकेनापि रूपेण हीयते; सर्वलक्षणस्य तत्र वर्तनादिति। 'इति' शब्दः प्रकृतपरामर्शी 'आहे'त्यनेन सम्बध्यते। इत्येवमेवाह प्रतिवादी शिष्यो वा। किमाह—"कोऽयमध्यासो नामे"ति। योऽयं त्वया सत्यानृतात्मकोऽध्यास उक्तः, स कः? न सं-

भाष्यभावप्रकाशिका

किंशब्दस्याक्षेपेऽपि संभवादत्र सोऽपि विवक्ष्यते। आत्मन्यध्यस्तोऽनात्मेति विशेषोक्तेरसद्दशयोरधिष्ठानाधिष्ठेयत्वायोगाद् असंभावनया विशेषाक्षेपात् प्रश्नाक्षेपयोर्भिन्नार्थत्वादुपपत्तिरिति भावः। अध्यास-

***आह*—कोऽयमध्यासो नामेति? *उच्यते*—स्मृतिरूपः परत्र पूर्वदृष्टावभासः।**

भामती

*उच्यते ; स्मृतिरूपः परत्र पूर्वदृष्टावभासः* ॥ अवसन्नोऽवमतो वा भासोऽवभासः। प्रत्ययान्तरबाध-

ऋजुप्रकाशिका

*ननु*—"आह कोऽयमध्यासो नामे"त्यनेन भाष्येणात्मन्यध्यास आक्षिप्ते, "उच्यते" इत्यादिभाष्येणाक्षेपः प्रतिक्षेप्तव्यो न प्रतिक्षिप्यते, किन्त्वध्याससामान्यलक्षणमेवोच्यते, इदमयुक्तमित्याशङ्क्याह—*लोकसिद्धमिति* ॥ अध्याससामान्यलक्षणस्थेन दृष्टग्रहणेनासत्यस्याप्यनिर्वचनीयस्यापरोक्षप्रतीत्यभिधानात्, तेनासत्यस्य परोक्ष-प्रतीतिरेव नोपपद्यते, अपरोक्षतया प्रतीतिमात्रं सत्त्वम्, अतोऽनृताभावात् सत्यानृतमिथुनीकरणाभावेन तद्भेदा-ग्रहाभावादध्यासो न संभवतीत्यध्यासाक्षेपो भविष्यत्येवेति भावः। अवभासपदस्यावयवार्थमादाय संक्षिप्तम-ध्यासलक्षणमाह—*अवसन्न इति* ॥ भावप्रत्ययः। प्रत्ययस्यावसन्नत्वम्—अवसादो वा, अवमानो वा द्वेधाऽपि घटत इत्याह—*प्रत्ययान्तरेति* ॥ अधिष्ठानतत्त्वसाक्षात्कारेण निवृत्तिरवसादः, यौक्तिकज्ञानेन

पञ्चपादिका

*स्मृतिरूपः परत्र पूर्वदृष्टावभासः" इति प्रश्नवाक्यस्थितमध्यासमुद्दिश्य लक्षणमभिधीयते। तत्र

पञ्चपादिकाविवरणम्

*तत्रैवम्भूते विषय इत्यादिना* ॥ तेनाक्षिप्तमाक्षेपरूपमप्यभिप्रायमनेन पृष्टमेवेति मत्वा प्रत्युक्तं पुनस्सावाक्षेप-

ऋजुविवरणम्

विवक्षितत्वादाक्षिप्तमिति न युक्तं वक्तुमित्याशङ्क्य पूरयति—*आक्षिप्तमपीति। *ननु* पृष्टमिति मत्वेत्यत्रापि तावन्मात्रं स्वरूपनिरूपणे कारणं न भवति ; आक्षेपस्यापि विद्यमानत्वादित्याशङ्क्य पूरयति—*पृष्टमेवेति*॥ आक्षिप्त-मसौ पृष्टमिति कथं मनुते इत्याशङ्क्याह—*आक्षेपरूपमप्यभिप्रायमिति*॥ *ननु*—असंज्ञायां कर्मकारके घञादीनां

तत्त्वदीपनम्

प्रतिवचनमित्युक्तम्। तेनाक्षिप्तमित्यनेन तत्राक्षेपप्रश्नयोरुभयोरपि कृतत्वात्—"आक्षिप्तं पृष्टमिति मत्वा" इत्येतद-युक्तमित्याशङ्क्याध्याहारेण टीकां व्याकरोति—*तेनेति* ॥ आक्षिप्तमपि पृष्टमेवेति मत्वा प्रत्युक्तमित्यन्वयः। आक्षेप-स्यापि विद्यमानत्वात्कथं पृष्टमेवेति मननमित्याशङ्क्याह—*आक्षेपरूपमिति* अभिप्रायमजानतेवेत्यध्याहारः। श्रोतर्यनवबोधारोपणे तस्यानुचितकारित्वबुद्ध्या प्रतिवचनाप्रतिपत्तेरात्मन्यनवबोधारोपणमित्यर्थः। प्रश्नस्यापि

वार्तिकम्

भवतीत्यर्थः ; कुतः ? उक्ताव्याप्तिदोषादित्याशयः॥ तमिमं शङ्कितमव्याप्तिदोषं परिहर्तुं पूर्वोक्तमेवाध्यास-लक्षणं भङ्ग्यन्तरेण व्याचष्टे—*उच्यते स्मृतिरूपः परत्र पूर्वदृष्टावभास इति* ॥ तेनास्य पूर्वोक्तलक्षण-व्याख्यानरूपत्वात् शङ्कितदोषपरिहारार्थत्वेन लक्षणभागस्यैवात्र व्याख्यातत्वाद्व न लक्ष्यपदाभावेन

भाष्यभावप्रकाशिका

साधारणस्वरूपधीहेतुत्वेन लक्षणस्याभ्यर्हितत्वादाक्षेपमुपेक्ष्य प्रश्नमेवेति मत्वाऽऽह—*उच्यत इति* ॥

अत्र विशेष्यतया प्रश्नवाक्यस्थाध्यासपदानुषङ्गान्न साकाङ्क्षत्वम्। परत्रेत्युक्ते परस्येत्यार्थिकम्।

## पञ्चपादिका

परत्रेत्युक्तेऽर्थात्परस्यावभासमानता सिद्धा। तस्य विशेषणं स्मृतिरूपत्वम्। स्मर्यत इति स्मृतिः; असंज्ञायामप्यकर्तरि कारके घञादीनां प्रयोगदर्शनात्। स्मर्यमाणरूपमिव रूपमस्य, न पुनः स्मर्यत एव;

## पञ्चपादिकाविवरणम्

रूपेण विवृणोतीत्याक्षेपमवतार्येति व्याख्येयम्। ननु शास्त्रेषु जल्प-वितण्डाभिप्रायेणाऽपि परोक्तिरस्तीति, नेत्याह—*सर्वत्रैवंविध इति* ॥

*ननु* लक्षणवाक्ये लक्ष्याभिधायिनः पदस्याभावात्साकाङ्क्षं वचनमनर्थकमित्याशङ्क्य वाक्यं पूरयति—*प्रश्नवाक्यस्थितमिति* ॥ *ननु* परस्य परात्मनाऽवभासोऽध्यास इति वक्ष्यति, तत्र कथमेकेनैव परशब्देन लक्षणं पूर्यत इत्यत्राह—*तत्र परत्रेत्युक्त इति* ॥ उत्तरो ग्रन्थः स्पष्टार्थः। *ननु* घञादीनां भावे विधानात् कथं कर्मपरतया स्मृतिशब्दो व्युत्पाद्यत इति तत्राह—*असंज्ञायामपीति* ॥ कर्तृव्यतिरिक्तकारकेषु

## ऋजुविवरणम्

कथं प्रयोगः? "अकर्तरि चे"ति चशब्दात् कथंचित् कर्तरि प्रयोगो भवेत्, भावे च प्रयोग उक्तः, तत्समुच्चयप्रतीतिर्वैत्या-

## तत्त्वदीपनम्

स्वाभिप्रायत्वात्कथं स्वाभिप्रायं विवृणोतीत्युक्तमित्याशङ्क्याह—*पुनरसाविति* ॥ यद्यप्याक्षेपः प्रश्नश्चाभिप्रेतः पुरा, तथाऽपि प्रश्नप्रतिवचनानन्तरमाक्षेपोत्थानमित्यर्थः। परोक्तेर्वादकथात्वद्योतनार्थत्वमिति कथं नियमः? अन्यत्रापि परोक्तेः संभवादिति चोदयति—*ननु शास्त्रेष्विति* ॥ अर्थनिर्णयपरे ग्रन्थे परोक्तेरेतदेव फलमित्याह—*नेत्याहेति* ॥

अध्यासस्वरूपे पृष्टे "*स्मृतिरूपः परत्र पूर्वदृष्टावभासः*" इति तत्स्वरूपकथनमित्यधिगन्तुं शक्यते, ततश्च प्रश्नवाक्येति टीकावैयर्थ्यमाशङ्क्याह—*ननु लक्षणेति* ॥ आकाङ्क्षाद्यनुसारेण पदानामन्विताभिधायित्वादध्यास-पदाभावे साकाङ्क्षत्वेनाऽऽनर्थक्यात्पूर्ववाक्यपदाध्याहारेणान्विताभिधानं ग्राह्यमित्यर्थः। अव्याप्त्यादिदोषाभावादा-र्थिकमपि विशेषणं कस्मादुपादीयते? ततः—"तत्रे"ति टीकानुपपत्तिमाशङ्क्याह—*ननु परस्येति* ॥

व्याकरणविरोधान्न स्मृतिशब्दस्य कर्मपरतेति शङ्कते—*ननु घञादीनामिति* ॥ "भावे" इति सूत्रेण भावे घञादिविधानात्-"अकर्तरि च कारके" इत्यनेन कर्मादौ घञादिविधानेऽप्यकर्तरि च कारके संज्ञायामित्यत्र कर्तृव्यतिरिक्त-कारके संज्ञायां घञादिप्रत्ययस्य विहितत्वात् स्मृतिशब्दस्य न योगवृत्त्या कर्मपरत्वमित्यर्थः। कर्मणि भावे वा विशेषेण घञादयो वृद्धैः प्रयुज्यन्ते, 'को भवता दायो दत्तः' 'को भवता लाभो लब्धः' तथा 'पाकस्त्यागो राग' इति। व्याकरणस्य वृद्धप्रयोगमूलत्वात्स्मृतिशब्दस्य कर्मपरत्वं युक्तमिति समाधत्ते—*तत्राहेति* ॥ सूत्रस्य तर्हि का गतिः? इत्याशङ्क्याह—*कर्तृव्यतिरिक्तेति* ॥ भावेऽकर्तरि च कारके संज्ञायामिति सूत्रद्वयमधिकृत्य "स्त्रियां क्तिन्नि"ति

## वार्तिकम्

न्यूनता, न वा विश्वजिद्रात्रिसत्रयोरिवाध्याहारानुषङ्गान्यतरकल्पनेन क्लिष्टतादोषोऽप्यस्तीति समञ्जसम्; स्वातन्त्र्येण लक्षणान्तरप्रणयने चोक्तदोषापत्तेः, हेत्वन्तरं नाम निग्रहस्थानापत्तेश्च। अत एवाग्रे—"अध्यासो नामातस्मिंस्तद्बुद्धिरित्यवोचाम" इति सत्यानृतात्मकत्त्वरूपाध्यासलक्षणमेव भगवान् भाष्यकारः परा-मृशति, नोक्तलक्षणम्। यद्येतल्लक्षणान्तरं स्यात्—"स्मृतिरूपः परत्र पूर्वदृष्टावभास इत्यवोचाम' इत्येव

## प्रदीपः

ध्यास इति। प्रश्नं समाधत्ते—*स्मृतिरूपः परत्र पूर्वदृष्टावभास इति* ॥ *स्मृतिरूपः=अविद्यमानविषयकः। *परत्र= अधिष्ठाने। *पूर्वदृष्टावभासः= पूर्वदृष्टसजातीयप्रतीतिः। अधिष्ठानेऽविद्यमानः पूर्वदृष्टसजातीयश्च योऽर्थः, तद्विषयक-

## पञ्चपादिकाविवरणम्

संज्ञायामिवाऽसंज्ञायामपि प्रयोगो भवति—"अकर्त्तरि च कारके संज्ञायामि"ति सूत्रादित्यर्थः ।

*ननु* स्मर्यते चेद्रूपशब्दः किमर्थ इति ? अस्मर्यमाणे वस्तुन्युपमासमासार्थ इत्याह—*स्मर्यमाणरूपमिवेति ॥ *ननु* किमुपमासमासेन ? स्मर्यते एव 'इदं रजतमि'ति, नेत्याह—*न पुनः स्मर्यत एवेति ॥ *ननु* चक्षुरादिप्रमाणाभावात्परिशेषात्स्मृतिरिति, नेत्याह—*स्पष्टं पुरोऽवस्थितत्वावभासनादिति*॥ यथाऽन्यत्र 'इदं रजतमयं घट' इत्यादावितरेतरसंसृष्टौ सामान्यविशेषावपरोक्षाववभासेते, तथेहापि प्रतिभासः । नहि परमार्थेदंरजतसंवेदनाकारावभासन्यूनतामन्तरेण संसर्गसंविदंशाभावः शक्यते वक्तुम् ।

अर्थाभावे कथमपरोक्षा संविदिति चेत्, न ; यथासंविदवभासाधीनत्वादर्थसत्तानिश्चयस्य । नह्यर्थसत्ता-

## ऋजुविवरणम्

शङ्क्य व्याचष्टे—*कर्तृव्यतिरिक्तेति* ॥ कथं पुरोऽवस्थितत्वेनावभासो निश्चीयते, इत्याशङ्क्याह—*यथान्यत्रेदं रजतमिति* ॥ *ननु* परमार्थेदंरजतादौ संसर्गसंवित्त्याऽपरोक्षत्वं निश्चीयते, अत्र संसर्गसंवेदनाभावात् कथमपरोक्षत्वमित्याशङ्क्याह—*नहि परमार्थेदंरजतमिति* ॥ *ननु*—सत्यर्थे संवेदनमुत्पद्यते, ततस्तदधीनत्वमपि संविद इत्या-

## तत्त्वदीपनम्

सूत्रेण भावे कर्तृव्यतिरिक्ते च कारके संज्ञायामिवाकर्तरि चेति चशब्दात् संज्ञायामिवासंज्ञायामपि घञादिर्विधीयत इति न सूत्रविरोध इत्यर्थः ॥

स्मृतिरूप इत्यत्र रूपशब्दस्य वैयर्थ्यं शङ्कते—*ननु स्मर्यत इति* ॥ किंशब्दः प्रश्नार्थः ? आक्षेपार्थो वा ? आद्यं प्रत्याह—*अस्मर्यमाण इति* ॥ अस्मर्यमाणरजतादौ स्मर्यमाणेन योपमा, तत्समासार्थ इत्यर्थः । द्वितीयमनुवदति—*ननु किमुपमेति* ॥ संस्कारोत्थबोधविषयत्वादिति शेषः । किं संस्कारोत्थबोधविषयत्वमात्रं हेतुः ? उत संस्कारमात्रजबोधविषयत्वम् ? आद्ये प्रत्यभिज्ञाविषयेण व्यभिचार इत्यभिप्रायेण दूषयति—*नेत्याहेति* ॥ द्वितीयमुत्थापयति—*ननु चक्षुरादीति* ॥ अनुभवविरोधेनोत्तरयति—*नेत्याहेति* ॥

"पुरोऽवस्थितत्वावभासनादि"त्यसंबद्धम् ; इदमो गृह्यमाणत्वात्, रजतस्य च स्मर्यमाणत्वादित्याशङ्क्याह—*यथेति* ॥ सम्यक्स्थले 'इदं रजतमि'ति सामान्य-विशेषयोः संसृष्टयोरपरोक्षतया स्फुरणवद्भ्रान्तावप्युभयोरपरोक्षतया स्फुरणात्तद्विरुद्धं समारोपितस्य स्मर्यमाणत्ववचनमित्यर्थः । अपरोक्षसामान्याविवेकाद्रजतेऽपरोक्षव्यवहारः, न संसर्गसंविदस्तीत्याशङ्क्य, प्रतिभासकृतवैलक्षण्यमाश्रित्य संसर्गसंविद् निह्नूयते ? अथवाऽर्थाभावात् ? इति विकल्प्य प्रतिभासवैलक्षण्यमसिद्धमित्याह—*नहीति* ॥ द्वितीयमनुवदति—*अर्थाभाव इति* ॥ भविष्यदादिज्ञानमर्थाभावेऽप्यस्ति, तदर्थमाह—*अपरोक्षेति* ॥

किमेतद् व्युत्थितस्य चोद्यम् ? आहो विनेयस्य ? इति विकल्प्याऽऽद्यं दूषयति—*न यथेति* ॥ संविदमनतिक्रम्य वर्तमानोऽवभासो यथासंविदवभासः ; तदधीनत्वादिति विग्रहः । अर्थसत्ता कुत इति पृष्टे तदनुभवादिति वक्तव्यम्, ततश्चार्थसंविदि सत्यामर्थो नेत्यतिसाहसमित्यर्थः । निरालम्बनज्ञानायोगादर्थाधीनः संविन्निश्चय इत्याशङ्क्य, किं संविन्निश्चयात्पूर्वमर्थसत्तानिश्चयेन भवितव्यमिति ब्रूषे ? किं वाऽर्थसत्तया भवितव्यम् ? इति विकल्प्याऽऽद्यं दूषयति—*नहीति* ॥ अर्थसत्तायां निश्चितायां संवित्सत्तानिश्चय इति पक्षेऽर्थसत्तानिश्चय एव न सिद्ध्येदिति हिशब्दार्थः । कुत इति चेत्, तत्र वक्तव्यम्—किमर्थसत्तानिश्चयः स्वतः ? आहो स्वविषयसंविद्बलात् ? नाद्यः ; जडत्वादित्यभिप्रेत्य द्वितीयं प्रत्याह—*अर्थसत्तेति* ॥ स्वविषयसंविन्निश्चयोऽपि स्वतः ? किं वाऽर्थनिश्चयाधीनः ? आद्येऽस्मदभिहित-

## वार्तिकम्

परामृशेत्, तस्मादपि नैतल्लक्षणान्तरमिति मन्तव्यम् । योऽयं भवताऽस्मदध्यासलक्षणेऽव्याप्तिदोषः परिचोदितः, तत्र समाधानमुच्यते मयेत्यर्थः । ज्ञानाध्यासेऽपि सत्यानृतात्मकत्वस्य विद्यमानत्वाद्

## पञ्चपादिकाविवरणम्

निश्चयाधीनः संवित्सत्तानिश्चयः; अर्थसत्तानिश्चयस्यापि निश्चयान्तराधीनत्वप्रसङ्गात्। *ननु* 'नेदं रजतमि'त्युत्तरसंवेदनादर्थाभावोऽपि निश्चितः, न; तत्रापि पूर्वसंवेदनेन सद्भावविषयेण विरोधात्। इदंरजताभावसंवेदनानामविवेककल्पनयोत्तरज्ञानेऽपि संसर्गसंविदभावः किं न स्यात्? व्यवहारसंवादज्ञानादुत्तरज्ञाने संसर्गसंवित्सद्भावश्चेत्, न; अर्थक्रियासंवादज्ञानादर्थसंवित्सद्भावनिश्चय इति वदतः संवित्प्रत्यक्षत्ववादहानात्; अर्थक्रियासंविदोऽपि संविदन्तराधीनसद्भावनिश्चयप्रसङ्गात्।

*ननु* सम्प्रतिपन्नोऽर्थाभावः, न; यथाप्रतिभासमेव मिथ्यारजतस्योत्तरज्ञानेन निरसनयोग्यस्योपगमात्,

## ऋजुविवरणम्

शङ्क्याह—*नह्यर्थसत्तानिश्चयाधीन इति*॥ प्रतीतौ विपरीत एव क्रम इत्यर्थः। *ननु* इदमित्यत्राविवेकादेव संसर्गव्यवहारो भवति, अतः कथं तेनोत्तरस्य विरोधः? इत्याशङ्क्याह—*इदंरजताभावेति*॥ मा भूत्संविदः प्रत्यक्षत्वम्, अर्थक्रियाधीन एव निश्चयो भवतु, इति चेत्, अथवा—कथं प्रत्यक्षत्वहानिः? विप्रतिपन्नं प्रति साधनादिति, तत्राह—*अर्थक्रियासंविद इति*॥ ज्ञानस्यैव निश्चायकत्वम्। तथाच सति ज्ञापकपरम्परायामेवोपक्षीणत्वमिति भावः। *ननु संप्रतिपन्न इति*॥ अयं भावः*—रजतकारणाभावाद् बाधाद्वा तदभाव इति। *ननु*—प्रतिभासाद् रजताङ्गीकारे कथं तत्प्रयुक्तकार्याभाव इति? तत्राह—*मिथ्यारजतस्येति*॥ कथं तन्मिथ्यात्वमिति? तदाह—*उत्तरज्ञानेनेति*॥ अथवा—रजताङ्गीकारे कथं बाधकज्ञानोत्पत्तिः? उत्तरत्र रजताप्रतिपत्तिश्चेति? तत्राह—*उत्तरज्ञानेनेति*॥ कथं निरसनयोग्यतेति? तत्राह—*मिथ्यारजतस्येति*॥ भवतु निवृत्तिलक्षणो बाधः;

## तत्त्वदीपनम्

सिद्धिः। द्वितीयेऽर्थनिश्चयस्यापि स्वतोऽनुपपत्तेस्तद्विषयसंविदन्तरादिति वक्तव्यम्, ततश्च पूर्वार्थनिश्चयाधीन उत्तरोत्तरसंविन्निश्चयो न सिद्ध्येदित्यर्थः॥

अर्थनिश्चयाधीनः संविन्निश्चय इति पक्षं निराकृत्यार्थसत्ताधीनः संविन्निश्चय इति पक्षमुत्थापयति—*ननु नेदमिति*॥ पुरोवर्तिनि रजतस्य निषिध्यमानत्वात्तदसत्त्वम्, तदसत्त्वे च संविदसिद्धिरित्यर्थः। विपरीतं किं न स्यात्? इत्याह—*न तत्रेति*॥ उत्तरसंवेदन इत्यर्थः। प्रथमोत्पन्नतयाऽसंजातविरोधित्वेन प्राबल्यमाह—*पूर्वेति*॥ निरपेक्षतया प्राबल्यमाह—*सद्भावेति*॥ 'नेदं रजतमि'ति संसर्गः संवेद्यत इत्याशङ्क्य, यथेदंरूप्ययोः संसर्गसंविदमन्तरेणाविवेकात्संसर्गव्यवहारः, तद्वदत्रापीत्याह—*इदंरजतेति*॥ इदं च रजतं चाभावश्चेतीदंरजताभावाः, तेषां संवेदनानि तथोक्तानि, तेषामिति विग्रहः। व्यवहारविसंवादादिदंरजतयोः संसर्गसंविदभावनिश्चयः, उत्तरज्ञाने तु तद्वैपरीत्यान्नैवमिति चोदयति—*व्यवहारेति*॥ रजताभावज्ञानप्रयुक्तो व्यवहारो व्यवहारशब्दार्थः। संसर्गज्ञानं संवादज्ञानाधीनमिति वदतः सिद्धान्तक्षतिरित्याह—*नार्थक्रियेति*॥ स्वसमवेतं ज्ञानं स्वस्य स्वयं प्रकाशकमिति पक्षस्यार्थक्रियासंवादलिङ्गेन संसर्गसंवित्सत्त्वानुमितौ विरोधः स्यादित्यर्थः॥

संविदोऽनुमेयत्वमङ्गीकुर्वाणं प्रत्याह—*अर्थक्रियेति*॥ संवित्सत्त्वमर्थक्रियासंविदधीनम्, तत्सत्ता कुतः? इति पृष्टे संविदन्तरादिति वक्तव्यम्, संवित्सत्ता च संविदन्तरादिति पूर्वासिद्धावुत्तरोत्तरासिद्धेर्न व्यवहारादिसिद्धिरिति स्वत एव संविन्निश्चय इति वक्तव्यम्, तथाच तद्बलादर्थसत्त्वं वक्तव्यमिति नार्थाभावसिद्धिरित्यर्थः। व्युत्थितचोद्यं निराकृत्य द्वितीयमुत्थापयति—*ननु संप्रतिपन्न इति*॥ तवेति शेषः। किं प्रतिभाससमयेऽर्थाऽभावसंप्रतिपत्तिः? उत कालान्तरे? नाद्य इत्याह—*न यथेति*॥ यथाप्रतिभासं रजतस्योपगमादित्यन्वयः। रजतस्य सत्त्वे कथं ज्ञानं निरस्यते? इत्याशङ्क्याह—*उत्तरेति*॥ निरसनयोग्यत्वमाह—*मिथ्येति*॥ परमार्थसद्वैलक्षण्यं मिथ्याशब्दार्थः। द्वितीयस्त्वङ्गीक्रियत इत्याह—*एवेति*॥

## पञ्चपादिका

स्पष्टं पुरोऽवस्थितत्वावभासनात् । पूर्वदृष्टावभास इत्युपपत्तिः स्मृतिरूपत्वे । न हि पूर्वमदृष्टरजतस्य

## पञ्चपादिकाविवरणम्

लौकिकपरमार्थदृष्टरजतप्रतियोगिकाभावविषयत्वाद्रजते त्रैकाल्याभावज्ञानस्येति संविद्द्वयानुरोधेन व्यवस्थासिद्धे-रन्यतरसंविदपह्नवायोगात्, तथाचोभयसंविद्विषयानुभवो 'नास्त्यत्र रजतम्' 'मिथ्यैव रजतमभादि'ति । *ननु* अपरोक्षशुक्तिकाज्ञानाविवेकाद्रजतमपरोक्षतया प्रतिभासत इति, नेत्याह—*स्पष्टमिति* ॥ केयं स्पष्टता नाम ?

## ऋजुविवरणम्

त्रैकालिकनिषेधस्तु कथमिति ? तत्राह—*लौकिकपरमार्थेति* ॥ बाधकज्ञानस्य रूपद्वयम्—बाधकत्वं निषेधकत्वं च । तत्र बाधः कार्यतया भवति, निषेधस्तु विषयः । तत्र बाधसाध्यस्य निवृत्तिरूपस्य न तज्ज्ञानविषयत्वमिति । *ननु*—अविशेषेण ज्ञानोत्पत्तौ कथं प्रतीतस्य बाध्यत्वम्, अन्यस्य निषेध्यत्वमिति भेदसिद्धिरिति ? तत्राह—*संविद्द्वयानुरोधेनेति* ॥ *ननु*—अप्रतीतस्य निषेधासंभवात्प्रतीतस्य च पुरोदेशे विद्यमानत्वाद् न निषेधः ; अतो निषेधसंविदभावः, संसर्गसंविदभावो वा वक्तव्य इत्याशङ्क्याह—*अन्यतरसंविदिति* ॥ प्रसक्तस्यैव निषेध्यत्वम्, न प्रतीतस्य ; भूतलसंसर्गनिषेधाङ्गीकारात्, भ्रान्तप्रतीतिरेव सत्यप्रसक्तिरपीति भावः । *ननु*—भूतलसंसर्ग-प्रतीत्यभावेऽपि स्वरूपेण प्रतीतघटनिषेधदर्शनात् कथं प्रसक्तेरेव निषेधप्रयोजकत्वम् ? अतोऽन्यतराभाव इत्याशङ्क्याह—*तथाचोभयसंविदिति* ॥ अन्यथासिद्धसंविद्बलात् प्रसक्तनिषेधोऽपि निश्चीयत इति भावः । अथवा—'इदं रजतम्' 'नेदं रजतम्' इत्यविशेषेणैव प्रतीतिद्वयोत्पत्तौ भिन्नविषयत्वं कथं निश्चीयते ? निश्चायकप्रमाणाभावादिति, तत्राह—*तथाचोभयसंविदिति* ॥ *ननु*—पुरोऽवस्थितत्वेनावभासव्यतिरेकेण न स्पष्टता प्रसिद्धा, यद्बलादपरोक्षत्वनिश्चय इति चोदयति—*केयमिति* ॥ *ननु*—विवेकाग्रहादपि सा संभवतीत्याशङ्क्याह—*अन्यथेति* ॥ पूर्वं परामर्श-

## तत्त्वदीपनम्

प्रतिभाससमकालीनोऽर्थ उपगतश्चेत्, कथं तर्हि कालत्रयसंबन्धिसत्तानिषेधः ? इत्याशङ्क्याह—*लौकिकेति* ॥ परमार्थरजतस्यात्राप्रसक्तेः कथं तन्निषेधः ? इत्याशङ्क्याह—*दृष्टेति* ॥ रजताभासप्रसक्त्या परमार्थरजतस्यापि बुद्धिस्थत्वादत्र प्रतिषेधः, सामान्योपाधौ प्रसक्तस्य घटस्य निषेधवदित्यर्थः । उक्तव्यवस्थायाः किं कल्पकम् ? इत्याशङ्क्य, संविद्द्वयमेव कल्पकमित्याह—*संविद्द्वयेति* ॥ इतीत्यस्य व्यवस्थासिद्धेरित्यनेन संबन्धः । संविद्-द्वयानुपपत्तिर्व्यवस्थाकल्पिकेत्यर्थः । अनयोः प्रत्यययोरेका संवित् त्यज्यताम्, तथाच नालौकिककल्पनेत्याशङ्क्याह—*अन्यतरेति* ॥ अपह्नवायोगे हेतुमाह—*तथाचेति* ॥ यथाऽन्यतरसंविदपह्नवायोगः ; तथोभयसंविदनुभवस्ततो नान्यतरापलाप इत्यर्थः । 'नात्र रजतमि'ति कालत्रयासत्त्वं प्रतीयते, 'मिथ्यैव रजतमभादि'ति भ्रान्तौ सत्त्वम्, तत-श्चोभयसंविदनुरोधेन कालत्रयनिषेधस्य लौकिकविषयत्वम्—'सदिदं रजतमि'त्यनुभवस्य मायाविवर्तरूप्यविषयत्व-मित्यर्थः ॥

पुरोवर्तित्वावभासनमन्यथोपपन्नमिति चोदयति—*नन्वपरोक्षेति* ॥ "अविवेकादि"त्यत्र रजतस्मरणस्येति द्रष्टव्यम् । निरस्तमपि चोद्यं टीकारूढं कर्तुं पुनरुपस्थापितमिति द्रष्टव्यम् । अनुभवविरोधान्नैवमित्याह—*नेत्याहेति* ॥ पुरोऽवस्थितत्वावभासनातिरिक्तं स्पष्टशब्दार्थं न विद्मः, तथाच पौनरुक्त्यमित्यभिप्रायेणाह—*केयं-

## वार्तिकम्

नाव्याप्तिर्दोषोऽस्तीत्याशयः । कथमिति चेत्, तत्राह—यतः स्मृतिरूपः परत्र पूर्वदृष्टावभासः 'सत्यानृते

## पञ्चपादिका

शुक्तिसम्प्रयोगे रजतमवभासते। यतोऽर्थात्तद्विषयस्यावभासस्यापीदमेव लक्षणमुक्तं भवति। कथम्? तदुच्यते—स्मृते रूपमिव रूपमस्य, न पुनः स्मृतिरेव; पूर्वप्रमाणविषयविशेषस्य तथानव-

## पञ्चपादिकाविवरणम्

विवेकज्ञानसमयेऽपि—'एतावन्तं कालमिदं रजतमित्यभादि'ति संसृष्टावभासत्वेन प्रत्यभिज्ञायोग्यता; अन्यथा 'तद्रजतमेतावन्तं कालमितो विविक्तमि'ति प्रतीयात्, अथवा—तज्ज्ञानात्तत्र प्रवृत्तिरिति पदार्थांशज्ञान-तत्प्रवृत्त्योर्नियमात्, इहापि संसर्गप्रवृत्तिनिमित्तता संसर्गज्ञानस्य स्पष्टतेति। "*पूर्वदृष्टावभासः" इति स्पष्टार्थः॥

यदा ज्ञानविशिष्टोऽर्थ एवाध्यासः, तदा स्मर्यमाणसदृशोऽन्यात्मनाऽवभासमानोऽन्योऽर्थोऽध्यास इत्येवंलक्षणपरतया वाक्यं योजितम्। यदा पुनरर्थविशिष्टं ज्ञानमेवाध्यासः, तदा स्मृतिसमानोऽन्यस्यान्या-

## ऋजुविवरणम्

सामर्थ्यादर्थस्य स्पष्टतोक्ता, इदानीं ज्ञानस्यैव तस्मिन्नेव ज्ञाने स्पष्टतामाह—*अन्यथेति*॥ *ननु*—न परामर्शोऽनुभवसाधकः; अनुभवे सन्दिग्धे तस्यासंसर्गाग्रहनिबन्धनत्वोपपत्तेः; तेन न स्पष्टतेत्याशङ्क्याह—*अथवेति*॥ गृहीतपदार्थासंसर्गाग्रहात् प्रवृत्तिरित्येतन्निराकरोति—*पदार्थांशज्ञानतत्प्रवृत्त्योरिति*॥ यदंशे ज्ञानम्, तदंश एव प्रवर्तते, न त्वन्याकारज्ञानादंशान्तरे प्रवर्तत इति नियमो दृश्यत इति भावः। यदि लक्षणवाक्यं कर्मव्युत्पत्त्या योज्यते, तर्हि ज्ञानाध्यासे लक्षणान्तरं वक्तव्यम्, अनध्यस्तत्वं वाऽङ्गीकर्तव्यमित्याशङ्क्य परिहृतम्—"यतोऽर्थादि"ति, तदयुक्तम्; अव्यापकत्वप्रसङ्गात्, अर्थज्ञानयोः परस्परनिरपेक्षयोरध्यासलक्षणस्यैव वक्तुमशक्यत्वेनानध्यस्तत्वप्रसङ्गात्, अर्थज्ञानात्मकत्वाच्चाध्यासस्य सहितस्यैव लक्षणोक्तौ पुनर्लक्षणप्रदर्शने पौनरुक्त्यमित्याशङ्क्याभिप्रायमाह—*यदा ज्ञानविशिष्टोऽर्थ

## तत्त्वदीपनम्

मिति। भ्रान्तिसमये पुरोदेशसंसृष्टतया रजतस्य स्फुरणं पुरोऽवस्थितत्वावभासनं बाधकज्ञानोत्तरकालमिदमा संसृष्टतयाऽनुसन्धीयमानत्वं स्पष्टशब्दार्थ इति विभागमभिप्रेत्याह—*विवेकेति*॥ बाधकज्ञानोत्तरकालं संसृष्टतया प्रत्यभिज्ञायमानत्वमात्रात् कथं प्राक्संसृष्टतया प्रतिभासः? इत्याशङ्क्याह—*अन्यथेति*॥ अनुभूतविषयत्वात्परामर्शस्य संसर्गस्य चाननुभूतत्वाद् न तद्विषयपरामर्शसंभव इत्यर्थः। स्पष्टशब्दस्यार्थान्तरमाह—*अथवेति*॥ संसर्गज्ञानस्य संसर्गप्रवृत्तिनिमित्तता स्पष्टेति कुतः? अग्रहादपि संसर्गप्रवृत्तिसंभवात्, इत्याशङ्क्याह—*पदार्थेति*॥ नियममेवाह—*तज्ज्ञानादिति*॥ यो यत्र प्रवर्तते, असौ तज्ज्ञानादिति प्रसिद्धम्, रजतार्थी चेदमि प्रवर्तते, तस्मात्पुरोवर्ति द्रव्यं रजततया ज्ञात्वा प्रवर्तत इत्यवश्याऽऽश्रयणीयमित्यर्थः॥

"पूर्वदृष्टावभास इत्यादेरयमर्थः—रजतस्य पुरोवर्तितया भासमानत्वे कथं स्मर्यमाणसरूपत्वम्? इत्याशङ्क्याह—*पूर्वदृष्टेति*॥ शुक्त्यविद्यया तत्र झटिति प्रादुर्भवतः कथं पूर्वदृष्टत्वं घटते? इत्याशङ्क्य, पूर्वदृष्टसदृश इत्येवंपरतया व्याकरोति—*नहीति*॥ स्मर्यमाणसदृशोऽन्यस्यान्यात्मनाऽवभासमानोऽध्यास इत्येवंलक्षणस्वीकारे ज्ञानस्याऽध्यासत्वमुपेक्षितं स्यादित्याशङ्क्य, ज्ञानाध्यासपरत्वेन लक्षणं व्याचख्यौ, तदनुपपन्नम्; ज्ञानार्थयोरन्यतरस्याध्यासत्व इतरस्याप्यध्यासत्वं सेत्स्यति, किं पृथग्लक्षणोपन्यासेन? इत्याशङ्क्याह—*यदेति*॥ यद्यप्यर्थज्ञानाध्यासयोरन्यतरनिर्देशेऽन्यतरसिद्धिः; तथाऽप्यर्थाध्यासलक्षणस्य ज्ञानाध्यासेऽसंभवेनाव्याप्तिः स्यात्, तदर्थं पृथग् निर्देष्टव्यमित्यर्थः।

## वार्तिकम्

मिथुनीकृत्ये'त्यनेनाभिधीयत इति लक्षणवाक्ययोजना॥ संप्रति पदानि विभज्य तदर्थः कथ्यते।

## पञ्चपादिका

भासकत्वात्। कथं पुनः स्मृतिरूपत्वम्? पूर्वप्रमाणद्वारसमुत्थत्वात्। नह्यसम्प्रयुक्तावभासिनः पूर्वप्रवृत्ततद्विषयप्रमाणद्वारसमुत्थत्वमन्तरेण समुद्भवः सम्भवति ॥

*अपर आह—*ननु* अन्यसम्प्रयुक्ते चक्षुष्यन्यविषयज्ञानं स्मृतिरेव, प्रमोषस्तु स्मरणाभि-

## पञ्चपादिकाविवरणम्

त्मनाऽवभासोऽध्यास इत्येवंलक्षणपरतयाऽपि तदेव वाक्यं योजयितुं शक्यत इत्याह—*यतोऽर्थादिति*। *अर्थात्=वाक्यसामर्थ्यादित्यर्थः। *कथमित्यादिः स्पष्टार्थः*। *ननु* न स्मृतिश्चेद् भ्रान्तिः, प्रत्यक्षज्ञानवद् न पूर्वानुभवजन्यत्वमित्याशङ्क्य, सम्प्रयोगमात्रजन्यज्ञानादन्येषां सर्वेषामविशिष्टं पूर्वप्रमाणजन्यत्वम्; अन्वय-व्यतिरेकसामर्थ्यात्, इत्याह—*नह्यसम्प्रयुक्तावभासिन इति* ॥

## ऋजुविवरणम्

एवेति* ॥ *ननु* वाक्यभेदस्यावश्यंभावित्वाद् लक्षणान्तरमेव किं नोक्तम्? इत्याशङ्क्याह—*योजयितुमिति* ॥ तथाऽपि लाघवादिति भावः। अर्थादित्यनेन धर्म-शेषलक्षणोक्तावधर्म-शेषिलक्षणप्रसिद्धिवदभिप्रेतत्वशङ्का स्यात्, न त्विह तथा भवति; तत्र प्रतियोगित्वरूपेणार्थात् सिद्धिः, नेह तथा प्रतियोगित्वरूपत्वम्, इत्याशङ्क्य व्याचष्टे—*वाक्य-सामर्थ्यादिति* ॥ अथवा—अर्थादिति कथमुक्तम्? न ह्यत्रानुपपद्यमानं किञ्चिदस्तीत्याशङ्क्य व्याचष्टे—*अर्थादिति* ॥ वाक्येति* ॥ वाक्यस्य समर्थत्वादिति। "न ह्यसंप्रयुक्ते"त्यनेन संस्कारजन्यत्वसाधनं कृतम्, तद् व्यर्थम्; संस्कारा-जन्यत्वशङ्काकरणाभावात्, नाप्यसंयुक्तावभासत्वेन संस्कारजन्यत्वम्; प्रमाणाभावात्, संयोगासंयोगजन्यत्वस्य व्यभिचारेण तदसाधकत्वात्, इत्याशङ्क्यावतारयति—*ननु न स्मृतिश्चेदिति* ॥ "संप्रयोगमात्रे"त्यनेन स्मृतिव्यति-रिक्तत्वस्य सोपाधिकत्वमुक्तम्। *ननु*—संप्रयोगमात्रजन्यत्वमुपाधिर्न संभवति; सपक्षव्यापकत्वाभावादित्या-शङ्क्याह—*अन्येषामिति* ॥

रूपशब्दमुपश्रुत्य गुरुमार्गविरोधिनम्। समर्थयन् तदेवादौ तन्मतं प्राह संगतम् ॥
भ्रान्तिरूपेऽथवा पूर्वं विवादे धीपथं गते। तद्रूपं रूप्यते पश्चात्तद्विशेपनिरूपणात् ॥

"नन्वन्यसंप्रयुक्ते चक्षुष्यन्यविषयं ज्ञानं स्मृतिरि"त्युक्तम्, तदयुक्तम्; अनुमानादीनामपि स्मृतित्वप्रसङ्गात्,

## तत्त्वदीपनम्

तर्हि लक्षणान्तरमेव कथ्यताम्, कस्मादेतदेव तत्र योज्यते? इत्याशङ्क्य लाघवादित्याह—*तदेवेति* ॥ अवभासस्याऽपीदमेव लक्षणमित्यर्थादुक्तं भवति यतः, अतो न ज्ञानाध्यासस्योपेक्षितत्वमिति योजना। "अर्थादि"त्यत्र कस्यानुप-पत्तिरिति न ज्ञायते, अत्राह—*वाक्येति* ॥ कथमित्यादेरयमर्थः—अर्थाध्यासलक्षणं कथं ज्ञानाध्यासलक्षणं स्यात्? न ह्यन्यलक्षणमन्यलक्षणं भवति? इति चोदयति—*कथमिति* ॥ अन्यलक्षणमन्यलक्षणमिति न ब्रूमः, अपितु अन्यलक्षणवाक्यमन्यलक्षणपरतयाऽपि योजयितुं शक्यत इत्याह—*तदुच्यत इति* ॥ योजनामेवाह—*स्मृतेरिति* ॥ स्मरणं स्मृतिः, तस्या रूपमिव रूपमस्येति। स्मृतिरूपत्वं कस्मात्? संस्कारजन्यत्वेन स्मृतित्वमेव किं न स्यात्? इत्याशङ्क्य व्यभिचारान्नेत्याह—*न पुनरिति* ॥

संस्कारमात्रजन्यत्वेन स्मृतित्वशङ्कां निरस्यति—*पूर्वेति* ॥ स्मृतिजनकसंस्कारस्य यन्मूलम्, तत्पूर्वशब्दे-नोच्यते। पूर्वं च तत् प्रमाणं चेति पूर्वप्रमाणम्, तस्य योऽयं विषयविशेषः, तस्य पूर्वानुभवसंभिन्नतयाऽनवभासकत्वा-दित्यर्थः। पूर्वानुभवसंभिन्नतयाऽनवभासकस्य स्मृतिरूपत्वमप्यनुपपन्नं प्रत्यक्षवदिति चोदयति—*कथमिति* ॥ वैधर्म्येणोत्तरयति—*पूर्वेति* ॥ प्राक् प्रवृत्तं प्रमाणं द्वारं मूलं यस्य संस्कारस्य, स तथोक्तः; तस्मात् समुत्पन्नत्वादित्यर्थः। अस्मृतित्वे संस्कारजन्यत्वमप्यनुपपन्नमिति चोदयति—*नन्विति* ॥ विमतम्, न संस्कारजन्यम्, अस्मृतित्वात्; प्रत्यक्ष-वदित्यर्थः। अनुमानादौ व्यभिचारान्नायं हेतुः साधुरित्याह—*संप्रयोगेति* ॥ प्रत्यभिज्ञायां सङ्ंस्काराजन्यत्वप्रस

### पञ्चपादिका

मानस्य । इन्द्रियादीनां ज्ञानकारणानां केनचिदेव दोषविशेषेण कस्यचिदेवार्थविशेषस्य स्मृतिसमुद्बोधः

### पञ्चपादिकाविवरणम्

*ननु* संस्कारजन्यत्वमुपगतं चेत्, अन्यसम्प्रयुक्ते चक्षुषि यदनन्तरमन्यविषयं ज्ञानमुत्पद्यते, सा स्मृतिरेव, तद्व्यवधानेन तु यज्ज्ञानमुत्पद्यते, तदनुमानादि प्रमाणमिति, प्रमाण-स्मृतिद्वैराश्यमेव विज्ञानस्य, न तृतीयं मिथ्याज्ञानं नामास्तीत्यख्यातिवादी प्रत्यवतिष्ठत इत्याह—*अपर आहेत्यादिना* ॥ *ननु* स्मृतिश्चेद्रवादिस्मृतिवत्स्वार्थं गृह्यमाणाद्विविच्य स्मरामीति दर्शयेदित्यत आह—*प्रमोषस्त्विति* ॥ *ननु* *शुक्तिकासम्प्रयोगे रजतं किमिति स्मर्यते? सादृश्यादिति चेत्, अतिसादृश्याच्छुक्तिकान्तरमेव स्मर्यतामिति, नेत्याह—*इन्द्रियादीनामिति* ॥ *ननु* मा भूत् स्मृतेः प्रमोषात्स्वार्थविवेचकता, ग्रहणं तु स्वार्थे

### ऋजुविवरणम्

स्मृतित्वस्य च निरस्तत्वात्, इत्याशङ्क्य पूर्वसंस्कारजन्यत्वेन स्मृतिरूपत्वमुक्तम्, तत्र साक्षात्तज्जन्यत्वं व्यवधानेन वेति विकल्प्याऽऽद्ये न तत्प्राप्तिरित्याह—*यदनन्तरमिति* ॥ द्वितीयेऽपि न स्मृतिरूपत्वमित्याह—*तद्व्यवधानेनेति* ॥ *ननु* भवतु नामान्यत्रैवम्, प्रकृते तु न स्मृतिः; अपरोक्षावभासित्वात्, मन्दप्रयोजनं च चोद्यम्, 'अहं मनुष्यः' इत्यादौ वक्तव्यं हि विधान्तरम्, तेन न्यायेनान्यत्रापि भ्रान्तिसम्भवादित्याशङ्क्याह—*प्रमाणस्मृतीति* ॥ संस्कारजन्यं ज्ञानं द्विविधमेव । अथवा—ज्ञाने द्वैराश्यमेवेत्यर्थः ॥

चोद्ये सिद्धान्तविरोधं दर्शयितुमवधारणार्थमाह—*न तृतीयमिति* ॥ कथं प्रवृत्तिरिति चोदिते "तेने"त्यनेन

### तत्त्वदीपनम्

परास्यति—*मात्रेति* ॥ व्याप्त्यादिसंस्कारे सत्यनुमानादिज्ञानम्, अन्यथा नेत्येवंलक्षणावन्वय-व्यतिरेकौ । चक्षुष्यन्यसंप्रयुक्ते यदन्यविषयं ज्ञानमुत्पद्यते, सा स्मृतिरिति, कथमनुमानादौ व्यभिचारः? इत्याशङ्क्याभिप्रायं विवृणोति—*ननु संस्कारेति* ॥ अधिष्ठानज्ञानं व्यावर्तयितुमन्यविषयत्वमित्युक्तम् । अनुमानं व्यावर्तयति—*अनन्तरमिति* ॥ संस्कारजन्यत्वस्य त्वयाऽप्याश्रितत्वात्तेनैव भ्रान्त्युत्पत्तेर्न कारणान्तरं मृग्यमित्यभिप्रेत्याह—*संस्कारेति* ॥ अनन्तरपदव्यावर्त्यमाह—*तद्व्यवधानेनेति* ॥ व्याप्तिस्मृतिव्यवधानेनेति यावत् । फलितमाह—*इतीति* ॥ संस्कारोत्थज्ञानस्य प्रमाणस्मृतिरूपत्वेन द्वैराश्यमित्यर्थः ।

संस्कारोत्थज्ञानं द्विविधमेवेति कथं नियमः? अयथार्थप्रत्यक्षस्यापि संभवादित्याशङ्क्याह—*न तृतीयमिति* ॥ ज्ञानत्वम्, यथार्थमात्रवृत्ति, ज्ञानमात्रवृत्तित्वात्, प्रमात्ववदित्यर्थः । अथवा अयथार्थप्रत्ययप्रसिद्धेः कथं तदपलापः? इत्याशङ्क्याह—*प्रमाणेति* ॥ तत्सद्भावे प्रमाणाभावात् प्रसिद्धेरन्यथाऽप्युपपत्तेर्नैतदित्यर्थः । एवकारव्यावर्त्यमाह—*न तृतीयमिति* ॥ विमतम्, स्मृतिः, संस्कारमात्रजत्वात्; संमतवदित्यनुमानं विवक्षितम् । तत्र विपक्षे बाधकतर्कपराहतिं शङ्कते—*ननु स्मृतिरिति* ॥ अपुनरुक्तशब्दद्वयस्मृतिहेतुत्वेन रजतं विविक्तं प्रतीयत एवेत्याशङ्क्याह—*स्मरामीति* ॥ अप्रमुषितस्मरणाभिमानस्यास्मरणस्य विवेचकत्वम्, अस्य च तद्वैपरीत्यान्मैवमित्याह—*अत आहेति* ॥ संस्कारस्य सदा भावात् सदा स्मरणं स्यादिति शङ्कते—*ननु शुक्तिकेति* ॥ शुक्तिकासंप्रयोगे रजतं किमिति स्मर्यते? संप्रयोगात्पूर्वोत्तरकालयोरस्मरणं कस्मादिति योजना ॥

सादृश्यसंदर्शनसमुद्बुद्धसंस्कारस्य पूर्वोत्तरक्षणयोरभावादस्मरणमिति शङ्कते—*सादृश्यादिति* ॥ तथाऽपि रजतं कस्मात्स्मर्यते? अन्यदेव कस्मान्न स्मर्यते? इत्याह—*अतिसादृश्यादिति* ॥ रागादीनामपि संस्कारोद्बोधककोट्यन्तर्भावान्नातिप्रसङ्ग इत्याह—*नेत्याहेति* ॥ स्मर्यतेऽनेनेति स्मृतिः संस्कारः, तस्य समुद्बोध इति यावत् । समुद्बोधस्याऽऽगन्तुकत्वे हेतुमाह—*इन्द्रियादीनामिति* ॥ आदिशब्देन विषय-प्रमातारौ गृह्येते । राग-सादृश्य-काचादि-

### पञ्चपादिका

क्रियते। सम्प्रयुक्तस्य च दोषेण विशेषप्रतिभासहेतुत्वं करणस्य विहन्यते। तेन दर्शनस्मरणयो-र्निरन्तरोत्पन्नयोः करणदोषादेव विवेकानवधारणाद् दूरस्थयोरिव वनस्पत्योरनुत्पन्न एवैकत्वावभास

### पञ्चपादिकाविवरणम्

स्मर्यमाणाद्विवेचयेदिति, नेत्याह—*सम्प्रयुक्तस्य चेति* ॥ *ननु* स्मृति-ग्रहणयोर्यौगपद्याभावात्क्रमवर्तित्वे पूर्वज्ञानं व्यवधानान्न प्रवृत्तिहेतुः, नच सामान्यमात्रज्ञानाद्विशेषमात्रज्ञानाद्वा प्रवृत्तिरित्यत आह—*तेन दर्शन-स्मरणयोर्निरन्तरोत्पन्नयोरिति* ॥ निरन्तरोत्पत्तिरेव प्रवृत्तिहेतुरित्यर्थः। *ननु* 'इदं रजतमित्यभादि'ति संसर्ग-प्रत्ययः प्रत्यभिज्ञायत इति, नेत्याह—*अनुत्पन्न एवैकत्वावभास इति* ॥

### ऋजुविवरणम्

निरन्तरोत्पन्नत्वेन दोषाद्विवेकानवधारणेनैकत्वाभिमानस्य भ्रमत्वनिरूपणं कृतम्, तदसङ्गतम्; चोद्यस्यापरिहृतत्वात्, तथा—"उत्पन्नभ्रमः" इति वदता ज्ञानविषयभ्रमस्यैव प्रवृत्तिहेतुत्वमुक्तमिव प्रतिभाति, तदप्यसङ्गतम्; क्लृप्तसंसर्गज्ञान-हानायोगात्, इष्टविघाताच्च, इत्याशङ्क्य व्याचष्टे—*निरन्तरोत्पत्तिरेवेति*॥ *नन्विदंरजतमितीति* ॥ अयं भावः*—

### तत्त्वदीपनम्

दोपशब्दार्थः। स्मरणस्याविवेचकत्वेऽपि पुरोवर्तिद्रव्यसंयुक्तेन्द्रियेण विशेषांशस्फुरणसंभवान्नाविवेक इति चोदयति—*ननु मा भूदिति* ॥ विशेषांशे प्रतिबन्धसंभवान्नयनस्य न तद्भासकत्वमित्याह—*नेत्याहेति* ॥ विवादाध्यासिता प्रवृत्तिः, पुरोवर्तिरजतज्ञानपूर्विका, रजतेच्छाऽधीनपुरोवर्तिप्रवृत्तित्वात्; सम्यग्रजतप्रवृत्तिवत्, इत्यनुमानादयथार्थप्रत्यय-सिद्धिरिति शङ्कते—*नन्विति* ॥ विपक्षे बाधकाभावादप्रयोजकत्वमाशङ्क्य किं ज्ञानद्वयं प्रवर्तकम्? उत प्रत्येकम्? आद्येऽपि किं संभूयोत्पन्नं प्रवर्तकम्; उत क्रमेण? इति विकल्प्याऽऽद्यं निरस्यति—*स्मृति-ग्रहणयोरिति* ॥ मनसः क्रमकारित्वनियमादुत्पन्नयोश्च स्मृति-ग्रहणयोः क्षणिकत्वान्न यौगपद्यमित्यर्थः ॥

क्रमपक्षं निरस्यति—*क्रमवर्तित्व इति* ॥ इदमाकारज्ञानस्य रजतज्ञानव्यवहितत्वान्न प्रवृत्तिहेतुत्वम्; अव्यवहितपूर्वक्षणवर्तिनो हेतुत्वनियमादित्यर्थः। द्वितीयेऽपि किम् इदंज्ञानं प्रवर्तकम्? उत रजतज्ञानम्? नोभयथाऽपी-त्याह—*नचेति* ॥ इदमाकारज्ञानाद् रजतार्थिनो न शुक्तौ प्रवृत्तिः; लोष्टादावपि तत्प्रसक्तेः, नापि रजतमात्र-ज्ञानात्; देशान्तरेऽपि प्रवृत्तिप्रसङ्गात्। तस्मात् संसर्गज्ञानाऽभावे प्रवृत्त्यसंभवस्य बाधकत्वात्तदाश्रयणीयमिति चोद्यार्थः। संसर्गज्ञानाभावेन प्रवृत्त्यसंभवे चोदिते प्रवर्तकं किंचिद् वक्तव्यम्, नच तदुच्यत इत्यसंगतिमाशङ्क्य "निरन्तरोत्पन्नयोरि"त्यनेन प्रवर्तकमुक्तमित्याह—*निरन्तरेति* ॥ *अन्तरम्=व्यवधानम्, तद्रहिततयोत्पत्तिर्यस्य बोधस्यासौ निरन्तरोत्पन्नः; तयोरित्यर्थः। इदंज्ञानादव्यवधानोत्पन्नं रूप्यज्ञानं प्रवर्तकमिति यावत् ॥

संसर्गप्रत्यये प्रत्यभिज्ञा प्रमाणम्, तद्विरुद्धो हेतुरिति चोदयति—*नन्विति* ॥ प्रत्यभिज्ञानमन्यथाऽपि घटत इति परिहरति—*नेत्याहेति* ॥ एकत्वज्ञानाभावेऽप्येकत्वज्ञानं जातमित्यविवेकाद् व्यवहार इत्यर्थः। संस्कार-मात्रजन्यत्वहेतोरर्भकतिक्तस्मृतावसिद्धिः शङ्किता, साऽनुपपन्ना; इह जन्मन्यनुभवाभावेऽपि जन्मान्तरे तिक्तरसस्या-

### वार्तिकम्

*परत्र*=शुक्तिकादौ। *पूर्वदृष्टस्य*=रजतादेः। *अवभासः*=आभास इति यावत्। अवभासा-भासपदयोर्लोके समानार्थत्वेन प्रयोगदर्शनात्, तद्यथा 'स्फटिक-दर्पणादौ लौहित्यमुखाद्याभासः'

### प्रदीपः

ज्ञानम्। अधिष्ठानविषमसत्ताकारोऽप्यज्ञानत्वमध्यासत्वमनिर्वचनीयख्यात्यभिमतमिति भावः। अधिष्ठानसमसत्ताकारोप्यज्ञानत्वं

## पञ्चपादिका

उत्पन्नभ्रमः । *ननु* अनास्वादिततिक्तरसस्यापि बालकस्य पित्तदोषान्मधुरे तिक्तावभासः कथं स्मरणं स्यात् ? *उच्यते* ;—जन्मान्तरानुभूतत्वात्, अन्यथाऽननुभूतत्वाविशेषेऽत्यन्तमसन्नेव कश्चित्सप्तमो रसः किमिति नावभासेत ? तस्मात्पित्तमेव मधुराग्रहणे तिक्तस्मृतौ तत्प्रमोषे च हेतुः ; कार्यगम्यत्वाद्धेतुभावस्य । *एतेन*—अन्यसम्प्रयोगेऽन्यविषयस्य ज्ञानस्य स्मृतित्व-तत्प्रमोषौ सर्वत्र—*व्याख्यातौ द्रष्टव्यौ ॥

## पञ्चपादिकाविवरणम्

"जन्मान्तरानुभूतं न स्मर्यते" इति भाष्यवचनादस्मर्यमाणत्वाच्च बालस्य तिक्तस्मृतिः कथमिति चोदयति—*नन्वनास्वादिततिक्तरसस्येति* ॥ जन्मान्तरानुभूततिक्तस्मृतिः कल्प्यत इत्याह—*उच्यत इति* ॥ जन्मान्तरानुभवस्योपकारितामाह—*अन्यथाऽननुभूतत्वेति* ॥ किमिति तर्हि जन्मान्तरानुभूतं किञ्चिदेव स्मर्यते ? न सर्वमिति ? दोषबलादित्याह—*तस्मात् पित्तमेवेति* ॥ किमिति तर्हि दोष एव जन्मान्तरानुभूतं सर्वं न स्मारयति ? इत्यत आह—*कार्यगम्यत्वादिति*॥ *ननु* अतत्त्वे तत्त्वज्ञानमिति शास्त्रकारेणैव दर्शितः संसर्गभ्रम इति, नेत्याह—*एतेनान्यसम्प्रयोग इति* ॥ वक्तव्ये च पूर्ववादिनाऽप्यविवेके संसर्गज्ञानकल्पनागौरवादख्यातिरेव युक्तेति भावः ॥

*उच्यते* ;—केयमख्यातिरिति ? न तावत् ख्यात्यभावमात्रम्; अनभ्युपगमात्, अतिप्रसङ्गाच्च । अन्यार्थि-

## ऋजुविवरणम्

निरन्तरोत्पत्तिमात्रं न प्रवृत्तिहेतुः संसर्गज्ञानादिति ॥ *ननु* सर्वत्र संसर्गज्ञानस्य प्रवर्तकत्वं व्याप्तम्, कथं तेन विनाऽविवेकमात्रात्प्रवृत्तिरङ्गीक्रियते ? व्याप्तिविरोधादित्याशङ्क्याभिप्रायमाह—*वक्तव्ये चेति* ॥ *न तावदिति* ॥ ख्याते-

## तत्त्वदीपनम्

नुभूतत्वेन हेतोः संभवात् ; इत्याशङ्क्याह—*जन्मान्तरेति* ॥ जन्मान्तरेऽनुभवसंभवेऽपि जन्म-मरण-व्यवहितत्वान्न तस्य स्मृतिजनकत्वमिति शबरस्वामिवचनादित्यर्थः । न केवलमाप्तवचनादेव जन्मान्तरानुभूतस्मृत्यभावः, किं त्वनुभवादपीत्याह—*अस्मर्यमाणत्वादिति* ॥

इह जन्मन्यनुभवाभावेऽपि जन्मान्तरानुभूतत्वात्तिक्तस्मरणमित्युक्तम्, तन्न संगच्छते ; आप्तवचनविरोधात्, कल्पकवैधुर्याच्चेत्याशङ्क्य, न तावदाप्तवचनविरोधः ; तस्य प्रायिकाभिप्रायत्वादिति सिद्धान्तयति—*जन्मान्तरेति* ॥ आस्वाद्य थूत्कृत्य गुडादेस्त्यागदर्शनं तिक्तस्मृतेः कल्पकमित्यर्थः । अननुभवशङ्काऽनुत्थितेरन्यथेत्याद्ययुक्तमित्याशङ्क्य, जन्मादिव्यवहितत्वाद्द जन्मान्तरानुभवस्यानुपकारकत्वमुक्तं निरस्यत इत्याशयमाह—*जन्मेति । अन्यथेति* ॥ जन्मान्तरीयस्यानुभवस्यानुपकारकत्व इत्यर्थः । *अननुभूतत्वाविशेष इति* ॥ अनुभूतत्वं नास्ति यस्य, तदननुभूतत्वम् ; तस्मादननुभूतत्वाद्द अनुपकारकत्वेन विशेषाभावसाम्य इत्यर्थः । तत्र षड्रसातिरिक्ते रसत्वानुभवः स्यादित्यतिप्रसङ्गः । अननुभूतस्मरणपक्षेऽतिप्रसङ्गवदनुभूतस्मरणेऽप्यतिप्रसङ्गः सम इत्याह—*किमितीति* ॥ नियामकाऽभावोऽसिद्ध इत्याह—*दोषेति* ॥ दोषात्स्मरणमित्यत्राप्यतिप्रसङ्गः सम इत्याह—*किमितीति* ॥ तिक्तस्मरणकार्यलिङ्गेन दोषस्य तिक्तस्मारकत्वमेव कल्प्यत इत्याह—*अत आहेति* ॥ अयथार्थज्ञानाश्रयणे सिद्धान्तक्षतिरिति शङ्कते—*नन्वतत्त्व इति* ॥ *शास्त्रकारेणेति* ॥ सांख्येनेत्यर्थः । अयथार्थज्ञानाभावेऽपि तद्व्यवहाराभिप्रायं तद्द वचनमित्याह—*नेत्याहेति* ॥ कल्पनागौरवादप्ययथार्थज्ञानं नोपेयमित्याह—*वक्तव्य इति* ॥ प्रत्यययाथार्थ्ये भ्रान्त्यनुपपत्तिर्बाधिकेत्याह—*उच्यत इति* ॥

## पञ्चपादिकाविवरणम्

नोऽन्यत्र प्रवृत्तिहेतुर्ज्ञानमिति चेत्, यत्र तर्हि न प्रवृत्तिर्झटिति, बाधश्च, तत्र कथं भ्रान्तिः ? अथाविविक्तानेक-पदार्थज्ञानम्, तर्हि 'इदमि'ति 'रजतमि'ति चापुनरुक्तशब्दद्वयस्मृतिहेतुतया विविक्तावभासनान्न तस्य सामान्य-विशेषयोरविवेकभ्रमः सम्भवति। नच भेदावमर्शेनैकत्वज्ञानमनभ्युपगच्छतः सामान्यविशेषयोरविवेकः सम्भवति ; विविक्ताकारद्वयावभासनात्। इतरेतराभाव-भेद-द्वित्वादिसङ्ख्याविशिष्टज्ञानं विवेक इति चेत्, 'गामानय दण्डेने'ति गो-दण्डयोस्तत्कारकत्वयोश्चाविवेकभ्रमः स्यात्। तत्राप्यानुषङ्गिकभेदादिज्ञानमस्तीति चेत्, 'इदमि'ति 'रजतमि'ति चेहाप्यपुनरुक्तशब्दानुपक्ताकारद्वयावभासे द्वित्वाद्यवभासो विद्यत एव ; अन्यथा सामान्याकाराद् विशेषाकारस्य विवेकानवभासाद् 'इदमि'त्येव स्यात्, 'रजतमि'त्येव वा स्यात्, न—'इदं रजतमि'ति। *किञ्च* प्रतीयमानाकारयोर्नाविवेकः ; अपुनरुक्तप्रतिभासात्। अप्रतीयमानाकाराविवेको न भ्रमः ; अतिप्रसङ्गात्। तस्मान्नाविवेको भ्रमः ॥

## ऋजुविवरणम्

विद्यमानत्वादतिप्रसङ्गादिति भावः। *अथाविविक्तानेकेति* ॥ अत्र विवेकशब्दस्य स्वरूपभूतभेदग्रहवाचित्वमङ्गीकृत्य तद्राहित्यमविवेक इत्युच्यते ? तद्विपरीताभेदाग्रहो वा ? किं वा विवेकशब्दस्य भ्रमविरोधिरूपान्तरवैशिष्ट्यग्रहवाचित्वमङ्गीकृत्य तद्राहित्यमविवेक इति ? न तावत्प्रथम इत्याह—*तर्हीदमितीति* ॥ सामान्यविशेपग्रहणम्—अन्यत्र कथंचिदपुनरुक्तशब्दस्मरणाभावेनाविवेकः शङ्क्येतेति दर्शयितुम्। न द्वितीय इत्याह—*नच भेदावमर्शेनेति* ॥ यद्वाऽविवेकस्त्वयाऽप्यङ्गीक्रियते, स कथमपुनरुक्तशब्दस्मृत्या निराक्रियत इत्याशङ्क्याह—*नच भेदावमर्शेनेति* ॥ तिरस्कारेण, पर्यालोचनेन वेत्यर्थः। मम संसर्गाध्यासो भेदानवगमनिमित्त इति भावः। *इदानीं तृतीयं पक्षमवलम्बते—*इतरेतराभावेति* ॥ *ननु* संसर्गवादिनाऽप्यविवेकोऽङ्गीक्रियते, तद्धेतुकश्च संसर्गाध्यास इति वक्तव्यम्, तथा सति लाघवात्तेनैवालमित्याशङ्क्याह—*किंच प्रतीयमानयोरिति* ॥ ननु* असंसर्गाग्रहोऽविवेकः ; असंसर्गग्रहणस्य

## तत्त्वदीपनम्

अख्यातिर्भ्रम इत्युक्तम्, तत्राह—*केयमिति* ॥ किं ख्यात्यभावोऽख्यातिः ? किं वा तदन्यः ? उत तद्विरुद्धः ? इति किंशब्दार्थः। आद्यं प्रत्याह—*न तावदिति* ॥ कतिपयख्यात्यभावस्य भ्रमत्वेऽतिप्रसक्तिः, सकलख्यात्यभावपक्षे सुषुप्त्यादावपि भ्रमत्वप्रसङ्ग इत्यर्थः। द्वितीयेऽपि किमयथार्थव्यवहारहेतुर्ज्ञानमख्यातिः ? उताविविक्तानेकपदार्थज्ञानमख्यातिः ? इति विकल्प्याऽऽद्यमुत्थापयति—*अन्यार्थिन इति* ॥ अव्याप्त्या दूषयति—*यत्रेति* ॥ वीतरागादीनां व्यवहाराभावान्न तद्धेतुर्ज्ञानमस्तीत्यर्थः। रागिणामपि प्रवृत्तिमन्तरेण बाधकसंदर्शनान्न तद्धेतुर्ज्ञानमस्तीत्याह—*झटितीति* ॥ द्वितीयमुत्थापयति—*अथाविविक्तेति* ॥ ज्ञानमात्रस्य भ्रमत्वं निराकर्तुम्—*अविविक्तेति* विशेषणम्। तावत्युक्ते वस्तुमात्रज्ञानेऽतिप्रसक्तिः, तदर्थम्—*"अनेके"ति* ॥

अविविक्तत्वं किं भेदेनास्फुरितत्वम् ? उतैक्यम् ? इति विकल्प्य, आद्येऽव्याप्तिमाह—*तर्हीति* ॥ द्वितीयं दूषयति—*नचेति* ॥ अनभ्युपगमे हेतुमभिधत्ते—*भेदेति* ॥ *अवमर्शेन = ज्ञानेनेत्यर्थः। किंच किं भेदः पदार्थस्वभावः ? उत धर्मः ? नाद्य इत्याह—*विविक्तेति* ॥ पदार्थप्रतिपत्त्या भेदोऽपि प्रतिपन्न इति, नाविवेक इत्यर्थः। द्वितीयमुत्थापयति—*इतरेतरेति* ॥ वैधर्म्यादिर्भेदशब्दार्थः। *तद्रहितता* ॥ अविविक्ततेति शेषः। अतिव्याप्तेर्नैतत्साध्वित्याह—*गामानयेति* ॥ कर्म-करणभावेन विवेकप्रतिपत्तेः कथमविवेकः ? इत्याशङ्क्याह—*तत्कारकत्वयोरिति* ॥ गो-दण्डगतकर्म-करण-कारकत्वयोरित्यर्थः। तत्र लक्षणा-प्रवृत्तेः कथमतिव्याप्तिः ? इति शङ्कते—*तत्राऽपीति* ॥ कर्म-करणप्रतिपादकविभक्तिद्वयबलाद् भेदः प्रतीयत इत्यर्थः। साम्येन समाधत्ते—*इदमितीति* ॥ एतदेव व्यतिरेकमुखेनाह—*अन्यथेति* ॥

## पञ्चपादिकाविवरणम्

*किञ्च* 'खण्डो गौ'रित्यादिप्रत्ययाश्चाविविक्तानेकपदार्थविषया विभ्रमाः प्रसज्येरन् । नच ग्रहण-स्मरणाविवेक एव भ्रमः ; 'अहं मनुष्यः' इति गृह्यमाणाविवेकस्य भ्रमत्वात् । सामान्य-विशेषादौ संसर्गज्ञानमेवास्तीति

## ऋजुविवरणम्

विवेकरूपत्वात्, स चाविवेकः प्रतीयमानेदंरजतयोरेवास्तीति भ्रमत्वमित्याशङ्क्यातिप्रसङ्गमाह—*किंच खण्डो गौरित्यादीति* ॥ न विविक्ता अविविक्ताः, विवेकः असंसर्गग्रहो येषां ते विविक्ताः, ते च तेऽनेकपदार्थाश्चेति विग्रहः । ग्रहण-स्मरणत्वे सत्यसंसर्गग्रहराहित्यमविवेकप्रयोजकमित्याशङ्क्याह—*नच ग्रहण-स्मरणाविवेकेति*॥ *ननु* असंसर्गग्रह एव विवेको न भवति, किन्तु संसर्गग्रहो विवेकः, स इहास्तीति कथं भ्रमत्वम् ? इत्यभिप्रायेण चोदयति—*सामान्यविशेषादाविति* ॥ तर्हि संसर्गग्रहलक्षणविवेकस्यासंसर्गाग्रहलक्षणाविवेकस्य च विद्यमानत्वाद् वैरूप्यमिति परिहरति—

## तत्त्वदीपनम्

विवेकाप्रतिपत्तावपि तस्य विद्यमानत्वादिदं रजतमिति प्रतिभाससंभव इत्याशङ्क्याह—*नेदमिति* ॥ इदमाकाराद् रजतस्य व्यावृत्तताप्रतिपत्तौ विलक्षणशब्दानुविद्धतया तयोः स्फुरणं न स्यादित्यर्थः । किं भासमानयोरविवेकः ? उताभासमानयोः ? नाद्य इत्याह—*किंच प्रतीयमानेति* ॥ अपुनरुक्तप्रतिभासादिति* ॥ अपुनरुक्तशब्दद्वयाद्विवेकस्य प्रतिभासादित्यर्थः । द्वितीयं प्रत्याह—*अप्रतीयमानेति* ॥ सुषुप्तादावपि प्रसङ्गादित्यर्थः । सामान्यतः प्रतिपन्नयोर्विशेषतश्चाप्रतिपन्नयोर्विवेकाग्रहणं भ्रम इत्याशङ्क्याभावानङ्गीकाराद्ग्रहणमेव न संभवतीत्याह—*तस्मादिति* ॥ ख्यातिविरुद्धाऽख्यातिरिति पक्ष उत्तरज्ञानस्य पूर्वज्ञानविरोधित्वाद् भ्रमत्वप्रसक्तिः, तथा ज्ञानप्रागभावस्यापीत्यर्थः ॥

किंचाविविक्तानेकपदार्थज्ञानमात्रं भ्रमः ? आहो ग्रहणस्मरणात्मकम् ? किं वा संसर्गज्ञानासहकृतत्वविशेषितम् ? अथवा बाधकज्ञानविषयीकृतत्वात्यन्ताभावानधिकरणत्वविशेषितम् ? इति विकल्प्याऽऽद्यमतिव्याप्त्या निरस्यति—*किं च खण्ड इति* ॥ द्वितीयमव्याप्त्या दूषयति—*नच ग्रहणेति* ॥ गृह्यमाणयोरविवेको गृह्यमाणाविवेकः, तस्येत्यर्थः । तृतीयमुत्थापयति—*सामान्येति* ॥ सम्यक्स्थले संसर्गज्ञानसंभवात्तद्रहितताविशेषितं लक्षणं न वर्तते, ततः कथमतिव्याप्तिरित्यर्थः ॥

## भाष्यभावप्रकाशिका

परत्र परस्यावभास इत्येव लक्षणम् । तदुपपादकं स्मृतिरूपत्वम् । तत्साधनार्थं पूर्वदृष्टावभासपदम् । *पूर्वदृष्टः = पूर्वदृष्टसदृश इत्यर्थः । अध्यासद्वयेऽपि परत्रेति सामान्यतो धीयोग्यमधिष्ठानमुक्तम् । अर्थपक्षेऽवभास्यत इत्यवभासः । परश्चासाववभासश्चेति परावभासः । तथा ज्ञानपक्षेऽवभासनमवभासः, परस्यावभासः परावभास इति समासः ॥

एतावत्युक्ते घटात्परस्य पटस्यावभासः, स चावभास्यमानोऽध्यासः स्यात्, तन्निवृत्तये परत्रेति ॥ नचैवमपि खण्डो गौरित्यादावध्यासः स्यात् ; परत्रेत्यारोप्यात्यन्ताभावतोऽभिधानात्, खण्डगवादीनां तादात्म्यसंसर्गाशून्यत्वाभावात् । दोष-संस्कार-संप्रयोगोत्थत्वादित्थमवभासः संभवतीति वक्तुं स्मृतिरूप इत्युक्तम् । स्मर्यत इति स्मृतिः स्मर्यमाणोऽर्थः । "भावे" "अकर्तरि च कारकेऽसंज्ञायाम्" इति सूत्रद्वयमधिकृत्य "स्त्रियां क्तिन्" इति सूत्रेण भावे कर्तृव्यतिरिक्ते कर्मादौ च कारके संज्ञायामसंज्ञायां च क्तिन्विधानाद् "अकर्तरि चे"ति चकारस्य संज्ञाव्यभिचारित्वाङ्गीकारात् । स्मर्यमाणस्य रूपमिव रूपमस्येति स्मृतिरूपः, न तु स्मर्यत एव स्पष्टम् ;

### भामती

श्चास्यावसादोऽवमानो वा। एतावता मिथ्याज्ञानमित्युक्तं भवति। तस्येदमुपव्याख्यानम्—'पूर्वदृष्टे'-त्यादि। पूर्वदृष्टस्यावभासः पूर्वदृष्टावभासः। मिथ्याप्रत्ययश्चारोपविषय आरोपणीयस्य मिथुनमन्तरेण न भवतीति पूर्वदृष्टग्रहणेनानृतमारोपणीयमुपस्थापयति। तस्य च दृष्टत्वमात्रमुपयुज्यते, न वस्तुसत्तेति दृष्टग्रहणम्। तथापि वर्तमानं दृष्टं दर्शनं नारोपोपयोगीति पूर्वेत्युक्तम्। तत्र पूर्वदृष्टं स्वरूपेण सदप्यारोपणीयतयाऽनिर्वाच्यमित्यनृतम्। आरोपविषयं सत्यमाह—*परत्रेति* ॥ *परत्र = शुक्तिकादौ परमार्थसति। तदनेन सत्यानृतमिथुनमुक्तम् ॥

*स्यादेतत्*—परत्र पूर्वदृष्टावभास इत्यलक्षणम्; अतिव्यापकत्वात्, अस्ति हि स्वस्तिमत्यां गवि पूर्वदृष्टस्य गोत्वस्य परत्र कालाक्ष्यामवभासः, अस्ति च पाटलिपुत्रे पूर्वदृष्टस्य देवदत्तस्य

### ऋजुप्रकाशिका

तिरस्कारोऽवमान इत्यवसादावमानयोर्भेदः। एवं चावभास इत्यनेन निष्कृष्टमर्थमाह—*एतावतेति* ॥ अवभासपदस्य रूढमर्थमादाय विस्तृतं लक्षणमाह—*तस्येति* ॥ संक्षेपोक्ताध्यासलक्षणलक्षितस्येदं विस्तृतं लक्षणमित्यर्थः। 'पूर्वदृष्टावभासः' इत्यत्राभिमतां व्युत्पत्तिं दर्शयति—*पूर्वदृष्टस्येति* ॥ मिथ्याप्रत्ययोऽध्यासो वाच्यः, तस्याधिष्ठानारोपणीयोभयसापेक्षत्वात् तदुभयमध्येऽधिष्ठानं परत्रपदेन लब्धमिति पूर्वदृष्टपदेनाऽऽरोपणीयमुपस्थापयति भाष्यकृदित्याह—*मिथ्याप्रत्ययश्चेत्यादिना* ॥ *अधिष्ठानम्=आरोपविषयशब्दार्थः। उपस्थापयतीत्यनन्तरं भाष्यकृदिति शेषः। *तस्येति* ॥ आरोपणीयस्येत्यर्थः। पूर्वपदस्य प्रयोजनमाह—*तथापीति* ॥ दृष्टत्वमात्रोपयोगेऽपीत्यर्थः। 'स्वरूपेण सदपी'त्यपिशब्देन स्वरूपेणासत्त्वमपि मरुमरीच्युदकग्रन्थे वक्ष्याम इति सूचितम्। मिथ्याप्रत्ययस्यारोपणीयसापेक्षत्वे सति, अधिष्ठानं सत्यमाहेत्याह—*आरोपविषयमिति* ॥ अधिष्ठानमित्यर्थः। मिथ्याप्रत्ययस्य सत्यासत्योभयसापेक्षत्वं लब्धमाह—*तदनेनेति* ॥ यस्मात् कारणात् पूर्वदृष्टपदेनानृतमुपस्थापितम्, परत्रेत्यनेन च सत्यमधिष्ठानमुपस्थापितम्, *तत्=तस्मात् कारणात्, *अनेन=परत्र पूर्वदृष्टावभास इत्यनेन, सत्यानृतमिथुनीकरणमुक्तमित्यर्थः। स्मृतिरूपपदविनाकृतं परत्र पूर्वदृष्टावभास इत्येतद् न लक्षणम्; अतिव्याप्तेरिति चोदयति—*स्यादेतदिति* ॥ कस्याश्चन गोव्यक्तेः स्वस्तिमतीति संज्ञा, कस्याश्चिद् गोव्यक्तेः कालाक्षीति। एवं च 'इयं गौः' इति स्वस्तिमत्यां यत् पूर्वदृष्टं गोत्वं तत् परत्र कालाक्ष्यां गव्यवभासते—इयं गौरिति, सोऽवभासः समीचीनः; तदवभासस्य परत्र पूर्वदृष्टावभासत्वादतिव्याप्तिरित्यर्थः। स्थलान्तरेऽप्यतिव्याप्तिमाह—*अस्ति च पाटलीपुत्र इति*॥ कस्यचिद् ग्रामविशेषस्य पाटलीपुत्र इति संज्ञा। कस्याश्चिन्नगर्या माहिष्मतीति। एवं च पाटलीपुत्रे पूर्वत्र दृष्टो देवदत्तो माहिष्मत्यामवभासते—'स एवायं देवदत्तः' इति, सोऽवभासः समीचीनः; तदवभासस्यापि परत्र पूर्वदृष्टावभासत्वादतिव्याप्तिरित्यर्थः। *ननु* अवमतो भासोऽवभास इति व्युत्पत्त्या मिथ्याज्ञानस्यैवावभासत्वादवभासपदेनैव

### वार्तिकम्

इत्यप्यनिर्वचनीलौहित्यादिपदार्थो लोके व्यपदिश्यते—'लौहित्यमुखाद्यवभासः' इत्यपि लौहित्यावभासो मुखावभासः'इति। तेन पूर्वदृष्टसजातीयं रजतादि पूर्वदृष्टावभासपदेनोच्यते। तस्य विशेषणम्—"स्मृतिरूपः"इति। स्मृतिरिति संस्कारजन्यत्वसादृश्यादनिर्वचनीयरजताद्याकाराविद्यावृत्तिरुपात्तेति ब्रूमः, तत्र तत्र वृद्धैः सुरेश्वरादिभिर्गुणयोगेन भ्रान्तौ स्मृतिशब्दस्य प्रयुक्तत्वात्, पुराणेऽपि—"किमप्यपस्मृतिरि"ति तत्रापस्मृतिशब्दस्य प्रयोगदर्शनात्, स्वयमेव भाष्यकारोऽत्रैवाग्रे विज्ञानवादनिराकरणे

### भामती

परत्र माहिष्मत्यामवभासः समीचीनः। अवभासपदं च समीचीनेऽपि प्रत्यये प्रसिद्धम्; यथा नीलस्यावभासः पीतस्यावभास इति, अत आह---*स्मृतिरूप इति*॥ स्मृते रूपमिव रूपमस्येति स्मृतिरूपः। असंनिहितविषयत्वं च स्मृतिरूपत्वम्। संनिहितविषयं च प्रत्यभिज्ञानं समीचीनमिति नातिव्याप्तिः। नाप्यव्याप्तिः; स्वप्नज्ञानस्यापि स्मृतिविभ्रमरूपस्यैवंरूपत्वात्। तत्रापि हि स्मर्यमाणे

### ऋजुप्रकाशिका

निरुक्तस्थलद्वयातिव्याप्तिनिरासात् कथमवभासपदसहितलक्षणस्यातिव्याप्तिरुक्ता? इत्यत आह---*अवभासपदं चेति*॥ संक्षिप्तलक्षणेऽवभासपदस्य व्युत्पत्त्या मिथ्याज्ञानपरत्वेऽपि विस्तृतलक्षणे रूढ्यर्थपरिग्रहेणैवावभास-पदोपादानादवभासपदस्य समीचीनप्रत्ययेऽपि रूढत्वादवभासपदेन न तन्निरास इत्यतिव्याप्तिरेवेत्यर्थः। समीचीनप्रत्ययेऽवभासपदस्य रूढिमेवोदाहरणनिष्ठां कृत्वा दर्शयति---*यथा नीलस्येत्यादिना*॥ स्मृतिरूप-पदेनोक्तस्थलद्वयातिव्याप्तिनिरासाद् नोक्तदोष इत्याह---*अत आहेति*॥ स्मृतिरूप इत्यत्र व्युत्पत्त्यन्तर-भ्रमं वारयन्नाह---*स्मृते रूपमिवेति*॥ *ननु* स्मृते रूपमिव रूपमस्येति स्मृतिरूप इत्यनेन स्मृतिसादृश्यं दर्शितम्, तच्च प्रत्ययत्वेन वा संस्कारजत्वेन वोक्तस्थलद्वयेऽस्तीति स्मृतिरूपपदेन कथमतिव्याप्तिनिरासः? इत्यत आह---*असन्निहितेति*॥ एवं च ईदृशस्मृतिरूपत्वस्य पूर्वोक्तस्थलद्वयेऽभावाद् नातिव्याप्तिरित्याह---*सन्निहितविषयं चेति*॥ प्रत्यभिज्ञानपदमितरप्रत्ययस्याप्युपलक्षणम्। *समीचीनमिति* स्वरूपकथनम्। एवं चासन्निहितत्वे सति परत्र पूर्वदृष्टावभासत्वमध्यासलक्षणं स्थितम्। अत्र यथार्थस्मृतावतिव्याप्तिवारणाय परत्रेति पदम्। *ननु*---पूर्वलक्षणस्यायथार्थे स्मृतिविभ्रमरूपे स्वप्नेऽव्याप्तिः, स्वप्नस्य परत्र पूर्वदृष्टाव-भासत्वेऽप्यसन्निहितविषयकत्वाभावात्, इत्यत आह---*नाप्यव्याप्तिरिति*॥ *एवंरूपत्वादिति*॥ अस-न्निहितविषयकत्वे सति परत्र पूर्वदृष्टावभासत्वादित्यर्थः। *ननु* स्वप्ने पित्रादेः पुरतोऽनुभूयमानत्वेन तस्य सन्निहितविषयकत्वेन तत्राव्याप्तिपरिहारः कथम्? इत्यत आह---*तत्रापि स्मर्यमाण इति*॥ अनुभूयमाने पित्रादौ यत्सन्निहितत्वं पूर्वदृष्टं तदिह स्वप्नेऽपि स्मर्यमाणे पित्रादावारोप्यत इति, असन्निहितविषयकत्वमेव स्वप्नस्येत्यर्थः। नच---पुरतोऽनुभूयते स्वप्ने पित्रादिरिति---वाच्यम्; अनुभूयमानत्वस्यापि पूर्वदृष्टस्य तत्राऽऽरोपादिति भावः। *ननु*---निरुक्तलक्षणे स्मृतिरूपपदं व्यर्थम्, नच---उक्तप्रत्यभिज्ञादौ समीचीना-वभासरूपेऽतिव्याप्तिनिरासाय स्मृतिरूपपदमित्युक्तमिति---वाच्यम्; "पूर्वदृष्टमनृतमारोपणीयम्" इत्युक्ततयोक्त-प्रत्यभिज्ञानविषयस्याऽऽरोपणीयस्याभावेन पूर्वदृष्टपदेनैव तद्वारणादिति---चेत्, *न*; स्मृतिरूपपदाभिधीय-मानासन्निधानसिद्धवत्कारेणानृतमारोपणीयमित्यभिधानम्, नतु पूर्वदृष्टपदसामर्थ्येनेत्यदोषात्। *ननु*---इदं लक्षणं शुक्तिकादौ रजतादिभ्रमेऽध्यासरूपेऽव्याप्तम्, रजतादिभ्रमस्य शुक्तिकादौ विद्यमानापारमार्थिकरजत-विषयकत्वेनासन्निहितविषयकत्वाभावादिति---चेत्, *न*; आरोप्यस्य पुरोवर्तिनि परमार्थतोऽसत्त्वस्यैवासन्निहित-

### वार्तिकम्

जाग्रत्स्वप्नप्रत्यययोर्वैलक्षण्यप्रदर्शनाय स्वप्नभ्रान्तौ स्मृतिशब्दं प्रयोक्ष्यति---'अपिच स्मृतिरेव' इति। तेन स्मृत्याऽविद्यावृत्त्या रूप्यते निरूप्यते विषयीक्रियत इति यावत्, य एवं स स्मृतिरूप इत्यर्थः। अवभास इत्येतावत्युक्ते शून्यमेव निरधिष्ठानं रजतादिरूपेण भासत इति शून्यवादी मन्यते, तत्र मा भूदतिव्याप्तिरिति परत्रेत्युक्तम्, सत्य इत्यर्थः; मिथ्यावस्त्वपेक्षया सत्यस्य परत्वात् निरधिष्ठानभ्रमादर्शनात् सत्त्वेना-परोक्षतया च प्रथानुपपत्तेश्च सत्याधिष्ठानं वाच्यमित्यभिप्रायः। 'परत्रावभासः' इत्युक्तेऽन्तरेव ज्ञाने बहिष्ट्वारोप इति मन्यते, तत्र मा भूदतिव्याप्तिरिति पूर्वदृष्टेत्युक्तम्। बहिष्ट्वस्य तुच्छत्वाभ्युपगमाद्

## भामती

पित्रादौ निद्रोपप्लववशादसंनिधानापरामर्शे, तत्र तत्र पूर्वदृष्टस्यैव संनिहितदेशकालत्वस्य समारोपः। एवं पीतः शङ्खस्तिक्तो गुड इत्यत्राप्येतल्लक्षणं योजनीयम्। तथाहि—बहिर्विनिर्गच्छदत्यच्छनयनरश्मिसंपृक्तपित्तद्रव्यवर्तिनीं पीततां पित्तरहितामनुभवन्, शङ्खं च दोषाच्छादितशुक्लिमानमनुभवन्, पीततायाश्च शङ्खासंबन्धमननुभवन्, असंबन्धाग्रहणसारूप्येण 'पीतं तपनीयपिण्डम्' पीतं बिल्वफलमि'त्यादौ पूर्वदृष्टं सामानाधिकरण्यं पीतत्वशङ्खयोरारोप्याह—पीतः शङ्ख इति। *एतेन*—तिक्तो गुड इति प्रत्ययो—*व्याख्यातः*। एवं विज्ञातृपुरुषाभिमुखेष्वादर्शोदकादिषु स्वच्छेषु चाक्षुषं तेजो लग्नमपि बलीयसा सौरेण तेजसा प्रतिस्रोतः प्रवर्तितं मुखसंयुक्तं मुखं ग्राहयद् दोषवशात्तद्देशतामनभिमुखतां च तस्याग्राहयत् पूर्वदृष्टाभिमुखादर्शोदकदेशतामाभिमुख्यं च मुखस्यारोपयतीति प्रतिबिम्बविभ्रमोऽपि लक्षितो भवति। *एतेन*—द्विचन्द्र-दिङ्मोहालातचक्र-गन्धर्वनगर-वंशोरगादि-विभ्रमेष्वपि यथासंभवं लक्षणम्—

## ऋजुप्रकाशिका

पदेन विवक्षितत्वेनादोषात्। *एतेन—सत्ख्यात्यसत्ख्याती अपि—निरस्ते*; समारोप्यस्य पुरोवर्तिनि शुक्त्यादौ परमार्थतोऽसत्त्वेन सद्विषयकज्ञानस्यैव सत्ख्यातित्वात्, असतो नरशृङ्गकल्पस्यापरोक्षतयाऽवभासमानत्वायोगात्, रजतस्य च शुक्त्यादावपरोक्षतया भानात्। यद्यपि—लक्षणे पूर्वदृष्टपदं व्यर्थम्; असन्निहिततया परत्रावभासमानस्य पूर्वदृष्टताया अर्थसिद्धत्वादिति मतम्; तथापि पूर्वदृष्टग्रहणं परत्र प्रतिभासमानस्यासन्निहितस्य पूर्वप्रमितत्ववारणायेति बोध्यम्। "पीतः शङ्खः" इत्यादिषु गृह्यमाणारोपेषु पूर्वदृष्टत्वघटितलक्षणाभावमाशङ्क्य तत्रापीदं लक्षणं योजनीयमित्याह—*एवं पीतः शङ्ख इत्यादिना*॥ *असम्बन्धाग्रहणसारूप्येणेति*॥ पीतत्व-तपनीययोः संसर्गग्रहेऽप्यसंसर्गो न गृह्यते, एवं पीतत्व-शङ्खयोर्विद्यमानोऽप्यसंसर्गो न गृह्यत इत्यसंबन्धाग्रहणसारूप्यमित्यर्थः। *पूर्वदृष्टमिति*॥ पीतत्व-तपनीयपिण्डयोः सामानाधिकरण्यं पूर्वदृष्टम्, एवं पूर्वदृष्टं सामानाधिकरण्यं शङ्ख-पीतत्वयोरारोप्य "पीतः शङ्खः" इति भ्रमो जायत इत्यत्रापि पूर्वदृष्टत्वघटितं लक्षणमस्तीति योजनीयमित्यर्थः। एवं "पीतः शङ्खः" इति प्रत्यये उक्तलक्षणवत्तया व्याख्याते, एतत्समानोऽन्योऽपि प्रत्ययो लक्षणवत्तया व्याख्यात इत्याह—*एतेनेति*॥ आदर्शोदकादिषु समारोप्यस्य ग्रीवास्थस्य स्वमुखस्य स्वचक्षुषा पूर्वं दृष्टत्वाभावात् तत्प्रतिबिम्बादिभ्रम उक्तलक्षणस्याव्याप्तिरित्याशङ्क्याह—*एवमिति*॥ *चाक्षुषं तेजः* = चक्षुःसंबन्धि तेजः, चक्षुरवयवात्मकं तेज इति यावत्। *मुखसंयुक्तम्* = स्वमुखसंयुक्तं सत् स्वमुखं ग्राहयदित्यर्थः। *तस्य*=मुखस्य। पूर्वदृष्टयोरभिमुखादर्शोदकयोर्देश एव देशो यस्य तत्, तथोक्तम्, तस्य भावः, तत्ता, तां तयोराभिमुख्यं चेत्यर्थः। *लक्षितो भवतीति*॥ उक्तलक्षणयुक्तो भवतीत्यर्थः। पुनरपि भ्रमान्तराणि प्रदर्श्य तेष्वप्युक्तं लक्षणं योजनीयमित्याह—*एतेनेति*॥ द्वन्द्वेषु पूर्वदृष्टस्य द्वित्वस्य चन्द्रे आरोपः; दिग्भ्रमो दिङ्मोहशब्दार्थः; प्राच्यादिषु पूर्वदृष्टस्य प्राच्यत्वादेः प्रतीच्यादिष्वारोपः; शीघ्रभ्रमितालातज्वालासु पूर्वदृष्टचक्राकारताया आरोपः; आकाशे पूर्वदृष्टस्य नगरस्यारोपः; नगरे च गान्धर्वत्वस्यारोपः; मण्डूकवसाक्तलोचनग्राह्यवंशेषु पूर्वदृष्टोरगत्वादेरारोपः; एवमुक्त-

## भाष्यभावप्रकाशिका

पुरोऽवस्थितत्वेन भावात्। ज्ञानपक्षे स्मरणं स्मृतिः; भावे क्तिन्विधानात्। स्मृते रूपमिव रूपमस्येति स्मृतिरूपः, न पुनः स्मृतिरेव; अनुभूतस्य तथाऽनवभासकत्वात्। स्मृतिरूपता त्वसन्निहितविषयत्वात्, दोषादित्रयोत्थत्वात्, तादृग्धीविषयत्वाद्वा। अदृष्टरजतस्य रजतभ्रमादृष्टेः,

### भामती

*योजनीयम्* । *एतदुक्तं भवति*—न प्रकाशमानतामात्रं सत्त्वम्, येन देहेन्द्रियादेः प्रकाशमानतया सद्भावो भवेत् । नहि सर्पादिभावेन रज्ज्वादयो वा स्फटिकादयो वा रक्तादिगुणयोगिनो न भासन्ते, भासमाना वा भवन्ति तदात्मानस्तद्धर्माणो वा। तथा सति मरुषु मरीचिनिचयमुच्चावचम्—'उच्चलत्तुङ्गतरङ्गभङ्गमालेयमभ्यर्णमवतीर्णा मन्दाकिनी' इत्यभिसंधाय, अप्रवृत्तस्तत्तोयमापीयापि पिपासामुपशमयेत् ? तस्मादकामेनाऽऽप्यारोपितस्य प्रकाशमानस्यापि न वस्तुसत्त्वमभ्युपगमनीयम् । नच—मरीचिरूपेण सलिलमवस्तुसत्, स्वरूपेण तु परमार्थसदेव, देहेन्द्रियादयस्तु स्वरूपेणाप्यसन्त इत्यनुभवागोचरत्वात् कथमारोप्यन्त इति—सांप्रतम्; यतो यद्यसन्तः, नानुभवगोचराः । कथं तर्हि मरीच्यादीनामसतां तोयतयाऽनुभवगोचरत्वम् ? नच स्वरूपसत्त्वेन तोयात्मनाऽपि सन्तो भवन्ति । *यद्युच्येत* नाभावो नाम भावादन्यः कश्चिदस्ति, अपितु भाव एव भावान्तरात्मनाऽभावः, स्वरूपेण तु भावः, *यथाहुः*—

### ऋजुप्रकाशिका

भ्रमेषु पूर्वदृष्टत्वघटितमुक्तं लक्षणम् *एतेन=पूर्वोक्तप्रकारेण, अस्तीति योजनीयमित्यर्थः । यत्तूक्तम्—"आह कोऽयमध्यासो नामे"त्यध्यासाक्षेपस्थले प्रकाशमानत्वमेव सत्त्वमिति, तद्विघटयति—*एतदुक्तं भवतीत्यादिना* ॥ *सद्भावो भवेत्=सत्त्वं भवेदित्यर्थः । प्रकाशमानतामात्रेण सत्त्वं नेत्येतद्व्यतिरेकमुखेणाह—*नहीति* ॥ रज्ज्वादयः सर्पादिभावेन, स्फटिकादयश्चारुण्यादियोगिनो भासन्त एवेत्येवं योजना ; "द्वौ नञौ प्रकृतमर्थं गमयतः" इति न्यायादिति भावः । *भासमाना वा इति* ॥ सर्पादिरूपेण भासमाना रज्ज्वादयो वस्तुतः सर्पात्मका न भवन्ति=वस्तुतः सर्पधर्मवन्तोऽपि न भवन्तीत्यर्थः । तथाच भासमानतामात्रेण न वस्तुसत्त्वमिति भावः । भासमानतामात्रेण यदि वस्तुसत्त्वम्, तर्हि सर्वत्र यद्यत् यद्यदात्मना भासते, तस्य तस्य तत्तदात्मकतायाः परमार्थतः सत्त्वं वाच्यम्; अस्त्विति चेत्, तथात्वे बाधकमाह—*तथा सतीति* ॥ *मरुषु=मरुभूमिषु, *मरीचिनिचयम्=सूर्यकिरणसमूहम्, *उच्चावचम्=वाचामगोचरम्, अत्यधिकमित्यर्थः ; तं *मन्दाकिनीत्यभिसन्धायेति सम्बन्धः । मन्दाकिनीं विशिनष्टि—*उच्चलदिति* ॥ उच्चलतां तुङ्गतरङ्गाणां *भङ्गाः=छेदाः, तेषां *माला=परम्परा यस्याः सा तथोक्ता। *अभ्यर्णमवतीर्णा=समीपमागता । *पिपासामुपशमयेदिति* ॥ सत्यतोयस्य पिपासोपशमकत्वाद् मरीचिनिचयस्य मन्दाकिनीतोयात्मकतायास्त्वया सत्त्वादिना सत्यत्वाङ्गीकारादिति भावः । उपसंहरति—*तस्मादिति* ॥ देहेन्द्रियादीनां मरीचिसलिलापेक्षया वैधर्म्यमाशङ्क्य निराकरोति—*नच मरीचिरूपेणेति* ॥ *स्वरूपेण=सलिलस्वरूपेण । वैधर्म्यमेव स्फोरयति—*देहेन्द्रियादयस्त्विति* ॥ *इतीति* हेतौ । यतः स्वरूपेणाप्यसन्तः, अत इत्यर्थः । नचेत्येतत् 'साम्प्रतम्' इत्यनेन सम्बध्यते । शङ्कामपनयति—*यत इति* ॥ यतो ब्रवीषि, अतस्त्वदुक्तं न साम्प्रतमित्यर्थः । सद्विलक्षणस्यानिर्वचनीयस्याऽसतोऽनुभवगोचरत्वसंभवादिति भावः । असतोऽनुभवगोचरत्वसंभवमेवाह—*कथं तर्हीति* ॥ असतोऽनुभवगोचरत्वानङ्गीकारे तोयाद्यात्मतयाऽसतां मरीच्यादीनां तोयाद्यात्मतयाऽनुभवगोचरत्वं कथम् ? अनुभवगोचरत्वं न स्यात्, विद्यते चानुभवगोचरत्वमित्यर्थः । *ननु* मरीच्यादीनां स्वरूपेण सत्त्वात् कथमसत्त्वमिति शङ्कायामाह—*नचेति* ॥ एतद् भवन्तीत्यनेन सम्बध्यते । तथाच मरीच्यादीनां तोयाद्यात्मतयाऽसतामनिर्वचनीयानां तदात्मतयाऽनुभवोऽस्तीति दृढमित्यर्थः । *ननु* मरीच्यादेस्तोयाद्यात्मनाऽसत्त्वं नाम तोयात्मनाऽभावः ; तथाच भाव एव भावान्तरात्मनाऽभावः, स्वरूपेण तु भाव इत्युभयविधस्यापि तस्य भावत्वेन भावव्यतिरेकेणाभावान्तरस्याभावेन सद्रूपत्वादनुभवगोचरत्वं युक्तम्, देहादिप्रपञ्चस्य त्वसत्त्वात् कथमनुभवगोचरत्वम् ? कथं वा तस्य चिदात्मन्यारोपः ? इति पुनः सत्ख्यातिवादी शङ्कते—*यद्युच्येते-

## भामती

"भावान्तरमभावो हि कयाचित्तु व्यपेक्षया ॥" इति, ततश्च भावात्मनोपाख्येयतयाऽस्य युज्येतानुभवगोचरतां। प्रपञ्चस्य पुनरत्यन्तासतो निरस्तसमस्तसामर्थ्यस्य निस्तत्त्वस्य कुतोऽनुभवविषयभावः ? कुतो वा चिदात्मन्यारोपः ? नच—विषयस्य समस्तसामर्थ्यस्य विरहेऽपि ज्ञानमेव तत्तादृशं स्वप्रत्ययसामर्थ्यासादितादृष्टान्तसिद्धस्वभावभेदमुपजातमसतः प्रकाशनम् ; तस्मादसत्प्रकाशनशक्तिरेवास्याविद्येति—सांप्रतम् ; यतो येयमसत्प्रकाशनशक्तिर्विज्ञानस्य, किं पुनरस्याः शक्यम् ? असदिति चेत्, किमेतत् तत्कार्यम् ? आहोस्विदस्या ज्ञाप्यम् ? न तावत् कार्यम् ; असतस्तत्त्वानुपपत्तेः, नापि ज्ञाप्यम् ; ज्ञानान्तरानुपलब्धेः, अनवस्थापाताच्च।

## ऋजुप्रकाशिका

त्यादिना* ॥ *अस्य=भावस्य। *प्रपञ्चस्य=देहादिप्रपञ्चस्य। अनिर्वचनीयस्यैव तस्यानुभवागोचरत्वाय प्रद्वेषी सन् अत्यन्तासत्त्वमाह—*अत्यन्तासत इति* ॥ *निरस्तेति* ॥ अर्थक्रियाकारित्व-सत्तासम्बन्धशून्यस्येत्यर्थः। *ननु*—देहादेरसतो विषयस्य समस्तसामर्थ्याभावेन स्वयं ज्ञानविषयभावे सामर्थ्याभावेऽपि ज्ञानं स्वप्रत्ययसामर्थ्यादसद्विषयकभानरूपं भविष्यतीति शून्यमतं स एव सत्ख्यातिवाद्याशङ्क्य निराकरोति—*नचेति* ॥ *स्वप्रत्ययः=स्वसमानाकारप्रत्ययः, *अदृष्टान्तसिद्धस्वभावभेदमसतः प्रकाशनमुपजातमित्यन्वयः* । नच—तन्मते ज्ञानस्यापि स्वरूपतोऽसत्त्वात् कथं ज्ञानेनासतः प्रकाशसंभव इति—वाच्यम् ; ज्ञानस्यापि पूर्वज्ञानाधीनं सत्त्वं न स्वत इत्यसत्त्वाव्याघातात्। *ननु* तन्मतेऽविद्यैवासत्प्रकाशनम् ; तथाच ज्ञानमसत्प्रकाशनं भवेदित्यत आह—*तस्मादिति ॥ *अस्य=ज्ञानस्य। तथाच तन्मतेऽसत्प्रकाशनशक्तिरेवाऽविद्याऽसत्प्रकाशनमिति भावः। *नचेत्येतत् 'साम्प्रतम्' इत्यनेन सम्बध्यते। शून्यमतनिरसनमाह—*यत इति* ॥ *यतः=कारणात्। *विज्ञानस्य येयमसत्प्रकाशनशक्तिरिति* ॥ यतो न संभवति ; अतस्तन्मतं पूर्वोक्तं न सांप्रतमित्यध्याहारेण योजनीयम्। सा शक्तिः कुतो न संभवतीत्याशङ्क्य शक्याभावान्न संभवतीत्याह—*किं पुनरिति* ॥ अस्याः शक्तेः किं पुनः शक्यम् ? न किञ्चिदपीत्यर्थः। शक्तेः शक्यं शङ्कते—*असदिति* ॥ तद् दूषयितुं विकल्पयति—*किमिति* ॥ *एतत्=असत्। शक्तिः=तच्छब्दार्थः। *अस्याः=शक्तेः। आद्यं दूषयति—*न तावदिति* ॥ *तत्त्वानुपपत्तेः=कार्यत्वानुपपत्तेः। द्वितीयं दूषयति—*नापीति* ॥ किं शक्त्याश्रयज्ञानादतिरिक्तज्ञानेन ज्ञाप्यम् ? तेनैव वा ? आद्यं दूषयति—

## भाष्यभावप्रकाशिका

तत्संस्काराभावाच्च संस्कारद्वारा स्मृतिरूपतोपयोगि पूर्वदृष्टत्वम्। स्मृतिरूपशब्देन दोष-संप्रयोग-संस्कार-लक्षणकारणत्रितयजन्यत्वमुच्यत इत्याचार्याः। अवभासनमवभासः। तदेवं स्मृतिरूपः परत्र परावभास इत्येव लक्षणम्, अन्यदुक्तरीत्या तच्छेषमिति स्थितम्। परात्मनावभास इत्युक्ते घटात्परस्य पटस्य स्वात्मनाऽवभासोऽप्यध्यासः स्यात् ; तद्व्यावृत्तये स्मृतिरूप इति विशेषणम्। कारणत्रितयजन्यज्ञान-विषयत्वलक्षणं स्मृतिरूपत्वम्। अधिष्ठानांशस्याप्यधिष्ठानाध्यस्यमानविषयस्य ज्ञानस्याङ्गत्वाङ्गीकाराय तद् विशिनष्टि—*परत्रेत्यादिना* ॥ ज्ञानाध्यासपक्षेऽपि स्मृतिरूपत्वमधिष्ठानज्ञानस्याप्यस्ति ; अधिष्ठानाध्यस्यमानविषयज्ञानस्यैकत्वाङ्गीकारात्, अत उक्तम्—*परत्रेत्यादि* ॥ अथवा—परत्र परात्मनावभास इत्येतावदेव लक्षणम्। *ननु* एवं सति शुक्लः पट इत्यादिप्रत्ययानामध्यासात्मकता स्यात् ? *मैवम्* ; परत्रेतिशब्देनारोप्यमाणात्यन्ताभावाधिकरणस्य निर्देशाच्छौक्ल्य-पटयोश्च संसर्गशून्यताभावात्, स्मृतिरूपग्रहणं तु परत्र परात्मनावभासोपपादनाय, कारणविशेषजन्यत्वादित्थंभावस्संभवतीति। नच स्मृतिरूपत्वं लक्षणान्तर्गतम् ; तेन कारणत्रितयजन्यत्वविवक्षायामधिष्ठानज्ञानस्य संप्रयोगमात्र-

## भामती

विज्ञानस्वरूपमेवासतः प्रकाश इति चेत्, कः पुनरेष सदसतोः संबन्धः ? असदधीननिरूपणत्वं सतो ज्ञानस्यासता संबन्ध इति चेत्, अहो बतायमतिनिर्वृतः प्रत्ययतपस्वी !!! यदस्यासत्यपि निरूपणमायतते, नच प्रत्ययस्तत्राधत्ते किंचित्; असत आधारत्वायोगात् । असदन्तरेण प्रत्ययो न प्रथत इति प्रत्ययस्यैवैष स्वभावः, न त्वसदधीनमस्य किंचिदिति चेत्, अहो बतास्यासत्पक्षपातः !!! यदयमतदुत्पत्तिरतदात्मा च तदविनाभावनियतः प्रत्यय इति । तस्मादत्यन्तासन्तः शरीरेन्द्रियादयो निस्तत्त्वा नानुभवविषया भवितुमर्हन्तीति, *अत्र ब्रूमः*—निस्तत्त्वं चेत् नानुभवगोचरः, तत् किमिदानीं मरीचयोऽपि तोयात्मना सतत्त्वाः ? यदनुभवगोचराः स्युः, न सतत्त्वाः ; तदात्मना मरीचीनामसत्त्वात् । द्विविधं च वस्तूनां तत्त्वम्—सत्त्वमसत्त्वं च । तत्र पूर्वं स्वतः, परं तु परतः । यथाहुः—'स्वरूप-पररूपाभ्यां नित्यं सदसदात्मके । वस्तुनी, ज्ञायते किंचिद्रूपं कैश्चित्कदाचन ॥' इति । तत् किं मरीचिषु तोयनिर्भास-

## ऋजुप्रकाशिका

*ज्ञानान्तरेति* ॥ ज्ञानान्तरानुपलब्धिलक्षणमेकं दूषणमभिधाय दूषणान्तरमाह—*अनवस्थेति* ॥ ज्ञानान्तरोपलब्धावपि तस्यापि ज्ञाप्यतया तज्ज्ञापकज्ञानान्तरापेक्षायां तत्र तत्राप्येवमित्यनवस्थापात इत्यर्थः । द्वितीयं शङ्कते—*विज्ञानेति* ॥ विज्ञानस्य प्रत्ययरूपस्यासत्प्रकाशनत्वेऽसत्प्रत्यययोः सम्बन्धो वक्तव्यः ; स क इत्याक्षिपति—*कः पुनरिति* ॥ प्रत्ययः सच्छब्दार्थः । *कः सम्बन्धः ?=न कश्चिदपीत्यर्थः । यदि सम्बन्धः, तदा वक्तव्यम्—किमसदधीननिरूपणत्वं सतो ज्ञानस्यासता संबन्धः ? अविनाभावो वा ? तत्राद्यं शङ्कते—*असदधीनेति* ॥ उपहासेन दूषयति—*बतेति* ॥ *यदस्येति* ॥ *अस्य=प्रत्ययस्येत्यर्थः । अस्त्वित्यत आह—*असत इति* ॥ सति हि कस्मिंश्चित् कस्यचिदुपकारो भवति, प्रत्ययस्य निरूपणं त्वसत्यप्यायतते, नोपकारिण्यसति प्रत्युपकारं कश्चित् करोति । अतोऽतितपस्वी प्रत्यय इत्युपहासः । सदसतोरविनाभावसम्बन्धं शङ्कते—*असदन्तरेणेति* ॥ अमुमपि पक्षमुपहासेनैव दूषयति—*अहो बतेति* ॥ *अयम्=प्रत्ययः, *अतदुत्पत्तिः=तस्मादसतः सकाशाद् उत्पत्तिर्यस्य स, तदुत्पत्तिः, स न भवतीत्यतदुत्पत्तिः । *स=सन् । *अतदात्मा च = असत्तादात्म्यविहीनश्च सन् । *तदविनाभावनियतः=असदविनाभावनियत इति यत् तद् *अहो बत=अत्याश्चर्यमित्युपहासः । उपसंहरति—*तस्मादिति* ॥ तथाचेत्थमनुमानं सूचितम्—देहादि, सत्, भासमानत्वात्, आत्मवदिति । एवं पूर्ववादिना सदेव भासत इत्युक्ते सिद्धान्त्याह—*अत्र ब्रूम इति* ॥ सदेवानुभवगोचरः, न निस्तत्त्वमनुभवगोचरः, नचेत्तोयात्मना भासमानमरीचयस्तोयात्मना सतत्त्वाः स्युः, इत्याशयेनाह—*निस्तत्त्वं चेदिति* ॥ सतत्त्वाः किम् ?=सतत्त्वा न भवन्त्येव । तथापि मरीचयस्तोयात्मना सतत्त्वाः स्युरित्यर्थः । तत्र हेतुमाह—*यदनुभवेति* ॥ *यत् = यस्मात् कारणाद् मरीचयस्तोयात्मनाऽनुभवगोचराः स्युः, तस्मात् कारणादित्यर्थः । पूर्ववाद्याह—*न सतत्त्वा इति* ॥ मरीचयस्तोयात्मना सतत्त्वा न भवन्त्येवेत्यर्थः । तत्र हेतुमाह—*तदात्मनेति* ॥ तोयात्मनेत्यर्थः । तोयात्मना मरीचीनामसत्त्वस्यास्मन्मतेऽपीष्टत्वादित्यर्थः ॥ *ननु* मरीचयस्तोयात्मना भासन्ते ? न वा ? नान्त्यः ; अनुभवविरोधात्, आद्ये तोयात्मनाऽसत्त्वेन त्वया स्वीकृतानां मरीचीनां तथा भानाभ्युपगमेऽसत्ख्यात्यापत्तिरिति सिद्धान्तिनः शङ्कायामाह पूर्ववादी—*द्विविधमिति* ॥ पूर्वं सत्त्वं स्वतः, वस्तु स्वस्वरूपेण सत्त्वमापन्नमित्यर्थः । *परं त्विति* ॥ असत्त्वं त्वित्यर्थः । *परत इति* ॥ वस्तु त्वन्यवस्त्वात्मनाऽसत्त्वमापन्नमित्यर्थः । तत्र सम्मतिमाह—*यथाहुरिति* ॥ *वस्तुनी स्वरूपपररूपाभ्यां नित्यं सदसदात्मके भवतः ; एवं स्थिते किञ्चिद्रूपं कदाचित् कैश्चिज् ज्ञायते, कदाचिद् न ज्ञायत इत्यर्थः । तथाच भाव-

### भामती

प्रत्ययस्तत्त्वगोचरः ? तथाच समीचीनः, इति न भ्रान्तो नापि वाध्येत । अद्धा न वाध्येत, यदि मरीचीनतोयात्मतत्त्वानतोयात्मना गृह्णीयात्, तोयात्मना तु गृह्णन्कथमभ्रान्तः ? कथं वाऽबाध्यः ? हन्त !! तोयाभावात्मनां मरीचीनां तोयभावात्मत्वं तावन्न सत्; तेषां तोयाभावादभेदेन तोयभावात्मतानुपपत्तेः, नाप्यसत्; वस्त्वन्तरमेव हि वस्त्वन्तरस्यासत्त्वमास्थीयते—"भावान्तरमभावोऽन्यो न कश्चिदनिरूपणात्" इति वदद्भिः । नचारोपितं रूपं वस्त्वन्तरम् । तद्धि मरीचयो वा भवेत् ? गङ्गादिगतं तोयं वा ? पूर्वस्मिन्कल्पे 'मरीचयः' इति प्रत्ययः स्यान्न 'तोयमि'ति । उत्तरस्मिंस्तु 'गङ्गायां तोयमि'ति स्यात्, न पुनरि'हे'ति । देशभेदास्मरणे 'तोयमि'ति स्यान्न पुनरि'हे'ति । नच—इदमत्यन्तमसन्निरस्तसमस्तस्वरूपमलीकमेवास्त्विति—सांप्रतम्; तस्यानुभवगोचरत्वानुपपत्तेरित्युक्तमधस्तात् । तस्मान्न सत्; नाप्यसत्, नापि सदसत्; परस्परविरोधात्, इत्यनिर्वाच्यमेवारोपणीयं मरीचिषु तोयमास्थेयम्, तदनेन क्रमेणा-

### ऋजुप्रकाशिका

एव भावान्तरात्मनाऽभावः, स्वरूपेण तु भाव इत्युभयविधस्यापि भावत्वात् सत्त्वात् तद्धानेऽपि नासत्ख्यात्यापत्तिरिति भावः । सिद्धान्त्याह—*तत्किमिति* ॥ तत्किं तत्त्वगोचरः ? = तत्त्वगोचर एव स्याद् मरीचिषु तोयनिर्भासप्रत्यय इत्यर्थः । मरीचीनां तोयात्मनाऽसत्त्वस्य त्वया मरीचिस्वरूपत्वास्वीकारादिति भावः । किमतः ? अत आह—*तथाचेति* ॥ न भ्रान्तः । ततः किमित्यत आह—*नापि बाध्येतेति* ॥ तथाच भ्रमप्रसिद्धिश्च न स्यादिति भावः । पूर्ववाद्याह—*अद्धेति* ॥ 'बाध्येत' इत्यनन्तरं न भ्रान्तश्चेति शेषः । अतोयात्मना सतत्त्वान् मरीचीन् यदि अतोयात्मना गृह्णीयात् प्रत्ययः, तदा परं न बाध्येत, न भ्रान्तश्च स्यात्, *अद्धा=बाढम् । मरीचीन् तोयात्मना गृह्णन् प्रत्ययः कथमभ्रान्तः = कथं चाबाध्य इत्यर्थः । तोयाभावात्मकेषु मरीचिषु तोयात्मकत्वं भ्रमविषयीकृतं चेत्युक्तं त्वया, तत् तोयात्मकत्वं सद्वा ? असद्वा ? सदसदात्मकं वा ? अनिर्वचनीयं वा ? नाद्य इत्याह—*हन्तेति* ॥ *तेषाम्=मरीचीनाम् । *अभेदेनेति* ॥ तोयानां मरीच्यभावादभेदस्य, मरीचीनां तोयाभावादभेदस्य च त्वया स्वीकृतत्वादिति भावः । द्वितीयं दूषयति—*नाप्यसदिति* ॥ यद्यसत्, तदा वक्तव्यम्—मरीचीनां तोयात्मत्वमसदित्युच्यमानं किं मरीचिस्वरूपमेवेत्युच्यते ? किं वा वस्त्वन्तरमिति ? अथवा—तुच्छमिति ? नाद्य इत्याह—*वस्त्वन्तरमेव हीति* ॥ वस्त्वन्तरस्य मरीच्यादिलक्षणं वस्त्वन्तरमेवेत्यास्थीयते भावान्तरमभाव इति वदद्भिर्भवद्भिः; तथाच मरीच्यादेस्तोयाद्यात्मत्वं मरीच्यादिस्वरूपमेवेति तन्नासदिति भावः । द्वितीयं निरस्यति—*न चारोपितमिति* ॥ मरीचिषु तोयनिर्भासप्रत्यये भ्रमरूपे मरीचयस्तोयं चेति द्वे एव वस्तुनी भासेते, न वस्त्वन्तरम्; अतो वस्त्वन्तराभावात् तद्वस्त्वन्तरं किमिति वीक्षायां मरीचयो वा गङ्गागतं तोयं वा तद्वस्त्वन्तरमिति वाच्यम्, तदुभयं न संभवतीति दूषयति—*पूर्वस्मिन्नित्यादिना* ॥ तुच्छपक्षं तृतीयमनूद्य निरस्यति—*नचेदमित्यादिना* ॥ *तस्य = अलीकस्य, अत्यन्ततुच्छस्यापरोक्षानुभवगोचरत्वानुपपत्तेरुक्तत्वादित्यर्थः । सत्पक्षमसत्पक्षं च निरस्तमुपसंहरन् सदसदात्मकपक्षं तृतीयं निरस्यति—*तस्मादित्यादिना* ॥ स्वाभिमतमनिर्वचनीयपक्षं चतुर्थं परिशेषयति—*इत्यनिर्वचनीयमेवेति* ॥ मरीचिषु तोयमनिर्वचनीयमित्येतच्छुक्तिरज्ज्वादौ रज्जुसर्पादिकमनिर्वचनीयमित्यस्याप्युपलक्षणम् । अनिर्वचनीयतोयादेरपि

### भाष्यभावप्रकाशिका

जन्यतया पदान्तरव्यावर्त्याभावापातात् । नचाधिष्ठानारोप्यविषयं ज्ञानमेकमेव; एकत्वलक्षणैकत्वस्य वृत्तिभेदेन तत्रासंभवात् । अथ स्मृतिशब्देन संस्कारजन्यत्वमात्रस्यैव विवक्षितत्वात् प्रत्यभिज्ञाया अपि

### भामती

ध्यस्तं तोयं परमार्थतोयमिव, अत एव पूर्वदृष्टमिव, तत्त्वतस्तु न तोयं नच पूर्वदृष्टम्, किंत्वनृतम-निर्वाच्यम्। एवञ्च देहेन्द्रियादिप्रपञ्चोऽप्यनिर्वाच्यः, अपूर्वोऽपि पूर्वमिथ्याप्रत्ययोपदर्शित इव परत्न चिदात्मन्यध्यस्यत इति उपपन्नम्; अध्यासलक्षणयोगात्। देहेन्द्रियादिप्रपञ्चबाधनं चोपपादयिष्यते। चिदात्मा तु श्रुतिस्मृतीतिहासपुराणगोचरस्तन्मूलतदविरुद्धन्यायनिर्णीतशुद्धबुद्धमुक्तस्वभावः सत्त्वेनैव निर्वाच्यः। अबाधिता स्वयंप्रकाशतैवास्य सत्ता, सा च स्वरूपमेव चिदात्मनः, नतु तदतिरिक्तं सत्ता-सामान्यसमवायोऽर्थक्रियाकारिता वेति सर्वमवदातम्। स चायमेवंलक्षणकोऽध्यासोऽनिर्वचनीयः

### ऋजुप्रकाशिका

भानप्रतिपादनात् सदेव प्रकाशत इति नियमोऽपि निरस्तः। *ननु* एवमनिर्वचनीयतोयादेर्मरीच्यादि-ष्वभिनवोत्पन्नस्य प्रातिभासिकत्वेन प्रतिभासमात्रकालवृत्तितया तत्पूर्वमभावेन पूर्वदृष्टत्वाभावात् पूर्वदृष्टत्वघटितं लक्षणं तत्राव्याप्तमित्यत आह—*तदनेन क्रमेणेति* ॥ *परमार्थमिव = वस्तुतो न परमार्थमिति यावत्। *अत एवेति* ॥ यत एव वस्त्वर्थतो न परमार्थम्, अत एव पूर्वदृष्टमिव = वस्तुतो न पूर्वदृष्टमित्यर्थः। लक्षणे प्रयुक्तं पूर्वदृष्टपदं पूर्वदृष्टसजातीयतामात्रेण बोध्यम्। अत एव पूर्वदृष्टमिति न वस्तुतः पूर्वदृष्टमित्यर्थः। तथाच तोयत्वादिनां साजात्यस्याभिनवोत्पन्नानिर्वचनीयादावपि सत्त्वाद् नाव्याप्तिरित्यभिसन्धिः। मरीचितोयादाव-निर्वचनीयत्वे सिद्धे तन्न्यायं देहादावप्यतिदिशति—*एवमिति* ॥ *अपूर्वोऽपि = वस्तुसत्त्वेन न पूर्वदृष्टोऽपि। एवं च देहादि, सत्, भासमानत्वात्, आत्मवदित्यनुमानस्य निरुक्तानिर्वचनीयतोयादौ व्यभिचार इति भावः। *अध्यस्यत इत्युपपन्नमित्यत्र हेतुमाह—*अध्यासलक्षणयोगादिति* ॥ *ननु* देहादिप्रपञ्चस्याध्यस्तत्वे बाध्यत्वं वाच्यम्, तत् कथम्? इत्यत आह—*देहेन्द्रियादीति* ॥ तथाचोपपादयिष्यमाणत्वाद् नात्रोपपादनीयमिति भावः। एवं च देहेन्द्रियाहङ्कारादेरात्मन्यध्यस्तत्वे तद्धर्माणामप्यध्यस्तत्वेन वास्तवत्वाभावाद् निर्धर्मकात्मनो ब्रह्माभिन्नत्वयोग्यताऽस्तीति सूचयन् देहादितो वैलक्षण्यमाह—*चिदात्मेत्यादि* ॥ तस्य सत्ता किं स्वरूपात्मिका? अतिरिक्ता वा? इति विकल्प्याऽऽद्यमङ्गीकरोति—*सा चेति* ॥ द्वितीयं दूषयति—*नत्विति* ॥ तथाच नाद्वैतहानिरिति भावः। *भाष्ये*—"तं केचिदि"त्यादिनाऽध्यासलक्षणे मतान्तरोपन्यासः कृतः, स किं मतिसंवादाय? दूषणाय वा? *नाद्यः*, परीक्षकाणां विप्रतिपत्तिदर्शनेन मतिसंवादायोगात्; *न द्वितीयः, तत्र दूषणानभिधानात्; तथाचायुक्तोऽयं भाष्यग्रन्थ इत्याशङ्क्य मतिसंवादार्थमेव स इत्याह—

### भाष्यभावप्रकाशिका

संस्कारजन्याया भ्रमत्वप्रसक्तौ तद्व्यावृत्तये पदान्तरमिति मतम्, तदपि न समञ्जसम्; 'स एवायं शुक्लः पटः' इत्यादि प्रत्यभिज्ञाया अपि भ्रमत्वप्रसङ्गात्। एवं च "अन्यस्यान्यात्मतावभासतां न व्यभिचरति" "अध्यासो नामातस्मिंस्तद्बुद्धिरित्यवोचामे"ति च परामर्शेऽध्यासे वादिविप्रतिपत्तेरुक्तं तल्लक्षणं कथमित्याशङ्क्याधिष्ठानारोप्यदेशकालविशेषेष्वेव विवादेऽपि परत्र परात्मनावभास इति लक्षणे संवादात्,

### प्रदीपः

त्वन्यथाख्यातिवादसाधारणम्, अतोऽधिष्ठानविषमसत्ताकेत्यारोप्यविशेषणम्। "इदं रजतमि"त्यत्र तूलाविद्यापक्ष इदमव-च्छिन्नचैतन्यगतव्यावहारिकसत्तान्यूनसत्ताकत्वात् प्रातिभासिकस्य रजतस्य लक्षणसमन्वयः। "सन् घटः" इत्यादावपि अधिष्ठानशुद्धचैतन्यगतपारमार्थिकसत्तान्यूनसत्ताकत्वाद् व्यावहारिकस्य घटादेर्लक्षणसमन्वयः। "अहं ब्रह्मास्मी"त्य-खण्डाकारज्ञाने तु नाधिष्ठानारोप्यभावप्रतीतिरिति नातिव्याप्तिः॥ यानन्यथाख्यात्यख्यात्यनिर्वचनीयख्यातिवादानवलम्ब्याऽ-

## पञ्चपादिकाविवरणम्

चेत्, तथाऽप्यविविक्तानेकपदार्थज्ञानाद् भ्रमत्वमपि स्यात्। नच तत्र संसर्गप्रत्ययोऽपि; ऐक्यस्य तदालम्बनस्याभावात्। गुण-गुण्यादिसम्बन्ध एवालम्बनमिति चेत्, न; प्रत्यभिज्ञाया ऐक्यालम्बनत्वात्। इहापि सादृश्यसम्बन्ध एवेदं रजतमिति संसर्गप्रत्ययालम्बनं स्यात्। अस्ति च सामान्य-विशेषादीनामिदं-रजतयोरिव

## ऋजुविवरणम्

*तथाऽप्यविविक्तेति* ॥ *ननु* संसर्गग्रहरहितत्वे सत्यसंसर्गाग्रहो विवेकः, स इदं-रजतयोरेव, न सामान्य-विशेषयोरित्याशङ्क्य, तथा सति व्यर्थविशेषणत्वम्; व्यावर्त्याभावादित्याह—*नच तत्रेति* ॥ यद्वा—पूर्वमभ्युपगम्य संसर्गग्रहमसंसर्गाग्रहलक्षणो विवेक उक्तः, इदानीं संसर्गग्रहलक्षणोऽपि विवेको नास्ति; अतः संसर्गाग्रहलक्षणोऽप्यविवेको नास्तीत्याह—*नच तत्र संसर्गेति* ॥ *ननु* प्रत्यभिज्ञायामैक्यालम्बनत्वं प्रतीतिबलादङ्गीकृतम्, तथा प्रतीतिबलाद् गुण-गुण्यादिसंबन्धोऽप्यालम्बनम्, इदं-रजतयोस्तु तदभावान्न संसर्गग्रह इत्याशङ्क्यात्रापि कथंचित्सालम्बनत्वं दर्शयति *इहापि च सादृश्येति* ॥ *ननु*—अबाधितप्रत्ययात्संसर्गे निश्चिते संसर्गविशेषनिरूपणा युक्ता, इयन्तु बाधिता प्रतीतिः संसर्गमेव कथं गमयेदित्याशङ्क्य भवन्मते विवेकप्रत्ययो बाधः; स सामान्य-विशेषयोरविशिष्ट इति तत्रापि संसर्गो न स्यादित्याह—*अस्ति च सामान्य-विशेषेति* ॥ *ननु*—सामान्यविशेषादौ विवेकप्रत्ययसाम्येऽपि संसर्गप्रतीतिदर्शनात् संसर्गप्रत्ययस्य सालम्बनत्वम्, इह तु संसर्गविवेकप्रतीत्योरसहभावाद्विरोधान्न संसर्गप्रत्ययः सालम्बनः,

## तत्त्वदीपनम्

सामान्य-विशेषादौ वैधर्म्यमात्रं तेनोक्तमिति मत्वा लक्षणस्यातिव्याप्तिस्तदवस्थेत्याह—*तथापीऽति* ॥ न वैधर्म्यमात्रम्, किंतु संसर्गज्ञानरहितत्वविशेषिताविविक्तज्ञानं भ्रम इति नातिव्याप्तिरित्याशङ्क्य, विशिष्टलक्षणस्यापि तत्र वृत्तेरतिव्याप्तिरित्याह—*नच तत्रेति* ॥ संसर्गप्रत्ययस्य किमैक्यमालम्बनम्? उत गुण-गुण्यादिसम्बन्धः? किं वोभयम्? नाद्यः; अत्यन्तभेदवादित्वादित्याह—*ऐक्यस्येति* ॥ द्वितीयमुत्थापयति—*गुणगुणीति* ॥ जाति-व्यक्त्यादिरादिशब्दार्थः। गुण-गुण्यादिसम्बन्धस्य नाऽऽलम्बनत्वनियमः; व्यभिचारादित्याह—*न प्रत्यभिज्ञाया इति* ॥ तृतीये गुण-गुण्यादिसंबन्धाः किं मिलिता आलम्बनम्? उत प्रत्येकम्? नाद्यः; मेलनस्य क्वचिदप्यभावात्, द्वितीये गुण-गुण्यादिवत् सादृश्यसम्बन्धोऽप्यालम्बनं स्यादित्याह—*इहेति* ॥ ततश्च लक्षणासंभव इत्यभिप्रायः। चतुर्थं प्रत्याह—*अस्ति चेति* ॥ अख्यातिमते विवेकज्ञानं बाधकम्, ततश्च बाधकज्ञानविषयीकृतत्वात्यन्ताभावाऽनधिकरणत्वमपि तत्रास्तीत्यतिव्याप्तिरित्यर्थः ॥

## वार्तिकम्

विज्ञानातिरिक्तबहिःपदार्थानभ्युपगमाच्च न पूर्वदृष्टजातीयत्वमस्तीत्यभिप्रायः। नच पूर्वपदवैयर्थ्यम्; तदन्तरेणातिव्याप्त्यपरिहारात्। विज्ञानवादिभिरपि स्वप्रकाशतया दृष्टस्य ज्ञानस्यावभासत्वेन बहिष्ट्वाङ्गीकारात्, पूर्वपदोपादाने च तज्ज्ञानव्यक्तेः पूर्वदृष्टत्वाभावान्नायं दोषः। यद्यपि तैरपि तत्सन्ताने रजतज्ञानोत्पादे पूर्वदृष्टरजतज्ञानान्तरं वासनात्वेनाङ्गीक्रियते; तथापि न तदाभासत्वेन बहिष्ट्वमङ्गीक्रियते, किन्तु विद्यमानज्ञानाभासत्वेनेति नातिव्याप्तिः; तन्मतस्यानुभवविरुद्धत्वेनापास्तत्वादित्याशयः। "परत्र पूर्वदृष्टावभासः" इत्युक्ते ज्ञानाध्यासेऽव्याप्तिः स्यात्, तन्मा भूदिति—"स्मृतिरूपः" इति। 'स्मृतिरूपः' इत्युक्ते पुनः शून्यवादिमतेऽतिव्याप्तिरित्यत उक्तम्—*परत्रेति* ॥ 'परत्र स्मृतिरूपः' इत्युक्ते तद्भासकसाक्षिण्यतिव्याप्तिः; तस्यापि तथा निरूपणात्, अत उक्तम्—*पूर्वदृष्टावभास इति* ॥ 'स्मृतिरूपः परत्र पूर्वदृष्टः' इत्युक्तेऽन्यथाख्यातावख्यातौ चातिव्याप्तिः स्यात्; परत्र पूर्वदृष्टस्य देशान्तरीयस्य भ्रान्त्या निरूप्यमाणस्या-

## पञ्चपादिकाविवरणम्

विवेकप्रत्ययः ; 'घटस्य शौक्ल्यमि'ति विवेकाभ्युपगमात् । *किञ्च* ग्रहणमेव स्मर्यमाणात्स्वार्थं किं न विविञ्च्यात् ? विशेषदर्शनाभावादिति चेत्, यदि गृहीतमात्रस्य रजताद् भेदोऽस्ति, तदा भेदापेक्षितो विशेषो धर्म्याकारः प्रतियोग्याकारो वा नान्य इति, गृहीत एव भेदाकारो विविक्तः प्रतीयेत । अथ धर्मि-प्रतियोग्याकारे गृहितेऽपीतरेतरापेक्षया तृतीयमेव ज्ञानं भेदं ग्राहयतीति, तर्हि सर्वपदार्थज्ञानानां भेदग्रहणात्प्रागविवक्तत्वाद् भ्रमत्वप्रसङ्गः । अथ न गृहीतमात्रस्य रजताद् भेदः, तर्ह्यैक्यमेवेति संसर्गज्ञानस्य सालम्बनतासिद्धिः ॥

## ऋजुविवरणम्

किन्तु अविवेकमात्रमित्याशङ्क्याविवेकोऽपि न संभवतीत्याह—*किंच ग्रहणमेवेति* ॥ यद्वा—सादृश्यालम्बनत्वेन संसर्गज्ञानस्य सालम्बनत्वं वक्तुं न शक्यते; सादृश्ये विद्यमानेऽपि क्वचित्सामानाधिकरण्यादर्शनात्, अतो मुख्यालम्बनाभावान्न संसर्गग्रहः, तथा विवेकग्रहोऽपि नास्ति ; कारणाभावात् ।*ननु* अपुनरुक्तशब्दस्मृत्या विवेकग्रहोऽस्तीत्युक्तम्, मैवम् ; इदं-रजतेतरसर्वपदार्थाग्रहात्तद्व्यावृत्तिप्रतीत्यभावेऽपीतरसर्वशब्दविलक्षणेदं-रजतशब्दस्मरणवदिदं-रजतयोः परस्परभेदाग्रहेऽपि तद्वाचकशब्दस्मरणोपपत्तेः । *ननु*—भेदस्य स्वरूपत्वात्स्वरूपग्रहे भेदो गृहीत एव, *मैवम्* ; स्वरूपस्य भेदत्वेऽपि स्वरूप-भेदग्रहशब्दयोरपुनरुक्तत्वेन स्वरूपस्य भेदाकारेण प्रतीतौ सामग्र्यन्तराङ्गीकारात्, तदभावे भेदरूपेण प्रतीत्यभावेन भेदकार्यकरत्वाभावात्स्वरूपाकारेण वाचकशब्दस्मारकत्वात्, अतो भेदग्रहहेत्वभावान्मुख्यसंसर्गाभावादविवेकमात्रमेवेत्याशङ्क्याह—*किंच ग्रहणमेवेति* ॥ स्मृतेः परोक्षार्थग्राहकत्वेन केवलाया अपि विवेचकत्वसंभव इत्यभिप्रायेणाह—

## तत्त्वदीपनम्

ग्रहण-स्मरणाविवेको भ्रम इत्यत्र दोषान्तरं समुच्चिनोति—*किंचेति* ॥ विमतम्, स्मर्यमाणात् स्वार्थं विविञ्च्यात्, ग्रहणत्वात्; संमतवत्, इत्युक्ते विशेषविषयत्वात्तत्र विवेचकत्वम्, नचैतद्विशेषविषयमित्याह—*विशेषेति*॥ विशेषो नाम भेदः?उत शुक्तित्वादिः? आद्येऽपि स किमिदं-रजतयोरस्ति?उत न? इति विकल्प्याऽऽद्यमनुवदति—*यदीति*॥ तत्रापि किं धर्मि-प्रतियोगिज्ञानमेव भेदज्ञानम् ? आहोस्विदन्यत् ? इति विकल्प्याऽऽद्यं दूषयति—*तदेति* ॥ धर्मि-प्रतियोगिज्ञानस्य भेदज्ञानत्वाद्धर्मि-प्रतियोगिनोश्च ज्ञातत्वाद् भेदोऽपि प्रथेतेत्यर्थः । द्वितीयमनुवदति—*अथेति* ॥ तृतीयज्ञानस्य भेदज्ञानत्वे तदुदयात्प्राक् सर्वं ज्ञानं भ्रमः स्यादित्याह—*तर्हीति* ॥ भेदाभावमुत्थापयति—*अथ न गृहीतेति* ॥ अस्मिन् पक्षे न भ्रमः सिद्ध्यतीत्याह—*तर्ह्यैक्यमेवेति* ॥ परस्परप्रतिस्पर्द्धिनोरितरनिषेधेऽन्यतर-विधिनान्तरीयकत्वाङ्गीकारादैक्यसिद्धिरित्यर्थः । द्वितीये धर्मविशिष्टज्ञानं विवेचकम् । तथाच धर्मज्ञानस्य विवेचकत्वं न स्यात् । स्वरूपभेदमात्रेण विवेचकत्वे सर्वत्रापि तथात्वं स्यादिति द्रष्टव्यम् । ग्रहणपर्यालोचनयाऽविवेकं निरस्य, स्मृति-

## वार्तिकम्

न्यथाख्यातिवादिभिरङ्गीकारात्, अख्यातिवादिभिरपि भ्रान्तिरूपव्यवहारेण तन्निरूप्यमाणत्वस्याङ्गीकारात्, अत उक्तम्—*अवभास इति* ॥ तदुभयमतासंभवस्य पूर्वमेवोक्तत्वादित्याशयः । "स्मृतिरूपः परत्रावभासः" इत्युक्ते सौत्रान्तिकमते स्वलक्षणे विकल्पशब्दितसामान्यादावतिव्याप्तिः, अत उक्तम्—*पूर्वदृष्टेति* ॥ तैः सामान्यादेः पूर्वदृष्टस्याभासत्वानङ्गीकरणात् तत्र नातिव्याप्तिः ; सामान्यादेरनाभासत्वात् तद्विषयविकल्पप्रत्ययस्याबाधितत्वेनाभ्रान्तिरूपत्वात्, अग्रे तन्मतस्याविरोधलक्षणे निराकरिष्यमाणत्वादित्याशयः । किं बहुना ?

त्रिंशत्कोटीर्व्युदस्यैकत्रिंशकोटीं स्वलक्षणाम् । जग्राह भगवान् भाष्यकारो वेदस्य सम्मताम् ॥

पञ्चभिः पदैर्व्यावर्त्य त्रिंशत्कोटीर्हित्वा तत्संग्राह्यामेकत्रिंशत्तमां कोटीं वेदतदनुयायिस्मृत्येकसम्मतां स्वकीयाध्यासलक्षणत्वेन भाष्यकारो गृहीतवान् । कथमिति चेत्, तदुच्यते—पञ्चभिः

### पञ्चपादिका

*उच्यते* ;—कोऽयं स्मरणाभिमानो नाम? न तावद् ज्ञानानुविद्धतया ग्रहणम्। न ह्यतिवृत्तस्य

### पञ्चपादिकाविवरणम्

*किञ्च* स्मृतिर्वा गवयादिस्मृतिवद्गृह्यमाणात्स्वार्थे किमिति न विविञ्च्यात्? स्मरणाभिमानप्रमोषादिति चेत्, तत्राह—*कोऽयं स्मरणाभिमान इति* ॥ न तावत् स्मृतिरेव ; तस्याः प्रमोषे ज्ञानस्यैवाभावप्रसङ्गात्, स्मृतेरन्यश्चेत्, कथमन्यस्य प्रमोषे परिपूर्णमुत्पन्नं ज्ञानं स्वकार्यमर्थविवेकं न कुर्यात्? नचान्यः स्मरणाभिमानो दृश्यत इति भावः। *ननु* पूर्वानुभव-तद्देश-कालानामन्यतमेन 'सः' इत्याकारेण वा स्मर्यमाणस्य सम्भेदः स्मरणाभिमान इति, नेत्याह—*न तावज्ज्ञानानुविद्धतया ग्रहणमिति* ॥ 'सोऽयमि'ति प्रत्यभिज्ञाभ्रमे हि सर्वेषामेवैषां 'सः' इत्याकारस्य पूर्वानुभव-देश-कालानां च स्मरामीतिपर्यन्तानां सम्भेदावगमेऽपि गृह्यमाणेनाविवेकदर्शनादिति भावः। नच पूर्वानुभवसम्भेदः स्मर्यमाणे सम्भवतीत्याह—*न ह्यतिवृत्तस्येति* ॥ अर्थस्मृति-

### ऋजुविवरणम्

*किंच स्मृतिर्वेति* ॥ *ननु* स्मृतिस्वरूपतदन्यव्यतिरेकेण धर्मादिकः स्मरणाभिमान इति, नेत्याह—*नचान्य इति* ॥ ज्ञानानुविद्धत्वमात्रमेवाशङ्क्य परिहृतं टीकाकारेण, तदभिप्रायत्वेन देशादीनामपि शङ्कान्तर्भावः कृतः, तस्याऽऽभिप्रायिकमेव परिहारमाह—*सोऽयमिति* ॥ *प्रत्यभिज्ञाभ्रमे इति*॥ कथमतिवृत्तस्य विषयीकृतत्वाभाव इत्याशङ्क्य साधयति—*अर्थस्मृतिसंस्कारस्येति* ॥ मा भूत् पूर्वविज्ञानेन विषयीकृतत्वम् ; स्वप्रकाशत्वेनावभासनात्,

### तत्त्वदीपनम्

पर्यालोचनयाऽपि निरस्यति—*किंच स्मृतिर्वेति* ॥ अप्रमुषितस्मरणाभिमानस्य, विवेकत्वादत्र च] तद्वैपरीत्यान्मैवमिति शङ्कते—*स्मरणाभिमानेति* ॥

स्मरणाभिमानः किं स्मृतेरनन्यः? उतान्यः? आहो अन्यानन्यः? आद्येऽपि किं स्मरणाभिमानस्य स्मृतावन्तर्भावः? आहो स्मृतेः स्मरणाभिमाने? तत्राद्ये स्मृतौ स्थितायां स्मरणाभिमानस्य कथं प्रमोष इत्यत्राह—*न तावत्स्मृतिरेवेति* ॥ स्मरणाभिमानान्तर्भावे तत्प्रमोषे स्मृतेरपि प्रमोषाद्रजतप्रतिभास एव न स्यादित्याह—*तस्या इति* ॥ द्वितीयमनूद्य दूषयति—*स्मृतेरिति* ॥ स्मरणाभिमानलक्षणसहकारिणः प्रमुष्टत्वात्कथं विवेचकत्वमित्याशङ्क्योत्पत्त्या ज्ञानस्य कार्यजनने नान्यापेक्षेत्याह—*परिपूर्णमिति* ॥ तृतीयस्त्वप्रसिद्धत्वाद्द दूरापास्त इत्याह—*नचेति* ॥ *अन्य इति* ॥ उक्तपक्षविलक्षण इत्यर्थः ॥

किंच स्मरणाभिमानशब्देन किं स्मार्यगतो धर्मविशेषः कथ्यते स्मरणेनाभिमन्यत इति व्युत्पत्त्या? उत स्मरणनिष्ठो धर्मः? किं वा 'स्मरामी'ति ज्ञानं स्मरणाभिमानः? इति विकल्प्याऽऽद्यमुत्थापयति—*ननु पूर्वेति* ॥ *ननु* अनुभवानुविद्धत्वं निराक्रियते, न देशादिसंभेदः ; नच—'ज्ञानानुविद्धतया' इत्यत्र ज्ञप्तिर्ज्ञानमिति व्युत्पत्त्याऽनुभवो गृह्यते, ज्ञायतेऽस्मिन्निति व्युत्पत्त्या देशकालयोर्ग्रहणम्, तथाच सर्वस्य निरासंभव इति—वाच्यम् ; तत्र हेत्वनुपन्यासादित्याशङ्क्य तात्पर्यमाह—*सोऽयमिति* ॥ सर्वेषामेवैषामाकारस्य 'सः' इत्यस्य संभेदावगमे पूर्वानुभवदेश-कालानामन्यतमेन संभेदावगमेऽपीति योजना ॥

"न ह्यतिवृत्तस्य" इत्यत्रानुभवासंभेदमात्रस्योच्यमानत्वात्प्रागपि तस्यैव विवक्षेत्यादौ पूर्वानुभवसंभेदस्य स्मरणाभिमानत्वेऽधिकदोषमाह—* नचेति* ॥ हिशब्दसूचितां युक्तिमाह—*अर्थस्मृतीति* ॥ अर्थ-स्मृतिकारण-

### वार्तिकम्

पदैः प्रत्येकं संगृहीतानि पञ्च लक्षणानि—स्मृतिरूपः, परत्र, पूर्वः, दृष्टः, अवभासश्चेति पञ्च।

## पञ्चपादिका

ज्ञानस्य ग्राह्यविशेषणतया विषयभावः। तस्माच्छुद्धमेवार्थं स्मृतिरवभासयति, न ज्ञानानुविद्धम्।

## पञ्चपादिकाविवरणम्

संस्कारस्य जनकं यत् पूर्वविज्ञानम्, तत् स्वयंग्राह्यविशेषणतया स्वेनैव न विषयीक्रियते; अर्थमात्रविषयत्वात्पूर्वज्ञानस्य। नच पूर्वज्ञानेनाविषयीकृते विषये तत्संस्कारजन्या स्मृतिः समुत्पद्यते। तस्मादर्थमात्रविषयज्ञानजन्या स्मृतिरर्थमात्रमेव विषयीकरोति, न पूर्वज्ञानेनाविषयीकृतं ज्ञानमपि; अन्यथा नीलज्ञानात् पीतेऽपि स्मृतिः स्यात्॥

*ननु* स्मर्यमाणे पूर्वानुभवसम्भेदः स्वानुभवसिद्धः, *सत्यम्*; यत् पूर्वानुभवसमयेऽर्थावभासलिङ्गजन्यमर्थज्ञानसद्भावविषयमनुमानज्ञानमुत्पन्नम्, तदनुमानज्ञानसंस्कारजनिता स्मृतिरनुभवसम्भिन्नमर्थं गमयति, मूलज्ञानेनाप्यर्थज्ञानविषयेण विशिष्टार्थविषयीकरणात्, यस्मादर्थस्मृतिसमनन्तरमनुभवविशिष्टार्थस्मृत्यन्तरजननादर्थस्मृतिरेवानुभवसम्भिन्नेति विभ्रमः, तस्माच्छुद्धमेवार्थमित्युपसंहरति—*शुद्धमिति*॥ पूर्वज्ञानेन यावन्मात्रं वस्तुमात्रं वा ज्ञानसम्भिन्नं वा वस्तु विषयीकृतं तावन्मात्रमेवावभासयति, न स्वमूलज्ञानसम्भिन्नमित्यर्थः॥

## ऋजुविवरणम्

स्मृतिविषयत्वं तु कस्मान्न भवतीत्याशङ्क्यानुभवविषय एव स्मृतिज्ञानमुत्पद्यते, नान्यत्र; सामग्र्यभावात्, इत्याह *नच पूर्वज्ञानेनेति*॥ यस्मान्न संस्कारस्य केवलानुभवजन्यस्य विशिष्टविषयस्मृत्युत्पादनसामर्थ्यम्, तेन तज्जन्यज्ञानमपि न विशिष्टविषयमित्याह—*तस्मादर्थमात्रेति*॥ *ननु* 'ज्ञातो घटः' इत्यनुभवविशिष्टार्थस्मरणं दृश्यते, कथं संस्कारस्य विशिष्टविषयस्मृत्युत्पादनसामर्थ्याभावः? तज्जन्यज्ञानस्य वा विशिष्टविषयत्वाभावः? इति चोदयति—*ननु स्मर्यमाण इति*॥ *ननु*—विशिष्टविषयस्मरणाङ्गीकारे यत्—"शुद्धमेवार्थमि"त्युपसंहृतम्, तदसमञ्जसं स्यादित्याशङ्क्याह—*यस्मादर्थमात्रस्मृतीति*॥ एवमप्यर्थस्मृतेश्शुद्धविषयत्वमिति वक्तव्यम्; नत्वविशेषेण शुद्धमेवार्थं स्मृतिरवभासयतीति वक्तुं युज्यत इत्याशङ्क्य व्याचष्टे—*शुद्धमिति*॥ *पूर्वज्ञानेनेति*॥ *ननु*—"पदात्पदार्थस्मृतावि"ति कथमुक्तम्? नहि पदस्य पदार्थबोधकत्वं सिद्धम्; न ापितस्य स्मृतिरूपत्वम्, तत् कथं सिद्धवद्-

## तत्त्वदीपनम्

संस्कारस्येत्यर्थः। किमर्थज्ञानं स्वेन विषयीक्रियते? उत ज्ञानान्तरेण? नाद्य इत्याह—*स्वेनेति*॥ कर्म-कर्तृविरोधान्न स्वविषयत्वमित्यर्थः। *न द्वितीयः*; स्वसत्तायां स्वप्रकाशं ज्ञानमित्यभ्युपगमविरोधादिति द्रष्टव्यम्। मा भूत्तर्हि विषयत्वं पूर्वज्ञानस्येत्यत्राह—* नहि पूर्वेति*॥ अनुभव-स्मरणयोरेकविषयत्वनियमादित्यर्थः। यस्मादर्थानुभवमात्रजनितसंस्कारस्य न विशिष्टस्मृत्युत्पादनसामर्थ्यम्, तस्मात्तज्जनितस्मरणमप्यर्थमात्रविषयमित्युपसंहरति—*तस्मादिति*॥ अर्थज्ञानस्य विषयत्वाभावेऽपि स्वप्रकाशतया स्फुरितत्वात् स्मरणविषयत्वं किं न स्यादित्यत आह—*न पूर्वेति*॥ तदेव व्यतिरेकमुखेनाह—*अन्यथेति*॥ पूर्वानुभवाविषयोऽप्यनुभवसंस्कारजस्मरणेन विषयीक्रियते चेत्, तदा नीलज्ञानात् पीतस्मरणमपि जायेतेत्यर्थः। 'ज्ञातो घटः' इत्यनुभवविशिष्टार्थस्मरणस्यानुभूयमानत्वात्कथं तदपन्हवः? इति शङ्कते—*ननु स्मर्यमाण इति*॥ उक्तमङ्गीकरोति—*सत्यमिति*॥

कथं तर्ह्यनुभवसंभिन्नविषयत्वं स्मरणस्य प्रतिषिध्यते? इत्यत्राह—*यत्पूर्वेति*॥ अर्थावभासशब्देनार्थनिष्ठं प्राकट्यमुच्यते। तस्य कार्यत्वे कारणापेक्षायामात्माश्रयं ज्ञानं कारणत्वेनानुमीयत इत्यर्थः। अर्थस्मृतेः केवलार्थानुभवमूलत्वान्नानुभवसंभिन्नविषयत्वमिति द्रष्टव्यम्। कथं तर्ह्यर्थस्मृतिरनुभवसंभिन्नविषयेत्यभिधानम्? इत्याशङ्क्याह—*यस्मादिति*॥ कस्याश्चित् स्मृतेरनुभवसंभिन्नविषयत्वे शुद्धमेवेत्यभिधानं कथम्? इत्याशङ्क्याह—पूर्वेति*॥ यावन्मात्रमित्येतद्विवृणोति—*वस्तुमात्रं वेति*॥ स्मृतेरनुभवसंभिन्नविषयत्वे विवादो न स्यादित्यत आह—*न स्वमूलेति*॥ अर्थमात्रज्ञानसंस्कारोत्थस्मरणस्य केवलविषयत्वम्, इतरस्य विशिष्टविषयत्वम्। तत्रार्थ-

## पञ्चपादिका

तथाच पदात्पदार्थस्मृतौ न दृष्टो ज्ञानसम्भेदः ; ज्ञानस्यापि शब्दार्थत्वप्रसङ्गात् । तथेष्टभूभागविषया

## पञ्चपादिकाविवरणम्

*ननु* अर्थस्मृतिर्वा ज्ञानसम्भिन्नविषयं स्मृत्यन्तरं वेत्यत्र को विवेक इति ? तत्रोदाहरणमाह—*तथाच पदात्पदार्थस्मृताविति* ॥ वाक्यार्थप्रत्ययविवक्षया यावदन्त्यपदोच्चारणपरिसमाप्तिस्तावत् क्रमेणोच्चार्यमाणेषु पदेष्वेकैकस्मात्पदादेकैकार्थविषयाणि ज्ञानान्युत्पद्यन्ते ; ताश्च सम्बन्धिशब्ददर्शनात् सम्बन्ध्यन्तरार्थविषयाः स्मृतय इत्यभिहितान्वयवादिनामन्विताभिधानवादिनां च संमतम् । *ननु*—कोऽसौ शब्दस्यार्थेन सम्बन्धः ?

## ऋजुविवरणम्

दृष्टान्तत्वेनोपादीयते ? सर्वपदानां हि संभूय वाक्यार्थे प्रमितिहेतुत्वम्, न तु पदार्थे इत्याशङ्क्याह—*वाक्यार्थेति* ॥ *ननु कोऽसौ शब्दस्येति* ॥ सम्बन्धः स्मृतिजनकत्वम् । स चात्र स्वभावकार्यादिर्निरूपयितुं न शक्यते ,

## तत्त्वदीपनम्

स्मृतेरर्थमात्रविषयत्वे युक्त्यन्तरं दर्शयितुमाकाङ्क्षामुद्भावयति—*नन्वर्थेति* ॥ अर्थमात्रज्ञानसंस्कारजः प्रत्ययोऽर्थस्मृतिशब्दार्थः, अनुमानसंस्कारजः प्रत्ययः स्मृत्यन्तरमिति विवेकः ॥

स्मृतिमात्रस्य ज्ञानसंभिन्नमात्रविषयत्वे पदात्पदार्थस्मृतौ व्यभिचारः ; तस्मान्न स्मरणमात्रस्यायं स्वभाव इत्याह—*तत्रोदाहरणमिति* ॥ वाक्यार्थप्रत्यायनाय प्रयुक्तपदवृन्दात्पदार्थबोधः कस्मादाधीयते ? आहितो वा कस्मात्स्मृतिः ? इत्याशङ्क्याह—*वाक्यार्थेति* ॥ वाक्यार्थप्रत्ययोद्देशेन पदानि तावत्प्रयुज्यन्ते, तेषां च पदानां सकृदुच्चारणासंभवात् क्रमेणोच्चारणम्, तेभ्यश्च क्रमेणोच्चार्यमाणेभ्यो गृहीतसंगतिकेभ्यः पदार्थबोधा आधीयन्ते वाक्यार्थप्रत्ययौपयिकत्वेन ; यथा काष्ठैः पाके साध्ये तदर्थं ज्वाला निर्वर्त्यन्ते तथेत्यर्थः । पदार्थानां च संगतिग्रहणसमये मानान्तरसिद्धत्वात् तज्ज्ञानस्य स्मरणत्वमित्याह—*ताश्चेति* ॥ संस्काराणां सदा भावात्सततं स्मृत्युदयः स्यादित्याशङ्क्याह—*संबन्धीति* ॥ उद्बुद्धसंस्कारस्य स्मृतिहेतुत्वात् तस्य च संबन्धिशब्ददर्शनतन्त्रत्वान्नातिप्रसङ्ग इत्यर्थः ॥

पदाभिहितानां पदार्थानामेवान्वयबोधकत्वमिति ये ब्रुवते, ते ह्यभिहितान्वयवादिनः, योग्येतरसंसृष्टस्वार्थमभिदधति पदान्येवेति य आचक्षते, ते त्वन्विताभिधानवादिनः । विमता स्मृतिः, न स्वबीजज्ञानसंभिन्नार्थविषया, अर्थस्मृतित्वात् ; पदार्थस्मृतिवदित्युक्तं भवतीत्यर्थः ॥

संबन्धिशब्ददर्शनात्संबन्ध्यन्तरस्मरणं जायत इत्युक्तम्, तदनुपपन्नम्, शब्दार्थयोः संबन्धानिरूपणादिति बौद्धः शङ्कते—*ननु कोऽसाविति* ॥ शब्दार्थयोः किं स्वभावः संबन्धः ? उत कार्य-कारणतालक्षणः ? किं वाऽनुपलब्धिः ? आहो देशनियमः ? किं वा कालनियमः ? उत संयोगादिः ? न तावद् वृक्षत्व-शिंशपात्वयोरिव स्वभावसंबन्धः ; एकव्यक्तिसमवायाभावात्, न द्वितीयः ; शब्दस्यार्थकार्यत्वे मानाभावात्, नापि तृतीयः ; अभावो ह्यनुपलब्ध्या मीयते, अर्थस्य च भावरूपत्वात् शब्दार्थयोरनुपलब्धिसंबन्धानुपपत्तेः, नापि चतुर्थः ; यस्मिन् स्निग्धच्छाया तस्मिन् शैत्यमितिवदेकदेशत्वाभावात्, नापि कृत्तिकोदये रोहिण्यासत्तिवत् कालनियमः ; भिन्नकालत्वात्, नापि संयोगः ; शब्दस्य गुणत्वात् ; द्रव्यत्वेऽपि नार्थेन संयोगः ; गुणादीनां शब्दस्य च तदनुपपत्तेः । एवं संबन्धान्तराभावोऽप्यूह्यः । तस्माच्छब्दार्थयोः संबन्धाभावान्न संबन्ध्यन्तरज्ञानस्य स्मरणत्वमुचितमित्यर्थः ॥

## वार्तिकम्

द्वाभ्यां द्वाभ्यां च पदाभ्यां दश लक्षणानि । तथाहि—एकैकं पदं ध्रुवं कृत्वा द्वितीयेन पदेन संयोजनीयम्

## पञ्चपादिकाविवरणम्

यतः शब्दस्य दर्शनादर्थे स्मृतिरुत्पद्येत, अर्थबुद्धिजननसामर्थ्यलक्षण इति चेत्, किं स्मृतिजननसामर्थ्यलक्षणः ? अन्यो वा ? नचान्यः ; पदानां पदार्थांशेषु स्मृतिव्यतिरिक्तकार्यान्तराभावात्, नच स्मृतिजननसामर्थ्यसम्बन्धादेव स्मृतिजन्म ; अन्यत्र सादृश्यादिसम्बन्धान्तरे सत्यन्यतरदर्शनेऽन्यतरस्मिन् स्मृतिदर्शनात् । तस्मान्न शब्दादर्थे स्मृतिरिति, *उच्यते* ;—सम्बन्धज्ञानसंस्कारः शब्ददर्शनं

## ऋजुविवरणम्

अतो न स्मृतिरिति भावः । *नच स्मृतिजननसामर्थ्यसम्बन्धादेवेति* ॥ अयमर्थः—स्मृतिजननसामर्थ्यात्स्मृतिजन्म न भवति ; आत्माश्रयादिदोषप्रसङ्गात् । कथम् ? तस्य स्मृतिजनकत्व-सामर्थ्ययोर्भेदोऽङ्गीक्रियते वा ? न वा ? नचेत्कथं जनकत्वमिति पृष्टे 'सामर्थ्यादि'ति वक्तव्यम् । सामर्थ्यं च जनकत्वमेवेति जनकत्वाज्जनकत्वमित्यात्माश्रयत्वं स्यात्, भेदे तु जनकत्वेन सामर्थ्यम्, सामर्थ्याज्जनकत्वमितीतरेतराश्रयत्वम् । अथ स्मृतिरूपकार्यदर्शनाज्जनकत्वम्, अतो नेतरेतराश्रयत्वम्, तर्हि स्मृतिरूपकार्यदर्शनाज्जनकत्वज्ञानम्, जनकत्वज्ञानेन सामर्थ्यज्ञानम्, सामर्थ्यज्ञानाच्च स्मृतिरूपकार्यमिति चक्रकम् ; ज्ञातसामर्थ्यस्यैव कार्यकरत्वात् । अथ मध्यमवृद्धप्रवृत्त्या प्रवृत्तिहेतुज्ञानमनुमाय शब्दानन्तर्यात्तज्जनकत्वं शब्दस्य निश्चित्य पश्चात्सामर्थ्यनिश्चयः, तथा सति तादृशशब्ददर्शनात्तस्यार्थस्मृत्युत्पत्तेर्न चक्रकम् ; तथाऽपि स्मृतिजननसामर्थ्यात्स्मृत्युत्पत्तिरिति न शक्यते वक्तुम् । बालेन सामर्थ्यमेव निश्चीयते, न स्मृतिजननरूपं यतः । अर्थज्ञानसामर्थ्यनिश्चयेऽपि फलतः स्मृतिजननसामर्थ्यं तदित्युच्यते, तथापि उत्तरत्र काले न शब्दमात्रदर्शनात् स्मृतिः ; विस्मृतसंबन्धस्यादर्शनात्, किन्तु संबन्धितया ज्ञायमानशब्ददर्शनात्, अस्त्विति चेत्, न ; अर्थस्य संबन्धविशेषणत्वेन ज्ञायमानत्वात् । अथ संबन्धज्ञानसंस्कारसहितशब्ददर्शनात्स्मृतिः, तथापि स्मृतिजननसामर्थ्यमात्रादेव स्मृतिजन्म न संभवतीत्याह—*सादृश्यादिसंबन्धान्तरे सतीति* ॥ सादृश्यमादिर्यस्य संबन्धस्य, स सादृश्यादिः । *एतदुक्तं भवति*—सादृश्यादिहेतुकाः संबन्धाः सादृश्यादय एव वा स्मृत्युत्पादनियामकाः, न तु सामर्थ्यमात्रात्स्मृत्युत्पत्तिरिति । एतत्परिहरति—*उच्यत इत्यादिना* ॥ यत्तूक्तं सादृश्यादिसंबन्धे सत्येव स्मृतिरिति, तत्र किं

## तत्त्वदीपनम्

संबन्धान्तराभावेऽपि शक्तिः संबन्ध इति चोदयति—*अर्थबुद्धीति* ॥ शब्दबुद्ध्योर्जन्य-जनकत्वं संबन्धः, अर्थबुद्ध्योस्तु विषय-विषयितेति शक्तिः संबन्ध इत्यर्थः । बुद्धिशब्दस्य स्मृत्यनुभवसाधारणतया विकल्पासहत्वान्नैतदित्याह—*किं स्मृतीति* ॥ *अन्य इति* ॥ अनुभवजननसामर्थ्यलक्षण इत्यर्थः । बुद्धिस्थत्वात् सिद्धान्त्यनङ्गीकृतत्वाच्च प्रथमं द्वितीयं दूषयति—*नचेति* ॥ पदार्थानां प्रमाणान्तरसिद्धत्वात् पदानां स्मारकत्वमेवेत्यर्थः । पदमात्रस्य स्मारकत्वं भवतां संमतं चेति चशब्दार्थः । संसृष्टपदार्थविशेषस्य मानान्तरागोचरत्वात्कथं पदानां तत्स्मारकत्वमित्याशङ्क्याह—*पदार्थांशेष्विति* ॥ संसृष्टपदार्थेष्वनुभवजनकत्वेऽपि केवलेषु स्मारकत्वमित्यर्थः । आद्यं निरस्यति—*नच स्मृतीति* ॥ ज्ञातस्य संबन्धस्य स्मृतिजनकत्वम् ? उताज्ञातस्य ? नाद्यः ; कार्यलिङ्गगम्यं हि सामर्थ्यम्, ततः स्मृतौ जातायां तया सामर्थ्यं ज्ञायते, ततस्तस्मिन् ज्ञाते स्मृतिजन्मेतीतरेतराश्रयात् । स्मृत्यन्तरप्रतिपन्नात् सामर्थ्यात् स्मृतिजन्माङ्गीकारेऽनवस्थापत्तेः ; *न द्वितीयः* ; अव्युत्पन्नानामपि शब्दश्रवणेऽर्थप्रतिपत्तिप्रसक्तेः । तस्माद् न स्मृतिजननसामर्थ्यलक्षणः संबन्धः साधीयानित्यर्थः ॥

तत्रैव दूषणान्तरमाह—*अन्यत्रेति* ॥ चैत्र-मैत्रयोरन्यतरदर्शनेनान्यतरस्मरणं सादृश्यादिसंबन्धे सति दृष्टम्, इह च सादृश्यादेरभावान्न स्मरणमुपपद्यत इत्यर्थः । विरोधकार्यकारणभावादिरादिशब्दार्थः । पूर्वपक्षमुपसंहरति—*तस्मादिति* ॥ संबन्धाभावाच्छब्दानामर्थबोधकतानुपपत्तेर्विवक्षाबोधकत्वं विवक्षितम् ? उतार्थबोधकत्वाऽभावमात्रम् ? आद्यस्तावन्नोपपद्यत इत्याह—*उच्यत इति* ॥

## भामती

कारणत्वात् । तथाच भासमानतैवालम्बनार्थः । नच रजतज्ञाने शुक्तिका भासते, इति कथमालम्बनम् ? भासमानताऽभ्युपगमे वा कथं नानुभवविरोधः ? अपिचेन्द्रियादीनां समीचीनज्ञानोपजनने सामर्थ्यमुपलब्धम्, इति कथमेभ्यो मिथ्याज्ञानसंभवः ? दोषसहितानां तेषां मिथ्याप्रत्ययेऽपि सामर्थ्यमिति चेत्, न; दोषाणां कार्योपजननसामर्थ्यविघातमात्रे हेतुत्वात्, अन्यथा दुष्टादपि कुटजबीजाद् वटाङ्कुरोत्पत्तिप्रसङ्गात् । अपिच स्वगोचरव्यभिचारे विज्ञानानां सर्वत्रानाश्वासप्रसङ्गः । तस्मात्सर्वं ज्ञानं समीचीनमास्थेयम् । तथाच 'रजतम्' 'इदमि'ति च द्वे विज्ञाने स्मृत्यनुभवरूपे । तत्रेदमिति पुरोवर्तिद्रव्यमात्रग्रहणम्; दोषवशात्तद्गतशुक्तित्वसामान्यविशेषस्याग्रहात् । तन्मात्रं च गृहीतसदृशतया संस्कारोद्बोधक्रमेण रजते स्मृतिं जनयति । सा च गृहीतग्रहणस्वभावाऽपि दोषवशाद् गृहीतत्वांशप्रमोषाद् ग्रहणमात्रमवतिष्ठते ।

## ऋजुप्रकाशिका

*ननु* मा नाम भायाद् रजतज्ञाने शुक्तिः, पुरोदेशे सत्तामात्रेण त्वालम्बनं किं न स्यात्? अत आह—*न खल्विति* ॥ *सर्वेषाम्=पुरोवर्तिनां लोष्टादीनामित्यर्थः । अथ रजतसदृशे शुक्तिशकले रजतज्ञानहेतुसंस्कारोद्बोधकत्वेनालम्बनत्वम्, तत्राह—*नापीति* ॥ सादृश्यात् शुक्तेः संस्कारोद्बोधद्वारा रजतज्ञानहेतुत्वं तदालम्बनत्वम्, अत आह—*तथाचेति* ॥ सैव शुक्तेरस्तु, अत आह—* नचेति* ॥ अनवभासमानत्वमसिद्धम्, अत आह—*भासमानेति* ॥ *ननु*—शुक्त्याकारस्यालम्बनत्वं न, किंतु इदमाकारस्य, स भासत एवेत्याशङ्क्याह---*अपि चेति*॥ *अथवा*---एवमर्थमारोपितं प्रतिषिद्धय, मिथ्याज्ञानमपि निह्नुते--*अपिचेति*॥ शुक्तेरिदंज्ञानालम्बनत्वमेव, न रजतज्ञानालम्बनत्वम्, तथात्वे ; *कथं नानुभवविरोधः ?=अनुभवविरोध एव ; रजतमवभासते शुक्तिकाऽऽलम्बनमिति । किंच—रजतज्ञानस्य शुक्तिविषयत्वे तज्ज्ञानं मिथ्याज्ञानमेव स्यात्, नचेष्टापत्तिः; सत्यज्ञानक्लृप्तकारणेभ्यो मिथ्याज्ञानासंभवात्, इत्याह—*अपिचेति* ॥ शङ्कते—*दोषसहितानामिति* ॥ *तेषाम्=इन्द्रियादीनाम् । दोषाणां प्रकृतशुक्तित्वविशेषज्ञानप्रतिबन्धकत्वमेव, न विपरीतरजतगोचरमिथ्याज्ञानजनकत्वमिति दूषयति—*न दोषाणामिति ॥ अन्यथेति* ॥ दोषाणां विपरीतकार्यजनकत्व इत्यर्थः । किंच—पुरोवर्तिविषयकरजतज्ञानस्य मिथ्याग्रहणरूपस्याङ्गीकारे विषयीभूतरजतस्य पुरोवर्तिन्यभावाद् ज्ञानस्य विषयव्यभिचारित्वेन सर्वत्र ज्ञानमात्रे तथात्वशङ्कयाऽनाश्वासेन ज्ञानतः प्रवृत्ति-निवृत्ती क्वापि न स्याताम्, इत्याशयेनाह---*अपिचेति* ॥ उपसंहरति—*तस्मादिति* ॥ 'इदं रजतमि'ति ज्ञानस्यैकत्वे कथं समीचीनत्वम्? तत्राह—*तथाचेति* ॥ द्वे एव विभजते—*स्मृत्यनुभवरूपे इति* ॥ अनुभवरूपं ज्ञानं किम्? इत्यपेक्षायामाह—*तत्रेदमिति* ॥ *ग्रहणम्=अनुभव इत्यर्थः । पुरोवर्तिद्रव्यमात्रग्रहणमित्यत्र मात्रचा विशेषग्रहणं व्यवच्छिद्यते, तत् कुतः ? इत्यत आह—*दोषवशादिति ॥ तद्गतेति* ॥ पुरोवर्तिद्रव्यगतेत्यर्थः । शुक्तित्वरूपो यः सामान्यविशेषः, तस्याग्रहादित्यर्थः । अनुभवरूपं ग्रहणमभिधाय स्मृतिमाह—*तन्मात्रं चेति* ॥ इदमिति पुरोवर्तिद्रव्यमात्रग्रहणं चेत्यर्थः । इदं च रजते स्मृतिं जनयतीत्यनेन सम्बध्यते, तच्च न साक्षात् स्मृतिं जनयति, किंतु संस्कारोद्बोधद्वारेत्याह—*गृहीतसदृशतयेति* ॥ शुक्ति-रजतयोश्चाकचक्यादिना सदृशत्वात् तद्दर्शनेन संस्कारोद्बोधो भवतीति भावः । तथाच 'इदमि'ति ग्रहणम्, 'रजतमि'ति स्मरणम्, इदं च ज्ञानद्वयमगृहीतभेदमख्यातिरित्यख्यातिवादिनो वदन्ति । *ननु* रजतज्ञानस्य स्मरणरूपत्वे पूर्वगृहीततत्ताऽप्युल्लिख्येतेत्यत आह--*सा चेति* ॥ रजतस्मृतिश्चेत्यर्थः । *गृहीतग्रहणस्वभावाऽपि=गृहीतविषयकज्ञानस्वभावाऽपि । *ग्रहणमात्रमवतिष्ठते=ग्रहणमेवावतिष्ठत इत्यर्थः । *ननु* इदंविषयकस्य च रजतविषयकस्य च यथाक्रमं ग्रहण-स्मरणात्मकज्ञानद्वयत्वाङ्गीकारे भेद-

## भामती

तथाच रजतस्मृतेः पुरोवर्तिद्रव्यमात्रग्रहणस्य च मिथः स्वरूपतो विषयतश्च भेदाग्रहात्, संनिहित-रजतगोचरज्ञानसारूप्येण, 'इदम्' 'रजतमि'ति भिन्ने अपि स्मरण-ग्रहणे अभेदव्यवहारं च सामानाधि-करण्यव्यपदेशं च प्रवर्तयतः। क्वचित्पुनर्ग्रहणे एव मिथोऽगृहीतभेदे ; यथा 'पीतः शङ्खः' इति। अत्र हि विनिर्यन्नयनरश्मिभिः पित्तद्रव्यस्य काचस्येव स्वच्छस्य पीतत्वं गृह्यते, पित्तं तु न गृह्यते। शङ्खोऽपि दोषवशाच्छुक्लगुणरहितः स्वरूपमात्रेण गृह्यते। तदनयोर्गुण-गुणिनोरसंसर्गाग्रहसारूप्यात्पीत-तपनीयपिण्डप्रत्ययाविशेषेणाभेदव्यवहारः सामानाधिकरण्यव्यपदेशश्च। भेदाग्रहप्रसञ्जिताभेदव्यवहार-बाधनाच 'नेदमि'ति विवेकप्रत्ययस्य बाधकत्वमप्युपपद्यते। तदुपपत्तौ च प्राक्तनस्य प्रत्ययस्य भ्रान्तत्वमपि लोकसिद्धं सिद्धं भवति। तस्मात्—यथार्थाः, सर्वे विप्रतिपन्नाः संदेह-विभ्रमाः, प्रत्ययत्वात्; घटादि-प्रत्ययवत्, तदिदमुक्तम्—*यदध्यास इति*॥ यस्मिञ्शुक्तिकादौ यस्य रजतादेरध्यास इति लोकप्रसिद्धिः, नासावन्यथाख्यातिनिबन्धना, किंतु गृहीतस्य रजतादेस्तत्स्मरणस्य च गृहीततांशप्रमोषेण, गृहीतमात्रस्य य 'इदमि'ति पुरोऽवस्थिताद् द्रव्यमात्रात्तज्ज्ञानाच्च विवेकः, तदग्रहणनिबन्धनो भ्रमः। भ्रान्तत्वं च ग्रहण-स्मरणयोरितरेतरसामानाधिकरण्यव्यपदेशो रजतादिव्यवहारश्चेति॥

## ऋजुप्रकाशिका

व्यवहारोऽसामानाधिकरण्यव्यपदेशश्च स्यात्, नतु 'इदं रजतमि'त्यभेदव्यवहारः सामानाधिकरण्य-व्यपदेशश्च, इत्यत आह—*तथाचेति*॥ *ननु* सर्वज्ञानयथार्थत्ववादे पराभिमतस्मर्यमाणारोपस्थले ग्रहण-स्मरणात्मकज्ञानद्वयाङ्गीकारेऽपि 'पीतः शङ्खः', 'लोहितः स्फटिकः,' इत्यादिगृह्यमाणारोपस्थले ग्रहण-स्मरणात्मक-ज्ञानद्वयायोगात् तत्र भ्रमरूपविशिष्टज्ञानादेकस्मादभेदव्यवहारः सामानाधिकरण्यव्यपदेशश्च समर्थनीय इत्यत आह—*क्वचित्पुनरिति*॥ "अगृहीतभेदे" इत्यनन्तरम् "अभेदव्यवहारं सामानाधिकरण्यव्यपदेशं च प्रवर्तयतः" इत्यनुषङ्गः। तदुदाहरति—*यथा पीतः शङ्ख इति*॥ ग्रहणे इत्युक्तम्, कयोर्ग्रहणे? इति वीक्षायां "पीतः शङ्खः" इत्यत्र पीतत्व-शङ्खयोरेव ग्रहणे इत्यभिप्रेत्य यथाक्रमं तदाह—*अत्र हि विनिर्यदिति*॥ *पित्तं तु=पित्त-द्रव्यं तु। उक्तमुपसंहरति—*तदनयोरिति*॥ *ननु* 'इदं रजतम्' इत्यादेर्ज्ञानद्वयत्वे च तस्याबाध्यत्वाद् बाध्याभावेन 'नेदं रजतमि'त्यादेर्बाधकप्रत्ययत्वं न स्यात्, इत्याशङ्क्य भेदाग्रहप्रसञ्जिताभेदव्यवहारस्य तद्बाध्यतया तस्य बाधकप्रत्ययत्वमुपपद्यत इत्याह—*भेदाग्रहप्रसञ्जितेति* ॥ *ननु*—अभेदव्यवहारेण सह तत्प्रसञ्जकस्य भेदाग्रहस्यापि बाध्यतयोत्तरज्ञानबाध्यस्य प्राचीनस्य भ्रमत्वसिद्धेर्भेदाग्रहस्याऽपि भ्रमत्वप्रसिद्धिर्भवेदित्याशङ्क्य, तन्मते तस्य भ्रमत्वं प्रसिद्धमेवेत्याह—*तदुपपत्तौ चेति* ॥ 'नेदमि'त्यादेरुत्तरज्ञानस्य बाधकत्वोपपत्तौ चेत्यर्थः। अख्यातिवादिमतमुपसंहरन् तन्मतसूचितमनुमानमाह—*तस्मादित्यादिना* ॥ *सर्वे सन्देह-विभ्रमा* इति पक्षनिर्देशः, याथार्थ्यं साध्यम्, प्रत्ययत्वं हेतुः। नच—सर्वप्रत्यययाथार्थ्ये भ्रमत्वप्रसिद्धि-र्निर्मूला स्यादित्युक्तमिति—वाच्यम्; भ्रमत्वप्रसिद्धेर्भेदाग्रहनिबन्धनत्वस्याप्युक्तत्वात्। भ्रमत्वप्रसिद्धेर्भेदा-ग्रहनिबन्धनत्वे सम्मतिमाह—तदिदमुक्तमिति*॥ *ननु* शुक्तिकादौ रजतादिज्ञानस्यान्यथाख्यातिनिबन्धनत्वमेव, नाख्यातिनिबन्धनत्वमित्यत आह—*नान्यथाख्यातिनिबन्धनेति* ॥ अन्यथाख्यातेर्निरसिष्यमाणत्वादित्या-शयः। कथं तर्हि रजतमिदमिति सामानाधिकरण्यव्यपदेशः? इति शङ्कते—*किन्त्विति*। स्मरणात्मनोऽपि रजतज्ञानस्य ग्रहणरूपत्वमुपपादयति—*तत्स्मरणस्येति* ॥ रजतस्मरणस्येत्यर्थः॥ *गृहीततांशप्रमोषेण=तत्तादिभावतिरोभावेन* ॥ स्वरूपतो विषयतश्चाविवेकमुपपादयति—*पुरोऽवस्थितादित्यादिना* ॥ पुरो-वर्तिद्रव्यमात्राद् रजतस्य *विवेकः=भेदः, यश्च पुरोवर्तिद्रव्यस्य सामान्यांशस्तस्माद् भेद इत्यर्थः। न केवलं

**अन्येतु—यत्र यदध्यासः, तस्यैव विपरीतधर्मत्वकल्पनामाचक्षत इति॥**

## भामती

अन्ये तु—अत्राप्यपरितुष्यन्तः—*यत्र यदध्यासः, तस्यैव विपरीतधर्मत्वकल्पनामाचक्षते*॥ अत्रेदमाकूतम् —अस्ति तावद्रजतार्थिनो 'रजतमिदमि'ति प्रत्ययात्पुरोवर्तिनि द्रव्ये प्रवृत्तिः सामानाधिकरण्यव्यपदेशश्चेति सर्वजनीनम्। तदेतन्न तावद् ग्रहण-स्मरणयोस्तद्गोचरयोश्च मिथो भेदाग्रहमात्राद्भवितुमर्हति। ग्रहण-

## ऋजुप्रकाशिका

(विषययो)र्भेदाग्रहनिबन्धन एव भ्रमः, किंतु ग्रहण-स्मरणयोर्ज्ञानयोरपि स्वरूपतो भेदाग्रहनिबन्धनो भ्रम- इत्याह—*तत्प्रज्ञानाच्चेति*॥ पुरोवर्तिद्रव्यमात्रज्ञानादियर्थः। (एवम)ख्यातिमते स्थिते तत्रापरितोषकथन- पूर्वकं मतान्तरमाह—(*अन्ये त्विति*॥ *अन्ये*=अनिर्वचनीयख्यातिवादिनः। अपरितोषकारणनिरूपण- मुपक्रमते—*इदमत्राकूतमिति*॥ *रजतमिदमितिप्रत्ययात्*=)इदं रजतमिति ज्ञानात्। *सामानाधि- करण्येति*॥ इदं रजतमिति सामानाधिकरण्याभिलाप इत्यर्थः। ... ...

## पञ्चपादिका

*अन्ये तु यत्र यदध्यासस्तस्यैव विपरीतधर्मत्वकल्पनामाचक्षत इति*॥ *यत्र=शुक्तिकादौ, यस्य=*रजतादेः, अध्यासः, *तस्यैव=शुक्तिशकलादेः, *विपरीतधर्मत्वस्य=रजतादिरूपत्वस्य, *कल्पनाम्=अविद्यमानस्यैवावभासमानताम्, आचक्षते।

## पञ्चपादिकाविवरणम् ...

रूपन्यासः। कल्पनामित्यस्य व्याख्या=अविद्यमानस्यैवावभासमानतामिति। "यल्लक्षणमवादिष्मे"ति पूर्व-

## ऋजुविवरणम्

नेति, शून्यस्य शुक्त्यात्मना, विवर्तमानस्य रजतरूपेण विवर्ततेति भावः। "कल्पनामि"ति भाष्ये कथं टीकाकृता "अविद्यमानस्यैवावभासमानतामि"त्युक्तम्? विरोधात्, कल्पनाशब्दस्य वस्तुनोऽन्यथाभावमात्रत्ववाचित्वात्, तज्- ज्ञानवाचित्वाभावादित्याशङ्क्य व्याचष्टे—*कल्पनामित्यस्येति*॥ *अथवा* पौनरुक्त्यशङ्का स्यात्, इत्यन्तत्वादे-

## तत्त्वदीपनम्

रूप्यादिरूपेण निष्पत्तिः, ततः 'कल्पनामवभासमानतामि'ति कथं सामानाधिकरण्यम्? इत्याशङ्क्यान्यस्यान्या- त्मना निष्पत्त्यसंभवात्तथा प्रतिभासकल्पनेत्यभिप्रायेणाह—*कल्पनामिति*॥ यच्छब्दस्य सन्निहितोत्तरपदान्वये

## भाष्यभावप्रकाशिका

केषांचिदन्यथाख्यातिवादिनां माध्यमिकानां च मतं दर्शयति—*अन्ये त्विति*॥ *यत्र=शुक्त्यादौ *यस्य=रजतादेः, अध्यासः, तस्यैव शुक्तिशकलादेः, *विपरीतधर्मत्वस्य=भावान्तरत्वेन शून्यत्वेन वा

## वार्तिकम्

*अन्ये तु=विज्ञानवादिनः शून्यवादिनो वा। *यत्र=विज्ञाने पुरोवर्तिशून्ये वा। यस्य बहिष्ठस्य रजतस्य वा। *अध्यासः=आरोपः। *तस्यैव=विज्ञानस्यैव शून्यस्यैव वा, नान्यस्य। *विपरीत-

## प्रदीपः

*यत्र*=इदमि, *यदध्यासः=रजताध्यासः, *तस्यैव=इदम एव, *विपरीतधर्मत्वकल्पनाम्=स्वावृत्तिरजतात्मना भानम्। *आचक्षते*=वदन्ति। इदं भामत्यभिमतं विवरणम्। पञ्चपादिकाद्यभिमतन्तु विवरणम्—"अन्ये तु"

### भामती

निबन्धनौ हि चेतनस्य व्यवहार-व्यपदेशौ कथमग्रहणमात्राद्भवेताम् ? *ननु* उक्तं नाग्रहणमात्रात्, किंतु ग्रहण-स्मरणे एव मिथः स्वरूपतो विषयतश्चागृहीतभेदे समीचीन-पुरस्थितरजतविज्ञानसादृश्येनाभेद-व्यवहारं सामानाधिकरण्यव्यपदेशं च प्रवर्तयतः, *अथ* समीचीनज्ञानसारूप्यमनयोर्गृह्यमाणं वा व्यवहार-प्रवृत्तिहेतुः ? अगृह्यमाणं वा सत्तामात्रेण ? गृह्यमाणत्वेऽपि 'समीचीनज्ञानसारूप्यम् अनयोः— इदमि'ति 'रजतमि'ति च ज्ञानयोः' इति ग्रहणम् ? अथवा 'तयोरेव स्वरूपतो विषयतश्च मिथो भेदाग्रहः' इति ग्रहणम् ? तत्र न तावत् 'समीचीनज्ञानसदृशी' इति ज्ञानं समीचीनज्ञानवद् व्यवहारप्रवर्तकम् ; नहि 'गोसदृशो गवयः' इति ज्ञानं गवार्थिनं गवये प्रवर्तयति। 'अनयोरेव भेदाग्रहः' इति तु ज्ञानं पराहतम् ; नहि भेदाग्रहे—'अनयोरि'ति भवति, अनयोरिति ग्रहे भेदाग्रहणमिति च भवति। तस्मात् सत्तामात्रेण भेदाग्रहोऽगृहीत एव व्यवहारहेतुरिति वक्तव्यम्। तत्र किमयमारोपोत्पादक्रमेण व्यवहारहेतुः ? आहोऽनुत्पादितारोप एव स्वत इति ? वयं तु पश्यामः—चेतनव्यवहारस्याज्ञानपूर्वकत्वानुपपत्तेरारोप-

### ऋजुप्रकाशिका

भवेतां किं वा स्वरूपतो विषयतश्चागृहीतभेदाद् ग्रहणस्मरण ... ...
देशयुगलमित्यर्थः। तद्गोचरयोश्च तद्विषयोश्च कथं न भवित ... ...
णनिबन्धमग्रहणात् भवतीति भावः। द्वितीयं शङ्कते—*नन्विति*। ग्रहण-स्मरणयोः ...
... ... ... ... ...
रोपयोगीत्युक्तम्, तत् किं ज्ञातं सदुपयोगि ? अज्ञातं सत्स्वरूपसत्तामात्रेण वा ? इति विकल्प्य,आद्यपक्षेऽपि इदमिति रजतमिति च ये ग्रहण-स्मरणात्मके ज्ञाने तयोः सवि ... ... ...

समीचीनज्ञानतुल्ययोस्तयोर्ग्रहण-स्मरणयोः स्वरूपतो विषयतश्च भेदाग्रह इति ग्रहणं तदुपयोगीति पक्षं विकल्पयति—*गृह्यमाणत्वेऽपीत्यादिना तत्र न तावदित्यतः प्राक्तनेन ग्रन्थेन*॥ तत्राऽऽद्यं दूषयति—*न तावदिति*॥ *व्यवहारप्रवर्तकम्=व्यपदेश-प्रवृत्त्योर्जनकमित्यर्थः। प्रवृत्त्यजनकत्वमेवाह—*नहीति*॥ द्वितीयं दूषयति—*अनयोरिति*॥ ग्रहण-स्मरणयोरित्यर्थः। *पराहतम्=दूरत एवापास्तमित्यर्थः। तदेवाह—*नहीति*॥ *अनयोः=ग्रहण-स्मरणयोरिति। द्विवचनेनैव तयोर्भेदस्य ग्रहणात्। भेदाद् भेदग्रहे भेदाग्रहणमित्यपि न संभवति, भेदाग्रहणग्रहणस्य भेदाग्रहणपूर्वकत्वादित्याह—*भेदाग्रहणमिति चेति*॥ नहीत्येतदुभयत्र भवतीत्यनेन संबध्यते। सारूप्यमज्ञातं सत् सत्तामात्रेणोपयुज्यत इति पक्षं परिशेषयन्नुपसंहरति—*तस्मादिति*॥ अगृहीत एवेति छेदः। भेदाग्रहणवत् सादृश्यस्याप्यग्रहणमभिप्रेतमिति भावः। अस्त्वगृहीत एव भेदाग्रहः प्रवृत्ति-व्यपदेशहेतुरित्याशङ्क्य तत्रापि दूषयितुं विकल्पयति—*तत्र किमित्यादिना* वयं त्वित्यतः

### वार्तिकम्

धर्मत्वकल्पनाम्=बहिष्ट्वादिरूपकल्पनाम्; तमाचष्टत इत्यर्थः। विपरीतो धर्मो यस्य विज्ञानस्य शून्यस्य वा तद्विपरीतधर्मः, तद्भावो विपरीतधर्मत्वम्, तस्य कल्पना विपरीतधर्मत्वकल्पना, तामिति विग्रहः। आन्तरस्य बहिष्ट्वं च विपरीतो धर्मः; आन्तरत्वविपरीतत्वात्। असत्त्वविपरीतसत्त्वाच्च

### प्रदीपः

इति सत्ख्यातिविशेषाणां शून्यख्यातेश्च परामर्श इति। अख्यातिवादवर्जं सर्वेऽपि भ्रमख्यातिवादिनो विशेष्यावृत्ति-प्रकारकज्ञानत्वं भ्रमत्वमेतेव स्वीकुर्वन्ति। ततश्च "स्मृतिरूपः परत्रे"ति लक्षणवाक्यं सर्ववादिसम्प्रतिपन्नमित्याह—

## भामती

ज्ञानोत्पादक्रमेणैवेति । *ननु* सत्यं चेतनव्यवहारो नाज्ञानपूर्वकः, किंत्वविदितविवेकग्रहण-स्मरण-पूर्वक इति, *मैवम्* ; नहि रजतप्रातिपदिकार्थमात्रस्मरणं प्रवृत्तावुपयुज्यते । इदंकारास्पदाभिमुखी खलु रजतार्थिनां प्रवृत्तिरित्यविवादम् । कथमयमिदंकारास्पदे प्रवर्तेत ? यदि तन्न भवेत् । अन्यदिच्छ-त्यन्यत्करोतीति व्याहतम् । नचेदंकारास्पदं रजतम्, इति कथं रजतार्थी तदिच्छेत् ? यद्यतथात्वेन ग्रहणादिति ब्रूयात्, स च प्रतिवक्तव्यः—अथ तथात्वेनाग्रहणादयं कस्मान्नोपेक्षेतेति ? सोऽयमुपादानो-पेक्षाभ्याममित आकृष्यमाणश्चेतनोऽव्यवस्थित इदंकारास्पदे रजतसमारोपणोत्पादानपेक्ष एव व्यवस्थाप्यते, इति भेदाग्रहः समारोपोत्पादक्रमेण चेतनप्रवृत्तिहेतुः । *तथाहि*—भेदाग्रहादिदंकारास्पदे रजतत्वं समारोप्य, तज्जातीयस्योपकारहेतुभावमनुचिन्त्य, तज्जातीयतयेदंकारास्पदे रजते तमनुमाय, तदर्थी प्रवर्तत इत्यानुपूर्व्यं सिद्धम् ।

## ऋजुप्रकाशिका

प्राक्तनेन*॥ *अयम्=अगृहीतो भेदाग्रहः । द्वितीयं दूषयन् प्रथमं परिशेषयति—*वयंत्वित्यादिना* ॥ अस्तु प्रथमकल्पशेषः, ततः किम् ? इति चेत्, आरोपस्यैकविशिष्टज्ञानरूपत्वेन ज्ञानद्वयासिद्धौ तन्मतासिद्धिरित्यभिसन्धिः । पुनः प्रवृत्ति-व्यपदेशलक्षणचेतनव्यवहारसम्भवं शङ्कते—*नन्विति* ॥ अगृहीतभेदोऽविदितविवेकशब्दार्थः । तत्र किमिदमिति ग्रहणमात्रं प्रवृत्त्यादिव्यवहारहेतुः ? रजतस्मरणमात्रं वा ? तदुभयं मिलितं वा ? नाद्यः ; इदंज्ञानमात्रस्य प्रवर्तकत्वे लोष्टादावपि प्रवृत्त्यापत्तेः, नान्त्यः ; ज्ञानयोः क्रमिकत्वेन तदुभयमेलनायोगात्, इत्यभिप्रेत्य दूषयति—*मैवमिति* ॥ द्वितीये रजतप्रातिपदिकार्थमात्रस्मरणं प्रवर्तकमित्यायातम्, तन्न संभवतीति दूषयति—*नहि रजतेति* ॥ कुतो नोपयुज्यते ? इत्यत आह—*इदंकारेति* ॥ अस्तु, ततः किम् ? तत्राह—*कथमयमिति* ॥ *अयम्=रजतप्रातिपादिकार्थमात्रस्मरणवान्, *इदंकारास्पदे=इदमि । *यदि तन्न भवेदिति* ॥ यदि रजतस्मरणमिदंविषयकं न भवेत्, तदा इदंपदार्थाविषयकरजतमात्रस्मरणवान् कथमिदमि प्रवर्तते ? इति पूर्वान्वितत्वेनार्थो योजनीयः । रजतार्थिरजतमात्रस्मरणवान् इदमि प्रवर्तताम्, को दोषः ? इत्यत आह—*अन्यदिच्छतीति* ॥ *अन्यत् करोति=अन्यत् कृतिविषयीकरोति । व्याहति-मेवाह—*नचेति* ॥ *रजतं चेदंकारास्पदं न = इदंप्रतीतिविषयो न ; इतीति हेतौ । यतो रजतमिदं-कारास्पदं न, येन रजतार्थी इदं वस्तु कृतिविषयीकुर्यादित्यर्थः । इदंवस्तुनोऽरजतत्वेनाग्रहणाद् रजतार्थी इदं वस्त्विच्छति, तत्र प्रवर्तते चेत्यत आह—*यदीति* ॥ यदीत्यनन्तरं पुरोवर्तिन इति शेषः । *अतथात्वेन=अरजतत्वेन । अग्रहणादित्यनन्तरं पुरोवर्तिनीच्छेति शेषः । प्रतिवक्तव्य इत्यनन्तरं पुरो-वर्तिनीति शेषः । *तथात्वेनाग्रहणात् = रजतत्वेनाग्रहणात् । त्वन्मते पुरोवर्तिनो रजतज्ञानाविषयत्वादिति भावः । *अयम्=रजतार्थी । *नोपेक्षेत* ॥ पुरोवर्तीदंवस्त्विति शेषः । *रजतसमारोपणोपादानापेक्षः=रजत-समारोपणपूर्वकं रजतोपादानापेक्षः । *समारोपोत्पादकक्रमेणेति* ॥ समारोपश्च पुरोवर्तिनीदंवस्तुनि प्रवर्त-नार्थं पुरोवर्तीदंवस्तुविषयकोऽवश्यं वाच्य इति, न त्वदभिमतज्ञानद्वयसिद्धिरिति भावः । तदेव प्रपञ्चयति—*तथाहीति* ॥ *भेदाग्रहादिति* ॥ इदं-रजतयोर्भेदाग्रहादित्यर्थः । *तज्जातीयस्य = पुरोवर्तिन्यारोपितं यद्रजतं तत्सजातीयस्य, हट्टपट्टणादिस्थितस्य रजतस्य, आभरणाद्युपकारहेतुभावं पूर्वदृष्टमनुचिन्त्य स्मृत्वा, उपकारहेतुरजतसजातियतयाऽवगत इदंकारास्पदे तमुपकारहेतुभावम्, इदं पुरोवर्ति, आभरणाद्युपकारकम्, रजतत्वात्, संप्रतिपन्नरजतवदित्यनुमाय रजतार्थी इदंकारास्पदे पुरोवर्तिनि प्रवर्तत इत्येतदानुपूर्व्यं सर्वजन-सिद्धमित्यर्थः । ततः किम् ? इति चेत्, तत्र वक्तव्यम्—किं ज्ञानद्वयवादिनस्तव मते किमिदमिति ग्रहणमिदंत्वे-

भामती

नच तटस्थरजतस्मृतिरिदंकारास्पदस्योपकारहेतुभावमनुमापयितुमर्हति ; रजतत्वस्य हेतोरपक्षधर्मत्वात् । एकदेशदर्शनं खल्वनुमापकम्, नत्वनेकदेशदर्शनम् । *यथाहुः*—ज्ञातसंबन्धस्यैकदेशदर्शनादिति । समारोपे त्वेकदेशदर्शनमस्ति । तत्सिद्धमेतत्—विवादाध्यासितं रजतादिज्ञानम्, पुरोवर्तिवस्तुविषयम्, रजताद्यर्थिनस्तत्र नियमेन प्रवर्तकत्वात्, यद् यदर्थिनं यत्र नियमेन प्रवर्तयति, तज्ज्ञानं तद्विषयम् ; यथोभयसिद्धसमीचीनरजतज्ञानम्, तथाचेदम् ; तस्मात्तथेति । यच्चोक्तमनवभासमानतया न शुक्तिरालम्बनमिति, तत्र भवान्पृष्टो व्याचष्टाम्—किं शुक्तिकात्वस्य 'इदं रजतमिति ज्ञानं प्रत्यनालम्बनत्वम्' ? आहोस्विद् द्रव्यमात्रस्य पुरःस्थितस्य सितभास्वरस्य ? यदि शुक्तिकात्वस्यानालम्बनत्वम्, अद्धा ; उत्तरस्यानालम्बनत्वं ब्रुवाणस्य तवैवानुभवविरोधः । *तथाहि*—'रजतमिदमि'त्यनुभवन्ननुभविता पुरोवर्ति वस्त्वङ्गुल्यादिना निर्दिशति । दृष्टं च दुष्टानां कारणानामौत्सर्गिककार्यप्रतिबन्धेन कार्यान्तरोपजननसामर्थ्यम् ;

ऋजुप्रकाशिका

विषयकं सद् लिङ्गज्ञानतयेदंकारास्पदस्य पुरोवर्तिन आभरणाद्युपकारहेतुभावेनानुमितिजनकम् ? किं वा तटस्थरजतस्मरणं रजतत्वविषयकं सत् लिङ्गज्ञानतयेदंकारास्पदस्य तदुपकारहेतुभावानुमितिजनकम् ? नाद्यः ; इदंत्वस्य लोष्टादिसाधारणतयाऽऽभरणाद्युपकारहेतुभावालिङ्गत्वेन तज्ज्ञानस्य तदनुमित्यजनकत्वादित्यभिप्रेत्य द्वितीयं दूषयति—*नच तटस्थेति* ॥ रजतत्वगोचरा तटस्थरजतस्मृतिर्लिङ्गज्ञानतयेदंकारास्पदस्य पुरोवर्तिन आभरणाद्युपकारहेतुभावानुमितिं जनयितुं नार्हतीत्यर्थः । कथं नार्हतीति चेत्, इदंकारास्पदे पक्षे आभरणाद्युपकारहेतुभावावानुमापकं लिङ्गं रजतत्वमिति वक्तव्यम्, तत्र किं रजतत्वं इदंकारास्पदपुरोवर्तिनिष्ठतयाऽवगतम् ? उत न ? नाद्यः ; तथात्वे रजतत्वविशिष्टपुरोवर्तिविषयकज्ञानाङ्गीकारापत्त्या ज्ञानद्वयवादभङ्गप्रसङ्गादित्यभिप्रेत्य द्वितीयं दूषयति—*रजतत्वहेतोरिति* ॥ *अपक्षधर्मत्वात्* = पक्षभूतेदंपदार्थनिष्ठतयाऽज्ञानादित्यर्थः । तथा ज्ञाने ज्ञानद्वयवादभङ्गप्रसङ्ग इत्युक्तम् । पक्षधर्मताज्ञानाभावे को दोषः ? इत्याशङ्क्य हेतोः पक्षधर्मताज्ञानमावश्यकमित्याह—*एकदेशेति* ॥ साध्येन सहैकदेशे पक्षे हेतोर्दर्शनमित्यर्थः । तथाच कारणीभूतपक्षधर्मताज्ञानाभावेऽनुमित्यभावापत्तिरेव दोष इति भावः । तत्र सम्मतिमाह—*यथाहुरिति* ॥ ज्ञातः सम्बन्धः नियमः साध्येन, न यस्य सः, तथोक्तः ; तस्य साध्येन सह पक्ष एकदेशे दर्शनादित्यर्थः । तथाच रजतत्वहेतोरिदंकारास्पदे पक्षे वृत्तित्वज्ञानाभावान्न तदुपकारहेतुभावानुमितिरिति, अख्यातिपक्षे रजतार्थिन इदंकारास्पदे प्रवृत्तिर्न स्यादिति भावः । इदंकारास्पदे रजतत्वारोपपक्षे तु पक्षधर्मताज्ञानसत्त्वमस्तीत्याह—*समारोपे त्विति* ॥ तथाचैतत्पक्ष उपकारहेतुभावानुमितिसंभवाद् रजतार्थिनस्तत्र प्रवृत्तिरुपपद्यत इति भावः । एवंच रजतार्थिनः शुक्तौ प्रवृत्त्यनुरोधेन रजतज्ञानस्य शुक्तिविषयकत्वमवश्यं वाच्यमिति, न ज्ञानद्वयसिद्धिः । एवं च सूचितमनुमानमाह—*तत्सिद्धमेतदित्यादिना तस्मात्तथेत्यन्तेन* ॥ *तत्र* = पुरोवर्तिनि । यद् भासते तदेवाऽऽलम्बनम्, रजतज्ञाने शुक्तिकाया अनवभासत्वाद् नालम्बनत्वमिति यत्पूर्वमुक्तम्, तदनूद्य निराकरोति—*यच्चोक्तमित्यादिना* ॥ निराकरणाय विकल्पयति—*तत्र भवान् पृष्ट इत्यादिना सितभास्वरस्येत्यन्तेन*॥ आद्यमिष्टापत्त्या परिहरति—*यदीत्यादिना, अद्धेत्यन्तेन*॥ द्वितीयमनुभवविरोधेन दूषयति—*उत्तरस्येति* ॥ अनुभवविरोधमेवाह—*तथाहीति* ॥ तथाच पुरोवर्तिवस्तु रजतज्ञानविषय इत्यत्र न विवाद इति भावः । *ननु* दुष्टनयनस्य प्रकृतशुक्तित्वज्ञानलक्षणकार्यप्रतिबन्धकत्वमात्रम्, न विपरीतपुरोवर्तिविषयकरजतभ्रमजनकत्वम्, अन्यथा दुष्टादपि कुटजबीजाद् यवाङ्कुरोत्पत्तिप्रसङ्ग इत्युक्तम्, तद् दूषयति—*दृष्टं च दुष्टानामिति* ॥ *औत्सर्गिकेति* ॥ बाधकैकापोद्यं प्रकृतकार्यमौत्सर्गिकार्यम्, तत्प्रतिबन्धेनेत्यर्थः । दोषादिबाधकसद्भावात् तत्प्रतिबन्धो विपरीतकार्यजननं चेत्यर्थः ।

## भामती

यथा दावाग्निदग्धानां वेत्रबीजानां कदलीकाण्डजनकत्वम्, भस्मकदुष्टस्य चौदर्यस्य तेजसो बह्वन्नपचनमिति। प्रत्यक्षबाधापहृतविषयं च विभ्रमाणां यथार्थत्वानुमानमाभासः; हुतवहानुष्णत्वानुमानवत्। यच्चोक्तम्—मिथ्याप्रत्ययस्य व्यभिचारे सर्वप्रमाणेष्वनाश्वासः—इति। तद् बोधकत्वेन स्वतः प्रामाण्यं नाव्यभिचारेणेति व्युत्पादयद्भिरस्माभिः परिहृतं न्यायकणिकायामिति नेह प्रतन्यते। दिङ्मात्रं चास्य स्मृतिप्रमोपभङ्गस्योक्तम्। विस्तरस्तु ब्रह्मतत्त्वसमीक्षायामवगन्तव्य इति। तदिदमुक्तम्—"अन्ये तु यत्र यदध्यासः, तस्यैव विपरीतधर्मत्वकल्पनामाचक्षत इति॥" *यत्र=शुक्तिकाशकलादौ *यस्य = रजतादेरध्यासः,

## ऋजुप्रकाशिका

दृष्टं च दुष्टानामित्युक्तम्, दर्शनस्थलमेवाह—*यथा दावाग्निदग्धेत्यादिना* ॥ दर्शनस्थलान्तरमाह—*भस्मकेति* ॥ *औदर्यस्य तेजसः* इत्यनन्तरं प्रकृतरसार्जनकार्यप्रतिबन्धेनेति शेषः। *बह्वन्नपचनं* बह्वन्नभस्मीकरणं च दृष्टमित्यनुषङ्गः। तथाच विपरीतभ्रमलक्षणकार्यसंभवान्न सर्वज्ञानयाथार्थ्यसिद्धिः। *ननु* उक्तं सर्वे प्रत्ययाः, यथार्थाः, प्रत्ययत्वात्, घटादिप्रत्ययवत्; इत्यनुमानम्, तत्राह—*प्रत्यक्षबाधकेति* ॥ तत्र दृष्टान्तमाह—*हुतवहेति* ॥ क्वचित् पुरोवर्तिनि वस्तुतो रजताभावेऽपि रजतप्रत्यय उक्तः, तस्य विषयव्यभिचारित्वेन सर्वप्रमाणप्रत्ययमात्रे तथात्वशङ्कायामनाश्वास इति पूर्वोक्तमनूद्यापवदति—*यच्चोक्तमित्यादिना व्यभिचारेणेति* ॥ विषयाव्यभिचारित्वं ज्ञानस्य प्रामाण्यं चेत्, क्वचिद् विषयव्यभिचारे सर्वत्र तथात्वशङ्कयाऽनाश्वासः स्यात्; अतो न तथा, किन्तु बोधकत्वमेव प्रामाण्यम्; तथाच नानाश्वास इति न्यायकणिकाग्रन्थे परिहृतमित्यर्थः। *ननु* बोधकत्वमेव प्रामाण्यं चेत्, बाधके सति कथं तत्प्रामाण्यमिति चेत्, यावद्बाधं प्रामाण्यमिति तस्याऽऽशयात्। इदमिति ग्रहणं प्रमुष्टतत्ताकं रजतस्मरणं चेति ज्ञानद्वये पूर्ववादिनोक्त उक्तविधया ज्ञानद्वयखण्डने कृते स्मृतिभङ्गात् स्मृतितत्तांशप्रमोषभङ्गस्य दिङ्मात्रमुक्तप्रायम्, स्मृतिप्रमोषभङ्गो विस्तरेण कार्यः, स च ब्रह्मतत्त्वसमीक्षाख्ये ग्रन्थे कृतोऽस्ति, तत्रैव सोऽनुसन्धेय इत्यभिप्रेत्याह—*दिङ्मात्रं चेति*॥*उक्तम् = उक्तप्रायम्। ज्ञानद्वयखण्डनपूर्वकमिदंवस्तुविषयकं रजतज्ञानमुक्तम्, तद् भाष्यारूढं करोति—*तदिदमुक्तमन्ये त्वित्यादिना* ॥ भाष्यं योजयति—*यत्र शुक्तिकाशकलादावित्यादिना* ॥ *विपरीतेति* ॥ शुक्तित्वविपरीतधर्मो रजतत्वादिः, तद्वत्त्वकल्पनामित्यर्थः। एवं पूर्वोक्तरीत्या पुरोवर्तिनि भासमानस्य सत्त्वे बाधानुपपत्त्या सत्ख्यातिर्निरस्ता; तथा पुरोवर्तिनि भासमानस्यासत्त्वे नरशृङ्गादिवदपरोक्षप्रतीत्यनुपपत्त्याऽसत्ख्यातिरपि निरस्ता; ज्ञानाकाररजतभाननिराकरणादात्मख्यातिरपि निराकृता; अव्यवधानेनाख्यातिर्निराकृतैव; अन्यथाख्यातिपक्षोऽपि निराक्रियते;—तत्पक्षे समारोपितरजतस्य देशान्तरस्थत्वं वाच्यम्, नच तत् संभवति; तस्य देशान्तरस्थत्वे प्रमाणाभावात्, यदि प्रमाणम्, तदा वक्तव्यम्—किमि'दं रजतमि'ति भ्रमः समारोपितरजतस्य देशान्तरस्थत्वे प्रमाणम्? किं वा तद्भ्रमानुपपत्तिः? नेदं रजतमिति बाधो वा? बाधानुपपत्तिर्वा? नाद्यः; देशान्तरस्थत्वस्य भ्रमानुल्लिखितत्वे भ्रमस्य तद्विषयत्वायोगात्, न द्वितीयः; अनिर्वचनीयरजतविषयकत्वेनाऽपि भ्रमोपपत्तौ देशान्तरस्थत्वं विना भ्रमानुपपत्त्यभावात्, *नापि तृतीयः; बाधस्य पुरोवर्तिनि रजतनिषेधमात्रविषयकत्वेन तद्गतदेशान्तरस्थत्वाविषयकत्वात्, नापि चतुर्थः; अनिर्वचनीयरजतनिषेधेनैव बाधोपपत्तौ देशान्तरस्थत्वं विना बाधस्यानुपपत्त्यभावात्, तस्मादन्यथाख्यातिरपि निराकृता। *ननु* अस्तु

## भाष्यभावप्रकाशिका

सत्ताहीनस्य, *कल्पनाम्=भासमानताम्, अध्यासं भावान्तराभाववादिनः शून्यवादिनश्चाचक्षते। तथाच—तत्रापि परत्र परावभासे संवादोऽस्तीत्यर्थः॥ एवं मतान्तराण्युपन्यस्य प्रकृतं स्वमतानुसारित्वं तेषां निगम-

**सर्वथाऽपि त्वन्यस्यान्यधर्मावभासतां न व्यभिचरति ।**

### भामती

तस्यैव* = शुक्तिकाशकलादेः, विपरीतधर्मकल्पनाम् = रजतत्वधर्मकल्पनामिति योजना । *ननु* सन्तु नाम परीक्षकाणां विप्रतिपत्तयः, प्रकृते तु किमायातम् ? इत्यत आह—*सर्वथापि त्वन्यस्यान्यधर्मावभासतां

### ऋजुप्रकाशिका

तत्तद्वादिनां विप्रतिपत्तिः, उक्तविधया तत्तद्वाद्यभिमतख्यातिनिराकरणं च, प्रकृते किमायातम् ? इति शङ्कते—*ननु* *सन्त्विति* ॥ विप्रतिपत्तय इत्यनन्तरं तत्तद्वाद्यभिमतख्यातिनिराकरणं चास्त्विति शेषः । अनिर्वचनीयख्यातौ पर्यवसानमायातमित्यभिप्रेत्य तत्पर्यवसानाय सर्वमतेऽप्यन्यस्यान्यधर्मवत्त्वकल्पना न व्यभिचर-

### पञ्चपादिका

*सर्वथापि त्विति* स्वमतानुसारित्वं सर्वेषां कल्पनाप्रकाराणां दर्शयति । अन्यस्यान्यधर्मावभासित्वं नाम लक्षणम्, परत्रेत्युक्तेऽर्थात्परावभासः सिद्ध इति, यदवादिष्म, तन्न व्यभिचरति । कथम् ? पूर्वस्मिन् कल्पे ज्ञानाकारस्य बहिष्ठस्य वा शुक्तिधर्मत्वावभासनान्न व्यभिचारः, द्वितीयेऽपि शुक्ति-रजतयोः पृथक्सतोरपृथगवभासोऽभिमानात्, तृतीयेऽपि शुक्तिशकलस्य रजतरूपप्रतिभासनात् ॥

### पञ्चपादिकाविवरणम्

लक्षणशब्देन यच्छब्दस्य सम्बन्धः । अख्यातिवादिनाऽपि मानसं संसर्गज्ञानं संसर्गाभिमानो वा वक्तव्य

### ऋजुविवरणम्

व्याख्येयत्व-व्याख्यानत्वसूचकस्याभावात्, तदर्थमाह—*कल्पनामित्यस्येति* ॥ परावभासः सिद्धइति यदवादिष्म, तन्न व्यभिचरतीत्यन्वयः प्रतिभाति ; तथा सति लक्षणमित्यस्यानन्वयः, अनुपयुक्तश्च ; तन्न व्यभिचारशङ्काया एवाभावात्, अप्रकृतोपसंहारश्च ; लक्षणाव्यभिचारस्य प्रस्तुतत्वादित्याशङ्क्य व्याचष्टे—*यल्लक्षणमवादिष्मेति* ॥ अख्यातिपक्षे कथमपृथगवभासाभिमान उक्तः ? तस्यानङ्गीकृतत्वात्, इत्याशङ्क्याभिप्रायमाह—*अख्यातिवा-

### तत्त्वदीपनम्

लक्षणशब्दस्यानन्वयः स्यादित्याशङ्क्याह—*यदिति* ॥ स्वरूपलक्षणस्य कथमख्यातिमतेऽनुगतिः ? संसर्गज्ञानस्य तेनाऽनभ्युपगतत्वादित्याशङ्क्याह—*अख्यातीति* ॥ चाक्षुषायथार्थज्ञानाभावेऽपि मानसमयथार्थज्ञानमख्यातिवादिनाऽङ्गीक्रियते ; "देहादावनात्मन्यात्मबुद्धिरविद्ये"ति सांख्योक्तेरित्यर्थः ॥

प्राभाकरेणापि संसृष्टव्यवहारानुपपत्त्या संसर्गज्ञानमङ्गीकरणीयमित्याह—*संसर्गाभिमान इति* ॥ तटस्थ-

### भाष्यभावप्रकाशिका

यति—*सर्वथेति* ॥ सर्वेषु पक्षेषु प्रकारविशेषविवादेऽपि पुरोवर्तिनो रजतादित्वेन वेद्यतामध्यासो

### वार्तिकम्

सत्त्वेन भासमानं रजतं शून्यस्य विपरीतो धर्म इति बोद्धव्यम् । नच—एकमेव वाक्यं कथं युगपत् ख्यातिद्वयमुपस्थापयेत् ? "सकृदुच्चरितः" इति न्यायविरोधादिति—वाच्यम् ; तन्त्रेणोच्चारितस्याऽऽवृत्तिसंभवात् ॥ भवतु नाम परेषामेवमङ्गीकारः, तथापि किमायातं त्वत्पक्षस्य ? *ननु* एतदेवाऽऽयातम्—यद् भङ्ग्यन्तरेण तैरप्यस्मत्पक्ष एवेष्ट इत्याह—*सर्वथाऽपि त्वन्यस्यान्यावभासतां न व्यभि-

### प्रदीपः

*सर्वथाऽपित्विति* ॥ अविद्यमानस्यैव भ्रमे भाने ज्ञानलक्षणप्रत्यासत्त्यादिनेति विशेषे सत्यपि *अन्यत्रान्यधर्मावभासताम् = अन्यत्राविद्यमानान्यविषयकत्वम्, *न व्यभिचरति = न जहाति ; ख्यातिमात्रसाधारणमिति भावः । तदेवमन्यत्रा-

## भामती

न व्यभिचरतीति । अन्यस्यान्यधर्मकल्पनाऽनृतता, सा चानिर्वचनीयतेत्यधस्तादुपपादिम् । तेन

## ऋजुप्रकाशिका

तीत्याह—*अत आहेति* ॥ *न व्यभिचरतीति* ॥ निरुक्ता सर्वमतख्यातिरित्यर्थः । एवंच सत्यनिर्वचनीयख्यातौ पर्यवसानमाह—*अन्यस्येति* ॥ *अन्यस्यान्यधर्मकल्पनाऽनृतता, सा चानिर्वचनीयेत्यधस्तादुपपादितमिति* । सर्वख्यातिनिराकरणेनानिर्वचनीयताया अधस्तादुपपादितत्वेन सर्वतन्त्रेष्वनिर्वचनीयख्यातिरेवावश्यं वाच्येत्याह—*तेनेति* ॥ *ननु* कतिपयज्ञानानां भ्रमस्थलीयानामयथार्थतावादिमतेऽनन्यगत्याऽनिर्वचनीयताभ्युपगमेऽपि सर्वज्ञानयथार्थतावादिमते कथमनिर्वचनीयताभ्युपगमः ? इत्यत आह—

## पञ्चपादिका

पूर्वदृष्टत्वस्मृतिरूपत्वयोः सर्वत्राव्यभिचारान्न विवाद इत्यभिप्रायः । तत्र "स्मृतिरूपः पूर्वदृष्टावभासः" ; इत्येतावति लक्षणे निरधिष्ठानाध्यासवादिपक्षेऽपि निरुपपत्तिके लक्षणव्याप्तिः स्यादिति—तन्निवृत्तये "परत्रे"त्युच्यते ॥

## पञ्चपादिकाविवरणम्

इत्यभिप्रायः । *ननु* स्मृतिरूपतया कारणत्रितयजन्यत्वमुपेक्षितमिति, नेत्याह—*पूर्वदृष्टत्वेति* ॥ *ननु* अविद्यादिदोष-पूर्वभ्रमसंस्काराभ्यामेव पदार्थमात्रज्ञानानि जायमानानि विभ्रमाः, न सत्यं वस्तु तत्संप्रयोगादि प्रमाणकारणं चापेक्षते विभ्रम इति, परत्रेतिपदमविवक्षितमिति शून्यवादी मन्यते, तत्राह—*स्मृतिरूपः पूर्वदृष्टावभास इति* । न पदार्थमात्रज्ञानं विभ्रमः ; शून्यज्ञानस्यापि तथात्वप्रसङ्गात्, किन्त्व-

## ऋजुविवरणम्

दिनोऽपीति* ॥ तत्र "स्मृतिरूपः"इत्यादिना परत्रेति पदाभावे निरधिष्ठानभ्रमपक्षे लक्षणप्राप्तिः कथमाशङ्क्यते ? स्मृतिरूपपदेनैव तन्मते लक्षणप्राप्तेर्निरस्तत्वात्, तस्य कारणत्रयजन्यत्ववाचित्वात्, तन्मते कारणत्रयाभावात्, संप्रयोगाङ्गीकारे वा बलादधिष्ठानलाभात् । "उक्तमेतत्पूर्वप्रमाणे"त्यनेन ग्रहण-स्मरणविलक्षणं ज्ञानं स्वयमेव संप्रयोगमधिष्ठानं च साधयतीत्युक्तम् । अतस्तेनाऽपि भ्रान्तिमङ्गीकुर्वताऽधिष्ठानाद्यङ्गीकर्तव्यम्, तत्कथं तन्मते लक्षणाव्याप्तिपरिहारार्थता पदस्य ? इत्याशङ्क्य, पदोपयोगसिद्ध्यर्थं तन्मतं दर्शयति—*नन्वविद्यादोषेति* ॥ कथं निरधिष्ठानपक्षे व्याप्तिमात्रेण निरुपपत्तिकत्वं लक्षणस्य ? अथवा—लक्षणस्य निरुपपत्तिकत्वे वक्तव्ये कथं तत्प्राप्तिरुच्यते ? इत्याशङ्क्योपपादयति—*न

## तत्त्वदीपनम्

लक्षणेऽनुगत्यप्रदर्शनात्तदसंभव इति शङ्कते—*ननु स्मृतीति* ॥ भ्रान्तेः संस्कार-संप्रयोगादिदोषजन्यत्वस्य सर्वैरभ्युपगतत्वाल्लक्षणानुगत्यप्रदर्शनं न दोषायेत्याह—*नेत्याहेति* ॥ निरधिष्ठानवादिपक्षे लक्षणे व्याप्तिनिरासार्थं परत्रेति पदमपेक्षितमित्युक्तम्, तत्र निरधिष्ठानपक्ष एव नोपपद्यते ; अधिष्ठानज्ञानलक्षणकारणाभावेन भ्रमासंभवादित्याशङ्क्याह—*नन्वविद्येति* ॥ "परावभासः" इत्येतावत्युक्ते घटादिज्ञानानामपि भ्रमत्वं स्यादित्याशङ्क्य, तदिष्टमित्याह—*पदार्थेति* ॥

अधिष्ठानज्ञाने भ्रमोत्पत्तेस्तदपि कारणमित्याशङ्क्य, इदमाकारस्यापि समारोपितत्वान्नाधिष्ठानसिद्धिरित्याह—*न सत्यमिति* ॥ अधिष्ठानबोधं विनाऽप्यविद्यादेर्भ्रमोत्पत्तिसंभवात्कथं निरुपपत्तिकत्वम् ? इत्याशङ्क्य, किं पदार्थज्ञान-

## वार्तिकम्

चरतीति* ॥ अध्यास इति शेषः । *तुशब्द आशङ्कानिवृत्त्यर्थः । *थाल् वाद्युक्तप्रकारे । *अन्यस्य* रजतादेर्धर्मोऽन्यधर्मः, रजतत्वादि । अन्यो धर्मोऽन्यधर्म इति वा रजतादि । अन्यधर्मस्यावभासो यत्र

### पञ्चपादिका

कथम् ? निरुपपत्तिकोऽयं पक्षः । न हि निरधिष्ठानोऽध्यासो दृष्टपूर्वः, संभवी वा । *ननु* केशोण्डूकाद्यवभासो निरधिष्ठानो दृष्टः, *न* ; तस्यापि तेजोऽवयवाधिष्ठानत्वात् । *ननु* रजते संवित्, संविदि रजतमिति परस्पराधिष्ठानो भविष्यति, बीजाङ्कुरादिवत्, *नैतत्सारम्* ; न तत्र यतो बीजादङ्कुरस्तत एव तद्बीजम्, अपि त्वङ्कुरान्तरात्, इह पुनर्यस्यां संविदि यद्रजतमवभासते,

### पञ्चपादिकाविवरणम्

न्यत्रान्यज्ञानम् ; ततश्चाविभ्रमेऽपि पदार्थज्ञाने लक्षणव्याप्तेर्निरुपपत्तिकत्वमिति । *कथं निरुपपत्तिकोऽयमित्यादिग्रन्थः स्पष्टार्थः* ॥ *ननु* संविद्रजतयोरितरेतराधिष्ठानत्वेन साधिष्ठाने भ्रमे सम्भवति न तृतीयस्य सत्यवस्तुनोऽधिष्ठानत्वकल्पना युक्तेति चोदयति—*ननु रजते संविदिति* ॥ *ननु* अध्यस्यमानव्यतिरेकेणाधिष्ठानस्य सिद्धिर्वक्तव्या, तत्रेतरेतराधिष्ठानत्वे सतीतरेतरापेक्षसिद्धित्वादसमञ्जसं स्यादिति, तत्राह—*बीजाङ्कुरादिवदिति* ॥ न बीजाङ्कुरादिष्वितरेतराश्रयता, किन्तु कारणपरम्परयाऽनवस्थेति परिहरति—*नैतत्सारमिति* ॥ *ननु* इहापि कारणपरम्परेति, नेत्याह—*इह पुनर्यस्यामिति* ॥ *ननु* इहापि तर्हि रजते संवित्, रजतं पूर्वस्यां संविदि, सा च स्वविषये, तच्च पूर्वसंविदीति परम्परामेव कल्पयामीति—चेत्, यदि तावत्पूर्वपूर्वमुत्तरोत्तरस्यान्वितत्वेनाधिष्ठानं स्यात्, ततः पूर्वस्य पूर्वस्योत्तरस्मिन्नुत्तरस्मिन्नध्यासे

### ऋजुविवरणम्

पदार्थमात्रेति* ॥ *ननु* संविद्रजतयोः परस्पराधिष्ठानत्वेन चोद्यमनुपपन्नम् ; तावतैव लक्षणाङ्गीकारप्रसङ्गात्, इत्याशङ्क्य, साभिप्रायमवतारयति—*ननु संविद्रजतयोरिति । "बीजाङ्कुरादिष्वपी"ति ग्रन्थेऽभिमतवस्तुसिद्ध्यभाव उक्तः, तत्राभिमतवस्तुशब्देन बीजाङ्कुरयोरेव निर्देशशङ्का स्यात्, तत्र चान्वय-व्यतिरेकविरोधः, अभ्युपगमविरोधश्च

### तत्त्वदीपनम्

मात्रं भ्रमः ? उताविद्यादिजनितम् ? इति विकल्प्याऽऽद्यं प्रत्याह—*न पदार्थेति* ॥ द्वितीयमुत्थापयति—*कथमिति* ॥ किमधिष्ठानमात्रं निह्नूयते ? उत सत्यम् ? नाद्यः ; अविद्यावदधिष्ठानग्रहणस्याप्यन्वय-व्यतिरेकसिद्धत्वादित्याह—*न हीति* ॥ व्यतिरेकोऽसिद्ध इति चोदयति—*नन्विति* ॥ करसंमृदितलोचनरश्मिषु येयं केशपिण्डावस्था, स *केशोण्डूकः* ॥ मायाहस्त्यादिभ्रम आदिशब्दार्थः । केशोण्डूकादावपि निरधिष्ठानत्वमसिद्धमित्याह—*न तस्यापीति* ॥

"ननु रजतम्" इत्यत्र भ्रमस्य साधिष्ठानत्वं निर्दिष्टम्, तथाच मदिष्टसिद्धिरिति तस्याऽसंगतिशङ्कायां द्वितीयमुत्थापयतीत्याह—*ननु संविदिति* ॥ असत्याऽधिष्ठानत्वाऽनुपपत्तेः सत्यमेवाऽधिष्ठानमिति शङ्कते—*नन्वध्यस्यमानेति* ॥ अधिष्ठानज्ञानस्य कारणत्वादध्यस्यमानसिद्धेः पूर्वं सिद्धिर्वक्तव्या, ततश्चाधिष्ठानबोधेऽध्यस्यमानसिद्धौ तत्तश्चाधिष्ठानसिद्धिरिति न किमपि सिद्ध्येदित्यर्थः । बीजाङ्कुरयोरितरेतराधीनत्वेऽपि हेतु-हेतुमद्भाववत् संविद्रजतयोरपि तथात्वं स्यादित्याह—*तत्राहेति* ॥ अङ्कुरान्तरस्य बीजजत्वात्कथं नेतरेतराश्रयत्वम् ? इत्याशङ्क्य यस्या बीजव्यक्तेरङ्कुरव्यक्तेर्जन्म, तस्या बीजव्यक्तेर्जन्मनीतरेतराश्रयत्वम् ? उत तज्जातीयायाः ? नाद्यः ; अनभ्युपगमादित्याह—*न बीजेति* ॥ द्वितीयेऽनेकबीजाङ्कुरव्यक्त्यभ्युपगमाद् नेतरेतराश्रयत्वमित्याह—*किंत्विति* ॥ अस्माभिरपि संविद्रजतपरम्पराश्रयणाद् नेतरेतराश्रयत्वमित्याह—*नन्विहापीति* ॥ किमत्र कारणपरम्पराऽनुभवसिद्धा ? आहो अन्यतः सिद्धा ? इति विकल्प्याऽऽद्यं दूषयति—*नेत्याहेति* ॥ इह संविद्रजतयोरितरेतराध्यासो यदि भवेत्, तर्हि *तयोरेव* संविदन्तर-रजतान्तरयोरित्यन्वयः । तच्छब्दार्थमाह—*यस्यामिति* ॥ अनयोः सहोपलम्भादितरेतरयोस्तथाऽनुपलम्भादित्यर्थः । द्वितीयमनुवदति—*नन्विहापीति* ॥ किं पूर्वस्य पूर्वस्योत्तरत्राऽन्वयित्वेनाधिष्ठानत्वम् ? उताऽनन्वयित्वेन ? इति विकल्प्याऽऽद्यमनुद्य दूषयति—*यदि तावदिति* ॥ संविदो रजताध्याससमये संविदधिष्ठान-

### पञ्चपादिका

तयोरेवेतरेतराध्यासः, ततो दुर्घटमेतत्। बीजाङ्कुरादिष्वपि न बीजाङ्कुरान्तरपरम्परामात्रेणाभिमतवस्तुसिद्धिः; प्रतीतितो वस्तुतश्चानिवृत्ताकाङ्क्षत्वात्, तथाच 'कुत इदमेवमि'ति पर्यनुयोगे 'दृष्टत्वादेवमि'ति

### पञ्चपादिकाविवरणम्

युगपदवस्थानात् क्षणिकत्वहानिः। *ननु* बीजाङ्कुरादावन्योन्योपादानत्वेऽपि न युगपदवस्थानं दृश्यत इति, तत्राह—*बीजाङ्कुरादिष्वपीति* ॥ *अभिमतवस्तुसिद्धिः = अन्वयिकारणत्वसिद्धिरित्यर्थः; अनन्वितेषु बीजादिष्वन्वयिकारणाकाङ्क्षाया अनिवृत्तत्वादित्यर्थः। अतोऽन्वयिद्रव्यमेव तत्राप्युपादानम्; बीजादेरन्योन्यनिमित्त-नैमित्तिकतेति भावः। इहापि तर्हि पूर्वस्योत्तरं प्रत्यनन्वितत्वेनैवाध्यासनिमित्तता बीजादिवदिति, नेत्याह—*कुत इदमेवमिति पर्यनुयोगे दृष्टत्वादेवमिति* ॥ अयं भावः—बीजाङ्कुरयोः कार्य-कारणभावस्य दृष्टत्वाद-

### ऋजुविवरणम्

इत्याशङ्क्यान्यविषयत्वं दर्शयितुं चोदयति—*नन्विति* ॥ अभिमतवस्तुशब्देन हेतुहेतुमद्भावनिर्देशशङ्कानिवृत्त्यर्थमाह—*अन्वयिकारणत्वेति* ॥ कथमन्वय-व्यतिरेकयोः सतोराकाङ्क्षानिवृत्त्यभावः? इत्याशङ्क्य व्याचष्टे—*अनन्वितेष्विति* ॥अनेन 'प्रतीतितः' इत्येतद्व्याख्यातम्। वस्तुतश्चेत्यस्य व्याख्या = अन्वयिकारणाकाङ्क्षाया इति। कथं परस्परोपादानभावेन स्वरूपसिद्धिरन्वय-व्यतिरेकनिर्वाहश्च? अतस्तयोरेव परस्परोपादानत्वं वक्तव्यमित्याशङ्क्याभिप्रायमाह—*अतोऽन्वयीति* ॥ *ननु*—बीजादिष्वपि न सर्वत्र कार्य-कारणभावो दृष्टः; अदृष्टे च तयोरेव कार्य-कारणपरम्पराऽन्धपरम्परैव भवेत्; अतः कथं वैषम्यम्? इत्याशङ्क्याभिप्रायमाह—*अयं भाव इति*॥ "अन्यथे"

### तत्त्वदीपनम्

रजतस्य संविद्यन्वितत्ववद् रजताधिष्ठानस्यापि तत्रान्वयित्वेनोपलम्भः। एवं पूर्वपूर्वस्यापि तदानीं भावात् क्षणिकत्वक्षतिरित्यर्थः। तदेतदभिसन्धायोक्तम्—*तत इति* ॥

विषय-विषयिणोरितरेतराध्यासस्यौचित्यं यस्मात्, तस्मात् संविद्रजतपरम्पराकल्पनं दुर्घटम्। बीजादेर्वैषम्यं वाऽत्रोपसंह्रियते। संविद्रजतयोरन्वयित्वेनाधिष्ठानत्वेऽपि न युगपदवस्थानं बीजाङ्कुरवदिति चोदयति—*नन्विति* ॥ दृष्टान्तासंमत्या दूषयति—*तत्राहेति* ॥ "अभिमतवस्तुसिद्धिरि"त्यत्र कार्य-कारणभावस्य प्रत्याख्यानमिति शङ्का स्यात्, ततश्चान्वय-व्यतिरेकविरोध इत्याशङ्क्याह—*अभिमतेति* ॥

मा भूत्तर्ह्यन्वयि कारणमिति शङ्कानिवृत्त्यर्थं प्रतीतित इत्याद्युक्तम्, तदनुपपन्नम्; बीजादिभिराकाङ्क्षोपशमादित्याशङ्क्याह—*अनन्वितेष्विति* ॥ घटशरावादीनां स्वस्तिक-रुचकादीनां च मृत्कनकान्विततयोपलम्भानुसारेण बीजादिष्वप्यनुगतं किंचिदाश्रयणीयम्, तदिदमुक्तम्—*प्रतीतित इति* ॥ पूर्वक्षणवर्त्युत्तरक्षणस्य कारणं नानुगतमित्यस्मिन्पक्षे पूर्वस्यापि कार्यत्वेन कारणान्तराऽऽकाङ्क्षाऽनुपरमादनाद्यनुगतं किंचित्कारणमास्थेयम्, तदिदमुक्तम्—*वस्तुत इति* ॥ बीजादीनामनन्विततया उपादानत्वं चेत्, तर्ह्युपादानान्तरानिरूपणादङ्कुरादि निरुपादानं प्रापदित्याशङ्क्याह—*अत इति* ॥ अन्वयिनोऽवश्यंभावित्वमतःशब्दार्थः। नच बीजादिवैयर्थ्यम्; निमित्तत्वेनार्थवत्त्वादित्याह—*बीजादेरिति* ॥ अनन्वयित्वेनाधिष्ठानपक्षमुत्थापयति—*इहापीति* ॥ प्रमाणाभावान्नैवमित्याह—*नेत्याहेति* ॥ अत्र तथाचेति नोक्तम्; तस्य शङ्कानुवादिरूपत्वादित्यर्थः ॥

बीजाङ्कुरयोर्जन्य-जनकत्वं दृष्टत्वादाश्रीयते, न तथा संविद्रजतयोः, अदृष्टत्वादित्युक्तम्। तत्रैवं विवेचनीयम्:—किं सकलबीजाङ्कुरव्यक्तिषु जन्यजनकता दृष्टेत्युच्यते? उत कतिपयव्यक्तिषु? आद्ये दृष्टत्वादित्यस्य भागासिद्धिः, द्वितीयेऽदृष्टस्थलेऽपि बीजाङ्कुरयोर्जन्य-जनकतावत् प्रकृतेऽपि तत्संभव इत्याशङ्क्याह—*अयं भाव इति* ॥ बीजा-

### वार्तिकम्

शुक्तिकादौ सोऽन्यधर्मावभासः*॥ *यद्वा*—अन्यधर्मोऽवभासते यत्र स तथा। *यद्वा*—अन्यधर्मात्मनाऽ-

## पञ्चपादिका

तत्रैव दूरं वा परिधाव्य स्थातव्यम् ; अन्यथा हेतुपरम्परामेवावलम्ब्य क्व चिदप्यनवतिष्ठमानो नानवस्था-दोषमतिवर्तेत । *अपिच* न क्वचिन्निरवधिको 'नेत्ये'व बाधावगमो दृष्टः, यत्राप्यनुमानादाप्तवचनाद्वा

## पञ्चपादिकाविवरणम्

दृष्टेऽपि तयोरेव कार्य-कारणपरम्परा दृष्टपरम्परात्वान्नानवस्थादोषमावहति, संविद्रजतयोरधिष्ठानाधिष्ठेयतया निमित्त-नैमित्तकभावस्य प्रथममेव कल्प्यत्वात्तयोरेव पूर्व-पूर्वनिमित्त-नैमित्तिकभावकल्पना त्वन्धपरम्परैव स्यादिति । दृष्टपरम्परामेव दर्शयति—*दृष्टत्वादेवमिति* ॥ *तत्रैव दूरं वेति ॥ नानवस्थादोषमतिवर्तेतेति* ॥ अन्ध-परम्परामेवेत्यर्थः ॥

द्व्याकारावभासित्वात्सर्वभ्रमाणां परत्र परावभास एव भ्रम इत्युक्तम् । भ्रान्तिज्ञानप्रतिपन्नविषयेऽर्थे भ्रान्त्यं-शान्तराभावविशिष्टांशान्तरज्ञानस्य बाधकत्वाच्च साधिष्ठानो भ्रम इत्याह—*अपि च न क्वचिदिति* ॥ *ननु* अनुमानाऽऽप्तवचनाभ्यां सर्पाभावमात्रमपि कदाचिद्गम्यते, न तदभावविशिष्टमंशान्तरमिति, तत्राह—*यत्राप्य-नुमानादिति* ॥ तत्राप्यभावविशिष्टं वस्तुमात्रं गृह्यते ; विशेषाकाङ्क्षादर्शनादिति भावः । *ननु* प्रधानं

## ऋजुविवरणम्

त्यनेन दृष्टत्वाभावेनानवस्थादोष उक्तः, सोऽनुपपन्नः ; दृष्टत्वाभावस्यानवस्थाहेतुत्वाभावान्मूलक्षयाभावादित्याशङ्क्य व्याचष्टे—*अन्धपरम्परामेवेति* ॥ पूर्वं निरधिष्ठानभ्रमो न संभवतीत्युक्तम्, न तु साधिष्ठानत्वे किंचित्प्रमाणमुक्तम् ; अतः—"अपिचे"ति वक्तुमयुक्तम्, नापि निरवधिकत्वनिराकरणं बाधस्यात्र युक्तम् ; अप्रस्तुतत्वात्, प्रमाणानुक्तिस्तु तदवस्थैवेत्याशङ्क्य वृत्तसङ्कीर्तनपूर्वकमवतारयति—*द्व्याकारावभासित्वादिति* ॥ "न क्वचिन्निरवधिकः" इति बाधस्य सावधिकत्वमुक्तम्, तत्र च शून्यावधित्वेनापि सावधिकत्वसंभवात् कथं भवदभिमतसाधिष्ठानत्वलाभः ? इत्याशङ्क्याभि-प्रायमाह—*भ्रान्तिज्ञानप्रतिपन्नेति* ॥ ज्ञानमात्रस्याबाधकत्वादंशान्तरज्ञानस्य शुक्तिस्वरूपविषयस्य बाधकत्वेऽपि न साधिष्ठानता, तदर्थम्—"अंशान्तराभावविशिष्टे"ति । एवमपि भ्रान्तिगृहीतसर्पाभावविशिष्टवस्त्वन्तरज्ञानस्य बाध-कत्वेऽपि न साधिष्ठानता, तदर्थम्—*"भ्रान्ती"ति*॥ अधिष्ठानत्वेऽप्येवं भवतु ? तदर्थम्—*"अर्थे"* इति ॥ भ्रान्ति-ज्ञानाप्रतिपन्नविषयस्यैवंभूतज्ञानस्य बाधकत्वेऽपि न साधिष्ठानता, तदर्थम्--*"भ्रान्तिज्ञानप्रतिपन्नविषये" इति*॥ अपेक्षा-दर्शनेनावधिरस्तीत्युक्तम्, तदनुपपन्नम् ; अभावविशिष्टवस्तुज्ञानं बाधकं न भवति ; वस्त्वन्तरस्याप्रतीतेः, इति चोद्यस्या-परिहृतत्वादित्याशङ्क्याभिप्रायमाह—*तत्राप्यभावविशिष्टमिति* ॥ *ननु*—मायाविनिर्मितहस्त्यश्वादिप्रतीतिबाधयो-

## तत्वदीपनम्

ङ्कुरयोर्जन्य-जनकभावस्य क्वचित् प्रत्यक्षप्रमितत्वादन्यत्रापि तत्कल्पना—विमतम्, जन्यजनकतावत, वीजमङ्कुर-जातीयत्वात्संमतवदिति नानवस्था दोषाय, प्रस्तुते तु संविद्रजतयोरधिष्ठानाधिष्ठेयभावस्य क्वचिदप्यप्रमितत्वान्निमित्त-नैमित्तिककल्पनान्धपरम्परेत्यर्थः ॥

दृष्टान्ते कार्य-कारणपरम्परा दृष्टिपरम्परेति कथमुच्यते ? दृष्टत्वादेवेत्यभिधानादित्याशङ्क्य तत्राप्येषोऽर्थो विवक्षित इत्याह—*दृष्टेति* ॥ अन्यथेति टीकायामनेकहेत्वभ्युपगमो दोषत्वेनोक्तः, स नोपपद्यते ; अनेकहेत्वभ्युप-गमस्यान्यत्र दृष्टत्वादित्याशङ्क्याह—*नानवस्थेति* ॥ अपिचेत्यनेन निरवधित्वाभावे हेत्वन्तरमुपन्यस्यत इति प्रतिभाति, तन्न संगच्छते, सर्वत्र कस्यचिदपि हेतोरनुपन्यासादित्याशङ्क्य वृत्तानुवर्णनपुरःसरं तात्पर्यमाह—*द्व्याकारेति* ॥

'इदं रजतम्' 'अयं सर्पः' इति द्व्याकारतया भ्रमस्फुरणादधिष्ठानमुपेयमित्युक्तम्, संप्रति बाधकज्ञानपर्यालोचयाऽपि साधिष्ठानत्वं साध्यत इत्यविरोध इत्यर्थः । अंशान्तराभावविशिष्टांशान्तरे ज्ञानस्य बाधकत्वं न नियतमिति चोदयति—*नन्वनुमानेति* ॥ अनुमीयतेऽनेनेत्यनुमानम् = पाषाणप्रक्षेपेऽप्यचलितत्वादिलक्षणं लिङ्गम् । मात्रचो

### पञ्चपादिका

न सर्प इत्येवावगमः, तत्रापि 'किं पुनरिदम् ?' इत्यपेक्षादर्शनात्पुरोऽवस्थितं वस्तुमात्रमवधिर्विद्यते। प्रधानादिष्वपि जगत्कारणे त्रिगुणत्वादिबाधोऽधिगतावधिरेव। अथवा सर्वलोकसाक्षिकमेतत्—केशोण्डू-

### पञ्चपादिकाविवरणम्

नास्तीत्यादौ न तदभावविशिष्टं वस्त्वन्तरं गृह्यते, तेषामन्यत्रानध्यस्तत्वादिति, तत्राह—*प्रधानादिष्वपीति* ॥ *अथवा*—सर्वभ्रमावभासेषु च साक्षिचैतन्यस्याऽऽलम्बनस्य विद्यमानत्वाच्छङ्क्यमाननिरधिष्ठान-निरवधिक-भ्रमबाधेऽपि साक्ष्येवाधिष्ठानमवधिश्च विद्यत इत्याह—*अथवा सर्वलोकसाक्षिकमिति* ॥

*ननु* अर्थबाधया ज्ञानस्यापि बाधाद् भ्रमबाधे तदवभासिसाक्षिचैतन्यमपि बाध्येतेति, तत्राह—*तद्बाधे तदनुषङ्ग एवेति* ॥ अधिष्ठानत्वेनाऽपि परिशेषादिति भावः। अत इत्युपसंहारः। तदेव प्रपञ्चयति—

### ऋजुविवरणम्

र्नावधिप्रतीतिरस्ति, अतः कथमंशान्तराभावविशिष्टांशान्तरज्ञानस्य बाधकम्? इत्याशङ्क्यापरितोषात् पक्षान्तरमिति तात्पर्यमाह—*अथवा सर्वभ्रमावभासेष्विति* ॥ तथापि निरवधिकत्वमित्यभिप्रायेण चोदयति—*नन्वर्थेति* ॥ *ननु*—बोधो न बाध्यत इति कथमुच्यते? बोध्यप्रतियोगित्वात्तस्येत्याशङ्क्याभिप्रायमाह—*अधिष्ठानत्वेनेति* ॥ "तेन तन्मात्रस्ये"ति ग्रन्थः पुनरुक्तः; चैतन्यावधित्वस्य पूर्वमेवोक्तत्वादित्याशङ्क्य व्याचष्टे—*तदेव प्रपञ्चयतीति* ॥ शङ्कान्तरनिराकरणेन तदेव स्पष्टीक्रियत इत्यर्थः। *शङ्कान्तरं चैवम्*—मा भूद्बोधस्वरूपमात्रस्य बाधः, नैतावताऽधिष्ठानावशेषः; अध्यस्यमानबाधेऽध्यासाधिष्ठानस्य बाधादित्याशङ्क्याह—*तेन तन्मात्रस्येति* ॥ चैतन्यमात्रस्येत्यर्थः। *ननु*—तद्बाधेऽपि न साधिष्ठानत्वम्, अधिष्ठानावशेषो हि साधिष्ठानत्वम्, स्वरूपमात्रस्याबाधः। रजतप्रतियोगिरूपावगमे तदधिष्ठानमप्यवगतमिति निरधिष्ठानत्वम्, अथवा—रजतावभासकस्वरूपावगमे चैतन्यमप्यव-

### तत्त्वदीपनम्

ध्यावर्त्यमाह—*न तदभावेति* ॥ वस्तुमात्रलक्षणाऽवधेः संभवेऽपि न तद्ग्रहणस्य बाधकत्वमित्याशङ्क्याह—*तत्रापीति* ॥ अंशान्तरज्ञानं बाधकमित्येतन्न नियतमिति शङ्कते—*ननु प्रधानमिति* ॥ परमाणवो न सन्ति इत्यादिनिषेध आदिशब्दार्थः। जगत्कारणे त्रिगुणत्वादिविप्रतिपत्तौ तत्तन्निषेधान्न व्यभिचार इत्याह—*तत्राहेति* ॥

अथवेत्यत्राऽर्थानुषङ्गो बाधते न बोध इति प्रकारान्तरेण प्रतिपाद्यत इति प्रतिभाति, तदयुक्तम्; पूर्वं तदप्रतिपादनादित्याशङ्क्य तात्पर्यमाह—*अथवेति* ॥ सर्वलोकस्य साक्षि सर्वलोकसाक्षि, चैतन्यम्; तदधिष्ठानमवधिश्च यस्य भ्रान्त्यादेः, तत्; तत् तथोक्तम्। चैतन्यस्याधिष्ठानत्वाभ्युपगमफलमाह—*केशेति*॥ केशोण्डूकादावपि साधिष्ठानत्वादि सिद्ध्यतीति शेषः। साक्षिणो बाध्यत्वादधिष्ठानत्वाद्ययुक्तमिति चोदयति—*नन्वर्थेति* ॥ अर्थज्ञानलक्षणसाक्ष्यबाधे तदपेक्ष्यसाक्षिणोऽपि बाध इत्यर्थः। किं विशिष्टाकारस्य बाधः? उत केवलस्य? इति विकल्प्याऽऽद्योऽङ्गीक्रियत इत्याह—*तत्राहेति* ॥ एवकारो बाध्यत इत्यनेनानुषज्यते। द्वितीयं प्रत्याह—*न बोध इति* ॥ बाधाबाधे हेतुमाह—*अधिष्ठानत्वेनेति* ॥ बाधसाक्षित्वात्पुनर्भ्रमान्तरहेतुत्वाच्च न चैतन्यबाध इत्यर्थः ॥

"तेने"त्यादिना ग्रन्थेन चिदधिष्ठानतया एवोच्यमानत्वात्पुनरुक्तिरित्याशङ्क्याह—*तदेवेति* ॥ नच—तत्प्रपञ्चनं व्यर्थमिति—शङ्क्यम्; शङ्कान्तरनिरसनद्वारा तत्प्रपञ्चनसम्भवात्। तथाहि—विमतम्, बाध्यम्, बाध्यसम्बन्धसम्बन्धित्वात्; संप्रतिपन्नवत्, इत्यनुमानाद् बोधबाधसिद्धेर्न तस्यावधित्वमित्याशङ्कायां सम्बन्धविशिष्टाऽऽकारस्य बाध्यत्वेऽपि न केवलस्य बाध्यतेत्यर्थः ॥

### वार्तिकम्

वभासो यस्य स तथा। अन्यावभास इति वक्तव्ये धर्मग्रहणं कुर्वन् तस्यानिर्वचनीयतां ख्यापयति।

### पञ्चपादिका

कादावपि तद्बाधे तदनुषङ्ग एव बोधे बाध्यते, न बोधः । अतस्तदवधिः सर्वस्य बाधः ; तेन तन्मात्रस्य बाधाभावात्, स्वतश्च विशेषानुपलब्धेः कूटस्थापरोक्षैकरसचैतन्यावधिः सर्वस्य बाधः । नाप्यध्यस्तमप्यसदेव ; तथात्वे प्रतिभासायोगात् ॥

*ननु* सर्वमेवेदमसदिति भवतो मतम् ! क एवमाह ? अनिर्वचनीयाऽनाद्यविद्यात्मकमित्युद्घोषित-

### पञ्चपादिकाविवरणम्

*तेन तन्मात्रस्येति* ॥ साधिष्ठानभ्रमसाधनप्रसङ्गेनाध्यस्तस्यापि शून्यतां निराचष्टे----*नाप्यध्यस्तमप्यसदिति* ॥ प्रत्यक्षतो 'रजतमि'ति विशेषप्रतिभासाप्रयोगप्रसङ्गादिति भावः ; प्रतिभासमात्रनिराकरणे शून्यं न भासत इति-वाक्यस्याबोधकत्वप्रसङ्गात् । *ननु* अध्यस्तं सर्वं शून्यमेवेति तेऽपि मतमिति चोदयति----*नन्विति* ॥

### ऋजुविवरणम्

गतमेव ; अतो निरधिष्ठानत्वमित्याशङ्क्याह—*स्वतश्चेति* ॥ स्वरूपेणाधिष्ठानत्वम्, न तु विशिष्टस्य ; इतरेतराश्रया-दिति भावः । स्वतो विशेषाभावमेवापादयति—*कूटस्थेति* ॥ *अथवा*—स्वतो विशेषाभावेऽपि बाध्यात्मकत्वेन बाधोऽपि स्यात्, इत्याशङ्क्याह—*कूटस्थेति* ॥ *यद्वा*—बौद्धमतेऽप्येवंभूतस्याधिष्ठानत्वमस्ति, तदर्थमाह—*कूटस्थेति* ॥ कथमेवंभूतस्याधिष्ठानत्वम्, प्रतीत्यभावादिति ? तत्राह—*अपरोक्षेति* ॥ तर्हि कूटस्थाकारोऽ-परोक्षाकारचैतन्याकारौ चेति स्वतो विशेषः स्यादित्याशङ्क्याह—*एकरसेति* ॥ *यद्वा*—आत्मख्यातिपक्षे ज्ञानमवधिः, तदर्थमाह--*एकरसेति* ॥ कथमेकरसता ? विषयाकारप्रतीतेरिति, तदर्थम्---*कूटस्थापरोक्षेति* ॥ *अथवा*—स्वतो विशेषानुपलब्धिरसिद्धा ; रजतावभासत्वादिति, तदर्थम्—*एकरसेति* ॥ तर्हि कथं तथा प्रतीतिः ? तदाह—*कूटस्थापरोक्षेति* ॥ अध्यस्तस्य शून्यतानिराकरणमसंगतमित्याशङ्क्याह—*साधिष्ठानेति* ॥ कथमसत्त्वे प्रतिभासायोगादित्युक्तम् ? अप्रतीतौ तद्वैलक्षण्यस्यापि प्रत्येतुमशक्यत्वात्, प्रतीतौ स्ववचनविरोधा-पत्तेरित्याशङ्क्य सोपस्कारमभिप्रायमाह—*प्रत्यक्षत इति* ॥ किमित्येवं व्याख्यायते ? स्फुरणस्वभावस्य शून्यस्य प्रविवाद्यनङ्गीकृतत्वात्, इत्याशङ्क्य तन्मतेऽप्यापादयति—*प्रतिभासमात्रेति* ॥ *ननु* अध्यस्तशून्यत्वस्योभयवादि-सिद्धत्वान्नैकः पर्यनुयोज्य इत्यभिप्रायं दर्शयति—*नन्वध्यस्तमिति* ॥ *अथवा*—"भवतो मतमि"ति कथमुक्तम् ? तन्मतत्वव्यावृत्तिशङ्का स्याद् यतः, इत्याशङ्क्याभिप्रायमाह *तेऽपीति* ॥ असत्त्वेन च वेदे शास्त्रे चाध्यस्तस्य

### तत्त्वदीपनम्

"तेन"इत्यत्र तच्छब्देन बोधो गृह्यते । बोधो यतः, ततो न बाध्यते । तथाच प्रयोगः—विमितम्, न बाध्यम्, बोधत्वात् ; यन्नैवं न तदेवम्—यथा रूप्यादीति । विमतम्, बाध्यम्, परिच्छिन्नत्वात् ; रूप्यवत्, इत्याशङ्क्य, किं स्वाभाविकं परिच्छिन्नत्वं हेतुः ? उतौपाधिकम् ? नाऽऽद्यः ; असिद्धेरित्याह—*स्वत इति*॥ द्वितीयपक्षव्यावृत्त्यर्थश्च-शब्दः । गगनस्यौपाधिकपरिच्छेदवतोऽप्यबाध्यत्वात्तत्र व्यभिचार इत्यर्थः ॥

विज्ञानवाद्यभिमताधिष्ठानाद्विशेषमाह—*कूटस्थेति* ॥ उत्पत्त्यादिधर्मरहितमित्यर्थः । तत्र हेतुमाह—*अपरोक्षैकरसेति* ॥ बोधैकरसमित्यर्थः । "एकधैवाऽनुद्रष्टव्यम्" "प्रज्ञानघनः" इत्यादिवाक्याद् बोधैकरसमित्यर्थः । *अथवा*—स्वाभाविको विशेषो नोपलभ्यत इति कथम् ? उत्पत्त्यादिविशेषोपलब्धेरित्याशङ्क्याह—*कूटस्थेति* ॥ आरोप्यासत्त्वनिराकरणस्याधिष्ठानासत्त्वनिरसनोपक्रमविरोधमाशङ्क्याह—*साधिष्ठानेति* ॥

"असत्त्वे प्रतिभासायोगादि"त्यसंगतम् ; किमसदधिगम्य तन्निषिध्यते ? उतानधिगम्य ? आद्ये स्ववचन-विरोधः, द्वितीये त्वसदनधिगतौ तन्निषेधस्यैवासंभव इत्याशङ्क्याह—*प्रत्यक्षत इति* ॥ अध्याहारेण व्याख्याने हेतुमाह—*प्रतिभासेति*॥ असदनवभासे तदनुवादेन—'असन्न भासते' इति शब्दप्रयोगानुपपत्तेरित्यर्थः ॥

अधिष्ठानसत्त्वोपगमादिदं सर्वमसदिति कथमुक्तमित्याशङ्क्याह—*नन्वध्यस्तमिति* ॥ किमविद्यावस्थायां

### पञ्चपादिका

मस्माभिः। अथ पुनर्विद्योदयेऽविद्याया निरुपाख्यतामङ्गीकृत्यासत्त्वमुच्येत, काममभिधीयताम्। तथाच बाधकज्ञानम्—'नेदं रजतमि'ति विशिष्टदेश-कालसम्बद्धं रजतं विलोपयदेवोदेति, न देशान्तरसम्बन्धमा-

### पञ्चपादिकाविवरणम्

शून्याद् व्यावृत्तिरपि भ्रमस्य कथितैवेत्याह—*क एवमाहेति* ॥ सद्व्यावृत्तिमात्रं भ्रमस्यासत्त्वं नाम, न शून्यत्वम्; निषेधप्रतियोगित्वादिति भावः। *ननु*—भ्रमस्य स्वकालेऽनिर्वचनीयत्वेऽपि बाधादूर्ध्वं शून्यत्वमविशिष्टमिति शङ्कते—*अथ पुनरिति* ॥ सर्ववादिनां सर्वं वस्तु स्वकाले वर्तमानमपि विनाशादूर्ध्वं शून्यमेवेति सम्मतम्, अतो न दोष इत्याह—*काममिति* ॥

*ननु* भवतु नाम सर्वस्य वस्तुनो विनाशादूर्ध्वं शून्यता, न विभ्रमगृहीतं वस्तु बाधादूर्ध्वं शून्यं भवति, किन्तु देशान्तरादिगतमिति—चेत्, तत्र किं बाधकज्ञानमेव रजतादेर्देशान्तरे सत्त्वं गमयति? किं वेह बाधानुपपत्तिरिति? न तावद् बाधकज्ञानमित्याह—*तथाच बाधकज्ञानमिति* ॥ नेदं रजतम्, किंतु देश-कालान्तरे बुद्धौ वेत्यनवगमादिति भावः। यावदभिधानसामर्थ्यं हि वाक्यमर्थं प्रतिपादयति, देशान्तरवर्तित्वं त्वनभिहितं न वाक्यार्थ इत्यर्थः ॥

### ऋजुविवरणम्

व्यवहारो दृश्यते, स कथम्? इत्याशङ्क्याभिप्रायमाह—*सद्व्यावृत्तिमात्रमिति* ॥ कथं "काममि"ति शून्यत्वमङ्गीक्रियेत? पूर्वमपि शून्यत्वप्रसङ्गाच्छून्यवादिताप्रसक्तेरित्याशङ्क्याभिप्रायमाह—*सर्ववादिनामिति* ॥ विनाशादूर्ध्वं सर्वस्य शून्यत्वमविशिष्टमित्युक्त्वाऽनन्तरं बाधकज्ञानस्यार्थापत्तेर्देशान्तरसम्बन्धसाधकत्वनिराकरणमसङ्गतम्, इत्याशङ्क्य चोद्यनिवर्तकत्वं दर्शयति—*ननु भवत्विति* ॥ "तथाऽनवगमादि"त्ययुक्तम्; विशेषनिषेधसामर्थ्यात्तथाऽवगतेरित्याशङ्क्य, बाधकं प्रत्यक्षरूपं शब्दरूपं च तत्र प्रत्यक्षनिराकरणार्थमुक्तम्, "तथानवगमादि"त्यभिप्रायमाह—*नेदं रजतं किन्त्विति* ॥ मा भूत् प्रत्यक्षेण देशान्तरसम्बन्धप्रतीतिः, यावतैव शब्दसंजल्पस्तावत एव प्रतीतिरिति कृत्वा, वाक्ये तु कथं तत्प्रतीतावसामर्थ्यम्? विशेषनिषेधस्येतरप्रतिपादकत्वादित्याशङ्क्य व्याचष्टे—*यावदभिधानेति* ॥ अभिधानसामर्थ्यानतिक्रमेण वाक्यार्थप्रतिपादकत्वम्। गोरानयने चोदिते हि नान्यानयननिवृत्तिर्वाक्यादवगम्यत इति।

### तत्त्वदीपनम्

वेद्यासत्त्वमनभिमतमित्युच्यते? उत विद्यावस्थायाम्? इति विकल्प्याऽऽद्यं प्रत्याह—*शून्यादिति* ॥ प्रपञ्चस्यासद्वैलक्षण्ये शास्त्रीयोऽसत्त्वव्यपदेशः कथम्? इत्याशङ्क्य सद्वैलक्षण्याभिप्रायेणेत्याह—*सद्व्यावृत्तीति* ॥ किमत्र विनिगमने कारणम्? इत्याशङ्क्याह—*निषेधप्रतियोगित्वादिति* ॥ *शून्यमिति* ॥ शून्यस्याप्रसक्तस्य निषेधासंभवादित्यर्थः। द्वितीयं पक्षमुत्थापयति—*नन्विति* ॥

विद्योदयानन्तरमारोपितासत्त्वमङ्गयकारि, तदसंगतम्; उत्तरत्रासत्त्वे पूर्वमप्यसत्त्वाऽऽपातात्, प्राक्सत्त्वे कदाचिदप्यसत्त्वासंभवादित्याशङ्क्याह—*सर्ववादिनामिति* ॥ नष्ट-बाध्ययोर्विशेषं शङ्कते—*ननु भवत्विति* ॥ निरुपाख्यत्वे प्रतिभासासंभवादिति द्रष्टव्यम्। मुद्गरप्रहरणादिना घटादेश्चूर्णीकृतत्वाञ्चोत्तरकालं क्वचिदपि सत्त्वमित्यर्थः। ततो वैषम्यमाह—*न विभ्रमेति* ॥ इतरेतराभावज्ञानस्य बाधकत्वात्तेनेतरेतरभावो बाध्यते न रूप्यम्, उभयनिषेधे कल्पनागौरवं स्यादित्यर्थः।

पुरोवर्तिनि सत्त्वासंभवात्तुच्छत्वमिति शङ्कते—*किंत्विति* ॥ अन्यत्र सत्त्वान्न शून्यत्वमित्याह—*देशान्तरेति* ॥ प्रमाणाभावान्नान्यत्रापि सत्त्वमित्याह—*तत्रेत्यादिना* ॥ विद्योदयानन्तरं यथा निरुपाख्यता, तथा बाधकज्ञानं प्रवृत्तमिति तथाशब्दार्थः। बाधकबोधेन देशान्तरे सत्ताऽधिगम्यत इति ब्रुवाणं प्रति "तथाऽनवगमादि"ति हेत्वभिधानमयुक्तमित्याशङ्क्य, किमपरोक्षबाधकबोधाद् देशान्तरसत्त्वमधिगम्यत इति ब्रवीषि? उत शाब्दात्? इति

## पञ्चपादिका

पादयति ; तथाऽनवगमात् । तथाच दूरवर्तिनीं रज्जुं सर्पं मन्यमानस्तन्निकटवर्तिनाऽऽप्तेन 'नायं सर्पः' इत्युक्ते सर्पाभावमात्रं प्रतिपद्यते, न तस्य देशान्तरवर्तित्वम् ; तत्प्रतिपत्तावसामर्थ्याद्वाक्यस्य । नार्थापत्त्या;

## पञ्चपादिकाविवरणम्

एवं सति प्रतिपन्नस्य वस्तुनोऽत्राभावोऽन्यत्र सत्त्वमन्तरेणानुपपन्नः, इत्यर्थापत्त्या वाक्यं गमयिष्यतीति, नेत्याह—*नार्थापत्त्येति* ॥ अन्यथाख्यातौ निषिद्धस्य संसर्गस्याऽऽत्मख्यातौ बहिष्ट्वस्य वाऽन्यत्र सत्त्वमन्तरेण निषेधदर्शनात् , अख्यातावपि ऋत्विग्विच्छेदे सर्वस्वदानकर्तव्यताबुद्धावृत्विग्विच्छेदान्तरनिमित्तादक्षिणयाग-

## ऋजुविवरणम्

अनेन "तथाच दूरवर्तिनी" मित्यस्याभिप्राय उक्तः । अर्थापत्तिः सामग्र्यभावेन निराकरणानर्हेत्याशङ्क्यानुपपत्ति-प्रदर्शनेन शङ्कामाह—*एवं सतीति* ॥ किं तत्तद्दर्शनाभिप्रायेणार्थापत्तिरुच्यते ? उत लोकदृष्ट्यभिप्रायेण ? इति विकल्प्य प्रथमपक्षे बहिरेव दूषणमाह—*अन्यथाख्याताविति* ॥ *अख्यातावपीति* ॥

*इयं विषयशुद्धिः*—ज्योतिष्टोमे "यदि प्रतिहर्ता विच्छिद्येत सर्ववेदसं दद्यादि"ति सर्वस्वदानं नैमित्तिकम्, उद्गातृविच्छेदे त्वदाक्षिण्यं श्रुतम्—"यद्युद्गाता विच्छिद्येतादाक्षिण्यो यज्ञः संस्थाप्यः"इति । तत्र पूर्वतराधिकरणे द्वयोर्युगपद्विच्छेदे द्वयमपि नैमित्तिकमित्युक्तम्, पूर्वाधिकरणे तु युगपन्निमित्तद्वयेऽपि नैमित्तिकस्य विकल्प उक्तः ; सम्प्रति क्रमेण निमित्ते किं प्रथमं निमित्तं बलवत् ? उत द्वितीयम् ? इति चिन्त्यते । अनुपसंजातविरोधित्वात् पूर्वस्योत्तरबाधकत्वम् ; स्वावरुद्धे कर्मण्युत्तरप्रवृत्तिप्रतिबन्धकत्वादिति पूर्वपक्षं कृत्वा राद्धान्तितम्—"पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्"इति । *पौर्वापर्ये* = पूर्वापरविरोधे, पूर्वस्य दौर्बल्यम् । "प्रकृतिवदि"ति निदर्शनम् । यथा प्राकृतस्य पदार्थस्य विकृतावतिदेशतः प्राप्तस्य वैकृतेनोपदिष्टेन दौर्बल्यम् ; अन्यत्र सावकाशत्वात्, एवमत्रापीत्यनुप-संजातविरोधित्वेनोत्पन्नत्वं बाध्यत्वे हेतुः । अनुपसंजातविरोधित्वं च सापेक्षविषयम्, पौर्वापर्यं तु निरपेक्षविषयम् ।

## तत्त्वदीपनम्

विकल्प्याऽऽद्यं दूषयति—*नेदमिति* ॥ रजतं न पुरोवर्तिनि सत्, किन्तु देशान्तरादावित्याकारबुद्धिवृत्त्यदर्शनादि-त्यर्थः । द्वितीयं निराकर्तुम्—"तथाचे"त्युक्तं टीकायाम् । *तस्यायमर्थः*—रज्ज्वाः सर्पात्मना ग्रहणे विशेषाग्रहणं हेतुरित्याह—*दूरेति* ॥ रज्जुं सर्पात्मतया गृहीत्वा ह !! हा !!! इति क्रन्दमानं नरमालोक्य कृपया कश्चिद् ब्रवीति— 'मा भैषीः', 'नायं सर्पः' इति, तदा तद्वचनात् सर्पनास्तितां प्रतिपद्य स्वस्थो भवतीति सर्पाभावाधिकरणत्वेन पुरोवर्तिप्रतिपत्तिरपि जायते । अतः कथमभावमात्रं प्रतिपद्यते ? इत्याशङ्क्य मात्रचोऽर्थमाह—*न तस्येति*॥

देशान्तरवर्तित्वं किं पदार्थः ? उत वाक्यार्थः ? नाद्यः ; तद्वाचकपदाभावादिति चेतसि निधाय द्वितीयं कल्पं निराचष्टे—*तत्प्रतिपत्ताविति* ॥ तत्रासामर्थ्यादिति कथम् ? 'विषं भुङ्क्ष्वे'त्यादिवाक्याद्विषभक्षणबोधकादपि भोजन-निवृत्तिप्रतिपत्तिवद् देशान्तरसत्त्वप्रतिपत्त्युपपत्तेरित्याशङ्क्याह—*यावदिति*॥ यत्र वाक्यं मुख्यवृत्त्याऽर्थप्रतिपादकम्, तत्र पदसामर्थ्यमनतिक्रम्याऽर्थं बोधयद् लक्ष्यते—'समिधमाहर' इत्यादौ, यत्र त्वमुख्यवृत्त्या बोधकम्, तत्र पदसामर्थ्याति-क्रमेणापीति व्यवस्था । ततश्चात्र पदसामर्थ्यातिक्रमनिमित्ताभावात्तत्र समार्थ्यानुरोधेन वक्तव्यम् । नच तस्य देशान्तरवर्तित्वबोधनजननसमर्थता ; तस्यानभिहितत्वात्, अभिहितपदार्थसंसर्गबोधनसमर्थत्वाद्वाक्यस्येत्यर्थः । बाधानुप-पत्तिरन्यत्र सत्त्वकल्पिकेति मतमुत्थापयति—*एवं सतीति* ॥ प्रत्यक्ष-परोक्षबाधकधियोः साक्षाद् देशान्तरवर्तित्व-बोधकत्वासम्भवे सतीत्यर्थः । वाक्यमिति प्रत्यक्षस्याप्युपलक्षणम् । किमेतद्वादिदृष्ट्योच्यते ? उत लौकिक-दृष्ट्या ? इति विकल्प्य क्रमेण दूषयति—*अन्यथाख्यातावित्यादिना* ॥

### पञ्चपादिका

विरोध इति चेत्, कुतस्तर्हि मिथ्यात्वम्? आगमादनुमानाद्वाऽन्यथावगमादिति चेत्, नैतत्; अन्योन्याश्रयता तथा स्यात्—आगमानुमानयोः प्रवृत्तौ तन्मिथ्यात्वम्, तन्मिथ्यात्वे तयोः प्रवृत्तिरिति। तस्माद् देहादिव्यतिरिक्तविषय एवायमहङ्कार इत्यात्मवादिभिरभ्युपेयम्; अन्यथाऽऽत्मसिद्धिरप्रामाणिकी

### पञ्चपादिकाविवरणम्

वभासमप्यनुमानादिना झटिति बाधितमुच्छिन्नव्यवहारं भवति, तत्र तथा भवतु; यत्र पुनर्विचारपदवीमुपारूढयोर्ज्ञानयोर्बलाबलचिन्तया न बाधनिश्चयः, तत्र नानुमानादिना प्रत्यक्षस्य मिथ्यात्वसिद्धिरिति मत्वाऽऽह—*कुतस्तर्हीत्यादिना उच्यत इत्यतः प्राक्तनेन ग्रन्थेन* ॥ स्पष्टार्थो ग्रन्थः।

### तत्त्वदीपनम्

मिति* ॥ प्रत्यक्षवदवभासत इति प्रत्यक्षावभासम्, द्विचन्द्रादीत्यर्थः। सर्पादिभ्रमनिवर्तनेन बाधकप्रत्ययोत्पादात्तत्र तथात्वम्, अत्र युक्तितो बाध्यबाधकता निश्चेतव्या, नच निश्चेतुं शक्यते; परस्पराश्रयतापातादित्यर्थः। *कुतः "इत्यादेरेषोऽर्थः—प्रत्यक्षस्य मिथ्यात्वं न संभवति; बाधकाभावात्। नचागमादेर्बाधकत्वम्; इतरेतराश्रयत्वप्रसक्तेरित्याशयेनोक्तम्—*कुत इति* ॥ यथाश्रुतमादायाह सिद्धान्ती—*आगमादिति* ॥ *अन्यथाऽवगमादिति* ॥ भिन्नतयाऽवगमादित्यर्थः। देहः, स्वातिरिक्तद्रष्टृकः, दृश्यत्वात्; घटवदित्याद्यनुमानम्। "अशब्दमस्पर्शमरूपमव्ययम्" "न जायते म्रियते" इत्यादिरागमः ॥

स्वाशयमाविष्करोति—*नैतदिति* ॥ तथा सति स्यादित्यर्थः। देहव्यतिरेके न चेन्मानम्, तस्याव्यतिरेक एवास्त्विति, तत्राह—*तस्मादिति* ॥ तत्र हेतुमाह—*आत्मवादिभिरिति* ॥ देहात्मवादे नास्तिकतापातात् पुरुषार्थिभिरतिरिक्त आत्माऽत्राश्रयणीय इत्यर्थः। अहंप्रत्ययस्य व्यतिरिक्तविषयत्वे—'अहं मनुष्यः' इति प्रत्ययः कथमिति चेत्, तत्र वक्तव्यम्—किमस्य प्रत्ययस्य गतिः पृच्छ्यते? अथवाऽतिरिक्तविषयत्वाभावः? इति। तत्र द्वितीयोऽ-

### वार्तिकम्

मिति—वाच्यम्; रजते रजतत्ववदिदमीदन्त्ववच्च तस्य तत्त्वेऽपि सत्यत्वोपपत्तेः। नहि भ्रमे भासमानत्वेन प्रतियोगितया वा भासमानत्वेन मिथ्यात्वम्; तथा सति धर्मिणो धर्मि-प्रतियोगितावच्छेदकयोश्चेदं-रजतत्वयोर्मिथ्यात्वप्रसङ्गात्, किन्तर्हि? यद्धर्मिप्रतियोगिनो वैशिष्ट्यं भ्रमादूर्ध्वं बाध्यते, तस्य मिथ्याभूतवैशिष्ट्यस्य भ्रमे भासमानस्य प्रतियोगिनो मिथ्यात्वमित्युच्यते; प्रकृते च रजतत्ववत् तत्प्रतियोगिनो दर्पणाधारत्वस्यावच्छेदकतया दर्पणस्य सत्यत्वान्न मिथ्यात्वप्रसक्तिरित्यनवद्यम्। *एतेन*—'पीतः शङ्खः' 'तिक्तो गुडः' इत्यादिधर्माध्यासाः सोपाधितया—*व्याख्याताः*; तत्रापि नयन-रसनगतपीत-तिक्तद्रव्ययोरुपाधित्वात्तत्र तद्रूप-रसयोरनुभवेन शङ्ख-गुडयोस्तज्जातीयरूपरसारोपोपपत्तेः। नच—'नीलं नभः' इत्यत्रोपाधेरदर्शनात्कथं नीलगुणारोप इति—वाच्यम्; पृथिव्यास्तच्छायाया वा नीलगुणवत्या उपाधेस्तत्र भावात्तददर्शनासिद्धेः। नच—विशेषादर्शनस्याप्यधिष्ठानेन्द्रियसंप्रयोग-संस्कार-दोषाणामिव भ्रमहेतुत्वावगमात् 'पीतः शङ्खः' इत्यादौ च शङ्खत्वादिविशेषदर्शनस्य सत्त्वात् कथमारोप इति—वाच्यम्; गुणारोपे तद्विरोधिगुणविशेषादर्शनस्यैव हेतुत्वात्, तस्य शौक्ल्याद्यदर्शनस्य प्रकृते सत्त्वात्। नच—तत्राप्यानुमानिकज्ञानसत्त्वात्कथमदर्शनमिति—वाच्यम्; सत्त्वेऽपि तस्य प्रत्यक्षविशेषदर्शनाविरोधित्वात्, प्रत्यक्षज्ञानस्यैव तद्विरोधित्वात्तदुपपत्तेः। नच दोषाभावादनारोपः; सोपाधिकभ्रम उपाधेरेव दोषत्वादित्यास्तामयं प्रसङ्गः। सर्वथाऽपि सिद्ध आत्मन्यहङ्काराद्युपाधितः कामाद्यारोप इति ॥

*स्यादेतत्*—भवतु नाम लोके सोपाधिक-निरुपाधिकाध्यासद्वयमनुभवसिद्धम्, आत्मनि तु

### पञ्चपादिका

स्यात्, अतो गौणो मनुष्यत्वाभिमानः, *उच्यते*—यद्यपि देहादिव्यतिरिक्तभोक्तृविषय एवायमहङ्कारः; तथापि तथाऽनध्यवसायात्तद्धर्मानात्मन्यध्यस्यति। दृश्यते हि स्वरूपेणावभासमानेऽपि वस्त्वन्तरभेदानध्यवसायात्तत्सम्भेदेनावभासः—यथैकस्मिन्नप्यकारे ह्रस्वादिसम्भेदः॥

*अथ* पुनरेकान्ततो भिन्न एव देहादेरहङ्कर्ताऽवभासेत, रसादिव गन्धः, *ततः* तत्सद्भावे न विप्रतिपत्तिः, इति तत्सिद्धये जिज्ञासा नावकल्पते। जिज्ञासोत्तरकालं तर्हि गौण एव युक्तः, कथम्?

### पञ्चपादिकाविवरणम्

किमर्थतो व्यतिरिक्तात्मविषयोऽहङ्कार उच्यते? किं वा प्रतिभासतः? अर्थतश्चेत्, तत्राह—*यद्यपि देहादिव्यतिरिक्तेति*॥ व्यतिरेकप्रतिभास एवाध्यासविरोधितया सामानाधिकरण्यस्य गौणत्वमावहति, नत्वर्थमात्रमिति भावः। *ननु* सामान्येन गृहीतस्य विशेषाग्रहणादन्यसंसर्गावभासो भवति, आत्मा तु विशेषरूपेण गृहीतः, कथं तत्राध्यासः? तत्राह—*दृश्यते हीति*॥ अथ प्रतिभासत एवाहंप्रत्ययो विविक्तात्मविषय इति शङ्कते—*अथ पुनरेकान्तत इति*॥ परिहरति—*ततस्तत्सद्भाव इति*॥ यौक्तिकज्ञानसहकृतेनाहंप्रत्ययेनात्मनि विविक्ते प्रतिपन्ने पुनः सामानाधिकरण्यं गौणमेव, तत्सामान्यात्पूर्वमपि गौणमेवेत्यभिप्रेत्याह—*जिज्ञासोत्तरकालं तर्हीति*॥ विचारेणापि नाहंप्रत्ययस्य व्यतिरिक्तात्मविषयत्वमापादितम्, किंतु

### ऋजुविवरणम्

विषयत्वेनाविरोधं दर्शयितुं विकल्प्यावतारयति—*किमर्थत इति*॥ *ननु* अर्थव्यतिरेके गौणत्वेन कथमध्यासः? इत्याशङ्क्याभिप्रायमाह—*व्यतिरेकप्रतिभास इति*॥ "दृश्यते ही"त्यनेन स्वरूपावभासेऽध्यासासंभवमाशङ्क्य, दृष्टान्तप्रदर्शनमिवाभाति, तदनुपपन्नम्; स्वरूपावभासेऽपि रजतभ्रमदर्शनाच्छङ्कानुदयादित्याशङ्क्य चोद्यान्तरनिवृत्तौ तात्पर्यमाह—*ननु सामान्येनेति*॥ "अथ पुनरि"त्यनेन व्यतिरेकप्रतिभासे दूषणमुक्तम्, तदप्रस्तुतम्; अहंप्रत्यये तदप्रतिभासस्य दर्शनीयत्वात्, विचारादिना भेदप्रतीतौ जिज्ञासावैयर्थ्याङ्गीकारात्, गृहीतेऽपि जिज्ञासा दृश्यते; अतो हेयोऽयं ग्रन्थ इत्याशङ्क्यावतारयति—*अथ प्रतिभासत इति*॥ "जिज्ञासोत्तरकालमि"ति चोद्यमप्रयोजकम्; उत्तरत्र गौणत्वेऽपि पूर्वं भ्रमत्वसंभवात्, तावतैव सिद्धान्तिप्रयोजनसिद्धेरित्याशङ्क्याभिप्रायमाह—*यौक्तिकज्ञानसहकृतेनेति*॥ "न युक्तः" इति गौणत्वं कथं निराक्रियते? अहंप्रत्ययेन भेदे प्रतीयमानेऽध्यासासंभावादित्याशङ्क्याह—*विचारेणापीति*॥

### तत्त्वदीपनम्

संगत इत्याह—*अन्यथेति*॥ अहंप्रत्ययस्य देहतादात्म्यविषयत्व आत्मसाधकाभावात्तदसिद्धिरित्यर्थः। आद्यं दूषयति—*अत इति*॥ अहंप्रत्ययस्य व्यतिरिक्तग्राहित्वे कथं "भेदानध्यवसायादि"त्यूचिवान् टीकाकृत्? इत्याशङ्क्य, विकल्पोत्तरत्वेन व्याचष्टे—*किमर्थत इत्यादिना*॥

भेदविशेषितप्रत्ययस्याध्यासविरोधित्वे विशेषणीभूतभेदस्यापि विरोधित्वात्कथमध्यासः? इत्यत्राह—*व्यतिरेकेति*॥ विशिष्टविरोधित्वे विशेषणस्याऽपि विरोधित्वमुक्तम्, तत्राह—*नन्विति*॥ स्रक्-सर्पयोर्व्यावृत्ताव'प्ययं सर्पः' इत्यध्यासदर्शनान्न भेदमात्रस्य विरोधित्वमित्यर्थः। अध्यासव्यापकाभावान्नाहंकार-तद्धर्माणामात्मन्यारोप इति चोदयति—*ननु इति*। *विशेषरूपेणेति*॥ चित्त्वेनेत्यर्थः। चित्त्वं प्रतिभाति, परं न त्वहंकारव्यावृत्ताऽऽत्मधर्मतया; ततः प्रतीयमानेऽपि संभवत्यध्यास इत्याह—*तत्राहेति*॥ द्वितीयमनुवदति—*अथेति*॥ ऐक्यग्रन्थशङ्कां निरस्यति—*परिहरतीति*॥ किं सर्वदाऽहंप्रत्ययस्य विविक्तग्राहित्वम्? उत जिज्ञासोत्तरकालम्? आद्ये बहलालोकमध्यस्थहस्त्यादौ विमत्यभाववदात्मनोऽपि व्यावृत्ततया प्रतिभासान्न विप्रतिपत्तिः स्यात्, ततश्च जिज्ञासाऽसंभव इति टीकार्थः। जिज्ञासोत्तरकालं गौणत्वे प्रागगौणत्वप्रसङ्ग इत्याशङ्क्याह—*यौक्तिकेति*॥ *तत्सामान्यादिति*॥ 'अहं मनुष्यः' इति प्रत्ययत्वसामान्यादित्यर्थः। उत्तरकालं गौणत्वव्यवहारो न प्रागिति विशेषः। (मूले)कथमित्यादेरयमर्थः—जिज्ञासायामपि न गौणत्वम्, युक्त्युत्थज्ञानस्याप्रामादिकत्वात्, अहंप्रत्ययस्य चात्ममात्रविषयत्वादिति शङ्कते—*कथमिति*॥

### पञ्चपादिका

जिज्ञासा नाम युक्त्यनुसन्धानम् । न हि युक्तिः पृथग् ज्ञानान्तरजननी, किन्तु सिद्धस्यैवाहंप्रत्ययस्य विषयविवेचिनी । तस्माद् विविक्तविषयत्वाद् व्यतिरिक्तात्मानुभवपर्यन्त एवाहंकारो जिज्ञासोत्तरकालं युक्तः, न युक्तः ; अकार इव ह्रस्वत्वाभिमानः । *ननु* तत्रापि कथम् ? अनुभव एव । एवमहङ्कारेऽपि समानश्चर्चः । *ननु* अनुभवस्तर्कबलाद् यथाऽवभासिन्यकारे सम्भवति ; ह्रस्वादेः पृथक्सतस्तथाऽनवगमात्, *तन्न* ; एकस्य पृथक्त्वेऽप्यर्थादितरस्यापि पृथक्त्वात् ॥ *ननु* महदेतदिन्द्रजालम्—यत् तर्कानुगृहीतात् प्रमाणाद् यथायथमसाधारणरूपयोरेवावभासमानयोरेकत्वावगमो न गौण इति, *बाढम्* ; इन्द्रजालमेवैतत्, अविद्याकृतत्वात् ।

### पञ्चपादिकाविवरणम्

सर्वदा स्वरूपमात्रविषयोऽहंप्रत्ययः, यौक्तिकज्ञानलब्धस्तु व्यतिरेकः, अतस्तस्याननुसन्धाने पूर्ववदध्यास एवेति परिहरति—*न युक्त इति* ॥ तत्रापि नाध्यास इति चोद्यम् । अनुभवविरोध इति परिहारः । अकारस्य व्यतिरेकेऽपि ह्रस्वादेरव्यतिरेकादध्यास इति चोदयति—*नन्वनुभव इति* ॥ अन्यतरव्यतिरेके द्वयोरेकत्वाद् भेदस्येतरेतरव्यतिरेकः सिद्ध्यतीत्याह—*तन्नेति* ॥ *ननु महदेतदित्यादिचोद्य-परिहारौ स्पष्टौ* ॥

### ऋजुविवरणम्

*ननु*—यौक्तिकेनापि भेदे गृहीते नाध्याससंभवः, तत्राह—*तस्याननुसन्धान इति* ॥ *ननु*—भिन्नत्वेन गृहीते तदनुसन्धानाभावमात्रेण कथमध्यासः ? तत्राह—*अकारस्येति* ॥

"*ननु*महदेतदिन्द्रजालमि"त्यनेन भेदेन गृहीतेऽध्यासकारणाभावाद्गौणत्वनिराकरणं मृषेति चोदयित्वा, "बाढमिन्द्रजालमि"त्यनेनाविद्याकृतत्वेनाध्यासत्वमुक्त्वा, "तथाही"त्यनेनाहंप्रत्ययस्य देहादिप्रतिष्ठितत्वप्रदर्शनं

### तत्त्वदीपनम्

जिज्ञासाया अहंप्रत्ययविषयविवेचकत्वात्तद्विरोधाद् देहात्मबुद्धेर्गौणत्वमिति वक्तुं जिज्ञासास्वरूपमाह—*जिज्ञासेति* ॥ युक्तेरप्रमाणत्वमुक्तमङ्गीकरोति—*नहीति* ॥ तर्हि वैयर्थ्यमित्याह—*किंत्विति* ॥ "न युक्तः" इत्यत्र भेदबोधेऽपि न गौणत्वमित्युक्तम्, ज्ञातभेदयोरभेदाभिमानस्य गौणत्वदर्शनादित्याशङ्क्याह—*विचारेणेति* ॥ अहंप्रत्ययस्य व्यतिरिक्तविषयत्वे—"अहं व्यतिरिक्तः" इत्युक्तेः पौनरुक्त्यप्रसङ्गाद् नैतदित्यर्थः । तर्ह्यभेदविषयत्वमिति शङ्कते—*किंत्विति* ॥ अभेदविषयत्वे विप्रतिपत्त्यभावापातात् स्वरूपमात्रविषयत्वमित्याह—*सर्वदेति* ॥ तर्हि व्यतिरेकाभावः प्राप्तः, तत्राह—*यौक्तिकेति* ॥ तर्हि—'अहं मनुष्यः' इत्यस्य गौणत्वम्, तत्राह—*अत इति* ॥ युक्तयो यदाऽनुसन्धीयन्ते, तदाऽपि तर्कज्ञानस्य परोक्षत्वान्नापरोक्षभ्रमविरोधित्वमित्यर्थः ॥

"कथमनुभवः" इत्येकग्रन्थत्वशङ्कां निरस्यति—*तत्रापीत्यादिना* ॥ टीकाक्षराणामेषोऽर्थः—ह्रस्वोऽकार इत्यस्य यथा न गौणत्वम्, तद्वद् 'अहं मनुष्यः' इत्यस्यापीत्युक्ते दृष्टान्तासंमतिमाशङ्कते—*नन्विति*॥ इदंरजतवदकारस्य ह्रस्वतयाऽनुभूयमानत्वादध्यासत्वमित्याह - *अनुभव इति* ॥ अध्यासतां गमयतीति शेषः । यौक्तिकज्ञानेनाकारस्य ह्रस्वाद् व्यावृत्त्यभ्युपगमेऽध्यासानुभव इति कथमुक्तम् ? नच—अकाराद् ह्रस्वस्य व्यावृत्तिप्रतीत्यभावाद् अध्यासानुभव इत्यपि—शङ्क्यम् ; अकारस्य ह्रस्वाद् व्यावृत्तिप्रतीतौ तस्मादितरस्यापि व्यावृत्तिप्रतीतिसंभवादित्यत्राह—*अकारस्येति* ॥ इदमः समारोपितरूप्याद् व्यावृत्तावपि न तस्मात्तस्य व्यावृत्तिर्यथा, तद्वदत्रापीत्यर्थः ॥ एकस्य पृथक्त्वमात्रेण कथमितरस्य पृथक्त्वमुक्तं टीकायाम् ? न खलु चैत्रपृथक्त्वेन मैत्रस्यापि पृथक्त्वमित्याशङ्क्य पृथक्त्वं किं संयोगवदुभयगतम् ? उत ह्रस्वत्ववदेकगतम् ? इति विकल्प्याऽऽद्यं दूषयति—*अन्यतरेति* ॥ पृथक्त्वस्य भेदव्यवहारकारणत्वादेकत्र पृथक्त्वज्ञानेऽन्यत्रापि तज्ज्ञानं स्यात् । एकगतत्वेऽप्यकारस्य ह्रस्वप्रतियोगिकभेदज्ञाने ह्रस्वस्यापि तत्प्रतियोगिको भेदोऽधिगतः स्यात्, इतरथा न तस्यापि स्यात् । नच रूप्यदृष्टान्तः ; तस्यापि त्वया व्यावृत्त्यङ्गीकारादित्यर्थः । *नन्वित्यादेरयमर्थः*—भेदज्ञानेऽप्यभेदज्ञानं न गौणमित्येतदयुक्तमिति चोदयति—*ननु महदेतदिति* ॥

## पञ्चपादिका

*तथाहि*---अहंप्रत्ययस्य स्वविषयप्रतिष्ठितस्यैव सतस्तदेकप्रतिष्ठिताप्रतिबन्धकृदनाद्यविद्याकृतं देहादिप्रतिष्ठितत्वमपि दृष्टम् ; अतो देहादिविषयत्वाविरोधि स्वविषयप्रतिष्ठत्वमहंप्रत्ययस्य । अतो युक्त्या विषयविवेचनेऽपि स्वविषयोपदर्शनेन तत्प्रतिष्ठत्वमात्रं कृतम्, नाधिकमादर्शितम् । स्वविषयप्रतिष्ठत्वं च देहादिष्वहं-ममाभिमानेन न विरुध्यत इत्युक्तम् । अतो न्यायतो विषयविवेचनादूर्ध्वमपि न प्रागवस्थातो

## पञ्चपादिकाविवरणम्

किंच विवेकानन्तरमध्यासोऽहंप्रत्ययमात्रेण विरुद्ध्यत इत्युच्यते ? किं वा यौक्तिकज्ञानेन ? न तावदहंप्रत्ययमात्रेणेत्याह—*तथा ह्यहंप्रत्ययस्येत्यादिना* ॥ *ननु* पूर्वमात्मविषयोऽपि युक्तिज्ञानसन्निधानाद् व्यतिरिक्तविषयोऽहंप्रत्यय इति, नेत्याह—*अतो युक्त्या विषयविवेचनेऽपीति* ॥ नहि प्रत्यक्षज्ञानं ज्ञानान्तरसन्निधानात् स्वविषयादधिकविषयं भवतीति भावः । विचारजन्यज्ञानस्याननुसन्धानात्, अनुसन्धानेऽपि परोक्षत्वान्नापरोक्षाध्यासः प्रागवस्थातो भिद्यत इत्युपसंहरति—*अतो न्यायत इति* ॥

## ऋजुविवरणम्

कृतम्, तद् व्यर्थम् ; गौणत्वेनाप्यङ्गीकारात्, मिथ्यात्वेन तद्विषयत्वमप्ययुक्तमेव ; अविरोधोऽप्ययुक्तः ; "तथाही"त्यप्ययुक्तम् ; विवरणाभावादित्याशङ्क्य, तन्निवृत्त्यर्थं कथमविद्याकृतत्वेनाहंकारादीनामध्यस्तत्वमुच्यते ; भेदज्ञाने सत्यध्यासानुपपत्तेरिति शङ्कानिवर्तकत्वं दर्शयितुं युक्त्यन्तरत्वेन वा विकल्प्यावतारयति—*किंचेति* ॥ "विवेकानन्तरमि"त्यतो "युक्त्ये"त्यन्तेनाधिकज्ञापकत्वं युक्तेर्नास्तीत्युक्तम्, तदयुक्तम् ; "विषयविवेचनेऽपी"त्यधिकविषयत्वस्य दर्शितत्वात्, "तत्प्रतिष्ठत्वमात्रमि"त्यनेनापि युक्तेः स्वविषयाहंप्रत्ययव्यवस्थापकत्वमुक्तम्, तस्य च व्यतिरिक्तविषयत्वादहंप्रत्ययोऽपि तथेत्याशङ्क्याभिप्रायमाह—*नहि प्रत्यक्षज्ञानमिति* ॥ कथमननुसन्धानहेतुकोऽध्यासः ? अनुसन्धानेऽपि तस्य दर्शनादित्याशङ्क्याह—*अनुसन्धानेऽपीति* ॥ "अनादि-

## तत्त्वदीपनम्

एकतावगमो न गौणो यस्मात्, तस्माद् 'अहं मनुष्यः' इति ज्ञानमिन्द्रजालमित्युच्यते ? किं वा न गौण इति यत्, तदिन्द्रजालमिति ? तत्राद्यं दूषयति—*बाढमिति* ॥ अङ्गीकृतमंशमाह—*इन्द्रजालमिति* ॥ तत्र हेतुमाह—*अविद्याकृतत्वादिति* ॥ भेदबोधाद् अध्यासस्य निवृत्तत्वात् कथमध्यासत्वम् ? ततो गौणत्वमिति द्वितीयकल्पं प्रत्याह—*किंचेति* ॥ *तथाहीत्यस्यैषोऽर्थः*—अहंप्रत्ययस्य देहादिप्रतिष्ठत्वमपि दृष्टमिति संबन्धः । तर्हि देह एवाऽऽत्मा स्यादिति, तत्राह—*स्वविषयेति* ॥ व्यतिरिक्तात्मप्रतिष्ठस्येत्यर्थः । तर्ह्युभयं स्यादिति, तत्राह—*तदेकेति* ॥ अपिशब्दोऽवधारणार्थो दृष्टपदेनानुषज्यते । देहादिप्रतिष्ठत्वे हेतुमाह—*अनादीति* ॥ अहंप्रत्ययमात्रस्याध्यासाविरोधित्वेऽपि सहकार्यनुरोधाद्विरोधितेति शङ्कते—*ननु पूर्वमिति* ॥ सहकारिसन्निधावपि 'अहं मनुष्यः' इत्येवोपलम्भान्नातिरेकग्राहित्वमित्याह—*नेत्याहेति* ॥

धूममात्रस्य वह्निमात्रबोधकत्वेऽपि सौरभदर्शनसहकृतस्य श्रीखण्डेन्धनोत्थदहनबोधकत्वं दृष्टम्, तद्वत् सहकारियुक्तस्याधिकग्राहिता, 'अहं मनुष्यः' इति दर्शनं न गौणमित्यत्राह—*न हीति* ॥ दृष्टान्ते विशिष्टधूमस्य विशिष्टवह्निबोधकत्वम्, न तु धूममात्रजज्ञानस्य सहकारिसन्निधानादन्यविषयत्वम्, अत्र तु प्रत्यक्षस्य यौक्तिकज्ञानसन्निधेरन्यविषयत्वमुच्यत इति वैषम्यमित्यर्थः । द्वितीयं दूषयति—*विचारेति* ॥ सदेति शेषः । अविवेकिनामिति वा । अनुसन्धानेऽपि न विरुध्यतेऽध्यास इत्याह—*अनुसन्धानेऽपीति* ॥ अपरोक्षभ्रमस्यापरोक्षज्ञाननिवर्त्यत्व-

## भाष्यभावप्रकाशिका

पूर्वाहङ्कारादिवासनोपहितानाद्यविद्यया चिदात्मन्यनुभूयतेऽहङ्काराध्यास इति ॥ निरुपाधिकाध्यासे दृष्टान्तमाह—*शुक्तिकेति* ॥ सम्यग्धीसिद्धाधिष्ठानरूपाभिप्रायेण शुक्तिकाग्रहणम् ॥ संप्रयुक्तस्य

## पञ्चपादिका

विशिष्यतेऽहंप्रत्ययः। तेन न कदाचिदपि 'मनुष्योऽहमि'ति प्रत्ययो गौणः। तदेवं स्वयंज्योतिष एव सतो जीवस्य कार्य-करणसङ्घातव्यतिरिक्ततायास्तथाऽनवभासदर्शनात् 'मनुष्योऽहमि'ति चाध्यासोपलब्धेर्ब्रह्मात्मैकत्वस्यापि तत्स्वरूपस्यानवभासनं पूर्वकालकोटिरहितप्रकाशाच्छादितमोनिमित्तं श्रुति-तदर्थापत्तिसमर्पितम्,

## पञ्चपादिकाविवरणम्

*ननु* प्रत्यक्षे देहात्मैक्याध्यासे किमैक्यप्रत्ययमपबाध्य व्यतिरेके प्रमाणमुक्तमिति ? *उच्यते* ;—युक्तिसहितागमानुमानाहंप्रत्ययैर्द्विचन्द्रबाधयैकत्ववद् व्यतिरेकः सिद्ध्यतीत्युक्तं भवति—*तदेवं स्वयंज्योतिष इति* दृष्टान्तानुवादेन दार्ष्टान्तिककथनपरो ग्रन्थः स्पष्टार्थः॥ स्वयंप्रकाशत्वेऽप्यविषयाऽगृह्यमाणविशेषत्वादात्मनोऽधिष्ठानयोग्यत्वकथनेन "परत्र परावभासः" इति लक्षणांशो दर्शितः। कारणत्रितयेऽप्यद्वितीयात्मावभासिचैतन्य-

## ऋजुविवरणम्

त्वाच्चे"त्यनेन पूर्वदृष्टत्व-स्मृतिरूपत्वमात्रसाधनं कृतम्, तदयुक्तम्; सकललक्षणाक्षेपे तदंशप्रदर्शनस्यायुक्तत्वात्, तत्राधिष्ठानचैतन्यदोषो लब्धः, पुनस्तत्साधने पौनरुक्त्यम्; नचानादित्वं स्मृतिरूपत्वसाधकम्; तस्य कारणत्रयजन्यत्वसापेक्षत्वादित्याशङ्क्यावतारयति—*स्वयंप्रकाशत्व इति*॥ "पृथग्भोक्तृविषये"ति हेतुर्व्यर्थः; शङ्कानिरा-

## तत्त्वदीपनम्

नियमान्न परोक्षज्ञानेन बाध इत्यर्थः। 'अहं मनुष्यः' इति प्रत्ययस्य देहतादात्म्यविषयत्वे न व्यतिरेकसिद्धिरित्युक्तमनुवदति—*ननु प्रत्यक्ष इति*॥

केवलयोरनुमानाऽऽगमयोर्व्यतिरेकासाधकत्वेऽपि युक्तिसहकृताहंप्रत्ययोपोद्बलिताऽऽगमानुमानयोर्व्यतिरेकसाधकत्वं युक्तमित्याह—*उच्यत इति*॥ बाल्याद्यवस्थासु शरीरव्यावृत्तावप्यहंप्रत्ययोऽनुवर्तते। अनुवर्तमानस्य च व्यावृत्तमात्राऽऽलम्बनत्वायोगात्सकलावस्थानुस्यूतमात्मतत्त्वमालम्बनमेष्टव्यमित्याद्या युक्तिः। इतरद् व्यक्तम्। "अनादित्वाच्चे"इत्यत्र पूर्वदृष्टत्वे हेत्वन्तरमुपन्यस्यत इति प्रतिभाति, तदनुपपन्नम्; प्राक् पूर्वदृष्टत्वानुपपादनादित्याशङ्क्य, वृत्तसंकीर्तनपुरस्सरमुत्तरग्रन्थमवतारयति—*स्वयंप्रकाशत्व इति*॥ लक्षणांशशब्देन परत्रेत्यंशो विवक्ष्यते। अधिष्ठानप्रमाण-तद्दोष-संस्काराणां रूप्यभ्रमजनकत्वादत्राप्यधिष्ठानप्रमाणं तावत् सुसंपादमित्याह—*चैतन्येति*॥ तस्य प्रमाणत्वमुपपादयति—*आत्मेति*॥ आत्मावभासित्वमात्मव्यवहारहेतुत्वमित्यर्थः। घटव्यवहारस्य स्वान्यत्वं दृष्टम्, तद्वदत्रापीति शङ्कां निरस्यति—*अद्वितीयेति*॥ दोषस्त्वविद्येत्याह—*तद्गतेति*॥ कारणत्रियसंभवेऽप्यध्यासा-

## भाष्यभावप्रकाशिका

मिथ्यारजतत्वभानधीबोधनाय वत्करणम्। अनुभवप्रसिद्ध्यर्थो हिशब्दः॥ बिम्ब-प्रतिबिम्बयोः प्रतिबिम्बानां च मिथो भेदधीवद् जीव-ब्रह्मणोर्जीवानां च भेदधियः। सोपाधिकभ्रमस्य दृष्टान्तमाह—*एक इति*॥ एकत्वग्रहणवति ग्रहणे पूर्ववत्। लक्षणप्रकरणमुपसंहर्तुमिति

## वार्तिकम्

तद् द्वयमपि न संभवति। कुतः? प्रत्यगात्मनोऽविषयत्वात्, अविषयत्वं चात्मनः प्रत्यक्त्वादेव; "पराञ्चि खानी"ति श्रुतेः। प्रत्यक्त्वं च सर्वसाक्षित्वात्। नहीन्द्रियाविषये प्रत्यगात्मनि विषयधर्माणां कामादीनां विषयस्य चाहङ्कारादेरध्यासः संभवति; यतः सर्वो लोकः *पुरोऽवस्थिते इन्द्रियसन्निकृष्टेऽथच तद्विषये शुक्तिकाशकलादौ विषयान्तरं तद्योग्यं रजताद्यध्यस्यति, न तद्विपरीते तद्विपरीतमिति। कुत एतत्? इन्द्रियसंप्रयोग-तद्दोष-संस्काराणां सर्वत्रापरोक्षभ्रमहेतुत्वावगमात्। यदि चाधिष्ठानं नेन्द्रियविषयः,

### पञ्चपादिका

तन्निमित्ताहंकाराध्यासश्च सम्भाव्यते । अनादित्वाच्च पूर्वदृष्टत्वं स्मृतिरूपत्वं च । पृथग्भोक्तृ-विषयानुभवफलाभावाद्भोक्तृचैतन्यसंवलितैकानुभवफलत्वाच्च परत्र परावभासस्यान्योन्यसम्भेदस्य विद्यमानत्वादध्यासलक्षणव्याप्तिरिहाप्युपपद्यते ॥

"कोऽयमध्यासो नामे"ति किंवृत्तस्य प्रश्न आक्षेपे च समानवर्तिनो विशेषानुपलब्धेः 'पृष्टमनेन'

### पञ्चपादिकाविवरणम्

प्रमाण-तद्गताविद्याकारणदोषौ लब्धौ, संस्कारमिदानीं लम्भयति—*अनादित्वाच्चेति* ॥ *ननु*अध्यस्यमानाधिष्ठानविषयं कारणत्रितयजन्यमेकमेव ज्ञानं वक्तव्यम्, तदभावान्नाध्यास इत्याशङ्क्याह—*पृथग्भोक्तृविषयानुभवफलाभावादिति* ॥ आत्मचैतन्यमेवात्मानात्मसंभेदावभासिस्वरूपेणाजन्यत्वेऽपि विशिष्टविषयोपरक्ताकारेण जन्यते ; भ्रान्तित्वाच्च विषय-विषयिणोरेकस्मिन् प्रत्यये संभेदावभासः संभवति, इति कारणत्रितयजन्यमात्मन्यनात्मावभासिज्ञानमध्यासः सिद्ध इति ॥

"कथं पुनरि"त्यादिभाष्यस्य तात्पर्यमाह—*कोऽयमध्यासो नामेति किंवृत्तस्ये"ति ॥ पृष्टमेवानेन, आक्षिप्तमपि मयेत्युभयत्रैवकारापिशब्दौ प्रयोक्तव्यौ । अध्यस्यमानेन समानेन्द्रियविज्ञानविषयत्वमेवाधिष्ठानस्य

### ऋजुविवरणम्

करणासमर्थत्वादित्याशङ्क्य शङ्काबीजप्रदर्शनमनेन क्रियत इति व्याचष्टे—*स्वरूपेणाजन्यत्वेऽपीति* ॥ जन्यज्ञानान्तरं नास्तीत्याह—*आत्मचैतन्यमेवेति* ॥ कथं "भोक्तृचैतन्ये"त्यनेन जन्यत्वमुक्तम् ? अनुक्तौ च शङ्कापरिहारो न स्यादित्याशङ्क्य व्याचष्टे—*विशिष्टविषयोपरक्तेति* ॥ अथवा "आत्मचैतन्यमि"त्यनेन "पृथग्भोक्तृविषये"ति व्याख्यातम्, कथं तस्याजन्यस्य टीकाकृता भोक्तृचैतन्येत्यनेन फलत्वमुक्तमित्याशङ्क्य व्याचष्टे—*स्वरूपेणाजन्यत्वेऽपीति* ॥ "परत्र परावभासस्ये"त्यनुपपन्नम् ; चैतन्यस्याविषयत्वेन तत्संभेदावभासाभावादित्याशङ्क्योपपादयति—*भ्रान्तित्वाच्चेति* ॥

*ननु*—पुरोऽवस्थितं कथं प्रयोजकत्वेनोपादायाक्षेपः क्रियते ? स्वप्नादौ पुरोऽवस्थितविषयाभावेऽप्यध्यासस्य सर्वैरङ्गीकृतत्वात्, अथ विषयत्वाभावेनाक्षेपः, तन्न ; अज्ञानविषयत्वस्य साधितत्वात्, अतो नाक्षेपबीजमुपलभ्यत इत्याशङ्क्य व्याचष्टे—*अध्यस्यमानेनेति* ॥ कारणान्तरमप्युपाध्यभावासङ्गत्वादि स्वावसरे वक्ष्यमाणत्वान्नेहोक्तम् ।

### तत्त्वदीपनम्

संभव इति शङ्कते—*नन्विति* ॥ संसृष्टव्यवहारानुपपत्त्याऽधिष्ठानादिविषयमेकं ज्ञानं जन्यं च दृष्टमन्यत्र, अत्र त्वन्यथा ; आत्मनोऽविषयत्वादधिष्ठानारोप्यज्ञानस्य चैतन्यस्य नित्यत्वाच्चेत्यर्थः । आत्मनोऽविषयत्वेऽप्यारोप्यस्फुरणादन्यज्ञानाभावादधिष्ठानत्वमिति टीकार्थः ॥

आरोप्यस्फुरणव्यतिरिक्तस्फुरणसंबन्धित्वेनाधिष्ठानत्वं कथमुक्तम् ? तुच्छस्याप्यधिष्ठानत्वापातादिति, तत्राह—*आत्मेति* ॥ आरोप्याधिष्ठानयोरेकस्फुरणत्वस्याधिष्ठानत्वप्रयोजकत्वात्तुच्छस्य चातादृक्त्वान्नाधिष्ठानत्वमित्यर्थः । जन्यत्वं घटयति—*स्वरूपेणेति* ॥ एतदभिसन्धायोक्तम्—"भोक्तृचैतन्येति" ॥ आरोप्यस्याधिष्ठानाभिन्नानुभवफलत्वाद्विषयसंवलितत्वेन जन्यत्वाच्च लक्षणोपपत्तिरिति टीकार्थः । आत्माऽनात्मनोर्विरुद्धयोः कथमैक्यम् ? तत्राह—*भ्रान्तित्वादिति* ॥ प्रमाणतयैक्यानवभासेऽपि भ्रान्त्या तत्प्रतिभास इत्यर्थः । लक्षणसमर्थनमुपसंहरति—*इति कारणेति* ॥ किंशब्दस्य व्याख्यातत्वात् पुनस्तत्कस्मादित्याशङ्क्योत्तरशेषत्वादनुवाद इत्याह—*कथमिति* ॥ प्रश्नाक्षेपयोरुभयोरपि कृतत्वात् 'पृष्टमनेने'ति मत्वा, 'आक्षिप्तं मये'ति च कथमुक्तम् ? इत्याशङ्क्याध्याहारेण योजयति—*पृष्टमिति* ॥ सर्वगतत्वेन पुरःस्थितत्वादज्ञानविषयत्वाच्चाविषयत्वाभिधानं भाष्यटीकयोरसंगतम्, तत्राह—*अध्यस्यमानेनेति* ॥ बाढमित्यादेरेषोऽर्थः ।

## कथं पुनः प्रत्यगात्मन्यविषयेऽध्यासो विषय-तद्धर्माणाम् ?

### भामती

पति—कथं पुनः प्रत्यगात्मन्यविषयेऽध्यासो विषय-तद्धर्माणाम् ? *अयमर्थः*—चिदात्मा प्रकाशते ?

### ऋजुप्रकाशिका

*"कथं पुनरि"ति भाष्यस्यायमर्थः*—प्रातिलोम्येन जडानृताहंकारादिभ्यः प्रातिकूल्येन सत्य-ज्ञानानन्दात्मनाऽञ्चते प्रकाशत इति *प्रत्यक्*, *तादृशेऽविषय आत्मनि विषय-तद्धर्माणामध्यासः कथम् ? *सर्वो हि = लोको *विषये* विषयान्तरं तद्धर्मांश्चाध्यस्यतीति दर्शनादिति। *ननु* आत्मनोऽविषयत्वे ह्यध्यासायोगः, तस्य विषयत्वमेवास्तु, अत एव तत्र तदध्यासोऽप्यस्त्वित्यत आह—*अयमर्थ इति* ॥ अविषयत्वेनाध्यासायोगं वक्तुमेव

### पञ्चपादिका

इति मत्वाऽध्यासस्वरूपेऽभिहिते पुनः—'आक्षिप्तं मये'त्यभिप्रायं विवृणोति—*कथं पुनः प्रत्यगात्मन्यविषयेऽध्यासो विषय-तद्धर्माणामिति* ॥ बाढमेवंलक्षणोऽध्यासः, स चेह न सम्भवति। कथम् ?

### तत्त्वदीपनम्

अध्यास आक्षिप्यते चेत्, कथं पुनरध्यास इत्येवोच्यताम्, किं "प्रत्यगात्मनी"त्याशङ्क्यान्यत्राध्यासमङ्गीकृत्य, विशेषविषय आक्षेपं द्योतयितुमित्याह—*बाढमिति* ॥ अरूप्ये रूप्याध्यासवदविषयेऽपि विषयारोप इति शङ्कते—*कथमिति*॥ विषयत्वस्याधिष्ठानत्वव्यापकत्वात्तदभावेऽभावं दर्शयितुं तस्य व्यापकत्वमाह—*यत इति*॥ ऐन्द्रिय-

### भाष्यभावप्रकाशिका

शब्दः। लक्षितरजताध्यासस्य लोकवादिसिद्धत्वेऽपि नात्मन्यनात्माध्यासः स्यादिति विशेषाक्षेपमुत्थापयति—*कथमिति* ॥ प्रतीचि पूर्णे स्फुरणत्वेनाननुभाव्ये परेषां परिच्छिन्नानामनुभाव्यानां

### वार्तिकम्

कथं तदिन्द्रियसंप्रयोगेन्द्रियदोषौ भ्रमहेतू स्याताम् ? यदि चारोप्यं न विषयः, कथं तद्विषयपूर्वानुभवसंस्कारस्तद्धेतुः स्यात् ?

*ननु*—आत्मनोऽप्यस्ति मनःसन्निकर्षाधारत्वम्, तज्जन्याहमित्यनुभवविषयत्वं चेति—चेत्, *नैवम्* ; त्वया तथात्वानङ्गीकारात्। यतस्त्वम्—"युष्मत्प्रत्ययापेतस्य प्रत्यगात्मनोऽविषयत्वं ब्रवीषि" ॥ नहि प्रत्यगात्मनो युष्मत्प्रत्ययगोचरत्वं संभवति ; प्रत्यक्त्वव्याहतेः, तद्विषयस्य पराक्त्वात्। नच तदपेतस्य विषयत्वमस्ति ; विषयस्य युष्मत्प्रत्ययगोचरत्वनियमस्य त्वयैवाभिहितत्वात्। अतो निरञ्जनत्वान्निर्गुणत्वाच्चात्मन इन्द्रियसंप्रयोगानाधारत्वाद् ज्ञानाविषयत्वादध्यासविषयत्वानुपपत्तेश्च कारणफलयोरुभयोरप्यात्मन्यसंभवान्न तस्मिन्नध्यासोऽस्तीत्युक्तलक्षणमध्यासमात्मन्यसंभवं मन्वानश्चोदयति—*कथं पुनरित्यादिना* ॥ सुव्याख्यातं चोद्यभाष्यम्। "युष्मदि"त्यादिपूर्वोक्तशङ्काया एव विवरणमेतत्।

### प्रदीपः

एतावता कारणत्रयाभावनिबन्धनाध्यासासंभवशङ्का विशदं परिहृता, साम्प्रतन्तु अधिष्ठानाज्ञानरूपतुरीयकारणाभावान्नाध्यास आत्मन्यन्तःकरणस्येत्यभिप्रायेणाक्षिपति—*कथं पुनरिति* ॥ आत्मन्यन्तःकरणाध्यासकारणमधिष्ठानाज्ञानमेवान्तःकरण आत्मसंसर्गाध्यासस्यापि कारणम्, इति विषय-तद्धर्माणामात्मन्यध्यासाक्षेपेण विषये विषयि-तद्धर्माध्यासाक्षेपोऽप्यर्थसिद्ध एवेति

### भामती

न वा? न चेत्प्रकाशते, कथमस्मिन्नध्यासो विषय-तद्धर्माणाम्? न खल्वप्रतिभासमाने पुरोवर्तिनि द्रव्ये रजतस्य वा तद्धर्माणां वा समारोपः संभवतीति। प्रतिभासे वा, न तावदयमात्माऽजडो-घटादिवत्पराधीनप्रकाश इति युक्तम्। न खलु स एव कर्ता च कर्म च भवति; विरोधात्। परसम-वेतक्रियाफलशालि हि कर्म। नच ज्ञानक्रिया परसमवायिनी, इति कथमस्यां कर्म? नच तदेव स्वं च परं च; विरोधात्, आत्मान्तरसमवायाभ्युपगमे तु ज्ञेयस्यात्मनोऽनात्मत्वप्रसङ्गः, एवं तस्य तस्येत्यन-

### ऋजुप्रकाशिका

विकल्पयति—*चिदात्मेत्यादिना* ॥ द्वितीयेऽध्यासायोग एवेत्याह—*न चेदिति* ॥ अस्मिन् चिदात्मन्य-प्रतिभासमानत्वेऽपि तत्राध्यासमाशङ्कमानं प्रत्याह—*नेति* ॥ तथाऽदर्शनादिति भावः। आद्यं प्रत्याह—*प्रतिभासे वेति* ॥ आत्मा प्रकाशते इत्याद्यपक्षेऽपि किमात्माऽजडः? जडो वा? आद्ये स्वयंप्रकाशत्वेन प्रकाशान्तरविषयत्वाभावादविषयत्वमेवाऽऽत्मन इति तत्राध्यासायोग एव। नच—स्वयंप्रकाशत्वेन स्वविषय-त्वादविषयत्वमसिद्धमेवाऽऽत्मन इति—वाच्यम्; स्वव्यवहारे संविदन्तरानपेक्षत्वस्यैव स्वप्रकाशत्वशब्दार्थत्वेन स्वविषयत्वस्य स्वप्रकाशत्वशब्दार्थत्वाभावात्, स्वप्रकाशत्वमात्रेण स्वविषयत्वाभावात्, आत्मनोऽजडत्वेऽपि घटादिवत् पराधीनप्रकाशतया विषयत्वम्, अतोऽध्याससंभव इति भ्रान्ताशङ्कां निवारयति—*न तावदयमात्मा-ऽजडो घटवदिति* ॥ अजडत्वं स्वयंप्रकाशत्वात्। अजडः पराधीनप्रकाश इति न युक्तम्; "मम माता वन्ध्या" इत्यादिवदित्यर्थः। क्वचिन्न तावदयमात्मा जडो घटादिवदिति पाठः, स साधुः। अतस्त-त्पाठपक्षे जडपक्षं द्वितीयं निरस्यति—*न तावदयमात्मा जडो घटवदिति*॥ आत्मनो जडत्वपक्षे आत्मा घटादि-वत् पराधीनप्रकाश इति वक्तव्यम्, तन्न तावद् युक्तमित्यर्थः। कुतो न युक्तम्? इत्यत आह—*न खल्विति* ॥ पराधीनप्रकाशत्वं नाम परसमवेतप्रकाशात्मकज्ञानक्रियाफलशालित्वरूपतद्विषयत्वलक्षणं कर्मत्वम्, तच्च ज्ञानकर्तु-रात्मनो न संभवति; एकस्यैवाऽऽत्मन एकस्यां ज्ञानक्रियायां कर्तृत्व-कर्मत्वयोर्विरोधादित्यर्थः। *स एव= आत्मैव। अत्र एकस्यां ज्ञानक्रियायामिति शेषः। विरोधेन ज्ञानकर्तुः ज्ञानकर्मत्वायोगमभिधाय ज्ञानक्रियायाः परसमवेतत्वाभावेन कर्मलक्षणाभावादपि नात्मा ज्ञानक्रियायाः कर्मेत्याह—*परसमवेतेत्यादिना नचेत्यतः प्राक्तनेन ग्रन्थेन* ॥ *नच ज्ञानक्रियेति* ॥ कर्मेत्यनन्तरम्—'आत्मे'ति शेषः। *ननु* ज्ञान-क्रियायाः स्वसमवेतत्वेऽपि परसमवेतत्वमप्यस्ति; स्वस्यैव परत्वादित्यत आह—*नच तदेवेति* ॥ *ननु* आत्मनः स्वकीयज्ञानकर्तृतयोक्तविरोधेन स्वज्ञानकर्मत्वाभावेऽपि आत्मान्तरसमवेतज्ञानं प्रति स्वस्याकर्तृतया विरोधाभावेन तज्ज्ञानकर्मत्वं युज्यत एवेत्यत आह—*आत्मान्तरेति* ॥ यः स्वभिन्नात्मसमवेतज्ञानविषयः, सोऽनात्मा, यथा घट इति व्याप्तेरात्मनोऽपि स्वभिन्नात्मान्तरसमवेतज्ञानविषयत्वेऽनात्मत्वप्रसङ्ग इत्यर्थः ॥ किं स्वभिन्नात्मसमवेतज्ञानविषयत्वेनानात्मत्वप्रसङ्गः? किं वा ज्ञानविषयत्वमात्रेण? नाद्यः; अद्वैतमते स्वभिन्ना-त्मनोऽनङ्गीकारात्, न द्वितीयः; ज्ञेयत्वमात्रेणानात्मत्वप्रसङ्गाभावात्, अद्वैतमतेऽप्यात्मनो ज्ञेयत्वाङ्गीकारा-दिति मन्यमानं प्रत्यनवस्थादूषणमाह—*एवं तस्य तस्येति* ॥ आत्मन आत्मान्तरसमवेतज्ञान-विषयत्वेन कर्मत्वे, आत्मान्तरस्यापि तदन्यात्मान्तरसमवेतज्ञानविषयत्वेन कर्मत्वम्, तदात्मान्तरस्यापि तथेत्यन-वस्थापात इत्यर्थः। यद्यप्यद्वैतमत आत्मान्तरमेव नास्ति; तथापि वस्तुत आत्मनो नानात्वाभावेऽप्यौपाधिका-त्मनानात्वं पुरस्कृत्येदं दूषणमिति द्रष्टव्यम्। *वस्तुतस्तु*—तन्मते ज्ञानस्याऽऽत्मसमवेतत्वमेव नास्ति, येन तत्समवेतज्ञानविषयत्वेन कर्मत्वं स्यादिति द्रष्टव्यम्। तस्मादुक्तविधया ज्ञानाकर्मणि ज्ञानाविषय आत्मनि विषय-तद्धर्माध्यासोऽयुक्तः, अधिष्ठानाध्यस्यमानयोरेकज्ञानविषयकताया वक्तव्यत्वादविषये तदभावादिति भावः। अत्र चिदात्मा प्रकाशत इति पक्षं तस्य जडत्वपक्षं चाश्रित्य, आत्मा संविदाश्रयतया संवित्कर्तृत्वेनैव

## भामती

वस्थाप्रसङ्गः । *स्यादेतत्*—आत्मा जडोऽपि सर्वार्थज्ञानेषु भासमानोऽपि कर्तैव, न कर्म ; परसमवेतक्रियाफलशालित्वाभावात्, चैत्रवत् । यथाहि—चैत्रसमवेतक्रियायां चैत्रनगरप्राप्तावुभयसमवेतायामपि क्रियमाणायां नगरस्यैव कर्मता ; परसमवेतक्रियाफलशालित्वात्, नतु चैत्रस्य क्रियाफलशालिनोऽपि ; चैत्रसमवायाद्गमनक्रियायाः—इति, तन्न ; श्रुतिविरोधात् । श्रूयते हि—"सत्यं ज्ञानमनन्तं ब्रह्म" इति । उपपद्यते च । *तथाहि*—योऽयमर्थप्रकाशः फलम्, यस्मिन्नर्थश्च, आत्मा च प्रथेते, स किं जडः ? स्वयंप्रकाशो वा ? जडश्चेत्, विषयात्मानावपि जडाविति, कस्मिन्किं प्रकाशेत ? अविशेषात्, इति प्राप्तमान्ध्यमशेषस्य जगतः । तथाचाभाणकः—"अन्धस्येवान्धलग्नस्य विनिपातः पदे पदे" । नच—निलीनमेव विज्ञानमर्थात्मानौ ज्ञापयति चक्षुरादिवदिति—वाच्यम् ; ज्ञापनं हि ज्ञानजननम्, जनितं

## ऋजुप्रकाशिका

भासते, न कर्मतयेति केचिदाहुः, तन्मतं प्रसङ्गान्निराकर्तुमाशङ्कते—*स्यादेतदित्यादिना* ॥ *सर्वार्थज्ञानेषु भासमानोऽपि=सर्वपदार्थज्ञानाश्रयतया भासमानोऽपि । कर्मत्वाभावे हेतुमाह—*परेति* ॥ स्वकर्तृकज्ञानक्रियायाः स्वसमवेतत्वेन परसमवेतत्वाभावात् परसमवेतक्रियाजन्यफलशालित्वाभावादिति भावः । स्वकर्तृकस्वसमवेतक्रियाकर्तुस्तत्क्रियाकर्मत्वाभावे दृष्टान्तमाह—*चैत्रवदिति* ॥ तदेतदाह—*यथाहीति* ॥ चैत्रसमवेतेत्यनन्तरं गमनेति शेषः । *कर्मता=गमनकर्मता । तत्र हेतुमाह—*परेति* ॥ *नतु चैत्रस्येति* ॥ चैत्रस्य गमनक्रियाजन्यफलशालित्वेऽपि गमनक्रियायाः स्वसमवेतत्वेन परसमवेतत्वाभावाद् न चैत्रस्य गमनक्रियाकर्मत्वम्, किंतु तत्कर्तृत्वमेव ; एवमात्मनोऽपि स्वसमवेतज्ञानक्रियाजन्यफलशालित्वेऽपि परसमवेतक्रियाजन्यफलशालित्वाभावाद् न ज्ञानकर्मत्वम्, किन्तु तत्कर्तृत्वमेवेत्यर्थः । "तत्त्वमसि" इत्यादिवाक्येषु आत्माभिन्नत्वेन प्रतिपाद्यमानस्य ब्रह्मणो ज्ञानरूपत्वस्य श्रुत्या प्रतिपादनात् तदभिन्नात्मनोऽपि ज्ञानरूपत्वेन ज्ञानाश्रयत्वेन ज्ञानकर्तृत्वेन वाऽऽत्मा प्रथते फलार्थप्रकाशेष्वित्युक्तमनुपपन्नम्, श्रुतिविरोधात्, इति दूषयति—*तन्न ; श्रुतिविरोधादिति* ॥ यया श्रुत्या विरोधः, तां श्रुतिमाह—*श्रूयते हि सत्यमिति* ॥ न केवलं श्रुतित एव ज्ञानरूपत्वमात्मनः, आत्मनोऽज्ञानाश्रयत्व उपपत्तिरप्यस्तीत्याह—*"उपपद्यते च"त्यादिना "प्रत्यगात्मा स चापराधीनप्रकाशत्वादनंशत्वाच्चाविषयः" इत्यन्तेन* ॥ उपपत्तिमेव प्रतिपादयति—*तथाहीति ॥ यस्मिन्निति* ॥ यस्मिन्नर्थप्रकाश इत्यर्थः । *स इति* । अर्थप्रकाश इत्यर्थः । आद्य आह—*जडश्चेदिति* ॥ *जडाविति* ॥ त्वन्मत इति शेषः । *अविशेषादिति* ॥ अर्थप्रकाशस्य जडत्वपक्षेऽर्थप्रकाश-विषयात्मनां त्रयाणामपि जडत्वाविशेषात् किमवलम्ब्य किं प्रकाशेत ? न किञ्चिदपि प्रकाशेतेत्यर्थः । अस्त्वप्रकाशनम्, ततः किम् ? इत्यत आह—*प्राप्तमिति* ॥ तथाच निरुक्तजडत्रयमध्येऽन्यतरस्यान्यतरालम्बनमकिञ्चित्करम् । तत्रानुरूपां गाथामुदाहरति—*तथाचेति* ॥ अर्थप्रकाशस्य जडत्वपक्षेऽज्ञातत्वमुक्तम्, तावता को दोषः ? अज्ञातस्यापि विज्ञानस्य चक्षुरादिवद् ज्ञापकत्वसंभवादित्याशयवानाशङ्क्य निराकरोति—*नचेति* ॥ *निलीनम्* = अज्ञातम् । निराकरणप्रकारमेवाह—*ज्ञापनं हीति* ॥ ततः किमिति ? अत आह—*जनितं हीति* ॥ स्वयं जडम् । *ननु* "विषयात्मानौ प्रकाशयतीत्यायातमान्ध्यमशेषस्य जगतः" इत्युक्तदूषणं तदवस्थमित्यर्थः । चक्षुरादिकमपि ज्ञानजनकं नार्थप्रकाशकमिति जनितमेव ज्ञानं प्रकाशकं वाच्यम् ; जनितज्ञानं च जडं चेत्, कथं प्रकाशकं स्यात् ? इति चक्षुरादिवदिति दृष्टान्तोऽप्ययुक्त इति भावः । अज्ञातं जडज्ञानं ज्ञानजनकं चेत्, तदपि जनितं ज्ञानं जडमज्ञातं ज्ञानान्तरजनकम्, तदपि जनितं ज्ञानं जडमज्ञातं ज्ञानान्तरजनकमित्युत्तरोत्तर-

## भामती

च ज्ञानं जडं सन्नोक्तदूषणमतिवर्तेतेति। एवमुत्तरोत्तराण्यपि ज्ञानानि जडानीत्यनवस्था। तस्मादपराधीनप्रकाशा संविदुपेतव्या। तथाऽपि किमायातं विषयात्मनोः स्वभावजडयोः? एतदायातम्--यत्तयोः संविदजडेति। तत् किं पुत्रः पण्डित इति पिताऽपि पण्डितोऽस्तु? स्वभाव एवायं संविदः स्वयंप्रकाशायाः, यदर्थात्मसंबन्धितेति चेत्, हन्त पुत्रस्यापि पण्डितस्य स्वभाव एषः, यत्पितृसंबन्धितेति समानम्। सहार्थात्मप्रकाशेन संवित्प्रकाशः, न त्वर्थात्मप्रकाशं विनेति तस्याः स्वभाव इति चेत्, तत्किं संविदो भिन्नौ संविदर्थात्मप्रकाशौ? तथाच न स्वयंप्रकाशा संवित्; नच संविदर्थात्मप्रकाश इति। अथ संविदर्थात्मप्रकाशौ न संविदो भिद्येते, संविदेव तौ? एवं चेद् यावदुक्तं भवति संविदात्मार्थौ सहेति, तावदुक्तं भवति संविदर्थात्मप्रकाशौ सहेति। तथाच न विवक्षितार्थसिद्धिः। नचातीतानागतार्थगोचरायाः संविदोऽर्थसहभावोऽपि। तद्विषयहानोपादानोपेक्षाबुद्धिजननादर्थसहभाव

## ऋजुप्रकाशिका

ज्ञानानि सर्वाण्यपि जडत्वानवस्थां प्राप्तानि न प्रकाशकानि, इति जगदान्ध्यतादवस्थ्यमेवेत्याशयवानाह—*एवमुत्तरेति* ॥ जडत्वपक्षमाद्यं दूषयित्वा स्वयंप्रकाशत्वपक्षं द्वितीयं परिशेषयति—*तस्मादिति* ॥ *अपराधीनप्रकाशा = स्वयंप्रकाशा। इष्टापत्तिमाशङ्क्याह—*तथापीति* ॥ शङ्कते—*एतदायातमिति* ॥ *तयोः = विषयात्मनोः संविदजडेति यत्, एतदायातमित्यर्थः। शङ्कां विधुनोति—*तत्किमिति* ॥ तयोः संविदजडेत्येतावताऽजडायाः संविदः प्रकाशनमुक्तम्, जडयोर्विषयात्मनोः प्रकाशने किमुक्तं स्यात्? न किञ्चिदप्युक्तम्। तयोः संविदोऽजडत्वे तयोरप्यजडत्वमुक्तमिति न शङ्कास्पदम्, जन्यस्याजडत्वमात्रेण जनकस्याजडत्वानियमात्, पुत्रस्य पण्डितत्वमात्रेण पितुः पण्डितत्वादर्शनादित्यर्थः। शङ्कते—*स्वभाव एवायमिति* ॥ अपहासेन दूषयति—*हन्त पुत्रस्यापीति* ॥ पुनः शङ्कते—*सहार्थेति* ॥ *तस्याः* = संविदः ॥ दूषयति—*तत्किमिति* ॥ संवित्प्रकाशः, अर्थात्मप्रकाशेन सहेति सहोक्त्या संवित्प्रकाशार्थप्रकाशयोः संविद्भिन्नत्वमुक्तं स्यात्, तदनुपपन्नमित्यर्थः। अनुपपत्तिमेव स्फोरयति—*तथाचेति* ॥ संविदर्थात्मप्रकाशयोः संविद्भिन्नत्वे संविदोऽप्रकाशत्वमायातमिति स्वप्रकाशत्वभङ्ग इत्यर्थः। तदेतदाह—*नच संविदिति* ॥ संविदर्थात्मप्रकाशो नेत्यर्थः। इदं संवित्प्रकाशो नेत्यस्याप्युपलक्षणम्। अतः प्रकाशभिन्नत्वान्न स्वप्रकाशा संवित् स्यादित्यर्थः। संवित्प्रकाशार्थात्मप्रकाशयोः संविदभेदे संविदः स्वप्रकाशत्वं न व्याहतमित्याशयवानाशङ्कते—*अथेति* ॥ संविद इति पञ्चमी। *तौ = संवित्प्रकाशार्थात्मप्रकाशौ। दूषयति—*एवं चेदिति* ॥ संविदा सह अर्थात्मानावित्युक्ते यावदुक्तं भवति, संविदा सह अर्थात्मप्रकाशावित्युक्तेऽपि तावदुक्तं भवतीत्यर्थः। *अयमाशयः*—संवित्प्रकाशस्य संविदभेदादर्थात्मप्रकाशयोरप्यर्थात्माभेदापत्तिः। तथाचेत्थमनुमानम्—अर्थात्मानौ, न स्वप्रकाशतो भिद्येते, प्रकाशमानत्वात्, संविद्वत्। नच दृष्टान्ते साध्यवैकल्यम्; संविदः संवित्प्रकाशाभेदस्य त्वयोक्तत्वात्। तथाच संविदभिन्नप्रकाशाभिन्नार्थात्मनोरपि संविदभेदः प्राप्त इति। इष्टापत्तिरित्यत आह—*तथाचेति* ॥ संविदाश्रयत्वेन ह्यात्मसिद्धिस्तत्र विवक्षिता, उक्तविधयाऽऽत्मनः संविदभेदे न विवक्षितार्थसिद्धिरित्यर्थः। *ननु* प्रकाशाभिन्नत्वेऽपि संविदः संविदात्मार्थौ सहेति सहोक्त्याऽर्थसहभावमात्रमुक्तम्, नत्वर्थाभेद इत्यत आह—*नचातीतेति* ॥ अर्थसहभावं शङ्कते—*तद्विषयेति* ॥ अर्थविषयेत्यर्थः। हानादिबुद्धिविषयीभूतार्थस्य विद्यमानतया तद्विषयकहानादिबुद्धिजनिकायाः संविदोऽर्थसहभावोऽस्तीत्यर्थः। *अर्थसहभाव इति* ॥ संविद इति शेषः। किमर्थसंविदर्थविषयिणी? उत न? अन्त्य आह—*अर्थसंविदश्चेति* ॥ हानादिबुद्धीनामपीत्यतः प्राक् तजन्येति शेषः। *तद्विषयत्वानुपपत्तेः* = अर्थविषयत्वा-

## भामती

इति चेत्, न; अर्थसंविदश्चैव हानादिबुद्धीनामपि तद्विषयत्वानुपपत्तेः। हानादिजननाद्धानादि-बुद्धीनामर्थविषयत्वम्, अर्थविषयहानादिजननाच्चार्थसंविदस्तद्विषयत्वमिति चेत्, तत्किं देहस्य प्रयत्नवदात्मसंयोगो देहप्रवृत्ति-निवृत्तिहेतुरर्थे इत्यर्थप्रकाशोऽस्तु? जाड्याद् देहात्मसंयोगो नार्थप्रकाश इति चेत्, नन्वयं स्वप्रकाशोऽपि स्वात्मन्येव खद्योतवत्प्रकाशः, अर्थे तु जड इत्युपपादितम्। नच प्रकाशस्यात्मानो विषयाः; ते हि विच्छिन्नदीर्घ-स्थूलतयाऽनुभूयन्ते, प्रकाशश्चायमान्तरोऽस्थूलोऽनणुरह्रस्वोऽदीर्घश्चेति प्रकाशते। तस्माच्चन्द्रेऽनुभूयमान इव द्वितीयश्चन्द्रमाः स्वप्रकाशादन्योऽर्थोऽनिर्वचनीय एवेति—युक्तमुत्पश्यामः। नचास्य प्रकाशस्याऽऽजानतः स्वलक्षणभेदोऽनुभूयते, नचानिर्वाच्यार्थ-भेदः प्रकाशं निर्वाच्यं भेत्तुमर्हति; अतिप्रसङ्गात्। नचार्थानामपि परस्परं भेदः समीचीनज्ञान-पद्धतिमध्यास्त इत्युपरिष्टादुपपादयिष्यते। तदयं प्रकाश एव स्वयंप्रकाश एकः कूटस्थनित्यो

## ऋजुप्रकाशिका

नुपपत्तेः। हानादिबुद्धीनामर्थविषयत्वं न संविदर्थविषयत्वप्रयुक्तम्, येन संविदोऽर्थविषयत्वाभावे हानादिबुद्धीनामप्यर्थविषयत्वमनुपपन्नमित्युच्येत; किन्तु संविदर्थविषयत्वं हानादिबुद्ध्यर्थविषयत्वप्रयुक्तम्, हानादिबुद्ध्यर्थ-विषयत्वं तु हानाद्यर्थविषयत्वप्रयुक्तम्, इत्येवं प्रणाड्या संविदोऽर्थविषयत्वमिति, संविदोऽर्थविषयत्वपक्षमाद्य शङ्कते—*अर्थविषयहानादिजननादिति*॥ *हानम्* = निवृत्तिः। आदिशब्दात् प्रवृत्तिरुच्यते। *तद्विषय त्वम्* = अर्थविषयत्वम्; अर्थप्रकाशत्वमिति यावत्। एतावता साक्षाद्वा परम्परया वाऽर्थविषयकप्रवृत्ति-निवृत्ति-हेतुरर्थप्रकाशनमित्यायातमिति मत्वाऽतिप्रसङ्गेन दूषयति—*तत्किमिति*॥ अर्थ इति सप्तमी। तथाच अर्थे देहस्य प्रवृत्ति-निवृत्तिजनको देहात्मसंयोगोऽप्यर्थप्रकाशः किम्? अर्थप्रकाशः स्यादित्यर्थः। शङ्कते—*जाड्यादिति*॥ पूर्वोक्तं स्मारयन् दूषयति—*नन्वयं स्वयंप्रकाशोऽपीति*॥ *स्वात्मन्येव* = स्वस्वरूप एव। *अर्थे तु* = विषये तु। *ननु* विषयभूतानामर्थानां प्रकाशात्मकत्वात् प्रकाशस्य स्वस्वरूपप्रकाशत्वे विषयभूतेऽर्थेऽपि प्रकाशत्वमेव, न जडत्वमिति कस्यचिद् भ्रान्तस्याशङ्कां निराकरोति—*नच प्रकाशस्यात्मानो विषया इति*॥ विषयाः प्रकाशात्मानो न भवन्तीत्यर्थः। विषयाणां प्रकाशानात्मत्वमेवाह—*ते हीति*॥ विषया हीत्यर्थः। बाह्यत्वं विच्छिन्नत्वशब्दार्थः। प्रकाश-विषयवैलक्षण्यमाह—*प्रकाश-श्चेति*॥ तस्मान्न प्रकाशात्मानो विषया इत्यर्थः। तस्मात् प्रकाशमात्रं परिशिष्यते, अन्यस्त्वनिर्वचनीय इति सदृष्टान्तमुपसंहरति—*तस्मादिति*॥ अनुभूयमानो द्वितीयचन्द्रमा इवेति व्यत्यासेन योजना। प्रकाशेऽपि किं स्वाभाविकोऽवान्तरभेदोऽस्ति? नेत्याह—*नचास्येति*॥ प्रमाणाभावादिति भावः। *ननु* अनु-भूयत एव विषयभेदप्रयुक्तः प्रकाशभेदः, तत्राह—*नचानिर्वाच्य इति*॥ अनुभूयमानो विषयोपाधिप्रकाश-भेदोऽनिर्वाच्य एव, न वास्तव इति भावः। *अतिप्रसङ्गादिति*। औपाधिकभेदस्य वास्तवत्वे घटमठा-द्यौपाधिकाकाशभेदोऽपि वास्तवः स्यादित्यर्थः। तत्रेष्टापत्तिमाशङ्कमानं प्रत्युपाधिभूतार्थभेदस्य वास्तवत्वे खलु तत्प्रयुक्तप्रकाशभेदोऽपि वास्तवः स्यात्, स एव नेत्याह—*अपिचेति*॥ तस्यैव प्रकाशस्य प्रत्यगात्म-स्वरूपत्वमविषयत्वं च वदन्नुपसंहरति—*तदयमिति*॥ प्रत्यगात्मेत्युक्तम्, तत्रात्मनः प्रत्यक्त्वमवयव-व्युत्पत्त्या दर्शयति—*अशक्येति*॥ अनिर्वचनीयेभ्य इत्यर्थः। *आत्मानं* स्वम्। *अपराधीन-

## प्रदीपः

परस्पराध्यासाक्षेपपर एवायं ग्रन्थसन्दर्भः, न तु विषयिणि विषय-तद्धर्माध्यासाक्षेपमात्रपर इति हृदयम्॥ इदं गुरुचन्द्रिकोक्तं मतमनुसृत्य, वा.र्तिकोक्तरीतौ तु आत्मसांसर्गिकाध्यासं प्रत्यन्तःकरणावच्छिन्नचैतन्याज्ञानमेव शरणम्॥ *अयं भावः*—अधिष्ठानाज्ञानमपि भ्रमसामान्यं प्रति तुरीयकारणम्, अधिष्ठानन्तु तदेव भवति, यद् केनचन रूपेण ज्ञातम्, केनचन रूपेणा-

### भामती

निरंशः प्रत्यगात्माऽशक्यनिर्वचनीयेभ्यो देहेन्द्रियादिभ्य आत्मानं प्रतीपं निर्वचनीयमञ्चति, जानातीति प्रत्यङ्, स चात्मेति प्रत्यगात्मा, स चापराधीनप्रकाशत्वात्, अनंशत्वाच्चाविषयः। तस्मिन्नध्यासो विषयधर्माणाम् = देहेन्द्रियादिधर्माणाम्, कथम् ? किमाक्षेपे। अयुक्तोऽयमध्यास इत्याक्षेपः। कस्मादय-

### ऋजुप्रकाशिका

प्रकाशत्वात्=स्वप्रकाशत्वात्। कथंशब्दस्य प्रश्नार्थकत्वभ्रमं वारयति—*किमाक्षेप इति* ॥ तथाच फलितमाह—*अयुक्त इति* ॥ स्वयंप्रकाशत्वमनंशत्वं च विषयत्वविघटनद्वाराऽध्यासायोगहेतुतयोक्तम्, तदेतत् प्रपञ्चयति—*एतदुक्तं भवतीत्यादिना* ॥ *पराधीनप्रकाशम्=परप्रकाशम्।

### पञ्चपादिकाविवरणम्

दृष्टम्, इह तदभावान्नाध्याससंभव इत्याक्षेपग्रन्थार्थः। तत्रैकस्मिन्विज्ञाने द्वयोः संभिन्नतयाऽवभास एवापेक्ष्यते ;

### ऋजुविवरणम्

"न तावदयमि"त्यनेन नियमेनाविषयत्वनिषेधादविषयत्वमपि प्रतीयते। तथा सत्यध्यासाभाव एव, वैयर्थ्यं वा तत्कीर्तनस्येत्याशङ्क्यावतारयति—*तत्रैकस्मिन्विज्ञान इति* ॥ *ननु* "विषयिणः" इत्यादिना विरुद्धरूपद्वयापत्तिरिति

### भाष्यभावप्रकाशिका

बुद्ध्यादीनां तद्धर्माणां च नाध्यासः ; मिथोविरुद्धानामधिष्ठानाधिष्ठेयत्वासंभवादित्यर्थः। विरुद्धा-

### वार्तिकम्

सर्वस्यापि बहिरन्तःप्रपञ्चस्यात्मन्यध्यस्तत्वात् किमु वक्तव्यमन्तःकरणतद्धर्माध्यासस्य प्रत्यगात्माधिष्ठानमित्यभिप्रेत्य परिहरति—*उच्यत इत्यादिना* ॥ यथा प्रत्यगात्मा तदध्यासाधिष्ठानं भवति, तथा वक्ष्यमाणप्रकारेणोच्यत इत्यर्थः। यदुक्तम्—"कथं पुनः प्रत्यगात्मन्यविषयेऽध्यासो विषय-तद्धर्माणा"मिति, *तत्र वदामः*—किमत्र भवताऽविषयत्वमभिप्रेतम्? येनात्मनोऽधिष्ठानत्वाभाव आपाद्यत इति, तत्र किमपरोक्षस्फूर्त्यकर्मत्वम्? किं वा वृत्त्यव्याप्यत्वम्? अथ तत्प्रयुक्तव्यवहारागोचरत्वम्? अन्तःकरणानभिव्यङ्ग्यत्वं वा? अपरोक्षत्वराहित्यं वा? आहोस्विद् बहिरिन्द्रियाग्राह्यत्वम्? इति षट् पक्षाः संभवन्ति।

### प्रदीपः

ज्ञातं च भवति। तत्र शुद्धं चैतन्यं ज्ञानस्वरूपं नाज्ञानेनावरणमर्हति। ज्ञानाज्ञानयोर्हि तमः-प्रकाशवद् विरुद्धस्वभावत्वेनैकत्र समवधानासंभवः, इतरन्यतरसत्तायामपरान्यतरसत्ता हि बाधितैवेति, कथं चैतन्यमज्ञातमिति शङ्काहृदयोद्घाटनार्थमिदं विशेषणम्—*प्रत्यगात्मनीति*। स्वप्रकाशचैतन्यस्वरूपे। अध्यासो हि चिदात्मनि मिथ्याऽज्ञाननिमित्त एव खलु विवक्षणीयः, निमित्तन्तु मिथ्याऽज्ञानं शुद्धचैतन्याश्रयं तद्विषयं चेति वक्तव्यम्। जीवो ह्यज्ञानोपाधिकः पाश्चात्त्यत्वाद् नाज्ञानाश्रयतामर्हतीति विवरणाचार्याः। भामतीकारास्तु—अज्ञानाश्रयस्तु जीव एवानादिः। अनादित्वात्तु नान्योन्याश्रयो दोषाय। तथापि त्वज्ञानेनावरणं शुद्धचैतन्यस्यैव ज्ञानस्वरूपस्येति वदन्ति। तथाचाश्रयानुपपत्त्या विषयानुपपत्त्या च न मिथ्याऽज्ञाननिमित्तः प्रत्यगात्मनि विषयाध्याससंभव इति भावः॥ न केवलमज्ञातत्वाभावान्नाधिष्ठानत्वम्, किन्तु प्रमाणजन्यवृत्त्यभिव्यक्तचैतन्यभास्यत्वरूपज्ञातत्वाभावादपि नाधिष्ठानत्वमिति सूचयन्नाह—*अविषये इति*। अदृश्ये, फलाव्याप्ये ; वृत्त्यव्याप्ये चेति भावः। इदं रजतमित्यादौ ह्यधिष्ठानेन्द्रियसंप्रयोगे तदाकारवृत्तिनिर्गमनानन्तरमेव रजतप्रत्यक्षमुदेति। ज्ञानप्रत्यक्षत्वं विषयप्रत्यक्षत्वं च वृत्तिनिर्गमापेक्षमेव। वृत्तिनिर्गमश्चेन्द्रियाधिष्ठानसम्प्रयोगाधीन इति हि वस्तुस्थितिः। यद्यपि बाह्यप्रत्यक्ष एवेयं व्यवस्था, नान्तरप्रत्यक्ष इति शुद्धचैतन्याकारा वृत्तिरिन्द्रियसम्प्रयोगमन्तराऽपि भवितुमर्हति ; तथाऽपि सा वृत्तिर्यदि निर्निमित्ता, तर्हि कदाऽपि नाज्ञानावरणसंभवः। यदि तु सनिमित्ता, तर्हि अन्तःकरणाध्यासात्पूर्वं केनापि प्रमाणेन शुद्धचैतन्याकारान्तःकरणवृत्तेरनुत्पत्तिप्रसङ्गाद् न वृत्तिव्याप्यत्वमपि संभवतीति, कथमहंप्रत्यक्षतानिर्वाहः ? इति न चिदात्मन्यन्तःकरणाध्याससंभव

**सर्वो हि पुरोऽवस्थिते विषये विषयान्तरमध्यस्यति ; युष्मत्प्रत्ययापेतस्य च प्रत्यगात्मनोऽविषयत्वं ब्रवीषि ।**

### भामती

मयुक्त इत्यत आह—*सर्वो हि पुरोऽवस्थिते विषये विषयान्तरमध्यस्यति* ॥ *एतदुक्तं भवति—यत् पराधीनप्रकाशमंशवच्च तत् सामान्यांशग्रहे कारणदोषवशाच्च विशेषाग्रहेऽन्यथा प्रकाशते, प्रत्यगात्मा त्वपराधीनप्रकाशतया न स्वज्ञाने कारणान्यपेक्षते, येन तदाश्रयैर्दोषैर्दूष्येत, नचांशवान् ; येन कश्चिदस्यांशो गृह्येत । नहि तदेव तदानीमेव तेनैव गृहीतमगृहीतं च संभवतीति, न स्वयंप्रकाशपक्षेऽध्यासः । सदातनेऽप्यप्रकाशे पुरोऽवस्थितत्वस्यापरोक्षत्वस्याभावान्नाध्यासः । नहि शुक्ताव-

### ऋजुप्रकाशिका

*अपराधीनप्रकाशतया* ॥ *तदाश्रयैः=कारणाश्रयैः । निरंशस्वप्रकाशस्यापि तस्यैकदेकेन ग्रहणाग्रहणे किमिति न स्याताम् ? इत्याशङ्क्यासंभवात् तथा नेत्याह—*नहि तदेवेति* ॥ *इतीति* हेतौ । यतो निरंशे स्वयंप्रकाशे प्रत्यगात्मनि अधिष्ठानसामान्यांश-विशेषांशयोरभावादध्यासकारणीभूताधिष्ठानसामान्यज्ञान-विशेषाज्ञानयोरभावः ; अतो न स्वयंप्रकाशपक्षेऽध्यास इत्यर्थः । स्वयंप्रकाशपक्ष इत्येतद् निरंशपक्ष इत्यस्याप्युपलक्षणम् । यत एव स्वप्रकाशत्वमत एव विषयत्वमपि न ; स्वव्यवहारे संविदन्तरानपेक्षत्वस्यैव स्वप्रकाशत्वशब्दार्थत्वेन स्वविषयत्वस्य स्वप्रकाशत्वशब्दार्थत्वाभावाद् विषयत्वाभावाच्चाध्यासाभावः । अधिष्ठानाध्यस्यमानयोरेकज्ञानविषयताया अवश्यवाच्यत्वेन तदभावे तदभाव इति पूर्वमेवोक्तत्वादिति द्रष्टव्यम् । तदेतदाह—*सदातनेऽप्यप्रकाश इति* ॥ प्रकाशाविषय इत्यर्थः । अपुरोऽवस्थितत्वेऽप्यध्यासमाशङ्क्य,

### पञ्चपादिका

यतः—*सर्वो हि पुरोऽवस्थिते विषये विषयान्तरमध्यस्यति ; युष्मत्प्रत्ययापेतस्य च प्रत्यगात्मनोऽ-

### तत्त्वदीपनम्

काऽऽरोपे ऐन्द्रियकस्यैवाधिष्ठानत्वमित्याह—*पुरोऽवस्थित इति* ॥ गगने रूपाद्यारोपदर्शनादैन्द्रियकत्वमप्रयोजकम्, विषयत्वं त्वारोपानुपपत्त्याऽपि कल्प्यत इत्याशङ्क्य, विषयत्वमिदन्तया प्रथमं स्यात्, तच्च नेहेत्याह—*युष्मत्प्रत्य-

### भाष्यभावप्रकाशिका

नामैक्यप्रतीत्ययोगेऽपि तदध्यासयोग्यतया कल्प्यतामधिष्ठानाधिष्ठेयत्वमित्याशङ्क्याह—*सर्वो हीति* ॥ आरोप्येण तुल्येन्द्रियग्राह्यत्वमधिष्ठानस्य दृष्टम्, इह तदभावान्नाध्यास इत्यर्थः ॥ तर्हि प्रत्यगात्मन्यध्यासदृष्टेर्विषयत्वमपीष्टमित्याशङ्क्याह—*युष्मदिति* ॥ प्रत्यक्त्वादात्मत्वाच्चास्याविषयत्वम् ; अन्यथेदंप्रत्ययविषयत्वापातात्, अपसिद्धान्ताच्च । तस्मात्तस्मिन्नध्यासो दृष्टो विश्लिष्टः, न भवतीत्यर्थः ॥ अनात्म-

### वार्तिकम्

इतोऽधिकस्य पक्षान्तरस्यासंभवात् । तत्र प्रथमपक्षस्यातितुच्छतया बहिर्निरासपूर्वकं द्वितीय-तृतीय-चतुर्थपक्षाणाम्—*"न तावदयमेकान्तेनाविषयः ; अस्मत्प्रत्ययविषयत्वादि"ति भाष्येण निरासः क्रियते ।

### प्रदीपः

इति भावः । *ननु*—शुद्धचैतन्यमविद्यावृतमपि स्वप्रकाशत्वात् प्रकाशमानमपि वर्तते, ततश्चेदं रजतमित्यादाविवाधिष्ठानेन्द्रियसम्प्रयोगानपेक्षेत्यत आह—*सर्वोऽहि पुरोऽवस्थित इति* ॥ आरोप्याधिष्ठानयोरेकेन्द्रियग्राह्यत्वनियमोऽपि शुक्तिरजतादौ दृष्टः ; 'इदं रजतं पश्यामी'त्यनुभवात्, आत्मान्तःकरणयोरपि तन्नियमपरिपालनार्थमधिष्ठानेन्द्रियसम्प्रयोगोऽपेक्षित इति तदभावान्नात्मनि विषय-तद्धर्माध्याससंभव इति भावः । *ननु* अस्तु तर्हि चैतन्यस्यापीन्द्रियसम्प्रयोगजन्यज्ञानविषयत्वमित्यत आह—

### भामती

पुरःस्थितायां रजतमध्यस्यति—'इदं रजतमि'ति। तस्मादत्यन्तग्रहेऽत्यन्ताग्रहे च नाध्यास इति सिद्धम् ॥ *स्यादेतत्*—अविषयत्वे हि चिदात्मनो नाध्यासः, विषय एव तु चिदात्माऽस्मत्प्रत्ययस्य, तत्कथं नाध्यास इति ? अत आह—*युष्मत्प्रत्ययापेतस्य च प्रत्यगात्मनोऽविषयत्वं ब्रवीषि*। विषयत्वे हि चिदात्मनः, अन्यो विषयी भवेत्। तथाच यो विषयी, स एव चिदात्मा। विषयस्तु ततोऽन्यो युष्मत्प्रत्ययगोचरोऽभ्युपेयः। तस्मादनात्मत्वप्रसङ्गादनवस्थापरिहाराय युष्मत्प्रत्ययापेतत्वम्, अत एवाविषयत्वमात्मनो

### ऋजुप्रकाशिका

शुक्तौ तथाऽदर्शनाद् नेत्याह—*नहि शुक्ताविति* ॥ उपसंहरति—*तस्मादिति* ॥ अत्यन्तग्रहे विशेषाग्रहणमध्यासकारणं नास्ति, अत्यन्ताग्रहेऽधिष्ठानसामान्यग्रहणमध्यासकारणं नास्तीति नाध्यास इति सिद्धमित्यर्थः। पुनरप्यध्यासयोगं शङ्कते—*स्यादेतदिति* ॥ विषयत्वे प्रत्यगात्मनोऽनात्मत्वप्रसङ्गादविषयत्वमकामेनापि वाच्यम्; तस्मादध्यासायोग इत्यभिप्रेत्याह—*अत आहेति* ॥ अविषयत्वं ब्रवीषीत्युक्तम्, तत् स्पष्टयति—*विषयत्वे हीत्यादिना* ॥ *ततोऽन्यः = चिदात्मनोऽन्यः। *युष्मत्प्रत्ययगोचरः = चैतन्यभास्यः। अत्र चैतन्यभास्यत्वं युष्मत्प्रत्ययगोचरशब्देन विवक्षितम्। तस्मात् चैतन्यभास्यत्वादनात्मत्वप्रसङ्गात्, यो विषयः, स चैतन्यभास्यः, सोऽनात्मेति व्याप्तेरित्यर्थः। तथाच विषयत्वे युष्मत्प्रत्ययविषयत्वलक्षणं चैतन्यभास्यत्वं वाच्यम्। तस्य चैतन्यभास्यस्य विषयस्य विषयिसापेक्षत्वे ततोऽन्यो विषयी वाच्यः। तस्यापि विषयत्व उच्यमाने तस्यापि विषयिसापेक्षत्वात् ततोऽन्यो विषयी वाच्यः; एवं तस्य तस्यापीत्यनवस्थाप्रसङ्गे, तत्परिहाराय युष्मत्प्रत्ययापेतत्वलक्षणं युष्मत्प्रत्ययाविषयत्वम्, तत एवाविषयत्वं च चिदात्मनोऽवश्यं वाच्यम्। अतो न तत्राध्यास इत्यर्थः। उत्तरभाष्यमुक्ताक्षेपपरिहारत्वेन योजयति—

### भाष्यभावप्रकाशिका

विशेषारोपे तद्विशेषान्तरस्याधिष्ठानत्वेऽपि तन्मात्रारोपे चिदात्मैवाधिष्ठानमित्याह—*उच्यत इति* ॥

### वार्तिकम्

*"अपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धे"*रिति भाष्येण पञ्चमपक्षस्य, *"नचायमस्ति नियमः"* इत्यादिभाष्येण च षष्ठपक्षस्य। तदिदं सर्वं यथास्थानं व्याकरिष्यामः। तत्र न तावत्प्रथमः कल्पः; स्फूर्त्यकर्मणोऽपि परोक्षभ्रमाधिष्ठानत्वदर्शनात्। *एतेन*—तद्योग्यताऽपि—*प्रत्याख्याता*; तदयोग्यस्याऽपि नित्यपरोक्षस्य परमाण्वादेस्तत्त्वात्। अथ स्फूर्त्यकर्मत्वमित्यनेन स्फूर्त्यविषयत्वं विवक्षितम्, तथाच परोक्षभ्रमस्थले न व्यभिचारः; तत्राधिष्ठानस्य तदकर्मत्वेऽपि तद्विषयत्वसत्त्वात्। यदि ब्रूयात्—स्फूर्त्यभेदो हि स्फूर्तिविषयत्वम्, नान्यत्; अनिरूपणात्, नच परोक्षस्थले तस्या विषयाभेदः संभवति; अन्तःकरणस्य विषयसंबन्धासत्त्वेन तद्घटकोपाधेरभावात्। अतो लिङ्गादिद्वारा परम्परयौपचारिकमेव तत्र तद्विषयत्वम्, न साक्षात्; तादृशसाधारणस्फूर्तिविषयत्वविवक्षायां चात्मन्यपि तत्सत्त्वादसिद्धो हेतुः स्यात्, अतस्तद्विषयत्वकर्मत्वयोः समव्याप्तत्वेन व्यभिचारावश्यकत्वादुक्तविवक्षा व्यर्थेति। तर्ह्यपरोक्षभ्रमस्थल एवाधिष्ठानस्य स्फूर्तिकर्मत्वनियमात्तदभावेनात्मनोऽपरोक्षभ्रमानधिष्ठानत्वस्यैव साधनान्न व्यभिचार इति चेत्, न; तथाऽप्यावश्यकत्वादनुगमाच्चान्तःकरणवृत्तिविषयत्वस्य, तत्प्रयुक्तव्यवहारविषयत्वस्य वाऽन्तःकरणविषयत्वस्यैव वा सर्वत्र भ्रमाधिष्ठानत्वप्रयोजकत्वात्स्फूर्तिकर्मत्वस्य च वैपरीत्यादप्रयोजकत्वेन नियमासिद्धेः। *ननु*—एवमप्यात्मन्यध्यासाधिष्ठानत्वं न संभवति; उक्तत्रितयविषयत्वस्यापि तत्रासिद्धेः, "यतो वाचो निवर्तन्ते, अप्राप्य मनसा सहे"ति श्रुतेरिति—चेत्, *न*; तद्विषय-

*उच्यते*—न तावदयमेकान्तेनाविषयः ; अस्मत्प्रत्ययविषयत्वात् ॥

### भामती

वक्तव्यम्, तथाच नाध्यास इत्यर्थः । परिहरति—*उच्यते—न तावदयमेकान्तेनाविषयः* ॥ कुतः ? अस्मत्प्रत्ययविषयत्वात् । *अयमर्थः*—सत्यं प्रत्यगात्मा स्वयंप्रकाशत्वादविषयोऽनंशश्च ; तथाप्य-

### ऋजुविवरणम्

*परिहरतीत्यादिना* ॥ *ननु* उक्तं चिदात्मनः स्वयंप्रकाशत्वाद्विषयत्वमेव नास्तीति कुतोऽस्मत्प्रत्यय-विषयत्वम् ? अनंशत्वाच्च सामान्यांशग्रहणं विशेषांशाग्रहणं च नास्तीति, तत्राह—*अयमर्थ इत्यादिना* ॥

### पञ्चपादिका

विषयत्वं ब्रवीषि* ॥ नह्यविषयेऽध्यासो दृष्टपूर्वः सम्भवी वा, *उच्यते*—*न तावदयमेकान्तेना-विषयः ; अस्मत्प्रत्ययविषयत्वात्* ॥

### पञ्चपादिकाविवरणम्

विषयतयाऽवभास इति विशेषणायोगात्, इति मन्वानः परिहरति—*न तावदयमेकान्तेनाविषय इति* ॥

### ऋजुविवरणम्

न युक्तं चोद्यम् ; न ह्यस्मत्प्रत्ययविषयत्वेनेदन्तया प्रतीयमानत्वलक्षणं विषयत्वं भवति ; 'मामि'ति तु भवेत्, अथ

### तत्त्वदीपनम्

येति* ॥ आत्मनो विषयत्वाभिधानं सिद्धान्तविरुद्धं चेत्याह—*ब्रवीषीति* ॥ अविषयेऽपि संवेदने क्षणिकत्वा-द्यारोपो दृष्ट इत्याशङ्क्य दृष्टान्तोऽसंप्रतिपन्न इत्याशयेनाह—*ह्रीति* ॥ न केवलमदर्शनमेव, अपि त्वसंभव-श्चेत्याह—*संभवी चेति* ॥

एकान्तेनाविषयो नेति वदता सुषुप्तिव्यावृत्तिमात्रमात्मनोऽभ्युपगतम्, तत्र कर्मत्वाभावे कथमधिष्ठानत्वम् ? इत्याशङ्क्याह—*तत्रेति* ॥ अधिष्ठानारोप्ययोरेकबुद्धिस्फुरणे सति कर्मत्वाभावापराधेनाध्यासाभावानुपलब्धेः

### भाष्यभावप्रकाशिका

विरुद्धयोर्वस्तुनोरधिष्ठानाधिष्ठेयत्वायोगेऽपि कल्पनया तत्सिद्धिरिति भावः । यत्त्वेकज्ञानाविषयत्वा-न्नाधिष्ठानाधिष्ठेयतेति, तत्राह—*न तावदिति* ॥ एकस्मिन्विज्ञाने तयोर्भानमात्रमारोपेऽपेक्ष्यते, विषयतया भाने केवलव्यतिरेकाभावात्, आत्मनः स्वप्रकाशत्वादनात्मनस्तद्विषयत्वाद् द्वयोरपि तयोर्मनु-

### वार्तिकम्

त्वद्यात्मन्यपि कथञ्चिद् घटयितुं शक्यत्वादित्याह—*न तावदयमेकान्तेनाविषयः ; अस्मत्प्रत्यय-विषयत्वादिति* ॥ अयमपरोक्षीभूतः प्रत्यगात्मा स्फूर्त्यविषयोऽपि न सर्वात्मनाऽविषयः ; कुतः ? अस्मत्प्रत्ययविषयत्वात् । अस्मच्चासौ प्रत्ययश्चेत्यस्मत्प्रत्ययः, तद्विषयत्वात् । अत्र यदा प्रत्ययशब्दो

### प्रदीपः

*युष्मत्प्रत्ययापेतस्येति* ॥ यद् दृश्यं तदेवेन्द्रियग्राह्यम्, चैतन्यन्तु न तादृशमिति नेन्द्रियग्राह्यमिति भावः ॥ आत्मन्यध्यास-संभावनां प्रतिजानीते—*उच्यत इति* ॥ अध्यासं प्रति सत्यमधिष्ठानज्ञानमपेक्ष्यते, नत्वारोप्याधिष्ठानयोरेकजातीयज्ञानमपेक्ष्यते। तथाचं स्वयं प्रकाशमानस्य चैतन्यस्य स्वतोऽन्तःकरणस्य च वृत्त्यभिव्यक्तचैतन्यभास्यत्वेऽप्यध्यासो न विरुद्धः । स्वतो भासमानमधि-ष्ठानात्मकमेव चैतन्यमहमाकारवृत्त्यभिव्यक्तमपीत्युभयोरप्येकज्ञानविषयत्वं न क्षतम्, यथेदमाकारवृत्त्यभिव्यक्तं रजताकारवृत्त्यभिव्यक्तं च चैतन्यमेकमिति भावः । अत्रान्तःकरणमिव तदाकारवृत्तिरप्याविद्यकैव, अथवाऽन्तःकरणपरिणामरूपेत्यन्यदेतत् । शुद्धचैतन्यं

**भामती**

निर्वचनीयानाद्यविद्यापरिकल्पितबुद्धि-मनः-सूक्ष्म-स्थूल-शरीरेन्द्रियावच्छेदेनानवच्छिन्नोऽपि वस्तुतोऽवच्छिन्न इव, अभिन्नोऽपि भिन्न इव, अकर्ताऽपि कर्तेव, अभोक्ताऽपि भोक्तेव, अविषयोऽप्यस्मत्प्रत्ययविषय इव जीवभावमापन्नोऽवभासते ; नभ इव घट-मणिक-मल्लिकाद्यवच्छेदभेदेन भिन्नमिवानेकविधधर्मक-

**ऋजुप्रकाशिका**

*अस्मत्प्रत्ययविषय इव जीवभावमापन्नोऽवभासत इति* ॥ तथाच वस्तुतोऽनवच्छिन्नस्य चिदात्मनो निरुक्तोपाध्यवच्छिन्नत्वेन जीवभावो दुरपह्नवः। चिदात्मनो वस्तुतोऽविषयस्याप्यसत्प्रत्ययविषयत्वं च कल्पिततयाऽनुभूयमानं दुरपह्नवमिति भावः। तथाचाध्याससंभव इति भावः। अतथाभूतस्याऽप्यवच्छेदकभेदेन तथा भाने दृष्टान्तमाह—*नभ इवेति* ॥ यदुक्तं स्वप्रकाशेऽनंशे चिदात्मनि गृह्यमाणेऽगृहीतं

**भाष्यभावप्रकाशिका**

प्योऽहमित्यादिधीवशादन्योन्याध्यासः सिद्ध्यतीत्यर्थः ॥ नियमेनाविषयत्वाभावे कुतः स्वप्रकाशत्वम् ? तत्राह—*अस्मदिति* ॥ अस्मदर्थश्चिदात्मा साक्षितया प्रतीयते प्रतिबिम्बतेऽस्मिन्नित्यस्मत्प्रत्ययः,

**वार्तिकम्**

भावसाधनः—प्रतीतिः प्रत्यय इति, तदाऽस्मत्प्रत्ययोऽहमाकारवृत्तिः। यदा करणसाधनः—प्रतीयतेऽनेनेति, तदाऽहमित्यभिलापस्तत्फलम्। यदा—प्रत्येतीति कर्तृसाधनः, तदाऽन्तःकरणमभिधीयते। सर्वमत्र श्रुत्यर्थाभ्यां विवक्षितं भवति। तत्राहमाकारान्तःकरणवृत्तिर्द्विधा—एका तावत् 'तत्त्वमस्या'दिवाक्यजन्या निष्कृष्टाहङ्कारशुद्धचिन्मात्रविषया जीवन्मुक्तानाम्, अन्या तु चिदाभासविशिष्टाहङ्कारविषया संसारिणाम्। इयञ्च यद्यपि साक्षान्नात्मविषया ; तथाऽप्यप्पात्रमिवादित्यविषयम्, आदर्श इव मुखविषयश्चिदाभासद्वारा तद्विषया भवति ; अन्यथा तद्विषय आत्मव्यवहारानुपपत्तेः ॥

*ननु*—अहङ्कारस्याध्यासिकत्वेनाविद्यावृत्त्या सहोत्पन्नत्वादात्माश्रयापत्तेश्च कथं तदाकाराऽन्तःकरणवृत्तिरुपपद्यतामिति ? *नैष दोषः* ; आकाशभावापन्नाया अविद्याया वायुकार्यत्ववद् लिङ्गभावापन्नाविद्याया एव वृत्तिविशिष्टाहङ्कारकार्यत्वात्, लिङ्गस्य चान्तःकरणत्वात्तदाकारान्तःकरणवृत्त्यभ्युपगमस्याविरुद्धत्वात्। अत एव नात्माश्रयोऽपि ; कार्य-कारणयोर्भेदात्। इदमेवाभिप्रेत्य साङ्ख्याचार्यैरुक्तम्—"प्रकृतेर्महान् महतोऽहङ्कारः" इति। नच—एवं सति शुक्तिरजताध्यासोऽपि लिङ्गभावापन्नाविद्यापरिणामः स्यादिति—वाच्यम् ; शुक्तिविशेषांशेन सह लिङ्गसम्बन्धाभावात्तस्य तत्परिणामत्वानुपपत्तेः, दृष्टिसृष्टिपक्षमादायाहङ्कारवत् शुक्तेरपि तत्परिणामतया सम्बन्धापादने चेष्टापत्तेः। नचैवमपसिद्धान्तः ; प्रणवभाष्ये लिङ्गादिवद् जाग्रत्प्रपञ्चोत्पत्तेरुक्तत्वात्। सर्वथाऽप्यहङ्कारस्याध्यासिकत्वेऽप्यन्तःकरणवृत्तिविषयत्वमविरुद्धम् ॥

तथा तज्जन्याहमित्यभिलापोऽपि द्विविधः—एकः शुद्धात्मविषयोऽनुभविनाम्, अन्यः सर्वेषां चिदाभासविशिष्टाहङ्कारविषयः, परन्तु प्रथमो लक्षणया, द्वितीयः शक्त्येति भेदः। अत एव—"अहं ब्रह्मास्मी"त्यनुभववाक्य उपदेशवाक्यवल्लक्षणाऽऽश्रीयते। एतदुभयविधाभिलापस्य वृत्तेरिवात्मा विषयः ; ज्ञान-तत्फलाभिलापयोः समानविषयत्वनियमात्। *एतेन*—"यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह" इति

**प्रदीपः**

चेदं साक्षिरूपमिति नाज्ञानविषयत्वविरोधः ॥ अन्तःकरणवृत्त्युपहितमध्यस्तं चैतन्यमेव शबलितं साक्षीति न दोषः। *एतेन*—अद्वैतमते शुद्धचैतन्यस्यैव साक्षित्वात् तस्य चाज्ञानविरोधित्वात् कथं तस्यावरणमिति शङ्काऽपि—*परास्ता* ॥ *न तावदिति* ॥

भामती

मिवेति। नहि चिदेकरसस्यात्मनश्चिदंशो गृहीतेऽगृहीतं किंचिदस्ति। न खल्वानन्द-नित्यत्व-विभुत्वादयोऽस्य चिद्रूपाद्वस्तुतो भिद्यन्ते, येन तद्ग्रहे न गृह्येरन्; गृहीता एव तु कल्पितेन भेदेन

ऋजुप्रकाशिका

किञ्चिन्नास्तीति, तदङ्गीकरोति—*नहि चिदेकरसस्यात्मन इति* ॥ *ननु* चिदेकरसस्यात्मनश्चिदंशे गृह्यमाणेऽपि तस्यानन्दत्व-नित्यत्व-विभुत्वादयो न गृह्यन्ते, अतोऽगृहीतं किञ्चिन्नास्तीति कथमुक्तम्? इत्यत आह—*न खल्वानन्देति* ॥ *अस्य* चिदात्मनः। *गृहीता एवेति* ॥ आनन्दत्वादयो गृहीता एव।

भाष्यभावप्रकाशिका

अहङ्कारः, तत्संबन्धाल्लब्धपरिच्छेदः सन्नात्मा स्वरूपस्फुरणेन स्फुरन्नपि तद्विषयो निरुच्यते। ततोऽस्य शून्यवदत्यन्ताविषयत्वाभावेऽपि नास्वप्रकाशतेत्यर्थः ॥ अध्यासेऽस्मत्प्रत्ययविषयत्वम्, सति तस्मिन्नध्यास

वार्तिकम्

श्रुतेः कथमात्मनो वाङ्मनसविषयत्वमिति—*निरस्तम्; शक्तीन्द्रियाभ्यामेव तयोस्तद्गोचरत्वनिषेधात्। अन्यथा "तन्त्वौपनिषदम्" "मनसैवानुद्रष्टव्यम्" इत्यादिश्रुतिविरोधापत्तेः। एतेनान्तःकरणविषयत्वमप्यात्मनः सिद्धं भवति; आलोकस्येव रूपिद्रव्येण, राहोरिव चन्द्रमसाऽन्तःकरणेनात्मनः स्पष्टतयाऽवभासनात्। यथा ह्याकाशस्थितः सूर्यालोकोऽस्पष्टः सन् व्यवहारायोग्योऽपि रूपिद्रव्यं प्राप्य तत् प्रकाशयन् स्वयमपि तेन स्पष्टीभवन् व्यवहारगोचरो भवति; यथा वा राहुः स्वयमदृश्योऽपि दृश्यं चन्द्रमसमासाद्यंस्तद्योगात्तेन दृश्यो भवति; एवमनुभवस्वरूप आत्मा स्वयं निर्विकल्पतया व्यवहारायोग्योऽपि स्वयंप्रकाशतयाऽदृश्योऽप्यविद्यया स्वाध्यस्तान्तःकरणं प्रकाशयन् तेन व्यवहारयोग्य इव दृश्य इवावभासत इति। तथा चोक्तं वसिष्ठेन—'अदृश्यो दृश्यते राहुः, गृहीतेनेन्दुना यथा। तथाऽनुभवमात्रात्मा दृश्येनात्माऽवलोक्यते॥" इति। कथम्? इत्थम्—यथा 'घटः' इत्यनुभवे घटे विशेषणतया भासमानं सद् घटत्वं निर्विकल्पगोचरमपि घटव्यक्तिं विकल्पयत् व्यवहारगोचरं करोति, तद्वत्—'अहमि'त्यनुभवे विशेषणतया भासमानमन्तःकरणं स्वविशेष्यं निर्विकल्पकमात्मचैतन्यं विकल्पयद्विशिष्टव्यवहारगोचरं करोति; अत्र विशेषणतया भासमानस्याहन्त्वस्यैवान्तःकरणत्वात् तस्यैव तत्राध्यस्ततया तद्रूपेण भासनात्। *ननु*—घटस्य घटत्ववदहन्त्वमात्मनो धर्म एव, स च जातिरुपाधिर्वेत्यन्यत्, नान्तःकरणमहन्त्वम्; प्रमाणाभावादिति—चेत्, *न*; आत्मनो निर्धर्मत्वस्य सर्वोपनिषत्सिद्धत्वात्तद्विरोधेन त्वत्कल्पनाया एव निष्प्रामाणिकत्वात्। अभ्युपेत्याप्यात्मनो धर्मवत्त्वं दूषणं ब्रूमः। *तथाहि*—अहन्त्वस्य जातित्वे किन्तदात्मत्वमेव? किं वा ततो भिन्नमिति? नाद्यः; तथा सति सर्वात्मसु सर्वेषाम्—'अहमि'ति तत्प्रतीत्यभिलापप्रसङ्गः, 'द्रव्यमित्यात्मे'ति च प्रतीत्यभिलापवत्। न च परात्मनि कस्यापि तौ स्तः। नच—परात्माऽऽत्मैव न भवतीति—वाच्यम्; तथा सति तत्रात्मेति व्यवहारोऽपि न स्यात्। नच—तत्र भ्रान्तोऽयं व्यवहार इति—वाच्यम्; एवं सत्यात्मत्वजातेरेवोच्छेदात्, अनेकव्यक्तिवृत्तित्वाभावात्। तथाच तदभिन्नतयाऽहन्त्वस्य जातित्वं न समर्थितं स्यात्। *अथ*—सर्वत्राहन्त्वसत्त्वेऽपि स्वात्मन्येवापरोक्षतया तत्प्रतीतिः, न परात्मसु, तेषामयोग्यत्वादिति—चेत्; *न*; अपरोक्षप्रतीतेरसंभव आकाशादौ द्रव्यत्वादिप्रतीतिवत् परोक्षप्रतीतेराव-

प्रदीपः

*अयम्=प्रत्यगात्मा। *एकान्तेन*=नियमेन। *नाविषयः=नाप्रकाशमानः। प्रत्यगात्माऽविषय एवेति न नियमः, किन्तु कदाचन विषयः कदाचनाविषयश्चेति भावः॥ अहंकारसम्बन्धात्तदुपहितत्वेन प्रत्यगात्मा विषय इति यावत्। *ननु

### भामती

किन्त्वविवेचिता इवाभान्ति । नचात्मनो बुद्ध्यादिभ्यो भेदस्तात्त्विकः, येन चिदात्मनि गृह्यमाणे सोऽपि गृहीतो भवेत् ; बुद्ध्यादीनामनिर्वाच्यत्वेन तद्भेदस्याऽप्यनिर्वचनीयत्वात् । तस्माच्चिदात्मनः स्वयं-

### ऋजुप्रकाशिका

विशेषांशाग्रहणाभावादध्यासायोग इत्युक्तम्, तत्राह—*किन्त्विति* । *अविवेचिता इवाऽऽभान्ति* ॥ विवेचिता इव न भान्ति । तथाच निरंशेऽपि चिदात्मनि कल्पितांशभेदसत्त्वात् चिद्रूपेण भानाद् अधिष्ठान-सामान्यज्ञानम्, आनन्दस्य भानेऽपि तस्यापरिच्छिन्नत्वादिविशेषाभानाद् विशेषांशाज्ञानं चाध्यासकारणम-स्तीत्यध्याससंभव इति भावः । *ननु* चिदात्मनि कर्तृत्व-भोक्तृत्वादिकं वस्तुतोऽविद्यमानमपि मनो-बुद्ध्यादि-गतं भासत इत्युक्तम्, तत् कथम् ? चिदात्मनि भासमाने तत्र मनो-बुद्ध्यादिभेदस्याऽपि भासमानतया बुद्ध्यादिगतकर्तृत्वादिभानायोगादित्यत आह—*नचात्मन इत्यादिना* ॥ *सोऽपि=बुद्ध्यादिभेदोऽपि* । कथं बुद्ध्यादिभेदस्य तात्त्विकत्वाभावः ? तत्राह—*बुद्ध्यादीनामिति* ॥ उपसंहरति—*तस्मादिति* ॥

### वार्तिकम्

श्यकत्वात् । नचैवमस्त्विति वाच्यम् ; तथा सति—'आकाशो द्रव्यमि'तिवत् परात्मनि—अहं जानामि करोमी'त्यादिप्रयोगापत्तेः । स च बाधित एव । किञ्च यद्यात्मत्वापरनामधेयमहन्त्वं जातिः स्यात्, तदा योग्यद्रव्यवृत्तिकेवलापरजातेर्योग्यवृत्तित्वात्, अन्यथा घटत्वादेरपि तथात्वप्रसङ्गात्, सर्वात्मनां योग्यजाति-तया घटादिवदेव सर्वसाधारणाहमित्यपरोक्षप्रतीतिगोचरतापत्तिः । तथा चात्मत्वजातिमभ्युपेत्यात्मभेदः साधु समर्थितः स्यात् । *एतेन*—एतद्घटत्व-तद्घटत्वादिवत्स्वकर्मारब्धदेहेन्द्रियविशिष्टात्मत्वमेवाहन्त्वम्, तस्य च प्रत्यात्मं भिन्नतया साधारणत्वान्न सर्वेषां सर्वात्मसु साधारण्येन तत्प्रतीतिरिति—*अपास्तम्* ; आत्मत्वजातेरेवोक्तरीत्याऽसंभावितत्वेन तद्विशेषणासिद्धेः । सत्ताभेदादपि तदसंभवः ; तात्पर्येण सर्वश्रुतिषु तदैक्यप्रतिपादनात् । तथाऽप्यभ्युपेत्य ब्रूमः—नहि देहादिसंबन्धोऽपि प्रत्यात्मासाधारणः, येन तद्विशेषितत्वादहन्त्वव्यवस्था स्यात् ; तदनिरूपणात् । तथाहि—कस्तावद् देहादेः प्रत्यात्मसंबन्धः ? न तावत्संयोगः ; तस्य सर्वसाधारणत्वात्, सर्वात्मनां विभुत्वाभ्युपगमात्, सर्वमूर्तसंयोगित्वस्य च तत्त्वात् । नापि समवायः ; आत्मनोऽस्पर्शतया द्रव्यानारम्भकत्वाभ्युपगमेन तत्समवायित्वानुपपत्तेः । नापि स्व-स्वामिभावः ; भृत्यादिदेहसाधारण्यात्, स्वत्वानिरूपणाच्च । स्वादृष्टारब्धत्वं तदिति चेत्, न ; अन्योन्याश्रयात्—देहादिषु स्वत्वसिद्धौ तदाधारक्रियाजन्यादृष्टे स्वत्वसिद्धिः, तत्स्वत्वसिद्धौ च तज्जन्य-देहादौ स्वत्वसिद्धिरिति । बीजाङ्कुरवदनादित्वादयमदोष इति चेत्, न ; अन्धपरम्परात्वप्रसङ्गात्, बीजाङ्कुरादौ दृष्टत्वेन तथात्वाभावात्, प्रकृते चेदानीमेव तस्य कल्प्यत्वात् । तस्मादुक्तरीत्याऽदृष्टदेहादेरसा-धारण्यानिरूपणात् तत्सिद्ध्यर्थं शुक्तिरजतादाविव तस्मिन्नाध्यासिक एव संबन्धो वाच्यः । तथाचाध्यासिक-देहादिसंबन्धघटितत्वात् काल्पनिकमेवात्मन्यहन्त्वं स्यात् । एवं च सत्यस्मदिष्टसिद्धिः । *एतेन*—अहन्त्वमा-त्मत्वजातेर्भिन्नं जात्यन्तरमिति पक्षोऽपि--*अपास्तः* ; पूर्ववत् सर्वात्मसु सर्वेषां तत्प्रतीत्यभिलापप्रसङ्गान-तिवृत्तेः, आत्मत्वादिना परापरभावानुपपत्तेश्च । तथाहि—आत्मत्वजातेर्घटत्वादिवदपरसामान्यत्वेनाभ्युपगमा-त्तद्व्याप्यसामान्याभ्युपगमानुपपत्तेरसंभवाच्च तद्व्यापकं वाच्यम्, नच तदपि संभवति ; अनात्मनोऽप्यहन्त्व-प्रसङ्गात् । आत्मत्वस्य द्रव्यविभाजकोपाधित्वात्तदन्तराले सामान्यान्तरप्रवेशानुपपत्तेश्च । अस्तु तर्ह्यु-पाधिरेवाहन्त्वमिति चेत्, न ; तस्याप्यनिरूपणात् । ज्ञानाश्रयत्वस्य तत्त्वात्कुतस्तदनिरूपणमिति चेत्,

## भामती

प्रकाशस्यैवानवच्छिन्नस्यावच्छिन्नेभ्यो बुद्ध्यादिभ्यो भेदाग्रहात् तदध्यासेन जीवभाव इति। तस्य चानिदमिदमात्मनोऽस्मत्प्रत्ययविषयत्वमुपपद्यते। तथाहि—कर्ता भोक्ता चिदात्माऽहंप्रत्यये प्रत्यवभासते। न चोदासीनस्य तस्य क्रियाशक्तिर्भोगशक्तिर्वा संभवति। यस्य च बुद्ध्यादेः

## ऋजुविवरणम्

*तदध्यासेन=बुद्ध्यादितादात्म्याध्यासेन। तथाचात्मनि कर्तृत्व-भोक्तृत्वाद्यध्यासोऽपि युज्यत इति भावः। विषयत्वसत्त्वे खलूक्ताध्याससंभवः, इति तस्य विषयत्वमप्युक्तमुपसंहरति—*तस्य चेति* ॥ चिदात्मनश्चेत्यर्थः। *उपपद्यत इति* ॥ उक्तविधयेति भावः। आत्मन्यन्तःकरण-बुद्धि-देहेन्द्रियादितादात्म्याध्यासादन्तःकरणादिधर्मः कर्तृत्व-भोक्तृत्वादिरात्मन्यध्यस्यत इत्येतदुक्तप्रायमपि समाधानं पुनः स्पष्टतया प्रपञ्चयति—*तथाहीत्यादिना* ॥ *प्रत्यवभासते=अहं कर्ता, अहं भोक्ता, इत्येवंरूपेण प्रत्यवभासत इत्यर्थः। तर्ह्यागतमात्मनो वास्तवं कर्तृत्वादिकमिति न तदध्यासः, इत्यत आह—*नचो-

## वार्तिकम्

न; पूर्ववत्तत्प्रतीत्यभिलापातिप्रसङ्गतादवस्थ्यात्। *ननु*—न ज्ञानाश्रयत्वमात्रमहन्त्वं ब्रूमः, येनोक्तदोषः स्यात्; किन्तर्हि? स्वप्रकाशतया विद्यमानज्ञानाश्रयत्वम्, तेन न सुषुप्तावात्मन्यहन्त्वप्रसङ्गः; तत्काले घटादिविषयकज्ञानस्यात्मन्यविद्यमानत्वात्। घटादिविज्ञानं हि यदोत्पद्यते, तदा प्रमेयादित्रितयमपरोक्षतया भासते—घटादि तत्कर्मतया, विज्ञानं स्वप्रकाशतया, आत्मा च तदाश्रयतया—घटमहं जानामीति, परोक्षज्ञानस्थलेऽपि प्रमेयस्य परोक्षत्वेऽपि ज्ञानात्मनोरुक्तरूपेणापरोक्षावभासोऽस्त्येव। अतो न तत्राप्यात्मन्यहन्त्वोल्लेखविरोधः। *एतेन*—ज्ञान-ज्ञात्रोरपि तत्कर्मतयाऽपरोक्षत्वम्, तस्य तत्कर्मत्वनियतत्वादिति—*अपास्तम्*; परोक्षज्ञानस्य कर्माजन्यत्वेन तत्र तयोरपरोक्षत्वानुभवविरोधात्। *ननु*—न विषयज्ञाने ज्ञान-ज्ञात्रोः स्वप्रकाशत्व-तदाश्रयत्वाभ्यामपरोक्षता; तत्र तयोर्भाने प्रमाणाभावात्। नच—'घटमहं जानामी'ति विषयवत्तयोस्तज्जन्याभिलाप एव तत्र भाने मानमिति—वाच्यम्; तदभिलापस्य मनोजन्यतत्त्रितयविषयकज्ञानान्तरजन्यत्वेन तदजन्यत्वात्प्रमाणत्वासिद्धेः, नच—मनसो बहिरस्वातन्त्र्यात् कथं तज्जन्यानुव्यवसाये बहिर्विषयभानमिति—वाच्यम्; व्यवसायोपनीतत्वेन तत्र तद्भानोपपत्तेः, अन्यथा ज्ञानाभेदे 'घटोऽयम्', 'घटमहं जानामि' इत्यभिलापभेदानुपपत्तेरिति—चेत्, *न*; ज्ञानप्रत्यासत्तेर्निराकृतत्वात्, बहिर्विषयकमनःसन्निकर्षाभावेन तत्त्रितयविषयकमनोजन्यज्ञानान्तरासिद्धेः। नच—ज्ञानैक्येऽभिलापभेदो न स्यादिति—वाच्यम्; तद्भेदस्य वक्तुर्व्यवजिहीर्षाभेदमात्राधीनत्वात्, तज्ज्ञानप्रकारभेदानपेक्षणात्; अन्यथा चाक्षुषघटज्ञानानन्तरं 'घटोऽयमि'त्यभिलापानुपपत्तेः, रूपादेरपि तज्ज्ञाने भासनात्। अतस्तस्मिन् ज्ञाने रूपादिभासनेऽपि यदा वक्ता घटमात्रं व्यवजिहीर्षति, तदा 'घटोऽयमि'त्यभिलपति, यदा तु रूपाद्यपि व्यवजिहीर्षति, तदा भूतले 'रूपवान् घट' इत्याद्यपि यथा; तद्वद् ज्ञान-ज्ञात्रोस्तत्र भानेऽपि यदा त्रितयं व्यवजिहीर्षति, तदा 'घटमहं जानामी'त्यभिलपति, यदा तु विषयमात्रम्, तदा 'घटोऽयमि'त्यादीति, न तद्भेदस्तद्विषयज्ञानान्तरं कल्पयितुमर्हति॥ नच—ज्ञान-ज्ञात्रोरपि मनोजन्यापरोक्षानुभवविषयत्वं संभवति॥

*तथाहि*—न तावद् ज्ञाता तद्विषयः संभवति; एकत्र कर्तृ-कर्मविरोधात्, न चांशभेदेन तदविरोधः समर्थनीयः; विभोरंशाभावात्, तत्कल्पने वा निरंशश्रुतिव्याकोपापत्तेः, नापि सुखादि-

भामती

कारणसंघातस्य क्रिया-भोगशक्ती, न तस्य चैतन्यम्। तस्माच्चिदात्मैव कार्य-कारणसंघातेन ग्रथितो

ऋजुप्रकाशिका

*उदासीनस्येति* ॥ *तस्य आत्मनः क्रियाशक्त्यभावाद् वास्तवं भोक्तृत्वमपि न संभवतीत्यर्थः। क्रियाशक्ति-भोगशक्त्यभावे हेतुरुक्त एव—"उदासीनस्ये"त्यनेन। असङ्गोदासीनत्वं चात्मनः—"असङ्गो ह्ययं पुरुषः" इत्यादिश्रुतिसिद्धमिति द्रष्टव्यम्। *ननु* तर्ह्यन्तःकरण-बुद्ध्यादेः कार्य-कारणसङ्घातस्याचेतनत्वात् क्रिया-भोगशक्तिमतोऽपि तस्य कथं कर्तृत्व-भोक्तृत्वे ? इत्याशङ्क्य, तस्याचेतनत्वमङ्गीकरोति—*यस्य बुद्ध्यादेरिति* ॥ *कार्यकारणसङ्घातस्येति*॥ एतद् बुद्ध्यादेरित्येतस्य विशेषणम्। तस्मात् कार्य-कारणसङ्घातबुद्ध्यादितादात्म्या-ध्यासापन्नस्य जीवपदाभिलप्यस्य कर्तृत्व-भोक्तृत्वादिकमित्यभिसन्धायोपसंहरति—*तस्मादिति* ॥ तादात्म्या-

वार्तिकम्

विशिष्टाविशिष्टभेदमादाय तद्व्यवस्था ? स चाविशिष्टात्मा कर्तृत्वेन संमतोऽहंप्रत्ययगोचरो भवति ? न वा ? यद्याद्यः, तर्हि कुतः कर्तृत्वकर्मत्वव्यवस्था ? अथ द्वितीयः, तर्ह्यात्मप्रत्ययागोचरत्वात्तस्यानात्मत्वप्रसङ्गः। नचैवमस्त्विति वाच्यम्; तस्यैव स्वतन्त्रकर्तृत्वेनात्मत्वात्, अन्यथा मोक्षादौ सुखादिवैशिष्ट्याभावे-नात्माभावप्रसङ्गः। तथाचात्मविनाश एव भवतो मोक्षः स्यात्। *एतेन*—आत्मनो ज्ञानांश-द्रव्यांश-भेदेन कर्तृत्व-कर्मत्वव्यवस्थाऽपि भाट्टानां प्रत्युक्ता—*वेदितव्या* ॥ नापि ज्ञानस्य तद्विषयत्वमुपपद्यते। घटे शौक्ल्यद्वयवदेकस्मिन्नात्मनि युगपद् ज्ञानद्वयासंभवात्, गुणत्वावान्तरैकजातीयगुणद्वयस्य योग्यस्य सदाऽनवस्थाननियमात्। एकस्मिन् संयोगद्वयदर्शनान्नैवमिति चेत्, न; तस्याव्याप्यवृत्तित्वात्, अवच्छेदकभेदेन भवता देशभेदाङ्गीकारादुक्तनियमाविरोधात्। अपिच पूर्वोत्तरज्ञानयोः प्रतियोगि-तत्प्राग-भावयोरिव विरोधित्वाङ्गीकारान्न तयोः सहावस्थानम्। नच सहानवस्थितयोर्विरुद्धयोर्वा ज्ञान-तत्कर्मणो-र्विषय-विषयिभावः कुत्रचिद् दृष्टचरः; प्रत्यक्षस्य संबद्धवर्तमानविषयत्वनियमात्। तथा चाहुः—"संबद्धं वर्तमानञ्च गृह्यते चक्षुरादिना" इति। तस्मान्न ज्ञानं मनोजन्याध्यक्षगोचरः, अपि तु स्वप्रकाशमेव। अपिच यदि ज्ञान-ज्ञात्रोर्ज्ञानविषयतयैव भानम्, हन्त कदाचिन्निश्चयासंभवात् तद्विषयसंशयादिरपि स्यात्। नच कश्चिदपि कदाचिद् ज्ञान-ज्ञातृविषये सन्दिहानो विपर्यस्तो वा दृश्यते। तस्मादपि न तयोर्ज्ञानविषयत्वम्। अपिच ज्ञानं विषयप्रकाशरूपत्वात्स्वयंप्रकाशमानमेव विषयं प्रकाशयेत्; आलोके तथा नियमदर्शनात्, अन्यथा चक्षुरयोग्येनाप्यालोकेन तद्विषयप्रकाशनप्रसङ्गात्। न निलीनं सत्; स्वयमप्रकाशमानस्य विषय-प्रकाशनानुपपत्तेः। नहि स्वयमप्रकाशमानं घटादि लिङ्गादि वा घटाद्यन्तरं लिङ्ग्यादि वा प्रकाशयतीति दृष्टम्। नच चक्षुरादिषु व्यभिचारः; तेषां प्रकाशान्तरजननद्वारा विषयप्रकाशकत्वेन स्वतःप्रकाश-रूपत्वाभावात्। न चालोकेऽपि तथा; तस्य तमोनिवृत्तिमात्रे पर्यवसानात् प्रकाशान्तरजनकत्वासिद्धेः। एवंच सति ज्ञानप्रकाशनार्थं चेद् ज्ञानान्तरमभ्युपगन्तव्यम्, तर्हि तस्यापि निलीनस्य विषयप्रकाशना-संभवात्तत्प्रकाशनार्थं ज्ञानान्तरमन्वेषणीयम्, एवं तस्य तस्यापीत्यनवस्थाप्रसङ्गः। युगपद् ज्ञानधारोप-लम्भप्रसङ्गासंभवाभ्यां च। तस्मादकामेनापि ज्ञानस्वप्रकाशत्वमभ्युपगन्तव्यम्; अन्यथा जगदान्ध्यप्रसङ्गात्। तथाच स्वप्रकाशज्ञानाश्रयस्यैवात्मनोऽहन्तयाऽवभासनात्, परकीयज्ञानस्य च परास्वप्रकाशत्वात्—न परात्मनि पराहन्त्वावभासप्रसङ्ग इति चेत्, न; भवन्मते परकीयज्ञानस्य परास्वप्रकाशत्वासिद्धेः। न ह्यग्निः कञ्चित्पुरुषं प्रत्युष्णः, कञ्चित्प्रति त्वनुष्णो भवति; तथा सति सापेक्षत्वेन तत्स्वभावहान्यापत्तेः। *व्यवधानान्नेति चेत्, न*; तदसिद्धेः॥ अथैवं ब्रूषे ? न वयं परकीयं ज्ञानं परं प्रत्यस्वप्रकाशस्वरूपं

### भामती

लब्धक्रिया-भोगशक्तिः स्वयंप्रकाशोऽपि बुद्ध्यादिविषयविच्छुरणात् कथंचिदस्मत्प्रत्ययविषयोऽहंकारास्पदं जीव इति च, जन्तुरिति च, क्षेत्रज्ञ इति चाऽऽख्यायते। न खलु जीवश्चिदात्मनो भिद्यते। तथाच श्रुतिः—'अनेन जीवेनात्मना' इति। तस्माच्चिदात्मनोऽव्यतिरेकाज्जीवः स्वयंप्रकाशोऽप्यहं

### ऋजुप्रकाशिका

ध्यासो विच्छुरणशब्दार्थः। *ननु* चिदात्मन उक्ततादात्म्याध्यासमात्रेण कथं जीवपदाभिलाप्यत्वम्? तस्य ततो भेदात्, इत्यत आह—*न खल्विति*॥ उपाधिभेदाद् भिन्नोऽपि स्वरूपतो न भिद्यत इत्यर्थः। अभेदश्रुतिं प्रमाणयति—*तथाच श्रुतिरिति*॥ "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी"ति श्रुतिरित्यर्थः। फलितमाह—*तस्मादिति*॥ *अहंप्रत्ययालम्बनम्* अहंप्रत्ययविषयः। एवंच विषयत्वलाभादध्यासः

### वार्तिकम्

भवतीति ब्रूमः, येन सापेक्षत्वात्तत्स्वरूपत्वहानिर्विरुद्धस्वरूपत्वं वाऽऽपतेत्, किन्तर्हि? कुड्यादिव्यवधानाद्दीप इव देहान्तरादिव्यवधानात्तं प्रति तद्रूपेण न भातीत्येवमिति चेत्, न; देहान्तरादेस्तद्व्यवधानत्वासिद्धेः। व्यवधानं हि भवत्तज्ज्ञानोत्पत्तिप्रतिबन्धात्तत्कारणप्रतिबन्धाद्वा भवेत्, नच स्वप्रकाशे ज्ञाने तदुभयप्रतिबन्धः संभवति; तत्प्रतिबध्यस्य तदुभयस्याभावात्, स्वप्रकाशज्ञानस्य ज्ञानान्तराविषयत्वात्, अन्यथा स्वप्रकाशत्वक्षतेः, स्वतो भानस्य स्वरूपाव्यतिरेकाद् देहादिना प्रतिबन्धानुपपत्तेः, उपपत्तौ वा स्वाश्रयमात्मानं प्रत्यपि तत्प्रतिबन्धप्रसङ्गः। तथाच ज्ञानस्वप्रकाशकथैव लुप्ता स्यात्। दीपस्य तु प्रकाशो न कुड्यादिना प्रतिबध्यते, किन्तर्हि? तस्य जडप्रकाशत्वेन ज्ञानभास्यत्वात् तत्करणं चक्षुःसन्निकर्षादि प्रतिबध्यत इत्यदृष्टान्तः॥ *अपरोक्षज्ञानाविषयत्वेऽपि परोक्षज्ञानविषयत्वमस्त्येवेति चेत्*= यदि ब्रूयात्—यद्यपि स्वप्रकाशं ज्ञानं नापरोक्षज्ञानान्तरविषयः, स्वयमेवापरोक्षतया भानात्, तत्कृत्याभावात्, पूर्वोक्तरीत्या तस्मिन् तदसंभवाच्च; तथाऽपि परोक्षज्ञानविषयत्वमस्त्येव, तेन स्वप्रकाशत्वाविरोधात्। तथाच तदुत्पत्तेस्तत्कारणस्य वा प्रतिबन्धः प्रकृतेऽपि संभवतीति चेत्, न; *स्वप्रकाशज्ञानाय तत्तद्देहादेस्तज्जनितचेष्टाद्याधारत्वेन तद्गोचरपरोक्षज्ञानानुगुण्यात् तत्प्रतिबन्धकत्वानुपपत्तेः। अस्तु वा तत्प्रतिबन्धः, तथाऽप्युक्तप्रसङ्गो न परिहृतः स्यात्। परकीयज्ञानमपि परं प्रति स्वप्रकाशं स्यात्। तथाच तदाश्रयतया परात्मनोऽपि भासनात्तत्राहमुल्लेखः स्यादिति। अभ्युपेत्य देहादेर्व्यवधायकत्वमेतावदुक्तम्। वस्तुतस्तु—सर्वात्मनो विभुत्वेन सर्वत्र विद्यमानत्वात्तद्व्यवधायकत्वमपि नास्तीति। न चात्मभेदोऽपि परमार्थतोऽस्ति; तदद्वैतप्रतिपादकश्रुतिशतविरोधात्। *ननु* तव मतेऽपि ज्ञानस्वप्रकाशत्वाभ्युपगमात् परकीयं ज्ञानं परस्वप्रकाशं स्यादित्ययं प्रसङ्गस्तुल्य एवेति चेत्, न; स्वरूपचिन्मात्रस्वप्रकाशत्वसाधारण्यापादनस्येष्टत्वात्, अन्तःकरणवृत्तिविशिष्टचित्प्रकाशस्य चाऽध्यस्तत्वेन शुक्तिरजतवत् स्वप्नप्राप्तराज्याभिषेकवच्चासाधारण्यात् साधारण्यापादनानुपपत्तेरस्मन्मते तददोषत्वात्। यथाच स्वप्रकाशविषयज्ञानाश्रयतया नात्मनो भानम्, किन्तर्हि? ज्ञानैकरूपत्वेन स्वप्रकाशतया, तथा वक्ष्यामः। तस्मान्न स्वप्रकाशज्ञानाश्रयत्वमप्यहन्त्वम्, किन्तु शुक्तिरजतादिवदसाधारण्यादाध्यासिक एव कश्चिद्धर्म आत्मनि भासते। तस्मिन् तत्सत्यत्वे तन्निरञ्जनत्वादिबोधकश्रुतिशतव्याकोपापत्तेः। स चाऽऽध्यासिको धर्मोऽन्तःकरणमित्यवोचाम। "मनोमयः" "विज्ञानमयः" "सधीः स्वप्नो भूत्वेमं लोकमनुसञ्चरति" "ध्यायतीव लेलायतीवे"त्यादिश्रुतिभ्यः, अन्यथा कूटस्थस्यात्मनः प्रमातृत्वानुपपत्तेः। अतः

### भामती

प्रत्ययेन कर्तृभोक्तृतया व्यवहारयोग्यः क्रियत इत्यहंप्रत्ययालम्बनमुच्यते । नच—अध्यासे सति विषयत्वम्, विषयत्वे चाध्यास इत्यन्योन्याश्रयत्वमिति—सांप्रतम्; वीजाङ्कुरवदनादित्वात्, पूर्वपूर्वाध्यास-तद्वासनाविषयीकृतस्योत्तरोत्तराध्यासविषयत्वाविरोधादिति, उक्तं हि—'नैसर्गिकोऽयं लोकव्यवहारः' इति भाष्यग्रन्थेन ।

### ऋजुप्रकाशिका

सुकर इति भावः। अत्र चान्योन्याश्रयमाशङ्क्य निराकरोति—*नचेति* ॥ निराकरणमेवाह—*बीजेति* ॥ प्रवाहानादित्वमनादित्वशब्दार्थः। प्रवाहानादित्वमेव स्फोरयति—*पूर्वपूर्वेति* ॥ द्वयोः परस्पराधीनत्वे ह्यन्योन्याश्रयः, अत्र चातथात्वान्नान्योन्याश्रय इति भावः। प्रवाहानादित्वमुक्तम्, तत्र भाष्यकारसम्मतिमाह—*उक्तं हीत्यादिना भाष्यग्रन्थेनेत्यन्तेन* ॥ नैसर्गिकशब्देन प्रवाहानादित्व-

### वार्तिकम्

सुख-दुःख-ज्ञानेच्छादिपरिणामाधारं मध्यमपरिमाणमात्मनः सर्वार्थसाधकं तदुपाधिभूतमाध्यासिकं प्रवाहरूपेण संसारस्थाय्यन्तःकरणमेवाहमित्यात्मप्रत्यये तद्विशेषणतयाऽहन्त्वेन रूपेण भासते, नान्यत्; प्रमाणाभावादिति सिद्धम्। ततश्चोपपन्नमात्मनस्तद्विषयत्वमिति ॥

*एतेन*—आत्मनोऽहमिति ज्ञानविषयत्वमपि—*व्याख्यातम्*, विशेष्यांशे तदविषयत्वेऽपि विशेषणांशे तद्विषयत्वात् । अत एव न कर्तृ-कर्मविरोधोऽपि ; अध्यस्तानध्यस्तांशभेदेन तद्विरोधपरिहारात् । नचैतावता निरंशत्वश्रुतिव्याकोपः ; तच्छ्रुतेरात्मनः पारमार्थिकांशाभावपरत्वेनाध्यासिकांशावारकत्वात्, अन्यथा जगदुपादानत्वबोधकश्रुतिशतव्याकोपापत्तेः ॥ *एतेन*—अहमिति द्वैरूप्यानवभासनात् सर्वत्राध्यासे द्वैरूप्यावभासस्य नियतत्वात्तद्विरोधेन कथमात्मन्यहमिति प्रतीतेराध्यासिकत्वं स्यादिति—अपास्तम्; कर्तृ-कर्मतया, बोधाबोधतया, अनुगताननुगततया च तत्रांशद्वयस्य सर्वानुभवसिद्धत्वात् । परं त्वत्राध्यस्यमानातिरेकेणे'दं-रजतमि'त्यादाविदंत्वादिवदधिष्ठानावच्छेदकाभावादधिष्ठानस्यात्मनो निर्विकल्पत्वान्न विशिष्टवैशिष्ट्यबोधः, किन्तु विशिष्टबोध इत्यन्यत्। नच—अज्ञानाश्रयचैतन्यस्याहंकाराधिष्ठानत्वात्कथं तस्य निर्विकल्पतेति—वाच्यम् ; वस्तुतस्तथात्वेऽप्यज्ञानस्य विशेषणतया तत्कोटावप्रवेशात्, अन्यथा प्रकारतयेदंत्ववद्रजताध्यासेऽहंकाराध्यासेऽज्ञानभानप्रसङ्गात्, तदुपलक्षितसाक्षिण एव निर्विकल्पस्य तदध्यासाधिष्ठानकोटावज्ञानस्य प्रवेशे चाहमज्ञ इत्यध्यासस्येष्टत्वाच्च ॥

*एतेन* साक्षिचैतन्यमपि—*व्याख्यातम्* ; वस्तुतोऽज्ञानाश्रयस्यैव तत्तत्कार्यभासकस्य साक्षित्वात् । *ननु* एवं सति जीव एव साक्षी स्यात्, नोच्चैर्वाच्यम्; श्रोष्यति परः, यत्रैकमेव चिन्मात्रं शुद्धं जीव ईश्वरश्चेत्युक्तम्, तत्र का कथा साक्षिणो जीवाभेदे? *ननु*—वस्तुतः शुद्धचिन्मात्रस्य जीवेश्वरत्वेऽप्यविद्याश्रयत्व-विषयत्वाभ्यां जीवेश्वरत्वव्यवहारभेदनियमो भवतीत्युक्तमिति—*चेत्*, सत्यम् ; अत्रापि किमविद्याश्रयत्व-तदुपलक्षितत्वाभ्यां जीवत्व-साक्षित्वव्यवहारभेदनियममपलपसि ? *एतेन*—साक्षिभेदोऽपि—प्रत्याख्यातः ; अज्ञान-सर्वतत्कार्यभासकस्यैव साक्षित्वात् । अपिच यत्र पूर्वोक्तरीत्या जीवभेद एव नास्ति, तत्र दूरत एव साक्षिभेद इति । तथाच श्रुतिः—"एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च" ॥ इत्यादिः । स्मृतिरपि सूतसंहितायाम्—"अचेतने जगत्यस्मिन् साक्षिभेदं वदन्ति ये । ते महामोहसर्पेण दष्टा एव न संशयः ॥" सुरेश्वरोऽप्याह—"चिदाभासितयैवात्मा कूटस्थोऽप्येति साक्षिताम् ।

### भामती

तस्मात् सुष्ठूक्तम्—*न तावदयमेकान्तेनाविषय इति*। जीवो हि चिदात्मतया स्वयंप्रकाशतयाऽविषयोऽप्यौपाधिकेन रूपेण विषय इति भावः।

### ऋजुप्रकाशिका

मुक्तमित्यर्थः। उपसंहारव्याजेन परिहारभाष्यं प्रस्तौति—*तस्मात् सुष्ठूक्तमित्यादिना* ॥ आत्मनश्चिद्रूपत्वेन स्वयंप्रकाशतयाऽविषयत्वस्योक्तत्वात् कथमविषयो नेत्युच्यते इत्याशङ्क्य, वस्तुतोऽविषयत्वेऽप्यौपाधिकं विषयत्वमस्त्येवेत्युक्तमेव। पुनर्दाढर्यार्थमभिप्रायतो विवृणोति—*जीवो हीति* ॥ प्रकारान्तरेणाध्यासाभावं शङ्कते—

### वार्तिकम्

आगमापायिरूपेषु स्थितोऽनेकेषु केवलः॥ दृश्यार्थवदभिन्नोऽयं द्रष्टृदर्शनसाक्ष्यपि। द्रष्टृदर्शनभेदेऽपि न भेदोऽस्य मनागपी"पीति॥

*ननु* साक्षिण एकत्वे रजताद्यध्यासस्य सर्वसाधारण्यप्रसङ्ग इति—*चेत्*, अहो देहात्मवादं गृहीत्वा भ्रान्तो भवान्। के सर्वे भवदभिप्रेताः? यत्साधारण्यं शुक्तिरजताध्यासस्यापाद्यत इति। अन्तःकरणदेशादिविशिष्टा अस्मदादयः प्रमातारः सर्वे इति चेत्, न; साक्षिमात्रप्रत्यक्षस्य रजतस्येश्वरमात्रप्रत्यक्षपदार्थवदस्मदाद्यध्यक्षगोचरत्वासंभवात्, साक्षिप्रमात्रुपाध्योर्भेदात्सर्वसाधारण्याऽऽपादनस्य दूरनिरस्तत्वात्। *अथ*—रजताध्यासस्य तदनुभवस्य च प्रमात्रनिष्ठत्वेऽपि प्रमात्रवच्छिन्नसाक्ष्यज्ञानपरिणामत्वाद् इदमाकारप्रमातृवृत्त्यभिन्नतयाऽभिव्यक्तसाक्ष्यनुभवगोचरत्वाच्चैकाध्यस्तत्वसंबन्धेन प्रमातृनिष्ठतया तद्भासनमुपपद्यते; तथाऽनुभवात्, *एवं* तर्हि यत्प्रमात्रवच्छिन्नसाक्षिणि यदध्यस्तं यत्प्रमातृवृत्त्यभिन्नतयाऽभिव्यक्तसाक्ष्यनुभवस्य तद्गोचरः, तस्यैव प्रमातुस्तदनुभवगोचरः, न सर्वेषामिति, कुतः सर्वसाधारण्यं तदध्यासानुभवयोः? नच प्रत्यन्तःकरणमवच्छेदभेदात्साक्षिभेदकल्पनम्; अवच्छेदभेदन वस्तुतो धर्मिस्वरूपभेदकल्पनेऽतिप्रसङ्गात्, अन्यथा जीवस्याप्येकत्वेनाभिमतस्यावस्थाभेदेनान्तःकरण-देहाद्यवच्छेदभेदेन च भेदापत्तेः। *ननु*—मा भूदेकजीववादे साक्षिभेदः, नानाजीववादे तु भविष्यति; तत्राज्ञानानेकत्वे तदुपलक्षितानेकत्वात्, अज्ञानोपलक्षितस्य च साक्षित्वादिति—चेत्, *न*; प्रतिजीवमज्ञानभेदेऽपि तद्विषयेश्वरैक्यवत्तदुपलक्षितसाक्ष्यैक्योपपत्तेः, अन्यथाऽज्ञानभेदेन तद्विषयभेदात्तदुपलक्षितभेदवदीश्वरभेदप्रसङ्गात्, तस्य चानिष्टत्वात्, साक्ष्यभेदप्रतिपादकोदाहृतश्रुति-स्मृतिव्याकोपाच्चेत्यास्तामयं प्रसङ्गः। प्रकृतमनुसरामः॥

तदेवमुक्तप्रकारेणाहंवृत्ति-तज्जनिताभिलापान्तःकरणविषयत्वस्यात्मनि सत्त्वात् सर्वत्र भ्रमे वृत्तिविषयत्वस्य वा तज्जनिताभिलापविषयत्वस्य वाऽन्तःकरणविषयत्वस्य वा नियतत्वेनाधिष्ठानत्वप्रयोजकत्वात् स्फुर्तिविषयत्वस्य कुत्रचित् सत्त्वव्यापकतया तदप्रयोजकत्वात् सिद्धमात्मनोऽहमिति भ्रमाधिष्ठानत्वमिति॥

*ननु*—तथापि न सिद्धमात्मनोऽधिष्ठानत्वम्, कथम्? अपरोक्षभ्रमे ह्यारोप्यापरोक्ष्यवद् अधिष्ठानाऽऽपरोक्ष्यमपि नियतम्; अन्यथा भ्रमाऽऽपरोक्ष्यानुपपत्तेः। न चात्मन आपरोक्ष्यं संभवति; कर्तृ-कर्मभावविरोधेन ज्ञानकर्मत्वस्य त्वयैवात्मनो निराकृतत्वात्। नच—ज्ञानस्वप्रकाशत्वस्य साधितत्वात् तदाश्रयतयाऽऽत्मनोऽपरोक्षत्वं भविष्यतीति—वाच्यम्; तदाश्रयत्वस्यासाधारणत्वेनाप्रयोजकत्वात्

## पञ्चपादिका

*ननु* विषयिणश्चिदात्मनः कथं विषयभावः ? पराग्भावेनेदन्तासमुल्लेख्यो हि विषयो नाम, भवति तद्वैपरीत्येन प्रत्यग्रूपेणानिदंप्रकाशो विषयी ; तत् कथमेकस्य निरंशस्य विरुद्धांशद्वयसंनिवेशः ?

## पञ्चपादिकाविवरणम्

अस्मत्प्रत्ययशब्देनात्मविषयं ज्ञानमुक्तमिति मन्वानश्चोदयति—*ननु विषयिण इति* ॥ एकस्यां प्रत्यक्षदर्शन-क्रियायामेकस्यैव कर्तृस्थाने तदैव तद्विपरीतकर्मकारकस्थाने चावस्थानमनुपपन्नमिति भावः । अस्तु तर्ह्यंशाभ्यां तद्भाव इति, नेत्याह—*तत्कथमेकस्येति* ॥ तत्र सर्वतो विप्रसृतस्य सवितृप्रकाशस्याऽऽकाशे विशेषाभि-व्यक्तिनिमित्तदर्पणादिवदात्मचैतन्यस्य सविकल्पकतया स्फुटीकरणव्यवहारनिमित्तं भास्वरद्रव्यमात्मन्यध्यस्तमन्तः-

## ऋजुविवरणम्

स्वरूपेण तयोर्विरोधः ; तथापि नात्र प्रसक्तिरित्याशङ्क्याभिप्रायमाह—*एकस्यामिति* ॥ तत्र कर्तृत्वं कर्मत्वं च भिन्नव्यक्तिगतं न विरोधि, तदर्थम् "एकस्ये"त्युक्तम् । एकस्यापि कालभेदेनाविरोधः ; तदर्थम्—'तदैवे'त्युक्तम् । *शब्दकर्मत्वम्—ज्ञानकर्तृत्वम् ; यद्वाऽऽलोककर्मत्वम्, स्वव्यापारे कर्तृत्वं घटादेः, यद्वाऽविद्याविषयत्वमन्यत्र कर्तृत्वम्, एवमक्रियाविषयवैषम्यप्रदर्शनार्थम्—'क्रियायामि'ति । अनुमाने द्वयमप्यात्मनो दृश्यते, तदर्थम्—'प्रत्यक्षदर्शने'ति । चोदितम् ; तन्न युक्तम् ; अन्तःकरणे विषयत्वमेव यत इत्याशङ्क्यावतारयति—*अस्मत्प्रत्ययशब्देनेति एवमप्य-तदपि ज्ञानभेदे भवेत्, तदर्थम्—"एकस्यामि"त्युक्तम् । एवमानुलोम्येनापि, तत्रैकप्रत्यक्षदर्शनेत्युक्तेऽप्यात्मविषय-ज्ञानस्याजन्यत्वेन कर्मतैवात्मनः, न कर्तृतेति शङ्का स्यात्, तन्निराकरणार्थम्—'क्रियायामि'ति विशेषणम् । *अथवा*—कर्तृ-कर्मापेक्षत्वप्रदर्शनार्थम्—'क्रियायामि'त्युक्तम् । क्रियाभेदे कर्तृत्वादिदर्शनाद्द 'एकस्यामि'त्युक्तम् । अनुमानव्यवच्छेदार्थम्—'प्रत्यक्षे'ति । इतरद्द व्यक्तम् । *ननु* अस्मत्प्रत्ययत्वाभिमतोऽहंकार इत्युक्तेऽपि समानो दोषः ; चैतन्यस्याविषयत्वात्, नच ज्ञानातिरिक्तं तदस्ति, तेन शब्दमात्रभेदान्नायं परिहार इत्याशङ्क्याव-तारयति—*तत्र सर्वत इति* ॥ कथमस्य स्फुटीकरणव्यवहारनिमित्ततेत्याशङ्क्याह—*भास्वरद्रव्यमिति* ॥

## तत्त्वदीपनम्

कर्मत्वमप्रयोजकमित्यर्थः । अस्मदिति प्रत्ययो यस्य, सोऽस्मत्प्रत्ययोऽहंकारः । अस्मच्चासौ प्रत्ययश्चेति वा । तत्र बिम्बितत्वमस्मत्प्रत्ययविषयत्वम् ॥

कर्तृ-कर्मविरोधेन विषयत्वनिराकरणमनुपपन्नम् ; अन्तःकरणविषयत्वस्यास्मत्प्रत्ययविषयशब्दार्थत्वादित्या-शङ्क्याह—*अस्मत्प्रत्ययेति* ॥ गमनक्रियाकर्तृत्वं दर्शनक्रियाकर्मत्वं चैकत्रोपलब्धमिति न विशेष इत्याशङ्क्याह—*एकस्यामिति* ॥ देहः स्वातिरिक्तद्रष्टृक इत्यत्र एकस्यैव कर्तृत्वं कर्मत्वं च, तदर्थम्—*प्रत्यक्षेति* विशेषणम् । कर्तृभेदे विरोधाभावं निराकर्तुम्—एकस्येत्युक्तम् । कालभेदेनाविरोधं निराकर्तुमाह—*तदेति* ॥ कर्तृस्थाने क्रियां प्रति गुणभावः, कर्म-करणस्थाने क्रियां प्रति प्राधान्यम्, तत्रैकेनांशेन कर्तृत्वम्, अपरेण कर्मत्वमित्यङ्गीकरणान्न विरोध इति शङ्कते—*अस्तु तर्हीति* ॥ निष्कलादिवचनविरोधान्मैवमित्याह—*नेत्याहेति* ॥ कर्तृ-कर्मविरोधनिराकरणार्थम् —'अहंकारोऽस्मत्प्रत्ययः' इत्युक्तम्, तथापि न विरोधो निराकर्तुं शक्यः ; अहंकारशब्दस्याहंप्रत्ययार्थत्वादित्या-शङ्क्याह—*तत्रेति* ॥ अन्तःकरणमस्मत्प्रत्यय इति प्रथमं संबन्धः, प्रतीयमानत्वेन प्रत्ययत्वम् । आत्मनो दृग्रूपत्वादन्तःकरणविषयत्वमनुपपन्नमित्याशङ्क्याह—*आत्मचैतन्यस्येति* ॥ अन्तःकरणे प्रतिबिम्बिततया स्फुटत्वं विषयशब्दार्थः ॥

परिच्छिन्नस्यैवाधिष्ठानत्वमित्यभिनिविशमानं प्रत्याह—*सविकल्पकतयेति* ॥ जडत्वाविशेषेऽपि कस्य चिद्द व्यञ्जकत्वं कस्यचिन्नेति कथम् ? तत्राह—*भास्वरेति* ॥ पार्थिवत्वेऽपि वैडूर्यपाषाणादीनामान्तरालिक-भेदवद्भेद इत्यर्थः । अन्तःकरणेन संयोगासंभवात्कथं तत्र व्यक्तत्वम् ? तत्राह—*आत्मनीति* ॥ आत्म-

## पञ्चपादिका

*अत्रोच्यते*—अस्मत्प्रत्ययत्वाभिमतोऽहंकारः। स चेदमनिदंरूपवस्तुगर्भः सर्वलोकसाक्षिकः।

## पञ्चपादिकाविवरणम्

करणमस्मत्प्रत्यय इत्याह—*अस्मत्प्रत्ययत्वाभिमतोऽहङ्कार इति* ॥ *ननु* इदं रजतमितिवदध्यस्तत्वे—'अहमि'ति द्वैरूप्यावभासो वक्तव्य इत्यत आह—*स चेदमनिदमिति* ॥ 'अयो दहती'ति दग्धृत्वविशिष्टस्याग्नेरयसश्च द्वैरूप्यावभासवत्—'अहमुपलभे' इत्युपलब्धृत्वविशिष्टस्यात्मनोऽन्तःकरणस्य चास्त्येव द्वैरूप्याऽवभासः, असाधारणक्रियोपरक्तमात्मादिद्रव्यमेव वस्त्वन्तरविशिष्टमवभासत इति भावः। दुःखि-प्रेमास्पदरूपेण परिणामि-तदागमा-

## ऋजुविवरणम्

एवमप्यसंबन्धात्कथमात्मनि स्फुटीकरणनिमित्ततेति? तत्राह—*आत्मन्यध्यस्तमिति* ॥ *अथवा* ज्ञानव्युदासार्थमाह—*अन्तःकरणमस्मत्प्रत्यय इति* ॥ कथमद्वितीयात्मन्येतादृशं वस्तु संभवतीति? तत्राह—*अध्यस्तमिति* ॥ तथापि संबन्धाभावाद्विषयत्वमात्मनो न स्यात्, तदर्थमाह—*आत्मनीति* ॥ *ननु* अध्यस्तवस्त्वन्तरे न दृष्टमस्य कथमेतादृशं सामर्थ्यमिति? तदाह—*भास्वरद्रव्यमिति* ॥ *ननु*—साक्षिचैतन्य आवरणाभावेन तन्निवृत्त्यभावात् कथमन्तःकरणस्य तद्विषयतेति? तत्राह—*आत्मचैतन्यस्येति* ॥ *ननु*—प्रकाशमानेऽपि वस्तुनि नैतादृशातिशयजननेन तद्विषयत्वं दृश्यते, इत्याशङ्क्य दृष्टान्तमाह—*तत्र सर्वत इति* ॥ कथम्—'अहमि'त्यत्र द्वैरूप्यव्यपदेशाभावे द्वैरूप्यमुक्तम्? इत्याशङ्क्यात्मधर्मप्रतीत्या तत्र प्रतीतिरित्युदाहरणेन साधयति—*अयो दहतीति दग्धृत्वेति* ॥ *ननु* 'अहमुपलभे' इति व्यधिकरणम्; 'अहमि'त्यत्र द्वैरूप्यावभासस्य वक्तव्यत्वात्, नच—'अयो दहती'तिवदुभयप्रतीतिर्निश्चीयते; तत्रोभयोः प्रत्यक्षत्वात्, अग्नेर्व्यपदेशाभावेऽपि प्रतीतिर्निश्चेतुं शक्यते। नचानेनैव तत्सिद्धिः; इह त्वहंव्यतिरेकेणात्मप्रतिपत्त्यभावादहम एवोपलब्धिसम्बन्धित्वेनावभासो भवेत्, नतु धर्मिद्वयप्रतीतिः। 'अयो दहती'त्यत्राप्येतावन्मात्रेण नोभयप्रतीतिः, किन्तु दग्धृत्वस्याग्निगतत्वेन प्रमाणसिद्धत्वाद् दहतीत्यत्राग्निस्वरूपप्रतीत्यभावेऽपि तद्धर्मिप्रतीत्याऽग्निस्वरूपमस्तीति कल्प्यते, नतु तत्प्रतीतिः, तद्वदिहाप्यात्मधर्मप्रतीत्या तत्स्वरूपास्तित्वनिश्चयो भवेत्, नतु पूर्वमेव तत्प्रतीतिरित्याशङ्क्याह—*असाधारणेति* ॥ कथं सर्वलोकसाक्षिकत्वम्? नह्य'हमि'त्यत्र द्वैरूप्यग्राहकं लोके किंचित् प्रमाणमस्ति, तदभावे नोभयसिद्धिः, नास्त्यात्मनोऽन्या प्रतीतिरित्याशङ्क्यावतारयति—*दुःखिप्रेमास्पदेति* ॥ *तदागमापायेति* ॥ तस्य = परिणामस्य, आगमश्चापायश्चा-

## तत्त्वदीपनम्

व्यञ्जकस्यान्तःकरणस्य कथं तद्व्यञ्जकत्वम्? तत्राह—*तत्र सर्वत्र इति* ॥ द्व्याकारावभासत्वाभावान्नान्तःकरणमध्यस्तमिति चोदयति—*नन्विति* ॥ द्व्याकारत्वाभावोऽसिद्ध इत्याह—*अत इति* ॥ इदमनिदंरूपे वस्तुनी गर्भे यस्य, स तथोक्तः। चिद्रूपेणाहंकारगतजाड्याभिभवात्तस्मिन्नहंकारो गर्भित इवाऽऽस्ते, इदंरूपेण च चैतन्यगतस्वप्रकाशकत्वतिरोधानादनिदंरूपमिदंरूपे गर्भितमिवेत्यर्थः। गर्भशब्दप्रयोगः कस्माद् इत्याशङ्क्य, पृथक्त्वेन धर्मिद्वयप्रतीत्यभावादित्याह—*अयो दहतीति* ॥ *द्वैरूप्यावभासेति* ॥ अग्नेश्चतुष्कोणत्वाद्याकारता, अयसश्च दग्धृतेत्यर्थः। 'अहमुपलभे' इत्यत्रोपलब्धिविशिष्टोऽहंकारः प्रतीयते, न रूपान्तरम्, दृष्टान्ते तु दग्धृत्वस्य दहनधर्मतया प्रसिद्धत्वाद् रूपान्तरसंश्लेषनिश्चय इत्याशङ्क्याह—*असाधारणेति* ॥ उपलब्धेः स्फुरणात्मिकाया जडधर्मत्वाभावादुपलम्भधर्माऽऽत्मा बुद्धिसंबद्धतया प्रथते, बुद्धिश्च परिणममाना चित्संवलिततयेत्यर्थः ॥

"सर्वलोकसाक्षिकः" इत्यत्रेदमनिदंरूपमनुभूयत इत्युक्तम्, तन्न संभवति; अननुभवादेवेत्याशङ्क्यानुभवमभिनयति—*दुःखीति* ॥ निरतिशयप्रेमास्पदत्वेन सुखरूपत्वं प्रतीयते। तस्मिंश्च दुःखसंबन्धानुपपत्तेर्दुःख्यन्यदिति द्वैरूप्यम्। एतदभिप्रेत्योक्तम्—*अवहितचेतस्तयेति* ॥ विधान्तरेण द्वैरूप्यमाह—*परिणामीति* ॥ सुखाद्या-

## पञ्चपादिका

तमवहितचेतस्तया निपुणतरमभिवीक्ष्य रूपकपरीक्षकवत् स्वानुभवमप्रच्छादयन्तो वदन्तु भवन्तः परीक्षकाः—किमुक्तलक्षणः ? न वा ? इति ॥

*ननु*—किमत्र वदितव्यम्—असम्भिन्नेदंरूप एवाहमित्यनुभवः, कथम् ? प्रमातृ-प्रमेय-

## पञ्चपादिकाविवरणम्

पायद्रष्टृरूपेणाहङ्कारविषयादिष्वनुस्यूतचैतन्यरूपेणा'हमि'ति च व्यावृत्तरूपेण च सर्वलोकसाक्षिकं द्वैरूप्यमित्याह—*सर्वलोकसाक्षिक इति* ॥

*ननु*, विषयसंविद आश्रय आत्मा, तत्राहं जानामीति संविदाश्रयत्वेनावभासमानोऽहङ्कारः कथमिदमंशः स्यात् ? इति चोदयति—*ननु किमत्र वदितव्यमिति* ॥ *ननु* 'अयो दहती'त्यादावयःपिण्डादिवदकर्तृत्वेऽपि दर्शनक्रियाश्रयकोटिनिक्षिप्ततयाऽहङ्कारस्यावभासः सम्भवतीति, पूर्ववादिनं सिद्धान्ती चोदयति—*कथमिति* ॥ अयःपिण्डव्यतिरेकेण वह्नेर्दहनक्रियाश्रयत्वदर्शनवदहङ्कारव्यतिरेकेणात्मनि ज्ञानक्रियाऽदर्शनादहम एवात्मत्वमित्युत्तरेण ग्रन्थेन प्रतिपादयति ।

*तत्र साङ्ख्यास्तु—अचिदात्मन्यन्तःकरणे चिदाकारप्रतिबिम्बावभासः, तथाविधबिम्बान्तरपुरस्सरः, प्रतिबिम्बत्वात्, मुखप्रतिबिम्बवदिति बिम्बभूतमात्मानम्—*अनुमिमते*; *नैयायिक-वैशेषिकाश्च*—इच्छादयो

## ऋजुविवरणम्

गमापायौ, तयोर्द्रष्टृरूपेणेति ॥ "ननु किमत्रे"ति चोद्यं नोदेति ; उपलब्धुरिदमंशस्याहमश्च तत्प्रतीतेरुक्तत्वादित्याशङ्क्यावतारयति—*ननु विषयसंविद इति* ॥ प्रमातृ-प्रमेयेति परिहारग्रन्थोऽसंगतः ; अहमो दर्शनाश्रयकोटिनिक्षिप्ततयाऽन्यथासिद्धेरपरिहृतत्वादित्याशङ्क्य ग्रन्थसमुदायस्याभिप्रायमाह—*अयःपिण्डव्यतिरेकेणेति* ॥ *ननु*—किमर्थं प्रमात्रादीनामपरोक्षत्वसाधनं कृतम् ? विप्रतिपत्त्यभावादित्याशङ्क्याह—*तत्र सांख्या इति* ॥ "विशेषगुणत्वादि"तिहेतौ गन्धमादायानैकान्तिकत्वम्, तदर्थम्—"तेष्वदृष्टत्वे सती"ति विशेषणम् । विशेषत्वं गुणत्वं च साधयितुम् "एकेन्द्रियग्राह्यतये"ति । "गुणत्वादि"त्येवोक्ते हेतोरनैकान्तिकत्वम्, "गन्धादौ तेष्वदृष्टत्वादि"त्येवोक्ते मनस्त्वेना-

## तत्त्वदीपनम्

कारेण परिणामिनी बुद्धिः, तदुत्पत्तिनाशसाक्षि चैतन्यम् । एकस्मिंश्च साक्षिसाक्ष्यभावानुपपत्तेरिति द्वैरूप्यम् । तदुक्तम्—*निपुणमभिवीक्ष्येति* ॥ द्वैरूप्यान्तरमाह—*अहंकारेति* ॥ बुद्धि-तद्वृत्तिविषयसाक्षितयानुस्यूतं स्फुरणम् । अहंकारस्तु व्यावृत्तः । नच एकस्मिन्ननुवृत्तत्वं व्यावृत्तत्वं च संभवति । तदुक्तम्—*निपुणतरमिति* ॥

असंभिन्नेदंरूप इति कथमुक्तम् ? अहंकारस्येदमंशताया उक्तत्वादित्याशङ्क्याऽऽत्मलक्षणलक्षितत्वादहंकारोऽनिदमंश इत्याह—*नन्विति* ॥ अनात्मत्वेऽपि संविदाश्रयतया स्फुरणं घटत इति चोदयति—*नन्विति* ॥ अयःपिण्डस्यादग्धृत्वेऽपि दहनसंसृष्टतया दग्धृत्वस्फुरणवदात्मसंसृष्टतया तथा स्फुरणं भवतीत्यर्थः । उत्तरग्रन्थस्य प्रश्नानुरूपत्वमाशङ्क्य तात्पर्यमाह—*अयःपिण्डेति* ॥

तर्हि येन ग्रन्थेनाहमात्मत्वं प्रतिपाद्यते, तावताऽलम्, किं प्रमातृ-प्रमेयेत्यादिनेत्याशङ्क्य, आत्मनः संविदाश्रयत्वेनाऽऽपरोक्ष्यम्, विषयस्य कर्मतया, संविदः स्वप्रकाशतयेति विभागं वक्तुमापरोक्ष्ये विप्रतिपत्तिं तावदाह—*तत्र सांख्या इति* ॥ तत्र वादिनां मध्ये सांख्यास्त्वात्मानमनुमिमत इत्यन्वयः । अनुमानमाह—*अचिदात्मनीति* ॥ अन्तःकरणस्य चित्त्वान्न तत्र चित्प्रतिबिम्बभाव इति शङ्कां व्यावर्तयितुम्—अचिदात्मेति विशेषणम् ; करणत्वाद् दीपवन्न चित्त्वमित्यर्थः । "बिम्बान्तरपुरस्सरः" इत्युक्ते यत्किंचिद्बिम्बपुरःसरत्वसाधनेनार्थान्तरत्वम्, तदर्थमाह—*तथाविधेति* ॥ तथाविधशब्दः प्रतिबिम्बसदृशवाची । 'इच्छादयो गुणाः' इत्युक्ते यस्य कस्यचिद् गुणा इत्यर्थान्तरत्वम्,

## पञ्चपादिकाविवरणम्

गुणाः, पृथिव्यादिमहाभूतद्रव्यव्यतिरिक्तस्यैव विशेषगुणाः, तेष्वदृष्टत्वे सत्येकेन्द्रियग्राह्यतया विशेषगुणत्वात्; भूतचतुष्टयेऽदृष्टगन्धवत्, दिक्काल-मनसां विशेषगुणहीनत्वात्परिशेषादिच्छादिगुणवद् द्रव्यमन्यदेवात्मेति—*अनुमिमते* ; तथा संवेदनेषु विषयाकारप्रतिबिम्बावभासः, तथाविधबिम्बसन्निधानपुरःसरः, अतस्मिंस्तदवभासत्वात्, दर्पण-स्फटिकादिगतमुखरक्तत्वादिवदिति नित्यानुमेया विषया इति सौत्रान्तिकाः कल्पयन्ति। तान्प्रत्याह—*प्रमातृ-प्रमेय-प्रमितयस्तावदपरोक्षा इति* ॥

यदि साङ्ख्यादयः प्रत्यक्षसिद्धस्यैवात्मनोऽनुमानानि स्पष्टीकरणार्थानीति मन्येरन्, तदा न कश्चिद्विरोधः। यदि नित्यानुमेयमात्मानमिच्छेयुः, तदा विषयवदहमित्यपरोक्षावभासविरोधः। सौत्रान्तिकस्यापि यदि विषयानुमानज्ञाने साक्षाद्विषया एवावभासेरन्। प्रत्यक्षेऽप्यवभासन्ताम्, कस्तत्रापराधः ? इत्यनुमानज्ञाने विषयस्यैवावभासनादनेकान्तो हेतुः। न चेदनुमानज्ञानेऽपि बिम्बभूतविषयावभासः, प्रतिज्ञानार्थस्य बिम्बपुरस्सर-

## ऋजुविवरणम्

नैकान्तिकम्। "तेष्वदृष्टत्वे सति गुणत्वादि"ति वा हेतौ दिक्कालादिगुणत्वं स्यात्, अभिमतसाध्यासिद्धिश्च, तदर्थम्—"विशेषगुणत्वादि"ति। "तदवभासत्वादि"ति हेतौ संवेदने बिम्बे चानैकान्तिकत्वम्, तद्व्यावृत्त्यर्थम्—"अतस्मिन्निति"। "अनुमानानुदयः"इत्यनेन साध्याप्रतीतौ पक्षधर्मत्वादप्रतीतिरित्युक्तम्। *ननु* अनुमानज्ञाने बिम्बभूतविषयावभासोऽस्त्येव, नचानैकान्तिकता; तस्याप्यन्यापेक्षया प्रतिबिम्बत्वेन बिम्बपुरस्सरत्वादित्याशङ्क्य

## तत्त्वदीपनम्

तदर्थमाह—*महाभूतेति* ॥ पृथिव्यादीति स्वरूपनिर्देशः। द्रव्यपदमनुवादमात्रम्। गुणत्वादित्युक्ते गन्धादिषु व्यभिचारः, तदर्थम्—*तेष्वदृष्टत्वे सतीति विशेषणम्* ॥ एतावत्युक्ते मनस्त्वादौ व्यभिचारः, तदर्थम्—*गुणत्वादिति* ॥ विशेषपदं तु दिगादिगुणत्वव्यावृत्त्यर्थम् ॥

विशेषगुणत्वं साधयति—*एकेन्द्रियग्राह्यतयेति* ॥ गुणत्वे सत्येकेन्द्रियग्राह्यो विशेषगुण इति द्रष्टव्यम्। इदमत्र विवक्षितम्—इच्छादि, पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितम्, तदसमवेतत्वे सति विशेषगुणत्वात्, यन्नैवं न तदेवम्; यथा गन्धादि। नच हेत्वसिद्धिः; न तावत्स्पर्शवद्विशेषगुणत्वम्; अयावद्द्रव्यभावित्वात्, स्पर्शवद्विशेषगुणानां च यावद्द्रव्यभावित्वात्; नापि नभोगुणता; इच्छादेर्बाह्येन्द्रियाग्राह्यत्वात्, नच दिक्काल-मनोगुणत्वम्; तेषां विशेषगुणविधुरत्वात्, तस्मादाश्रयान्तरानिरूपणादाश्रयस्यान्यस्यावश्याश्रयणीयत्वात्तदाश्रयत्वेनाऽत्मसिद्धिरिति ॥

एवं प्रमातृपारोक्ष्यमभिधाय सौत्रान्तिकमतमनुसृत्य प्रमेयपारोक्ष्यमाह—*तथेति* ॥ यथा प्रमातुः पारोक्ष्यम्, तथा विषया अनुमेया इति कल्पयन्तीत्यन्वयः। अनुमानमाह—*संवेदनेष्विति* ॥ घटः स्फुरतीति घटनिष्ठतयोपलभ्यमानं स्फुरणम्, कारणजन्यम्, कार्यत्वात्; संप्रतिपन्नवत्, तत्र च कारणान्तरानिरूपणादात्मसमवेतं ज्ञानं कारणतया सेत्स्यतीति नित्यानुमेयत्वं वार्तिककारीया मेनिर इति द्रष्टव्यम् ॥

एवं मतभेदमभिधाय तदुत्तरत्वेन टीकामवतारयति—*तान् प्रतीति* ॥ किमात्मन आनुमानिकत्वमात्रमुच्यते ? उत नित्यानुमेयत्वम् ? इति विकल्प्याऽऽद्यं प्रत्याह—*यदीति* ॥ स्पष्टीकरणार्थानि* ॥ विप्रतिपत्तिनिराकरणेन संभावनाबुद्धिजनकानि। द्वितीयमनूद्य दूषयति—*यदि नित्येति*॥ "बिम्बसन्निधानपुरःसरः" इत्यत्र घटसंवेदनेन तत्स्फुरणमङ्गीकृत्य, किम्—आकारार्पको विषयोऽस्तीत्येतावत्साध्यते ? आहो घटाकारसंवेदनेन विषयस्यानवभास इत्याश्रित्य ? तत्राऽऽद्ये सिद्धसाध्यत्वम्, द्वितीये किमनुमानज्ञाने व्याप्तिव्यवधानं विना प्रतिज्ञातार्थः प्रथते ? उत नेति विकल्प्याऽऽद्यं दूषयति—*सौत्रान्तिकस्यापीति* ॥ फलितमाह—*इतीति* ॥ *अनेकान्त इति* ॥ अनियत इत्यर्थः। यद्द यदाकारं ज्ञानम्, तत् तद्विषयं न भवतीति न नियमः; अनुमाने व्यभिचारादित्यर्थः। द्वितीयं दूषयति—*न चेदिति* ॥ *अनुमानानुदय इति* ॥ प्रयोजनहीनमनुमानमिति यावत्। घटाकारज्ञानस्य घटविषयत्वाभावे

## पञ्चपादिका

**प्रमितयस्तावदपरोक्षाः—प्रमेयं कर्मत्वेनापरोक्षम्, प्रमातृ-प्रमिती पुनरपरोक्षे एव केवलम्, न कर्मतया ;**

## पञ्चपादिकाविवरणम्

त्वस्याप्रतिभासनाद् अनुमानानुदय एव स्यात्। अपरोक्षव्यवहारयोग्यविषयावभासविरुद्धं चानुमानमिति ॥

*अत्र विज्ञानवादिनस्तु*—विज्ञानभेदनिमित्त एव विषयस्यापरोक्षावभासः—*इत्याहुः*, तन्निराकरोति—*प्रमेयं कर्मत्वेनापरोक्षमिति* ॥ इदं पश्यामीत्यनुभवात्। नच विज्ञानाभेदादेवापरोक्ष्यमवभासते ; बहिष्ठस्यापि रजतादेरापरोक्ष्यात्, तदपि विज्ञानमिति चेत्, न ; रजतवद् बाधाभावप्रसङ्गात्। तस्मादव्यवधानेन संविदुपाधिताऽपरोक्षता विषयस्येति ॥

तत्र—"आत्मा आत्ममनःसंयोगजन्यप्रत्यक्षेणापरोक्षः" इति वार्तिककार-न्याय-वैशेषिकानुसारिणः कल्पयन्ति। प्रमितिस्त्वात्मनि संयुक्तसमवायनिमित्तज्ञानान्तरादपरोक्षेति न्याय-वैशेपिकौ। प्रमेयगता प्रमितिः संयुक्ततादात्म्याज्ज्ञानान्तरेणापरोक्षेति वार्तिककारीयाः, तान्प्रत्याह—*प्रमातृ-प्रमिती पुनरपरोक्षे एव केवलमिति* ॥

## ऋजुविवरणम्

दूषणान्तरमाह—*अपरोक्षव्यवहारेति* ॥ *रजतवदिति* ॥ रजतमिदं न भवति, किन्त्वहमेवेति बहिष्ट्वबाधं वदन्ति ; स न स्यादिति भावः। कथं विषयानुभवेनान्यथासिद्धत्वम् ? न ह्यन्यविषयज्ञानेनान्यस्य सिद्धिर्भवति ; अत आत्मविषयज्ञानेनैवात्मसिद्धिः, तद्विषयौ चान्वय-व्यतिरेकावित्याशङ्क्याह—*विषयानुभवसम्बन्धादिति* ॥ "नच संयुक्त-

## तत्त्वदीपनम्

प्रत्यक्षविरोधोऽपीत्याह—*अपरोक्षेति* ॥ अपरोक्षमिति व्यवहारयोग्यो यो विषयावभासः, तेन विरुद्धत्वमिति यावत्। ज्ञानपारोक्ष्याऽनुमानेऽप्यनुभवविरोध इति द्रष्टव्यम् ॥

एवं प्रमेयादीनां पारोक्ष्यं निराकृत्य, प्रमेयस्य कर्मतया प्रत्यक्षत्वम्, संविदः स्वप्रकाशत्वेन, आत्मनस्तदाश्रयत्वेनेति वक्तुं प्रथमं प्रमेयस्य संविदभिन्नतयाऽपरोक्षत्वमनूद्य दूषयति—*अत्रेति* ॥ यदपरोक्षम्, तद्विज्ञानाभिन्नम्, यथा संवित् ; अपरोक्षश्च घटादिरिति चोद्यार्थः। कर्मतयाऽऽपरोक्ष्ये हेतुमाह—*इदमिति* ॥ द्वितीयया दर्शनक्रियाकर्मत्वेन विषयस्फुरणात्तद्विरुद्धमभेदानुमानमित्यर्थः। किंच रजतादेर्बहिष्ट्वं ज्ञानाद्भिन्नम् ? उताभिन्नम् ? आद्ये तत्र व्यभिचार इत्याह—*नचेति* ॥ द्वितीयमनुवदति—*तदपीति* ॥ तस्य बाध्यत्वान्न ज्ञानाभेदो युक्त इत्याह—*न रजतवदिति* ॥ कथं तर्हि विषयापरोक्ष्यमिति ? अत्राह—*तस्मादिति* ॥ *संविदुपाधित्वम्*=संविद्विशेषणत्वम्। एतावत्युक्ते चाक्षुषज्ञानमिति ज्ञानविशेषणचक्षुषोऽप्यापरोक्ष्यं स्यात्, तदर्थमाह—*अव्यवधानेनेति* ॥ चक्षुषोत्पन्नं चाक्षुषमित्युत्पत्तिव्यवधानेन चक्षुषो ज्ञानविशेषणत्वाद्व्यावृत्तिरित्यर्थः। न चानुमेयस्यापि संविद्विशेषणत्वेनाऽऽपरोक्ष्यप्रसङ्गः ; संविच्छब्देन इन्द्रियार्थसंप्रयोगजज्ञानस्य विवक्षितत्वादित्यर्थः ॥

विप्रतिपत्त्यन्तरमुत्थापयति—*तत्रेति* ॥ मनसा संयुक्त आत्मा, तस्मिन् समवायः, संयुक्तसमवायः, स निमित्तं यस्य तत्संयुक्तसमवायनिमित्तम्, तच्च ज्ञानं चेति तथोक्तम् ; तस्मादित्यर्थः। पक्षान्तरमाह—*प्रमेयेति* ॥ चक्षुषा संयुक्तार्थेन तादात्म्यसंबन्धात् प्रमितिविषयं ज्ञानान्तरमुपजायते, तेनाऽऽपरोक्ष्यं प्रमितेरित्यर्थः। तदुत्तरत्वेन टीकामवतारयति—*तान् प्रतीति* ॥

प्रमातृ-प्रमिती न कर्मतयाऽपरोक्षे ; प्रमाणाभावादिति संबन्धः। कर्मत्वाभावे तयोः कथमापरोक्ष्यम् ? इति चेत्, तत्र वक्तव्यम्—किं कर्मत्वाभावेन परोक्षत्वं सिषाधयिषितम् ? उताऽऽपरोक्ष्येण कर्मत्वम् ? इति। तत्राद्यमनुभवविरोधेन दूषयति—*एवेति* ॥ नापि द्वितीयः ; अनुभवत्वानात्मत्वप्रसङ्गादित्याह—*केवलमिति* ॥

## वार्तिकम्

**तेन तदपरोक्षत्वासिद्धेः। नच—विषयवत् तत्सम्बन्धित्वादेवापरोक्षत्वमिति—वाच्यम् ; इन्द्रियादिषु**

### पञ्चपादिकाविवरणम्

न तावदात्मविषयं प्रत्यक्षं ज्ञानान्तरं मनोजन्यमिति प्रमाणमस्ति ; सति मनस्यात्मदर्शनादसति सुषुप्ते चादर्शनादन्वय-व्यतिरेकौ प्रमाणमिति चेत्, न ; विषयानुभवेनैवान्यथासिद्धत्वात् । विषयानुभवसम्बन्धादेव विषयवदात्मसिद्धावात्मनि ज्ञानान्तरं परिकल्प्य मनसोऽन्वय-व्यतिरेककल्पनायोगात् । तस्माद् विषयत्वमन्तरेणात्माऽपरोक्ष एव ॥

नच संयुक्तसमवायादात्मनि विषये वानुभवस्य ज्ञानान्तरविषयतयाऽपरोक्षता ; प्रत्यक्षस्य वर्तमानविषयापेक्षत्वेन युगपत् फलद्वयावस्थानप्रसङ्गात्, संयुक्तसम्बन्धादनुभवावभासे तद्गतपरिमाण-रसादीनां तेनैव ज्ञानेनापरोक्षताप्रसङ्गात् । अनुभवस्य च स्वसत्तायां प्रकाशव्यतिरेकादर्शनाच्च ज्ञानान्तरागम्यतासिद्धिः । नचात्म-

### ऋजुविवरणम्

समवायादि"त्यत्र विषयगतेऽनुभवे संयुक्ततादात्म्यमिति ज्ञेयम् ; अनुवादे तथोक्तत्वात् । *ननु* स्थित्यवस्थस्य फलद्वयस्य विरोधः ; अत्र तु विषयानुभवस्य विनश्यदवस्थत्वात् तद्ग्राहकस्य स्थित्यवस्थत्वेनावभासकत्वं संभवतीत्याशङ्क्य दूषणान्तरमाह—*संयुक्तसम्बन्धादिति* । आदिशब्देनात्मगतगुणादीनां ग्रहणम् । *ननु*—कार्यात्कारणकल्पना, ज्ञाने च प्रतीतिलक्षणकार्यदर्शनात्संयुक्तसम्बन्धादवभासः कल्प्यते, रसादौ तु कार्यादर्शनादस्य सम्बन्धस्यासामर्थ्यं निश्चीयत इत्याशङ्क्य प्रतीतेरन्यथासिद्धत्वमाह—*अनुभवस्य चेति* ॥ प्राकट्यं विषयगतं स्वप्रकाशमित्यपि वदन्ति, तन्मते विषयानुभवजन्मैव न संभवतीति दर्शयति—*नचात्मव्यापारादिति* ॥ *ननु*—फलस्य क्रियैकाश्रयत्वमकर्मकव्यापारजन्यत्वे, सकर्मके तु कर्मण्येव फलम् ; कर्मविकारहेतुत्वात् क्रियाया इत्याशङ्क्याह—

### तत्त्वदीपनम्

कर्मतया आत्मन आपरोक्ष्याभावे हेतुमाह—*न तावदिति* ॥ प्रमाणाभावोऽसिद्ध इति शङ्कते—*सति मनसीति*॥ व्यापृते मनस्यात्मदृष्टेरितरत्रादृष्टेर्मानसत्वमात्मन इत्यर्थः । आत्मव्यवहारहेतुविषयानुभवविषयतयाऽन्यथासिद्धिमाह—*न ; विषयेति* ॥ आत्माऽनुभवविषयत्वमेव तयोः किं न स्यात् ? इत्याह—*विषयेति* ॥ विषयज्ञानाश्रयत्वेनाऽऽत्मनि व्यवहारसंभवे ज्ञानान्तरात्तत्सिद्धिकल्पनायां गौरवं स्यादित्यर्थः ॥

कर्मतया प्रमितिरपरोक्षेति यत्तूक्तम्, तन्निरस्यति—*नचेति* ॥ आत्मसमवेतानुभवस्य संयुक्तसमवायादपरोक्षता, विषयसमवेतानुभवस्य संयुक्ततादात्म्यादिति नच वक्तव्यमित्यन्वयः । ग्राह्यं ज्ञानं येन मनःसंयोगेनाजनि, तेनैव तद्विज्ञानान्तरं जायते ? उत संयोगान्तरेण ? नाद्यः ; असमवायिकारणभेदस्य ज्ञानभेद-तत्क्रमप्रयोजकत्वात् । द्वितीयेऽपि किं ग्राहकज्ञानसमये ग्राह्यज्ञानमस्ति ? उत न ? न चेत्, तत्राह—*प्रत्यक्षस्येति* ॥ प्रत्यक्षस्य वर्तमानग्राहित्वनियमात् पूर्वज्ञानस्य च तदा नष्टत्वान्न प्रत्यक्षत्वमित्यर्थः ॥

आद्ये दूषणमाह—*युगपदिति* ॥ उत्तरज्ञानसमये पूर्वज्ञानास्तित्वाङ्गीकारे फलद्वयस्य युगपदवस्थानमापतितम्, नच तत् संभवति । *तथाहि*—पटज्ञानसमये मनसि क्रिया, ततो विभागः, ततः पूर्वसंयोगविनाशः, तत उत्तरसंयोगाद् ज्ञानजनिरित्यनेकक्षणविलम्बेनोत्पद्यमानज्ञानान्तरसमसमयमाशुतरविनाशिनः पूर्वज्ञानस्यावस्थानमसमञ्जसम् । नच—विनश्यदविनश्यतोस्सहावस्थानमिष्यत इति—शङ्क्यम् ; पूर्वोत्तरवेदनयोर्निवर्त्य-निवर्तकभावेन विरोधाद् भास्य-भासकताऽनुपपत्तेरित्यर्थः ॥

तादात्म्यसंबन्धाद् विषयगतप्राकट्यं प्रत्यक्षमित्यत्र दूषणान्तरमाह—*संयुक्तेति* ॥ *संयुक्तसंबन्धात्= संयुक्ततादात्म्यसंबन्धादित्यर्थः । अथवा—संयुक्तसमवायसंबन्धात् संयुक्ततादात्म्यसंबन्धाद्वाऽनुभवावभास आत्मगतस्य परिमाणस्य विषयगतरसादेश्च तेन ज्ञानेनापरोक्षत्वं स्यादित्यर्थः । परिमाणादीनामयोग्यत्वादनुभवग्राहकेणाग्रहणमित्याशङ्क्यायोग्यत्वमत्रापि तुल्यमित्याह—*अनुभवस्येति* ॥ अनुभवः, न ज्ञानान्तरगम्यः, स्वसत्तायां प्रकाशव्यतिरेकविधुरत्वात्, न यदेवम्, न तदेवम्, यथा घट इत्यर्थः । आद्येन चकारेण हेत्वसिद्धिमुद्धरति । स्वसत्तायां

## पञ्चपादिकाविवरणम्

व्यापाराद् विषयानुभवजन्म सम्भवति ; सर्वगतस्य कुठारादिवत् परिस्पन्दाभावात्, परिणामफलस्य च घटादिवत् क्रियैकाश्रयत्वात्, संविदाश्रयत्वे विषयस्यैव चेतनत्वप्रसङ्गात्। नच तज्जननव्यापारवत्त्वादात्मनश्चेतनता ; मनआदीनामपि प्रसङ्गात्, विषयाश्रयत्वे चानुभवस्य 'मयेदं विदितमि'ति सम्बन्धावभासः स्वात्मनि ज्ञानक्रियाऽनुमानं च न स्यात् ; अनुभवस्यात्मसम्बन्धाभावात्। तस्माद् द्वयोर्न कर्मतयाऽपरोक्षता ॥

*ननु* उभयोः स्वयम्प्रकाशत्वकल्पना न युक्ता ; अन्यतरस्य स्वयम्प्रकाशत्व आत्मैव स्वयंप्रकाश इति चेत्,

## ऋजुविवरणम्

*संविदाश्रयत्वे चेति* ॥ कथं मनआदीनां चेतनत्वम् ? अनुभवजननव्यापारे कर्तृत्वप्रयुक्तत्वाच्चेतनत्वस्येत्याशङ्क्य दूषणान्तरमाह—*विषयाश्रयत्वे चेति* ॥ "स्वात्मनि ज्ञानक्रियानुमानमि"त्यनेनात्मनोऽपि चेतनत्वं न संभवतीत्युक्तम्। *ननु*—'मयेदं विदितमि'ति प्रतीत्या सम्बन्धो निश्चीयते, स च क्रियापूर्वक इति तदनुमानमित्याशङ्क्याह—*मयेदं विदितमिति* ॥ सम्बन्धितया ज्ञातं फलं सम्बन्धिकर्तृव्यापारानुमापकम्, अत्र तु सम्बन्धाभावात्तदवभासाभावाद्व न कर्तृविशेषगतक्रियानुमानमिति भावः ; *ननु*—प्रमातृव्यापारः परिस्पन्दपरिणामात्मको

## तत्त्वदीपनम्

प्रकाशव्यतिरेकित्वे जिज्ञासायां सन्देहादि स्यादित्यर्थः। द्वितीयेन चकारेण सुखादिषु साधनाव्यावृत्तिशङ्कां निरस्यति। सुखादीनामपि ज्ञानात्मकत्वेन पक्षान्तर्भावादित्यर्थः ॥

विषयनिष्ठं प्राकट्यं स्वप्रकाशमिति मते तस्य जन्मैव दुर्निरूपमित्याह—*न चात्मेति* ॥ किं परिस्पन्दलक्षणो व्यापारः ? उत परिणामलक्षणः ? इति विकल्प्याऽऽद्यं प्रत्याह—*सर्वगतस्येति* ॥ द्वितीयं दूषयति—*परिणामेति* ॥ मृत्परिणतिफलस्य घटस्य मृन्निष्ठत्ववदनुभवस्यापि परिणामिसमानाधिकरणत्वमाश्रयणीयमित्यर्थः। अकर्मकपरिणामफलस्य परिणामिसमानाधिकरणत्वेऽपि सकर्मकक्रियाफलस्य विषयनिष्ठत्वम् ; क्रियायाः कर्मण्यतिशयजननस्वाभाव्यादित्याशङ्क्य, किं संविदाश्रयत्वं चेतनत्वप्रयोजकम् ? उत तत्तज्जननव्यापारवत्त्वम् ? आद्ये विषयस्यैव चेतनतोत्पत्तिरित्याह—*संविदाश्रयत्व इति* ॥ द्वितीयेऽपि किं संविज्जननव्यापारवत्त्वमात्रं विवक्षितम् ? उत संविज्जनकज्ञानव्यापारवत्त्वम् ? इति विकल्प्याऽऽद्यं दूषयति—*नचेति* ॥ द्वितीयं प्रत्याह—*विषयेति* ॥ 'मया गतो ग्रामः' इत्यत्र स्वगतगमिक्रियाकर्मत्वं ग्रामस्योपलब्धम्, तद्वद् 'मयेदं विदितमि'त्यत्रापि स्वगतविदिक्रियाकर्मत्वं विषयस्यानुभूयते, तन्न स्याद्विषयनिष्ठत्व इत्यर्थः। आत्मसमवेतज्ञानक्रियाजन्यानुभवव्याप्तत्वाद् 'घटो मया विदितः' इत्यनुभवो विरुद्ध इत्याशङ्क्य, परिणामक्रिया-तत्फलयोरैकाधिकरण्यनियमान्न ज्ञानानुमितिरित्याह—*स्वात्मनीति* ॥ उपसंहरति—*तस्मादिति* ॥

संविदात्मनोः कर्मत्वाभावे किमुभयोरपि स्वप्रकाशत्वेनापरोक्षत्वम् ? उतान्यतरस्य ? इति विकल्प्याऽऽद्यं दूषयति—*नन्विति* ॥ गौरवप्रसङ्गादित्यर्थः। द्वितीयेऽपि किमात्मनः स्वप्रकाशत्वम् ? उत संविद इति ? आद्यमङ्गीकरोति—*अन्यतरस्येति* ॥ द्वितीयस्त्वनुपपन्न इत्याह—*एवेति* ॥ आत्मस्वप्रकाशमात्रेणेतरत्र व्यवहारसंभवे तत्समवेतानन्तसंवित्स्वप्रकाशत्वकल्पने गौरवमापतेदिति भावः। अनुभवस्य जडत्वेऽननुभवत्वप्रसङ्गान्नैवमित्याह—*नेत्याहेति* ॥ प्रमितिः, स्वप्रकाशा, अनुभवत्वात्, व्यतिरेकेण घटवदित्यर्थः। अस्वप्रकाशत्वेऽप्यनुभवत्वं किं न स्यात् ? इत्याशङ्क्य, फलत्वभङ्गो बाधक इत्याशयेनाह—*प्रमाणफलमिति* ॥ नच कल्पनागौरवम् ;

## वार्तिकम्

व्यभिचारात्। *एतेन*—तज्जनकत्वमपि—*प्रत्याख्यातम्*। अपि चान्तःकरणाद्यध्यासात्पूर्वं करणाभावेन ज्ञानाभावान्न तदाश्रयत्वासंभवेनापरोक्षत्वमात्मनस्ततोऽपि वक्तुं शक्यते। अस्तु तर्हि स्वप्रकाशज्ञानाभेदादपरोक्षत्वमात्मनः, अत एव ज्ञानस्य नित्यत्वमपीति चेत्, न ; तयोर्धर्म-धर्मिभावेन भेदस्य

### पञ्चपादिका

प्रमितिरनुभवः स्वयंप्रकाशः प्रमाणफलम्, तद्बलेनेतरत् प्रकाशते, प्रमाणं तु प्रमातृव्यापारः फललिङ्गो नित्यानुमेयः। तत्र—'अहमिदं जानामी'ति प्रमातुर्ज्ञानव्यापारः कर्मविषयः, नात्मविषयः, आत्मा तु विषयानुभवादेव निमित्तात्—'अहमि'ति फले विषये चानुसन्धीयते ॥

### पञ्चपादिकाविवरणम्

नेत्याह—*प्रमितिरनुभव इति* ॥ अथवा—हानोपादानोपेक्षाः प्रमाणफलमिति केचित्, तत्राह—*प्रमितिरनुभव इति* ॥ नहि हानादीनामितरेतरव्यभिचारिणां मानफलता युक्ताऽव्यभिचारिण्यनुभवे सतीत्यर्थः ॥

*ननु* संवेदनमेवार्थसारूप्येण प्रमाणम्, प्रमीयतेऽनेनेति व्युत्पत्तेः, अर्थोपलब्ध्यात्मना तदेव प्रमाणफलमिति सुगतमतानुसारिणः, तद् व्यावर्तयति—*प्रमाणं त्विति* ॥ प्रमाणं तु प्रमातृव्यापारश्चतुष्टयसन्निकर्ष एवेति प्राभाकराः। *ननु* 'अहमिदं जानामी'त्यात्मानात्मविषयावनुभवौ भेदेन प्रत्यक्षसिद्धाविति, नेत्याह—*तत्राहमिदं जानामीति* ॥

### ऋजुविवरणम्

निरस्तः, कथं टीकाकृता—"प्रमाणं तु प्रमातृव्यापारः" इत्युक्तम्? इत्याशङ्क्य व्याचष्टे—*प्रमातृव्यापार इति* ॥ आत्मनो ज्ञानविषयत्वं नास्तीति पूर्वमुक्तम्, तत्र—'अहमिदमि'त्यनेनापि तदेवोच्यत इति पौनरुक्त्यमित्याशङ्क्य, विषयाधिक्यं दर्शयति—*ननु अहमिदमिति* ॥ *ननु*—पूर्वमात्मविषयज्ञानान्तरसद्भावे प्रमाणं नास्तीत्युक्तम्,

### तत्त्वदीपनम्

प्रामाणिकगौरवस्यादोषत्वादित्यर्थः। आत्मा, स्वप्रकाशः, आत्मत्वात्; व्यतिरेकेण घटवत्, इत्यनुमानात् सिद्धं तत्स्वप्रकाशत्वमपीत्याशङ्क्याह—*तद्बलेनेति* ॥ आत्मनोऽस्वप्रकाशत्वेऽपि नानात्मत्वम्; संविदाश्रयत्वेनाऽऽत्मत्वोपपत्तेः, इतरस्य तु वेद्यत्वे घटादिवदनुभवत्वं दुर्वारमित्यर्थः ॥

संविदः फलत्वमसिद्धमित्याशङ्क्य, तत्परिहारत्वेनाऽऽवृत्त्या प्रमितिरनुभव इत्येतद् व्याकरोति—*अथवेति* ॥ इत्थं वा योजनेति शेषः। कथमसिद्धिरिति शङ्कायामाह—*हानेति* ॥ चतुष्टयसंनिकर्षानन्तरं हानाद्युपलम्भात्तस्य फलत्वमित्यर्थः। प्रमितिः प्रमाणफलम्, न हानादिः। तत्र हेतुमाह—*अनुभवेति* ॥ चतुष्टयसंनिकर्षेऽप्यर्थानुभवाभावे तद्विषयहानाद्ययोगादनुभवः फलमित्यर्थः। हानाद्यतिरिक्तफलकल्पनायामनवस्थेत्याशङ्क्याह—*स्वयंप्रकाश इति* ॥ संनिकर्षे सत्यर्थानुभवाभावेन हानाद्यभावादर्शनादनुभवस्याप्रयोजकत्वमित्याशङ्क्याह—*न हीति* ॥

संवेदनस्यैव प्रमाणत्वात्प्रमाणफलं तदित्युक्तमयुक्तमिति चोदयति—*नन्विति* ॥ कथं तर्हि प्रमाण-फलविभागः? इत्याशङ्क्याह—*संवेदनमिति* ॥ अर्थाकारविशिष्टतया संवेदनस्य प्रमाणत्वम्, तत्स्फुरणरूपेण फलत्वमित्यर्थः। लोके करण-फलभावस्यात्यन्तभेदव्यासत्वादत्रापि स आश्रयणीयः; इतरथा करण-फलभावो न स्यात्, ततश्च संविदतिरिक्तं करणमास्थेयमित्यभिप्रेत्याह—*तद् व्यावर्तयतीति* ॥ प्रमातृव्यापारः किं परिस्पन्दः? उत परिणामः? उभयथाऽप्यनुपपत्तिः, सर्वगतत्वान्निरवयवत्वाच्चेत्याशङ्क्याह—*प्रमातृव्यापार इति* ॥ अर्थेन्द्रियात्ममनःसंयोगश्चतुष्टयसन्निकर्ष इत्यर्थः। चतुष्टयसन्निकर्षः किं प्रत्यक्षः? उतानुमेयः? नाद्यः; अननुभवादेव, नेतरः; धूमाग्न्योः क्वचित्प्रत्यक्षतायां व्याप्यदर्शनेन व्यापकज्ञानमुदेति, नच तथाऽत्र सन्निकर्षस्य प्रत्यक्षतेति वैषम्यादित्याशङ्कायामुक्तम्—*फललिङ्गो नित्यानुमेय इति* ॥ रूपाद्युपलब्धिकरणत्वेन नानेन्द्रियकल्पनावदनुभवकरणत्वेन नित्यपरोक्षसंनिकर्षकल्पनं घटत इत्यर्थः ॥

प्रमातृ-प्रमित्योः कर्मतयाऽपरोक्षत्वाभावेऽनुभवविरोधः स्यादिति चोदयति—*नन्विति* ॥ 'अहमि'त्यात्मविषयोऽनुभवः, 'इदमि'त्यनात्मविषयः, 'जानामी'ति ज्ञानानुभव इति विभागः। अनात्मकर्मकानुभवाश्रयत्वेनात्म-

## पञ्चपादिका

*ननु*—नायं विषयानुभवनिमित्तोऽहमुल्लेखः, किं त्वन्य एवात्ममात्रविषयः—'अहमि'ति प्रत्ययः। तस्मिंश्च द्रव्यरूपत्वेनात्मनः प्रमेयत्वम्, ज्ञातृत्वेन प्रमातृत्वमिति, प्रमातृ-प्रमेयनिर्भासरूपत्वादहंप्रत्ययस्य ग्राह्य-ग्राहकरूप आत्मा। तस्मादिदमनिदंरूपः; प्रमेयांशस्येदंरूपत्वात्, अनिदंरूपत्वात् प्रमात्रंशस्य, *नचैतद्युक्तम्*; अनंशत्वात्, अपरिणामित्वाच्चात्मनः, प्रमेयस्य चेदंरूपतया पराग्रूपत्वादनात्मत्वात्।

## पञ्चपादिकाविवरणम्

*ननु* यदवभासते, तज्ज्ञानकर्मतयैवावभासत इति विषयेषु नियमादात्माऽप्यवभासते चेत्कर्मतयैव, नाश्रयमात्रतयेति चोदयति—*ननु नायं विषयानुभवनिमित्त इति*॥ *ननु* प्रत्यक्षज्ञानस्य विषयजन्यत्वात्कारकताऽपि विषयस्य वक्तव्या, तत्र कथमेकस्यां क्रियायामेकस्यैव कर्तृत्वेन कर्मत्वेन च विरुद्धरूपद्वयान्वयः? कर्तुश्च गुणभावात्, कर्मणश्च प्राधान्यात्, एकस्य रूपद्वये वैरूप्यप्रसङ्गाच्चेति, तत्राह—*तस्मिंश्च द्रव्यरूपत्वेनेति*॥ तत्र सामान्यांशस्यात्मानात्मसाधारण्यादात्मत्वायोगाद् विशेषांशस्य निरंशत्वान्न कर्तृ-कर्मव्यवस्थेति परिहरति—*नचैतद्युक्तमिति*॥ निरवयवस्य युगपत्कार्यद्वयपरिणामायोगाच्चेत्याह—*अपरिणामित्वादिति*॥

## ऋजुविवरणम्

विषयानुभवेऽपि न कर्मतयाऽवभास इत्युक्तम्, तत् कथं चोद्यमुद्दियात्? इत्याशङ्क्यावतारयति—*ननु यदवभासत इति*॥ "अनंशत्वादि"ति कथमुक्तम्? सामान्य-विशेषरूपांशद्वयभावादित्याशङ्क्य तात्पर्यमाह—*सामान्यांशस्येति*॥ 'अपरिणामित्वादि'ति हेतुरसंगतः; न ह्यनेन पूर्वचोद्यनिराकरणं क्रियते; असिद्धश्चेत्याशङ्क्य हेतुसाधनपूर्वकं तात्पर्यमाह—*निरवयवस्येति*॥ "प्रमेयस्ये"त्यनेन प्रमेयस्यानात्मत्वप्रतिपादनमसङ्गतम्; प्रकृतानुपयोगात्, नचात्मगत-

## तत्त्वदीपनम्

व्यवहारसंभवे पृथग् ज्ञानकल्पना न युक्तेत्याह—*नेत्याहेति*॥ प्रतीचः कर्मत्वे मानाभावेन दूषिते कथं चोद्यसमुत्थितिः? इत्याशङ्क्य मानविरहोऽसिद्ध इत्याह—*नन्विति*॥ आत्मा, संवित्कर्मतया भासते, संविदात्मत्वे सत्यपरोक्षत्वात्; घटवदित्यर्थः। संवेदनाश्रयत्वमुपाधिरित्याशङ्क्याह—*नाश्रयमात्रतयेति*॥ विषयव्याप्तिमते संविदाश्रयत्वस्याकर्मत्वाव्याप्तेर्न व्यतिरेकव्याप्तिः। समव्याप्तौ तु तव संविदि व्याप्त्यभाव इत्यर्थः॥

कर्तृ-कर्मविरोधनिरासार्थमभेदमभ्यधात्, तन्न संभवति; कर्मकारकत्वाभावेऽप्यनुमेयस्य विषयताहष्टेर्न कर्तृ-कर्मविरोध इत्याशङ्क्याह—*नन्विति*॥ अनुमितेः कर्मकारकजन्यत्वाभावाद्विषयस्य कर्मत्वं माऽस्तु, प्रत्यक्षस्य तु कर्मजन्यत्वात्तद्विषयस्य कर्मकारकत्वं वक्तव्यमित्यर्थः। ततः किमिति? तत्राह—*तत्र कथमिति*॥ कर्तृ-कर्मत्वयोश्चैत्र-ग्रामनिष्ठत्वेन दृष्टेर्नैकत्र तयोः संभव इत्यर्थः। विधान्तरेण वैरूप्यमाह—*कर्तुश्चेति*॥ अहंप्रत्ययस्यापि भिन्नकर्म-कर्तृत्वे घटादिप्रत्ययतुल्यत्वमित्याशङ्क्य, द्रव्यबोधस्वरूपस्याऽऽत्मनो द्रव्यात्मकबोधाकारप्राधान्येन कर्तृत्वम्, बोधात्मकद्रव्याकारप्राधान्येन कर्मत्वम्, अतो नोक्तदोष इत्यभिप्रायेणोक्तम्—*प्रमातृ-प्रमेयनिर्भासरूपत्वादिति*॥ अंशद्वयस्योक्तत्वादनंशत्वासिद्धिमाशङ्क्याह—*तत्र सामान्येति*॥ *सामान्यांशस्य=द्रव्यांशस्येत्यर्थः। *विशेषांशस्य=बोधांशस्येत्यर्थः॥

अंशभेदेन कर्तृ-कर्मव्यवस्थाऽभावे—'अपरिणामित्वादि'त्यनेन हेत्वन्तरमुपन्यस्यत इति प्रतिभाति, तदनुपपन्नम्; अपरिणामित्वस्य तदसाधकत्वात्, तदसिद्धेश्चेत्याशङ्क्याह—*निरवयवस्येति*॥ आत्माऽनात्मविषयज्ञानद्वयपरिणामस्य

## वार्तिकम्

लोकप्रसिद्धत्वादभेदानुपपत्तेः, औलूक्यस्मृतिविरोधाच्च। तेन हि गुणमध्ये ज्ञानस्यान्तर्भावः कृतः, द्रव्य-

**नचायमस्ति नियमः—पुरोऽवस्थित एव विषये विषयान्तरमध्यसितव्यमिति ; अप्रत्यक्षेऽपि ह्याकाशे बालास्तलमलिनताद्यध्यस्यन्ति ।**

भामती

परमार्थपरिहारमुक्त्वा,अभ्युपेत्यापि चिदात्मनः परोक्षताम् , प्रौढवादितया परिहारान्तरमाह—*नचायमस्ति नियमः* पुरोऽवस्थित एव=अपरोक्ष एव विषये विषयान्तरमध्यसितव्यम्* ॥ कथमयं न नियम इति ? अत आह—*अप्रत्यक्षेऽपि ह्याकाशे बालास्तलमलिनताद्यध्यस्यन्ति* ॥ हिर्यस्मादर्थे । नभो हि द्रव्यं

ऋजुप्रकाशिका

हारान्तरमेव शङ्कोत्तरत्वेनावतारयति—*कथमिति* ॥ "अप्रत्यक्षेऽपि ह्याकाशे" इत्यत्रत्यहिशब्दस्य हेत्वर्थतामाह —*हिर्यस्मादर्थ इति* ॥ हि=यस्मात् कारणादित्यर्थः । आकाशस्याप्रत्यक्षत्वमुक्तम् ? तत् कथम् ? प्रत्यक्षत्व-मेवास्तीति चेत् , तत्र वक्तव्यम्—किमाकाशं बाह्येन्द्रियप्रत्यक्षम् ? मानसप्रत्यक्षं वा ? तत्राद्यं निरस्यति

पञ्चपादिका

दृश्यते, इत्याशङ्क्याह—*नचायमस्ति नियम इति* ॥ *अप्रत्यक्षेऽपि ह्याकाश इति* ॥ परोक्ष इत्यर्थः ; *अथवा*—अक्षव्यापारमन्तरेणाप्यपरोक्ष आकाशे बालाः = अयथार्थदर्शिनः, तलम् = इन्द्रनील-तमाल-

पञ्चपादिकाविवरणम्

चाकाशानुमानलिङ्गदर्शनेऽन्यथासिद्धत्वात् । तस्मात्—*अप्रत्यक्षेऽपि ह्याकाश इत्युक्तम्* ॥ *अथवेति* ।

तत्त्वदीपनम्

गगनविततजःपुञ्जविषयत्वान्मैवमित्यभिप्रायेणाह—*तस्मादिति* ॥ अक्षव्यापारमन्तरेण गगनस्याऽऽपरोक्ष्याभिधान-मयुक्तम्, बाह्यस्याक्षविषयत्वेनैवाऽऽपरोक्ष्यस्य संभवादित्याशङ्क्याह—*अथवेति* ॥

वार्तिकम्

श्रुतिविरोधेनापस्मृतित्वात् । तथाचोक्तमभियुक्तैः—"विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्"—इति ॥ तस्माद्व ज्ञानैकरसत्वेनात्मनः स्वप्रकाशत्वादपरोक्षत्वेन सिद्धमपरोक्षभ्रमाधिष्ठानत्वमिति ॥

*स्यादेतत्*—नापरोक्षत्वमात्रमपरोक्षभ्रमाधिष्ठानत्वे प्रयोजकम्, किं तर्हि ? बहिरिन्द्रियविषय-तयाऽपरोक्षत्वम्, यतः "सर्वो लोकः पुरोऽवस्थित एव विषये विषयान्तरमध्यस्यती"त्युक्तम्, अत आत्मनस्त-दभावान्नापरोक्षाध्यासाधिष्ठानत्वमिति, नेत्याह—*नचायमस्ति नियमः पुरोऽवस्थित एव विषये विषयान्तरमध्यसितव्यमिति ; अप्रत्यक्षेऽपि ह्याकाशे बालास्तल-मलिनताद्यध्यस्यन्तीति* ॥ नचायमस्त्ये-

भाष्यभावप्रकाशिका

इतरकालवदिति चानुमानात् । नच स्वापेऽहंवृत्तिः ; तद्व्याघातात् । नच पुरुषान्तरं तत्साक्षात्कर्तुमलम् । ईश्वराद्यस्तित्वे च साक्षात्कारस्यास्मद्विशेषणमादेयमिति ॥ अपरोक्षाध्यासो नापरोक्षमात्रे क्वचिदपि युक्तः ; संप्रयुक्ततया पुरोऽवस्थित एवापरोक्षः ; तद्दृष्टेरित्याशङ्क्याह—*नचेति* ॥ तत्र हेतुः—*अप्रत्यक्षेऽपीति* ॥ साक्षिवेद्यतया संप्रयोगमन्तरेणापरोक्षेऽपीति यावत् । नहि नभो द्रव्यत्वे सत्यस्पर्शत्वात्

प्रदीपः

तथाचेयमत्र योजना—प्रत्यगात्मप्रसिद्धिवशाद् आत्मनः स्वप्रकाशत्वम्, अहंकारसम्बन्धादसत्प्रत्ययविषयत्वम्, ततश्च प्रत्यगात्माऽयं नाविषय एवेति नियम इति ॥ यत्तु 'इदं रजतमि'त्यादावारोप्याधिष्ठानयोस्तुल्येन्द्रियग्राह्यत्वं दृष्टम्, सोऽयमुत्सर्गः, न नियमः ; व्यभिचारात्, तथाच न दोष इत्याह—*न चायमस्ति नियम इति* ॥ किन्तूत्सर्ग इति शेषः । व्यभिचारस्थलं प्रदर्शयति—*अप्रत्यक्षेऽपीति* ॥ इन्द्रियसम्प्रयोगमन्तराऽप्रत्यक्षेऽपीत्यर्थः । शुद्ध आकाशोऽधिष्ठानं साक्षिमात्रभास्यः, न

### भामती

सत् रूपस्पर्शविरहान्न बाह्येन्द्रियप्रत्यक्षम् ; नापि मानसम् ; मनसोऽसहायस्य बाह्येऽप्रवृत्तेः, तस्माद-

### ऋजुप्रकाशिका

*नभो हि द्रव्यमिति* ॥ द्वितीयं निरस्यति—*नापि मानसमिति* ॥ उक्तविधयोभयविधप्रत्यक्षविरहाद-प्रत्यक्षमाकाशमित्युपसंहरति—*तस्मादिति* ॥ एवं सति तत्र बालानां तलमलिनताद्यध्यासं दर्शयति—

### वार्तिकम्

कान्तः ; कोऽयम् ? *पुरोऽवस्थित एव* = बहिरिन्द्रियग्राह्य एव-*विषये* = अधिष्ठाने तद्योग्यविषयान्तर-मध्यसितव्यमिति । किमिति नायमस्त्येकान्तः ? *हि* = यस्मात् *अप्रत्यक्षेऽपि* = इन्द्रियाग्राह्येऽपि नभसि *बालाः* = अविवेकिनः, *तल-मलिनतादि* = तलं च मलिनं च तल-मलिने, तयोर्भावः, तलमलिनता, सा आदिर्यस्य धूसरतादेः ; तत्, *अध्यस्यन्ति* = आरोपयन्ति । तत्र *तलता नाम* = छत्रवत्कटाहवच्च सर्वदिक्षु निम्नता । *मलिनता* = नीलरूपता । 'नीलोऽयमाकाशो निम्नश्च सर्वदिक्षु कटाहादिवदिति प्रतिपद्यन्त इत्यर्थः ॥

*ननु*—अचाक्षुषमाकाशम् ; चक्षुरन्वय-व्यतिरेकाभ्यां तद्ग्रहाग्रहदर्शनात्, तत् कथमनियमः ? इति—चेत्, नीरूपद्रव्यत्वेनाकाशस्य चाक्षुषत्वासिद्धेः । *ननु*—आकाशस्य द्रव्यत्वमसिद्धम् ; मूर्तद्रव्याभावरूपत्वात्, तथाच नीरूपस्यापि तस्य चाक्षुषत्वमविरुद्धमिति—चेत्, न ; अभावाचाक्षुष-त्वस्य पूर्वमेव निरूपितत्वात्, अभावचाक्षुषत्वेऽपि न तावदाकाशः सर्वमूर्ताभावश्चाक्षुषो भवितुमर्हति ; परमाण्वादेरयोग्यत्वेन योग्यानुपलब्धेरभावात् । योग्यमूर्ताभावः स इति चेत्, न ; योग्यमूर्ते च पक्षिण्युड्डीयमाने सति तद्देशव्यापिनि सौरालोके तदनुपलब्धिप्रसङ्गात् । तद्देशावच्छेदेन तदनुपलब्धिर-विरुद्धेति चेत्, न ; सौरालोकव्यापिन्यपि देशे नभोबुद्धिदर्शनात्, आलोकसहकारित्वाच्चक्षुषस्तमन्तरेण तद्ग्रहानुपपत्तेश्च ; अन्यथाऽस्मदादीनां दिवस आकाशोपलब्धिर्न स्यात् । *ननु*—तदितरमूर्ताभावोप-लब्धिस्तद्देश इति—चेत्, एवं तर्हि भूधरादिव्यावृत्ते देशे तदितरमूर्ताभावस्य विद्यमानत्वादाकाशोपलब्धि-प्रसङ्गः । कस्तावद्द भवता मूर्ताभावस्य देशोऽभिमतः ? न तावन्मूर्तमेव ; तदनुपलब्धावप्याकाशोपलब्धि-दर्शनात् । नाप्यन्यत् किञ्चित् ; तदनिरूपणात्, परिशेषादाकाश एव । तथाच तदाश्रयत्वेन तद्भिन्न-तयाऽऽकाशसिद्धेर्न मूर्तद्रव्याभाव आकाशः । किं तर्हि ? द्रव्यमेव ; शब्दगुणाश्रयत्वादिति सिद्धम् ॥

नच तद्द रूपवत्त्वेन चाक्षुषं स्यात् ; तथासत्याकाशस्य क्रियावत्त्वप्रसङ्गः ; रूपस्य क्रिया-नियतत्वात् । नचाकाशे क्रियासंभवोऽस्ति ; तथा सति मूर्तत्वेन नित्यत्वहानेः, 'दधिधवलमाकाशमि'ति प्रतीते'र्नीलं नभः' इति प्रतीतिवद्द भ्रान्तित्वात् । का तर्हि चक्षुरन्वय-व्यतिरेकयोर्गतिरिति—चेत्, न ; अन्धादेरप्याकाशप्रतीतेः, अन्यथा तद्गमनाद्यभावप्रसङ्गात् ; तदन्वय-व्यतिरेकयोर्मूर्तद्रव्यभावाभावनिश्च-यार्थत्वेन तदन्यथासिद्धेः ॥

*ननु*—आकाशं चेदतीन्द्रियम्, हन्त कथमपरोक्षभ्रमाधिष्ठानं स्यात् ? तदधिष्ठानस्यापरोक्षत्व-नियमात् । नच—अतीन्द्रियत्वेऽप्यात्मवत् स्वप्रकाशत्वात्तस्यापरोक्षत्वं स्यादिति—वाच्यम् ; जडत्वात्तस्य

### भाष्यभावप्रकाशिका

बाह्येन्द्रियग्राह्यम्, नापि मनसोऽसहायस्य बाह्ये वृत्तिः ; तेन प्रसिद्धप्रत्यक्षत्वहीनेऽपि नभसि, अविवेकिनः, तलम् = इन्द्रनीलकटाहकल्पम्, मलिनतां धूम्रतामन्यच्चापीताद्यध्यस्यन्ति । तथाचाधिष्ठाना-

### भामती

प्रत्यक्षम् । अथच तत्र *बालाः=अविवेकिनः परदर्शितदर्शिनः, कदाचित् पार्थिवच्छायां श्यामतामारोप्य, कदाचित्तैजसं शुक्लत्वमारोप्य–'नीलोत्पलपलाशश्याममि'ति वा 'राजहंसमालाधवलमि'ति वा निर्वर्णयन्ति। तत्रापि पूर्वदृष्टस्य तैजसस्य वा तामसस्य रूपस्य परत्र नभसि स्मृतिरूपोऽवभास इत्येवम्। तदेव तलमध्यस्यन्ति–अवाङ्मुखीकृतमहेन्द्रनीलमणिमयमहाकटाहकल्पमित्यर्थः। उपसंहरति–*एवम्=उक्तेन

### ऋजुप्रकाशिका

*तत्र बाला इति* ॥ बालशब्दस्य स्तनन्धयार्थकत्वभ्रमं वारयति—*अविवेकिन इति* ॥ सदात्मनाऽविवेकित्वेन तेषामध्याससंभव इत्यत आह—*परदर्शितेति* ॥ आकाशे तल-मलिनताद्यध्यासेऽध्यास-लक्षणं दर्शयति—*तत्रापीति* ॥ "इत्येवमि"त्यनन्तरं लक्षणमस्तीत्यध्याहार्यम्। तथाचाध्यासलक्षणयोगात् सोऽध्यास एवेति भावः। तदेव प्रकारान्तरेणाप्यध्यस्यन्तीत्याह—*तदेव तलमिति* ॥ आकाशतल-मेवेत्यर्थः। प्रकारान्तरेणाध्यासप्रकारमेवाह—*अवाङ्मुखीकृतेति* ॥ आकाशमेवावाङ्मुखीकृतमहेन्द्रजाल-मणिमयमहाकटाहकल्पमित्यप्यध्यस्यन्तीत्यर्थः। भाष्यस्थमुपसंहारं व्याचष्टे—*एवमुक्तेन प्रकारेणेत्यादिना* ॥

### वार्तिकम्

तदनुपपत्तेरिति—चेत्, *नैष दोषः* ; साक्षिभास्यतया तदपरोक्षतोपपत्तेः। *ननु*—बहिःपदार्थ आकाशः कथं साक्षिभास्यः स्यात्? तथात्वे वा सर्वप्रमाणवैयर्थ्यप्रसङ्ग इति—चेत्, न ; बहिःपदार्थस्यापि शुक्तिरजतादेः साक्षिभास्यत्ववत् तदुपपत्तेः। नचैतावता प्रमाणवैयर्थ्यम् ; प्रमाणायोग्यस्यैव साक्षात् साक्षि-भास्यत्वाङ्गीकारात्। नचाकाशमिन्द्रिययोग्यमित्युक्तमेव। *ननु*—शुक्तिरजतादिकं बहिःसंसर्गितया भासमानमपि न बहिःपदार्थो भवति ; साक्षिण्यध्यस्तत्वादिति—चेत्, *सत्यम्*; आकाशस्यापि साक्षि-ण्यध्यस्तत्वेनाबहिष्ट्वात्, सर्वस्यापि प्रपञ्चस्य ज्ञाताज्ञाततया साक्षिण्यध्यस्तत्वादित्युक्तं लक्षणभाष्यविभागे।

*ननु*—अज्ञाततयैव साक्षिण्याकाशादेरध्यास उक्तः, *सत्यमुक्तः* ;—किमेतावता? अज्ञाततयैव तद-परोक्षत्वसिद्धेः। नच भ्रमाधिष्ठानत्वानुपपत्तिः; शुक्तिकांशवदज्ञाततयाऽपरोक्षस्यैवाकाशस्य तदुपपत्तेः। *ननु* शुक्तेः सामान्यांशे ज्ञाततयाऽपरोक्षत्वमप्यधिष्ठानत्वे प्रयोजकं दृष्टम्, *सत्यम्* ; यत्राधिष्ठानेऽस्त्यंशभेदस्तत्र तथा दर्शनमुपपद्यते, यत्र तु नास्ति तद्भेदः, तत्राज्ञाततयैवापरोक्षत्वमधिष्ठानत्वे प्रयोजकम्, यथाऽऽत्मनि प्रपञ्चाधिष्ठानत्वे, तद्वदाकाशेऽपि सामान्य-विशेषांशाभावादज्ञाततयैवापरोक्षत्वं तत्प्रयोजकमिति श्लिष्टम्॥ अस्तु वा तादात्म्याध्यासेंऽशभेदेन ज्ञाताज्ञातरूपद्वयमधिष्ठानस्य, धर्माध्यासे तु न तदुभयरूपमपेक्षते; तदन्यतररूपेणैव तदधिष्ठानत्वोपपत्तेः। तद्यथा स्फटिकादौ लौहित्याद्यध्यासे ज्ञातरूप एव स्फटिकादिर्धर्मी भवति, आत्मनि कामादिधर्माध्यासे चाज्ञात एवात्मा, तद्वदज्ञात एवाकाशो नीलादिधर्माध्यासधर्मीति न किञ्चिदनुपपन्नमस्ति। नच–अज्ञातस्य नभसः कथं नभस्त्वेन नील-विशेष्यतया भानमिति—वाच्यम्; 'घटं न जानामी' त्यादावज्ञातस्यापि घटादेस्तत्त्वेन भानवत्तदुपपत्तेः। *वस्तुतस्तु*—ज्ञाततयैव साक्षिण्याकाशाध्यासः ; साक्षादविद्याकार्यत्वात्, शुक्तिरजतवत्, अन्तःकरणा-भौतिकत्वपक्षे तद्वच्च ; अन्यथा–'अयमाकाशः' इति ज्ञाततया सर्वजनीनानुभवविरोधापत्तेः। नच—एवमा-काशस्य वृत्तिविशिष्टतयाऽध्यस्तत्वे शुक्तिरजतादिवत् सर्वजनीनानुभवगोचरतैव न स्यादिति—वाच्यम् ; अन्तःकरणाद्यनवच्छिन्ने शुद्धे साक्षिणि तदध्यासात्सर्वाध्यक्षगोचरतोपपत्तेः, शुक्तिरजताद्यध्यासस्यान्तः-

### पञ्चपादिका

पत्रसदृशम् मलिनताञ्च = धूमादिकमन्यच्च नीलोत्पलसमानवर्णतादि, अध्यस्यन्ति ।

### पञ्चपादिकाविवरणम्

साक्षिवेद्यतया मनोमात्रगम्यतया वाऽपरोक्ष इत्यर्थः । इन्द्रनीलमिव नीलमित्यर्थः ।

### ऋजुविवरणम्

व्यापारमन्तरेणापरोक्षत्वमुपपद्यते ? इत्याशङ्क्य व्याचष्टे—*साक्षिवेद्यतयेति* ॥ "इन्द्रनीलमि"ति कथमुक्तम् ? नहीन्द्रनीलबुद्धिराकाशे स्वीक्रियते, इत्याशङ्क्य व्याचष्टे—*इन्द्रनीलमिवेति* ॥ "अध्यासमविद्येति मन्यन्ते"इति कथमुक्तम् ? विरोधात्, नहि प्रमाणाभावे "पण्डिता मन्यन्ते"इत्येतावन्मात्रेणाविद्यात्वसिद्धिः । नापि तेषां पण्डितत्वम् ; प्रमाणाभावेऽप्यन्यदन्यत्वेन मन्यन्ते यतः । तथा "तमेतमि"ति कीदृशस्य निर्देशः ? इति न ज्ञायते, तदर्थम्—

### तत्त्वदीपनम्

साक्षिणमनङ्गीकुर्वाणं प्रत्याह—*मनोमात्रेति* ॥ मनसोऽसहायस्य बहिरप्रवृत्तिरित्याशङ्क्य कार्यदर्शनेन बहिःप्रवृत्तिकल्पनसंभवादिति प्रौढ्यवलम्बनेनोक्तमिति द्रष्टव्यम् । किमाकाशस्य नित्यानुमेयत्वम् ? उतापरोक्षस्पष्टीकरणार्थमनुमानम् ? नाद्यः ; अपरोक्षानुभवविरोधात्, द्वितीयस्त्वङ्गीक्रियते । यच्चेदमुच्यते—मूर्तद्रव्याभाव इति, तदप्यसङ्गतम् ; विहायस्येकस्मिन्वयसि सञ्चरति वयोऽन्तरे सञ्चरणं न स्यात् ; प्रतिबन्धसद्भावात् । नच—यत्रावरणाभावस्तत्र सञ्चरणमित्यपि—शङ्क्यम् ; आवरणाभावाधिकरणत्वेन तदतिरिक्तगगनसिद्धेरित्यभिसन्धिः । 'गगनम् इन्द्रनीलमि'ति बुद्ध्यभावात् कथमिन्द्रनीलमित्युक्तमित्याशङ्क्याह—*इन्द्रनीलमिवेति* ॥

लक्षण-संभवानाभ्यामध्यासमर्थनं सूत्रासङ्गतम्, अध्यासस्यासूत्रितत्वादित्याशङ्क्याविद्यायाः सूत्रितत्वादध्यासस्याविद्यात्वात्तद्दर्शनमित्युक्तम्, तदयुक्तम्, तस्याविद्यात्वे प्रमाणाभावात् । नच पण्डितमतिविषयत्वेन प्रामा-

### वार्तिकम्

करणाद्यवच्छिन्नचैतन्याध्यस्तत्वादसाधारण्योपपत्तेः । नच—एवं तदभिव्यञ्जकसाक्षिणस्तदाकाराविद्यावृत्तेश्च साधारण्यात् सर्वेषां सर्वदाऽऽकाशानुभवः स्यादिति—वाच्यम् ; अविद्यानुभववत्तदनुभवतथात्वस्येष्टत्वात् । परंतु सर्वसाधारणस्यापि निर्विकल्पकसाक्ष्यनुभवस्य तदवच्छेदकाविद्यावृत्तेश्च जागरे यन्मनःसम्भेदेन विकल्पनम्, तस्यैवाविद्यानुभववत् सविकल्पतयाऽऽकाशानुभवः, नान्यस्य । एतदभिप्रायेणैव टीकाकार आकाशस्य मनोवेद्यत्वं जगादेति, तदपि समञ्जसम् । *एतेन*—आकाशाध्यासस्य साक्ष्याश्रितत्वे ईश्वरोपादानत्वं न स्यात्—*इत्यपास्तम्* ; रजताध्यासस्य साक्ष्याश्रितत्वेऽपि शुक्त्युपादानत्ववद् आकाशाध्यासस्य साक्ष्याश्रितत्वेऽपि विषयत्वमात्रेणेश्वरोपादानत्वाविरोधात् । *एतेन*—ज्ञाताज्ञाततया सर्वावभासकत्वेन सर्वज्ञत्वादीश्वरोपाधिसाङ्कर्यम्—*इत्यपास्तम्* ; मायावृत्त्या ज्ञाततया सर्वावभासकत्वरूपसर्वज्ञत्वस्यैवेश्वरोपाधित्वात् । साक्षिणस्तु ज्ञाताज्ञाततया सर्वावभासकत्वेऽपि ज्ञाततया सर्वावभासकत्वाभावात्तदुपाधिसाङ्कर्यानुपपत्तेरित्यास्तामयं प्रसङ्गः । सर्वथाऽप्याकाशस्य साक्षिभास्यतयाऽपरोक्षत्वम् । तथाचापरोक्षत्वादुपपन्नम्—"नीलं नभः" इत्यादिभ्रमाधिष्ठानत्वमिति । सम्भावनां

### भाष्यभावप्रकाशिका

रोप्ययोर्नैकेन्द्रियग्राह्यत्वनियतिरिति भावः ॥ दार्ष्टान्तिकं ब्रुवाणः संभावनां निगमयति—*एव-

### प्रदीपः

तु सम्प्रयोगजप्रत्यक्षविषयः, नैल्यं तु भूम्यादिगतमौपाधिकमाकाशेन्द्रियसम्प्रयोगजप्रत्यक्षविषय इति तुल्येन्द्रियग्राह्यत्वं व्यभिचरितमिति भावः । व्यक्तं चाद्वैतसिद्धावाकाशस्य साक्षिभास्यत्वं प्रतिपादितम् । अत्राकाशदृष्टान्तोपादानात् स्वप्नविभ्र-

**एवमविरुद्धः प्रत्यगात्मन्यप्यनात्माध्यासः। तमेतमेवंलक्षणमध्यासं पण्डिताः—'अविद्ये'ति मन्यन्ते।**

### भामती

प्रकारेण सर्वाक्षेपपरिहारादविरुद्धः प्रत्यगात्मन्यप्यनात्मनाम्=बुद्ध्यादीनाम्, अध्यासः। *ननु* सन्ति च सहस्रमध्यासाः, तत् किमर्थमयमेवाध्यास आक्षेप-समाधानाभ्यां व्युत्पादितः? नाध्यासमात्रमिति? अत आह—*तमेतमेवंलक्षणमध्यासं पण्डिता 'अविद्ये'ति मन्यन्ते*॥ अविद्या हि सर्वानर्थ-

### ऋजुप्रकाशिका

*सहस्रमध्यासा इति*॥ रजताद्यध्यासप्रभृतय इत्यर्थः। *अयमेवाध्यास इति*॥ आत्मन्यनात्माध्यास एवेत्यर्थः। *नाध्यासमात्रमिति*॥ अध्यासमात्रं किमिति न व्युत्पाद्यत इत्यर्थः। आत्मन्यनात्माध्यासस्यैवानर्थहेतुत्वेनाविद्यात्वात् तत्परिज्ञानाभावे तदुच्छेदाय प्रवृत्त्ययोगात् स एवावश्यं व्युत्पाद्यत इत्यभिप्रेत्याह —*अत आहेति*॥ अभिप्रायमेव विवृणोति—*अविद्या हीत्यादिना*॥ *स एव* आत्मन्य-

### पञ्चपादिका

*एवमविरुद्धः *इति सम्भावनां निगमयति। यथाऽऽकाशस्याक्षव्यापारमन्तराऽप्यपरोक्षता, तथा दर्शयिष्यामः॥ *ननु* ब्रह्मविद्यामनर्थहेतुनिर्बर्हणीं प्रतिजानताऽविद्याऽनर्थहेतुः सूचिता, ततः सैव कर्तृत्वाद्यनर्थबीजमुपदर्शनीया, किमिदमध्यासः प्रपञ्च्यते? इत्याशङ्क्याह—*तमेतमेवंलक्षणमध्यासं पण्डिताः=प्रमाणकुशलाः 'अविद्ये'ति मन्यन्ते।

### पञ्चपादिकाविवरणम्

*एवमविरुद्ध इत्यादिः स्पष्टार्थः*। प्रतिपन्नोपाधौ निरस्यमानमर्थमविद्यान्वय-व्यतिरेकाभ्यामविद्यां मन्यन्त इत्यर्थः॥ न केवलमविद्यान्वयव्यतिरेकसामर्थ्यादविद्योपादानतयाऽविद्यात्वम्, किन्तु विद्याविपरीतत्वाच्चेत्याह—

### ऋजुविवरणम्

व्याचष्टे—*प्रतिपन्नोपाधाविति*॥ "तद्विवेकेने"ति भाष्यकारेण विवेकशब्दप्रयोगः कृतः, स न युक्तः; अविवेकानङ्गीकारात्, अध्यासस्वरूपप्रदर्शनावसरेऽविद्यास्वरूपप्रदर्शनस्यासङ्गतत्वादित्याशङ्क्याभिप्रायमाह—*न केवलमविद्या-

### तत्त्वदीपनम्

णिकत्वम्; अतिप्रसङ्गादित्याशङ्क्याह—*प्रतिपन्नेति*॥ "प्रमाणकुशलाः" इत्यनेनान्वय-व्यतिरेकावुक्तावित्यर्थः। अध्यासस्याविद्यात्वसाधनस्योपक्रान्तत्वात् "तद्विवेकेने"त्यत्र विद्याप्रदर्शनमनुपपन्नमित्याशङ्क्याह—*न केवलमिति*॥

### वार्तिकम्

निगमयति—*एवमविरुद्धः प्रत्यगात्मन्यनात्माध्यास इति*॥ यथाऽतीन्द्रिये नभस्यपरोक्षत्वमात्रेणेन्द्रियविषयजातीयनीलाद्यपरोक्षाध्यासो लोके दृष्टत्वादविरुद्धः, एवं प्रत्यगात्मन्यपीन्द्रियाविषयेऽपरोक्षत्वमात्रेणापरोक्षान्तःकरणाद्यध्यासो न विरुध्यत इत्यर्थः॥

ननु—उक्ताध्यासः प्रत्यगात्मन्यविरुद्धश्चेत्, हन्त तर्हि तत्कृतगुण-दोषाभ्यामात्मा सम्बद्धः स्यात्; अन्यथा तत्र तद्वैफल्यापत्तेः, दृष्टश्च लोके रज्ज्वादौ भुजङ्गाद्यध्यासकृतभयाद्युत्पादनार्थक्रियाकारितायोगः। नच—एवमस्त्विति—*वाच्यम्*; तथा सत्यात्मनो निरञ्जनत्वादिश्रुतिव्याकोपापत्तेः, इत्याशङ्क्यात्मनि तत्कृतगुण-दोषासंसर्गं दर्शयितुमध्यासस्याविद्यात्मत्वं दर्शयति—*तमेतमेवंलक्षणमध्यासं पण्डिता

### भाष्यभावप्रकाशिका

मिति*॥ आत्मानात्मनोः चिदचित्त्वेन वास्तवाभेदासिद्धौ सामानाधिकरण्यात् तदभेदधीरध्याससंभावनां

### भामती

बीजमिति श्रुति-स्मृतीतिहास-पुराणादिषु प्रसिद्धम्। तदुच्छेदाय च वेदान्ताः प्रवृत्ता इति वक्ष्यति। प्रत्यगात्मन्यनात्माध्यास एव सर्वानर्थहेतुः, न पुनारजतादिविभ्रमाः, इति स एवाविद्या। तत्स्वरूपं चाविज्ञातं न शक्यमुच्छेत्तुम्, इति तदेव व्युत्पाद्यम्, नाध्यासमात्रम्। अत्र च "एवंलक्षणम्" इत्येवंरूपतयाऽनर्थहेतुतोक्ता। यस्मात् प्रत्यगात्मन्यशनायादिरहितेऽशनायाद्युपेतान्तःकरणाद्यहितारोपेण प्रत्यगात्मानमदुःखं दुःखाकरोति; तस्मादनर्थहेतुः। नचैवं पृथग्जना अपि मन्यन्तेऽध्यासम्,येन न व्युत्पाद्येतेत्यत उक्तम्—*पण्डिता मन्यन्ते* ॥ *ननु* इयमनादिरतिनिरूढनिबिडवासनानुबद्धाऽविद्या न शक्या निरोद्धुम्;

### ऋजुप्रकाशिका

नात्माध्यास एव। *तत्स्वरूपम्=आत्मन्यनात्माध्यासस्वरूपम्। तदेव=आत्मन्यनात्माध्यासस्वरूपमेव। अविद्यारूपनिरुक्ताध्यासस्यानर्थहेतुत्वमुक्तम्, तत् केन पदेन सूचितमिति वीक्षायामाह—*अत्र चैवंलक्षणमिति* ॥ *एवंरूपतया* ॥ एवंलक्षणपदेनेत्यर्थः। *उक्ता=सूचिता। *ननु*—प्रत्यगात्मनि अनात्मान्तःकरणाहङ्कारादितादात्म्याध्यास एवंलक्षणशब्दार्थः, तावता एवंलक्षणशब्देन कथमनर्थहेतुता सूच्यते? इत्यत आह—*यस्मात् प्रत्यगात्मनीत्यादिना* ॥ एवंलक्षणशब्दार्थस्य निरुक्ताध्यासस्य दुःखित्वापादनत्वदर्शनादनर्थहेतुत्वं तेन सूचितमिति भावः। पण्डितपदकृत्यमाह—*नचैवमिति* ॥ *पृथग्जनाः=

### वार्तिकम्

'अविद्ये'ति मन्यन्ते—इति* ॥ यद्वा—*ननु*—भवतु नामोक्ताध्यास आत्मनि, तथाऽपि सांख्यादिसिद्धान्तन्यायेन स पारमार्थिको भविष्यति, तथाच तत्कृतगुण-दोषादिप्रसक्तिरात्मनि स्यादिति, नेत्याह—*तमेतमिति* ॥ यद्वा—"अविद्यात्मकबन्धप्रत्यनीकत्वादि"त्यत्र बन्धस्याविद्यात्मकत्वासिद्धिशङ्कायां तदविद्यात्मकत्वमेव प्रतिपादनीयम्, किमध्यासप्रतिपादनेनेति? नेत्याह—*"तमेतमि"ति ॥—*तम् आक्षेप-समाधानाभ्यामादिभाष्याभ्यां व्युत्पादितम्, *एतम्=सम्भावनाभाष्येण सम्भावितम्, *एवंलक्षणम्=लक्षणभाष्येण लक्षितम्; आत्मनि धर्म-धर्म्यध्यासमित्यर्थः। सदसद्विवेचिका बुद्धिः पण्डा, सा येषां सञ्जातेति "तदस्य सञ्जातं तारकादिभ्य इतच्" इति सूत्रेण 'तारकितम्' इतिवत्, ते; पण्डिताः=व्यासादयः—तमेतमेवंलक्षणमध्यासं सर्वानर्थमूलत्वाद् अविद्याकार्यत्वाद् 'अविद्ये'ति मन्यन्ते। तथाच तेषां स्मरणम्—

"तमो मोहो महामोहस्तामिस्रश्चान्धतामिस्रः। अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः" ॥ इति ॥

भगवानपि पतञ्जलिरुक्ताध्यासस्याविद्यात्वमाह—अनित्याशुचि-दुःखानात्मसु नित्य-शुचि-सुखात्मख्यातिरविद्ये"ति। किमर्थं तेषां मूलाविद्यां परित्यज्य तत्कार्याध्यासेऽविद्याभिमानः? सर्वानर्थसाधकत्वादित्यवोचाम; सुषुप्ति-प्रलयादौ मूलाविद्यायां सत्यामप्यनर्थादर्शनात्, तद्भावे च जागरादौ च

### भाष्यभावप्रकाशिका

गमयतीति भावः ॥ *ननु* ब्रह्मविद्यापोद्यत्वेन सूत्रितामविद्यां हित्वा किमित्यध्यासो वर्ण्यते? तत्राह—*तमेतमिति* ॥ आक्षिप्तत्वं समाहितत्वं च लक्षितत्वविशेषणार्थः। "अध्यासः" इत्यनुभवानुसारिण्यनर्थतोक्ता। *पण्डिता मन्यन्त इति* ॥ पृथग्जनागोचरत्वेनैतदविद्यात्वस्य व्युत्पाद्यत्वमुक्तम्। प्रतिपन्नोपाधौ निषेध्यस्याविद्यान्वय-व्यतिरेकित्वादविद्यात्वमस्येति वक्तुमविद्याग्रहणम्; अतो न सूत्रिताऽविद्योपेक्षिता; तस्या एव वर्ण्यमानत्वादित्यर्थः ॥ न केवलमन्वयादिनाऽस्याविद्यात्वम्; विद्यापोद्यत्वेन

## तद्विवेकेन च वस्तुस्वरूपावधारणं विद्यामाहुः ।

### भामती

उपायाभावादिति यो मन्यते, तं प्रति तन्निरोधोपायमाह---*तद्विवेकेन च वस्तुस्वरूपावधारणम् = निर्विचिकित्सं ज्ञानं विद्यामाहुः पण्डिताः । प्रत्यगात्मनि खल्वत्यन्तविविक्ते बुद्ध्यादिभ्यः, बुद्ध्यादिभेदाग्रह-

### ऋजुप्रकाशिका

पामरजनाः । *तद्विवेकेन=अध्यस्तदेहेन्द्रियाहङ्कारादिभ्यो भेदेन । वस्तुस्वरूपावधारणशब्दार्थमाह—*निर्विचिकित्समिति* ॥ "पण्डिताः" इत्येतत्---"आहुरि"त्यनेन सम्बध्यते । विद्यामभिधाय तन्निवर्त्याध्यासः किंनिमित्तकः ? इति वीक्षायां तन्निवर्त्यमध्यासं पुनः सुखबोधाय सनिमित्तं दर्शयति—*प्रत्यगात्मनीति* ॥ बुद्ध्यादिभ्योऽत्यन्तविविक्ते प्रत्यगात्मनीति योजनीयम् । बुद्ध्यादिस्तच्छब्दार्थः । एवं सनिमित्तमध्यास-

### पञ्चपादिका

तद्विवेकेन च वस्तुस्वरूपावधारणं विद्यामाहुः* ॥ अध्यस्तातद्रूपसर्पविलयनं कुर्वद् वस्तुस्वरूपं रज्जुरेवेत्यवधारयद् विज्ञानं विद्येति प्रसिद्धमेव लोके ब्रह्मविदो वदन्ति ।

### पञ्चपादिकाविवरणम्

*तद्विवेकेनेति* ॥ *ननु* अविद्यामुपवर्ण्य तस्या ज्ञाननिवर्त्यत्वप्रदर्शनेनाध्यासनिवृत्तिसिद्धेः किमध्यासोप-

### ऋजुविवरणम्

न्वयेति* ॥ "विद्याविपरीतत्वाचे"त्यनेन विवेकप्रतियोगितयाऽविवेकमात्रमध्यास इति शङ्कानिरासः कृतः । "अध्यस्तातद्रूपे"ति व्याख्याने विवक्षाऽप्युक्ता । "यद्येवमि"त्यनेनाविद्येत्येवोपक्रमः कृतो युक्तः ; इतरथाऽध्यासस्याविद्यात्वेन विना ज्ञाननिवर्त्यत्वाभावात् तदपि वक्तव्यमिति यत्नगौरवं स्यादित्युक्तम् ; तद्युक्तम् ; अध्यासनिवृत्तिः प्रयोजनम् । सा चाध्यासस्याविद्योपादानत्वकथनेन विना न सिध्यति, अतः प्रयोजनवशाद्गौरवं न दोषायेत्याशङ्क्यावतारयति—*नन्वविद्यामुपवर्ण्येति* ॥ "नैतत्सारमि"त्यनेनैतदुक्तम्—अविद्याशब्देनाच्छादनप्रधानरूपमभिधीयते, नतु विक्षेप-

### तत्वदीपनम्

अध्यासनिवृत्तिफलसंभवात् तद्वर्णनमुचितम्; अतः कथमध्यासवर्णनस्यायुक्तत्वम्? इत्याशङ्क्य निवृत्तिरन्यथाऽपि संभवतीत्याह—*नन्वविद्यामिति*॥ टीकाया'मविद्ये'त्येव कृत उपक्रमो वरमिति योजना । अविद्यायां वर्ण्यमानायामाच्छादकत्वमेवोक्तं स्यात्, न तु विक्षेपरूपत्वमित्युक्तम् ; तत्र विक्षेपरूपाभिधाने किं प्रयोजनम् ? न स्वरूपेणानर्थत्वम् ; सुपुप्तौ तद्दर्शनात्। ततश्च विक्षेपहेतुत्वेनानर्थत्वं वक्तव्यं निवृत्तिसिद्ध्य इत्यर्थः। *प्रकृतोपयोगितयेति*॥ अनर्थहेतुतया निवृत्तिसिद्ध्यर्थं

### वार्तिकम्

तद्दर्शनात् । नचैवं सति मूलाविद्या निरर्थिका ; तदभावेऽध्यासासिद्धेस्तत्सार्थक्यात् । इतोऽपि तस्याविद्यात्वमित्याह—*तद्विवेकेन च वस्तुस्वरूपावधारणं विद्यामाहुरिति* ॥ यदि ह्यात्मन्यहमाद्यध्यासः पारमार्थिकः स्यात्, तर्हि तस्यापि वस्त्वन्तःपातित्वात्ततोऽहमादेर्निष्कृष्य वस्तुनः स्वरूपावधारणं विद्यां नाचक्षीरन् । तथाच श्रुतिः "द्वे विद्ये वेदितव्ये" इति—"यद् ब्रह्मविदो वदन्ती"त्युपक्रम्य परापरविभागेन परविद्यास्वरूपमवधारयति—"अथ परा यया तदक्षरमधिगम्यते"इत्युपन्य-

### भाष्यभावप्रकाशिका

तद्विरोधित्वाच्चेत्याह—*तद्विवेकेनेति* ॥ अथवा—केनोपायेन तन्निवृत्तिरित्याकाङ्क्षायां तन्निवृत्त्युपायमाह—*तद्विवेकेनेति* ॥ तस्याध्यस्तस्य बुध्यादेः, विवेको विलापनम् । तेन रूपेणात्मनोऽ-

### प्रदीपः

माद्यनुपादानाचान्तःकरणेन्द्रियत्ववाद एव समुचित इति सूच्यते, इति तदिन्द्रियतासिद्धान्तो भामतीकाराणां न भाष्यासम्मतः । तदेवमध्यासमसंभावनाशङ्कापरिहारसंभावितमुपसंहरति—*एवमविरुद्ध इति* ॥ *ननु* एवमपि चिद्रूपे प्रत्यगात्मनि कथम-

### भामती

निमित्तो बुद्धयाद्यात्मत्व-तद्धर्माध्यासः। तत्र श्रवण-मननादिभिर्यद् विवेकविज्ञानम्, तेन विवेकाग्रहे निवर्तिते, अध्यासावबाधात्मकं वस्तुस्वरूपावधारणं विद्या चिदात्मरूपं स्वरूपे व्यवतिष्ठत इत्यर्थः॥

*स्यादेतत्*—अतिनिरूढनिबिडवासनानुविद्धाऽविद्या विद्ययाऽपबाधिताऽपि स्ववासनावशात्

### ऋजुप्रकाशिका

ममभिधाय तन्निवर्तकविद्यास्वरूपं सुखबोधाय सनिमित्तं दर्शयति—*तत्र श्रवणेत्यादिना*॥ निदिध्यासनमादि-शब्दार्थः। "तेने"त्यनन्तरमध्यासनिमित्तभूत इति शेषः। *अध्यासावबाधात्मकम्=अध्यासनिवर्तकम्। वस्तुस्वरूपं च तदवधारणं चेति कर्मधारयमाश्रित्याविद्यानिवर्तकाखण्डाकारवृत्त्यभिव्यक्तचैतन्यमेव विद्येत्यभि-प्रेत्याह—*विद्या चिदात्मस्वरूपमिति*॥ *ननु* अभिव्यक्तचैतन्यस्य स्वरूपेणाजडत्वेऽपि अभिव्यक्तत्वविशिष्ट-वेषेण जडतया ज्ञानलक्षणविद्यात्वायोगात् कथमविद्यानिवर्तकत्वम्? ज्ञानस्यैवाज्ञाननिवर्तकत्वात्, इत्याशङ्क्य, अभिव्यक्तचैतन्यमपि विशेषणभागं परित्यज्य चैतन्यस्वरूपे पर्यवस्यति, तच्च वृत्तिसहकारादज्ञाननिवर्तक-मेवेत्यभिप्रेत्याह—*स्वरूपे व्यवतिष्ठत इति*॥ "स न सम्बध्यते" इत्युक्तम्—किं दोष-गुणासंस्पर्शित्वमेकस्य?

### पञ्चपादिका

*यद्येवम्* अध्यास इति प्रक्रम्य पुनस्तस्याविद्याभिधानव्याख्याने यत्नगौरवाद् वरमविद्येत्येवोपक्रमः कृतः? *नैतत् सारम्*; अविद्येत्येवोच्यमान आच्छादकत्वं नाम यत् तस्यास्तत्त्वम्, तदेवाभिहितं स्यात्, नातद्रूपावभासितयाऽनर्थहेतुत्वम्। अतोऽतद्रूपावभासित्वमध्यासशब्देन प्रकृतोपयोगितयोपक्षिप्य पुनस्त-

### पञ्चपादिकाविवरणम्

वर्णनेन? इति चोदयति—*यद्येवमध्यास इति*॥ *प्रक्रम्येति*॥ पुरुषाकाङ्क्षाया अनर्थनिवृत्तिविषयत्वाद् अनर्थ-स्यैवाविद्यात्वेन ज्ञाननिवर्त्यत्वं वक्तव्यमिति परिहरति—*नैतत्सारमिति*॥ अनर्थस्यैवाविद्यात्मकत्वे तदाश्रये विषये वा वस्तुतस्तन्निमित्तगुणदोषाभावाद् ज्ञानेन सर्वानर्थनिवृत्तिः फलिष्यति, तत्फलवचनमुत्तरभाष्य-

### ऋजुविवरणम्

रूपम्, तदभिधानमेव चात्र प्रकृतोपयोगितया वर्णितव्यमित्युक्तम्, तदयुक्तम्; अविद्यानिवृत्तौ तन्निवृत्तिसिद्धेः, किं तज्ज्ञानेन? तथाऽऽच्छादनरूपस्य प्राधान्येनाभिधानम्, नतु तदेवाभिधेयम्; विक्षेपरूपस्याप्यभिधेयरूपत्वात्, अतोऽ-विद्ययोपक्रमेऽपि प्रकृतोपयोगः सिध्यत्येव, तेन नायमध्यासोपक्रमे हेतुरित्याशङ्क्याभिप्रायमाह—*पुरुषाकाङ्क्षाया इति*॥ "तदेवाहे"त्ययुक्तम्; पूर्वग्रन्थे हि विद्यामात्रापनोदार्हत्वं दर्शनीयमित्युक्तम्। "तदेवाहे"त्यत्र तच्छब्देन तदेव निर्दिश्यते। नच तदस्मिन् भाष्ये प्रतीयते; गुण-दोषाभावमात्रप्रतीतेः। तथा परस्परव्याहतश्च; "तदेवाहे"त्युक्त्वाऽनन्तरग्रन्थे—"अवास्तवमनर्थं दर्शयती"त्युक्तत्वात्। नचार्थद्वयमस्मिन् भाष्ये प्रतीयते। नाप्येकैकस्यार्थद्वयमुपपद्यते, इत्याशङ्क्याभि-प्रायमाह—*अनर्थस्यैवाविद्यात्मकत्वेनेति*॥ *ननु*—आत्मनोऽध्यासविषयत्वे, आश्रयविषयत्वे च कथं तन्निमित्त-

### तत्त्वदीपनम्

प्रवर्तकसूत्रतया प्रवृत्तिसिद्ध्यर्थं वेत्यर्थः। अध्यासस्यानर्थात्मकस्याविद्याशब्दतया विद्यामात्रनिवर्त्यत्वमुक्त्वा तस्मिन्नर्थे भाष्यमवक्ष्यत्—"तदाहे"ति, तदनुपपन्नम्; भाष्ये गुणदोषासंबन्धमात्रप्रतिपादनादित्याशङ्क्याह—*अनर्थस्येति*॥ आश्रयशब्देन भ्रान्तिपरिणामिनिर्देशः। विषयपदमधिष्ठानवाचि। *तत्=एतदित्यर्थः। *तत्=तत्र; अनर्थस्याविद्यात्मक-तया विद्यानिवर्त्यत्वे सति। एतत्पदं बुद्धिस्थं फलमाह॥

### प्रदीपः

ज्ञानाश्रय-विषयभावः? विरोधात्, इत्याशङ्कानिरासः कथमिति चेत्, यथा मिथ्याज्ञाननिमित्तोऽध्यासस्तत्राविरुद्धः, एवं मिथ्या-ज्ञानमप्यविरुद्धम्। स्वरूपचैतन्यं हि यद्यज्ञानेन विरुद्धम्, तर्हि कथं तत्कार्यप्रपञ्चजातेनापि न विरुद्धमिति। तथा च "अक्षमा भवतः केयं साधकत्वप्रकल्पने। किं न पश्यसि संसारं तत्रैवाज्ञानकल्पितम्" इति कारिकोक्तरीत्या यत्र ब्रह्मणि सर्वोऽपि प्रपञ्चः कल्पितः, तत्राज्ञानाश्रयत्व-विषयत्वकल्पनमपि न दुष्टमिति भावः। इममेवार्थं सूचयितुमाह—*तमेतमेवंलक्षणमध्यासं पण्डिता

**तत्रैवं सति यत्र यदध्यासः, तत्कृतेन दोषेण गुणेन वाऽणुमात्रेणापि न स सम्बध्यते।**

### भामती

पुनरुद्भविष्यति, प्रवर्तयिष्यति च वासनादिकार्यं स्वोचितमित्यत आह—*तत्रैवं सति = एवंभूतवस्तुतत्त्वावधारणे सति यत्र यदध्यासः, तत्कृतेन दोषेण गुणेन वाऽणुमात्रेणापि स न संबध्यते = अन्तःकरणादि-

### ऋजुप्रकाशिका

अधिष्ठानाध्यस्यमानयोर्द्वयोर्वा ? नाद्यः ; एकस्य गुण दोषसंस्पर्शाप्रसक्तेस्तन्निषेधायोगाद्, द्वितीय एव पर्यवसानं वाच्यम् , तत्र किंगतेन दोषेण को न संबध्यते ? किंगतेन वा गुणेन को न संबध्यत इति वीक्षायामाह—*अन्तःकरणादीति* ॥ "न सम्बध्यते" इत्येतत् चिदात्मेत्यत्रान्तःकरणादिरित्यत्र चोभयत्र योजनीयम् । *ननु* अस्त्वधिष्ठानाध्यस्यमानयोर्यथाक्रमं दोष-गुणाद्यसम्बन्धः, तथाऽपि निबिडवासनानुबन्धाऽविद्या विद्यया बाधिताऽपि

### पञ्चपादिका

याविद्याशब्दितया विद्यामात्रापनोदनार्हत्वं दर्शनीयम्। तदेवाह—*यत्र यदध्यासः, तत्कृतेन दोषेण

### पञ्चपादिकाविवरणम्

मित्याह—*तदेतदाह यत्र यदध्यास इति* ॥ अविद्याध्यासविषयत्वप्रयुक्तस्तावद् गुण दोषाभावः सिद्धः ॥

### ऋजुविवरणम्

गुण-दोषाभावः ? इत्याशङ्क्याह—*अविद्याध्यासविषयत्वेति* ॥ विषयत्वं विना यद्यध्यासः साधितः, तदा तन्निमित्त-गुणाद्यभावः सिद्ध एव । अथवोदाहरणे विषयत्वप्रयुक्तगुण-दोषाभावः सिद्धः, इति न तत्र चोद्यमिति तावत्पदस्यार्थः । अथवाऽसङ्गत्वमविकारित्वं चात्मनः पूर्वमेव सिद्धम्, किमर्थं पुनर्गुण-दोषाभावकीर्तनम् ? पुनरुक्तिप्रसङ्गादित्याशङ्क्य परिहरति—*अविद्याध्यासविषयत्वेति* ॥ अथवा—यत्रेति सप्तम्यर्थत्वाद्विषयत्वप्रयुक्तगुण-दोषाभावः सिध्येदाकाशादिवत्, नैतावताऽऽत्मनो गुण-दोषाद्यभावः सिध्यति ; आश्रयत्वप्रयुक्तस्य गुण-दोषस्यापरिहार्यत्वादित्याशङ्क्याह—*अविद्याध्यासविषयत्वेति* ॥ आश्रयत्वप्रयुक्तस्तु बहिरेव कथ्यत इत्यर्थः । *ननु*—आश्रयत्वप्रयुक्तगुण-दोषौ

### वार्तिकम्

स्य तद्विषयवस्तुस्वरूपमनात्मनो विविच्य पण्डितमत्याऽवधारयति—"यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः" इति। तस्माद्ध्यासो न वस्तुतत्त्वेऽन्तर्भवति। किं तर्हि ? अविद्येत्यभिप्रायः। भवत्वेवम् , तथाऽपि प्रकृते किमायातमिति ? अत आह--*"तत्रैवं सति यत्र यदध्यासः, तत्कृतेन दोषेण गुणेन वाऽणुमात्रेणापि स न संबध्यते" इति* ॥

### भाष्यभावप्रकाशिका

साधारणरूपस्येदमित्थमित्यवधारणं विद्या। तद्विरोधित्वादिना सिद्धेरध्यासस्याविद्यात्वे सैवोच्यत इत्यर्थः ॥ तथाऽपि कारणविद्यां त्यक्त्वा कार्याविद्योक्तिरयुक्तेत्याशङ्क्याह—*तत्रेति* ॥ तस्मिन्नध्यासे दर्शनरीत्याऽविद्यात्मके सत्याच्छादकाविद्यायाः स्वापादौ स्वतोऽनर्थत्वादर्शनात् कर्तृत्वाध्यासात्मना तस्या जागरादौ तथात्वात् कार्याविद्यावर्णने यत्रात्मनि बुध्यादौ वा यस्य बुध्यादेरात्मनीवाध्यासः, तेन बुध्यादिना

### प्रदीपः

'अविद्ये'ति मन्यन्त इति* ॥ अविद्याकार्यत्वादविद्याशब्देनाध्यासोऽपि व्यवह्रियते । तथाच प्रपञ्चाध्यासवद् अज्ञानाश्रयत्वादिकमपि न दुष्टमिति फलितम् । *ननु* एवं सति चैतन्यस्याध्यासाविरोधित्वे, चैतन्येनाध्यासस्य सुतरां तन्मूलभूतमिथ्याज्ञानस्य च न निवृत्तिः ; निवर्तकान्तराभावात्, इति श्रीभाष्यायापादितनिवर्तकानुपपत्तिशङ्कानवसरं सूचयन्नध्यासनिवर्तकमुपक्षिपति—*तद्विवेकेन च वस्तु स्वरूपावधारणं विद्यामाहुरिति* ॥ 'इदं रजतमि'त्याद्यध्यासोऽविवेकग्रहनिबन्धनः, तस्य विवेचनेन-अगृहीतशुक्तित्वांशविवेचनेन ; अभेदे तृतीया । तथाच शुक्तित्वज्ञानरूपं यद् वस्तुस्वरूपावधारणम्—'इयं शुक्तिरि'ति . .

### भामती

दोषेणाशनायादिना चिदात्मा, चिदात्मनो गुणेन चैतन्यानन्दादिनान्तःकरणादि न संबध्यते । *एतदुक्तं भवति*—तत्त्वावधारणाभ्यासस्य हि स्वभाव एव स तादृशः, यदनादिमपि निरूढनिबिडवासनमपि मिथ्याप्रत्ययमपनयति । तत्त्वपक्षपातो हि स्वभावो धियाम् । यथाहुर्बाह्या अपि—

'निरुपद्रवभूतार्थस्वभावस्य विपर्ययैः । न बाधो यत्नवत्त्वेऽपि बुद्धेस्तत्पक्षपाततः ॥' इति ॥

विशेषतस्तु चिदात्मस्वभावस्य तत्त्वज्ञानस्यात्यन्तान्तरङ्गस्य कुतोऽनिर्वाच्ययाऽविद्यया बाध इति ? यदुक्तम्—"सत्यानृते मिथुनीकृत्य विवेकाग्रहादध्यस्याहमिदं ममेदमिति लोकव्यवहारः" इति, तत्र

### ऋजुप्रकाशिका

पुनरुद्भविष्यति, वासनादिकार्यं च प्रवर्तयिष्यतीत्यस्य कः परिहारः ? इत्यत आह—*एतदुक्तं भवतीत्यादिना*॥ *ननु* तत्त्वावधारणाभ्यासस्य कथं निरूढनिबिडवासनमिथ्याज्ञानापनायकत्वम् ? मिथ्याज्ञानपक्षपातित्वमेवास्तु, इत्याशङ्क्य, न तथा, किन्तु तत्त्वपक्षपातित्वमेव तत्त्वधियां स्वभाव इत्याह—*तत्त्वपक्षपातो हीति* ॥ बाह्या अपि तत्त्वपक्षपातित्वमेव धियां वदन्ति, किमु वक्तव्यम् ? अस्मदादय इत्यत्र, इति कैमुतिकन्यायमभिप्रेत्याह—*यथाहुरित्यादिना* ॥ प्रत्युत विशेष एवात्रास्तीत्याह—*विशेषतस्त्विति* ॥

### पञ्चपादिका

गुणेन वाऽणुमात्रेणापि स न सम्बध्यते इत्यवास्तवमनर्थं दर्शयति । वास्तवत्वे हि 'ज्ञानमात्रात् तद्विगमः' इति प्रतिज्ञा हीयेत ॥

### पञ्चपादिकाविवरणम्

अत्राध्यासपरिणामितयाऽऽश्रयत्वप्रयुक्तदोष-गुणाभावः कथ्यते । कथम् ? अनाद्यविद्याध्यासस्य नित्यचैतन्यावभासत्वान्न तत्राध्यासपरिणामः । कादाचित्काध्यासपरिणामस्याविद्योपादानत्वादविद्यासंभेदादात्माश्रयत्वादिसिद्धिरिति । *प्रतिज्ञेति* सूत्रकारस्य---ज्ञानेन बन्धनिवृत्तेरर्थात्सूत्रणमुच्यते ॥

### ऋजुविवरणम्

न स्त इति कथमुच्यते ? न ह्यध्यासपरिणामिनस्तन्निमित्तगुण-दोषाभावः संभवतीत्याक्षिपति—*कथमिति* ॥ अज्ञानाकारेण तदवभासाकारेण वा न परिणाम इत्याह—*अविद्याध्यासस्येति*॥ *ननु*—परिणामित्वाभावे कथमात्माश्रयत्वमध्यासस्य ? इत्याशङ्क्याह—*अविद्यासंभेदादिति* ॥ "प्रतिज्ञा हीयेते"ति कथमुक्तम् ? नहि बन्धनिवृत्तिप्रतिज्ञाऽस्ति, येनैवमुच्येत, इत्याशङ्क्य व्याचष्टे—*प्रतिज्ञेति*॥ *सूत्रकारस्येति* ॥ एवम्—"अध्याससद्भावमि"त्यादिनाऽ-

### तत्त्वदीपनम्

"न संबन्ध्यत"इति कथमुक्तम् ? संबन्धस्य प्रतीयमानत्वादिति शङ्कायां टीकाकृतोक्तम्—"अवास्तवमि"ति । अवास्तवत्वमुपपादयति—*वास्तवत्व इति* ॥ आश्रय-विषयत्वप्रयुक्तगुण-दोषासंस्पर्शाभिधानमनुपपन्नम् ; विषयत्वप्रयुक्तगुणाद्यसंस्पर्शस्य शुक्तिकादिदृष्टान्तेन सिद्धत्वेऽप्याश्रयत्वप्रयुक्तगुणादिसंस्पर्शोऽतिदुर्वारः । सर्पादिभ्रान्त्याश्रये परमार्थत एव भय-कम्पादिदृष्टेरित्याशङ्क्य तात्पर्यमाह—*अविद्येति* । तावदिति* ॥ लौकिकन्यायेन सिद्धत्वान्न किंचिद् वक्तव्यमस्तीत्यर्थः । आत्मनः परिणामित्वे तन्निमित्तगुणादिसंस्पर्शो दुर्वार इत्याह—*कथमिति* ॥ आत्मनः किमज्ञानाध्यासपरिणामित्वम् ? उताहंकाराध्यासपरिणामित्वम् ? इति विकल्प्याद्यं दूषयति—*अनाद्यविद्येति*॥ द्वितीयं प्रत्याह—*कादाचित्केति* ॥ आगन्तुकाध्यासस्याविद्याश्रयत्व आत्मनो नित्यमुक्तत्वाद् ज्ञानवैयर्थ्यमित्याशङ्क्याऽविद्या-तत्कार्ययोरात्मन्यध्यस्तत्वाद् ज्ञानस्यार्थवत्त्वमित्याह—*अविद्येति* ॥

"प्रतिज्ञा हीयेते"त्यत्र किं भाष्यकृतः प्रतिज्ञा उच्यते ? उत सूत्रकृतः ? नाद्यः ; तददर्शनात् ; न द्वितीयः ; विचारकर्तव्यतायास्तत्र प्रतिज्ञादर्शनादित्याशङ्क्याह—*प्रतिज्ञेति* ॥ ब्रह्मज्ञानप्रयोजनां विचारकर्तव्यतां सूत्रयताऽऽ-

### पञ्चपादिका

एवं तावद् "युष्मदस्मदि"त्यादिना "मिथ्याऽज्ञाननिमित्तः सत्यानृते मिथुनीकृत्याहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः" इत्यन्तेन भाष्येण सिद्धवदुपन्यस्तमात्माऽनात्मनोरितरेतरविषयम-विद्याख्यमध्यासं सिषाधयिषुः, तस्य लक्षणमभिधाय, तत्सम्भवं चात्मनि दर्शयित्वा, पुनस्तत्र सद्भावनि-

### पञ्चपादिकाविवरणम्

वृत्तसंकीर्तनपूर्वकमुत्तरभाष्यस्य तात्पर्यमाह—*एवं तावद्युष्मदस्मदित्यादिनेति* ॥ अत्र च प्रमातृ-प्रमाण-प्रमेय-कर्तृ-कर्म-कार्य-भोक्तृ-भोग-भोग्यत्वलक्षणस्य व्यवहारत्रयस्य शरीरेन्द्रियादिष्वहं-ममाध्यासपुरःसरत्वं प्रत्यक्षमिति

### ऋजुविवरणम्

ध्यासमुपपत्तित उपपादयितुमिच्छन्नाहेति भाष्यमवतारितम्, तत्र कथमुपपादनं कृतमिति न ज्ञायते, नहि "इतरेतराध्यासं पुरस्कृत्य व्यवहाराः"इत्येतावन्मात्रेणाध्याससिद्धिः; प्रमाणाधीनत्वात्सिद्धेः। तथा "प्रमाण-प्रमेयव्यवहारा लौकिकाः"-इत्युक्तम्, के ते? इति न ज्ञायते; तदर्थं व्याचष्टे—*अत्र च प्रमातृ-प्रमाणेति* ॥

"बाढमुक्तलक्षणे"त्यत्रैतदुक्तम्—उक्तलक्षणं संभावनं चास्ति, नैतावता तत्सद्भावसिद्धिरिति, तदयुक्तम्; प्रमाणस्याप्युक्तत्वात्, लक्षण-संभावनामात्राङ्गीकारायोगात्, नैतावता तत्सद्भावसिद्धिरिति चायुक्तम्; प्रमाणस्याप्युक्त-

### तत्त्वदीपनम्

चार्येण बन्धनिवृत्तिः सूत्रिता; ज्ञानस्य स्वरूपेणापुरुषार्थत्वादित्यर्थः। पूर्वोत्तरभाष्ययोरध्यासविषयत्वाद् मध्ये वृत्तकीर्तनमनुपपन्नमित्याशङ्क्य, लक्षणादेः पुरोक्तत्वात् प्रमाणस्य च "कथं पुनरि"त्यत्रोच्यमानत्वाद् व्यवहारस्य चा-ध्यासपुरःसरताया द्वितीयभाष्ये सिद्धत्वादुत्तरभाष्यमसङ्गतमिति शङ्कायां प्रमाणपरत्वाद् नास्य तावद् वैयर्थ्यमित्या-शयेनाह—*वृत्तेति* ॥ कर्त्रादिव्यवहारस्याविद्याविषयत्वमत्र कस्माद् नोक्तम्? प्रमाणं चोपन्यस्यमानं न पश्यामः, इत्याशङ्क्याह—*अत्रेति* ॥ प्रमात्रादिव्यवहारस्येतरेतरोपलक्षणत्वाद् "अध्यासं पुरस्कृत्ये"ति च साक्षिप्रत्यक्षस्योक्त-त्वाद् नावद्यमित्यर्थः ॥

### वार्तिकम्

*तत्रैवं सति*=अध्यासाविद्यात्वे सतीत्यर्थः। दोषः=दुःखादिः; प्रतिकूलत्वात्, *गुणः=सुखादिः; अनुकूलत्वात्, *अणुमात्रेणापि=अत्यल्पेनापीत्यर्थः। नच रज्ज्वां कल्पितभुजङ्गादिकृतभयादिहेतुत्व-योगः; तत्पूर्वोत्तरकालयोस्तत्र तदभावेन तत्कालेऽपि तस्यास्तदयोगात्, कल्पितसर्पज्ञानस्यैव भयादि-जनकत्वात्—इति। तथा च प्रयोगः—विवादाध्यासितोऽध्यासः, न वस्तुतः स्वाधिष्ठानातिशयहेतुः, अविद्या-त्मकत्वात्; स्वप्नेन्द्रजाल-गन्धर्वनगर-शुक्तिरजत-रज्जुभुजङ्गादिवत्। *ननु*—अस्त्यत्र प्रतिप्रयोगः; तथाहि—विवादाध्यासितोऽध्यासः, वस्तुतः स्वाधिष्ठानेऽतिशयाधायकः; वासनाधारत्वात्, चम्पकपुष्पा-दिवदिति—चेत्, *न*; तत्र स्वाश्रयपुष्पावयवेन सहैव पुटे पुष्पगन्धस्य विद्यमानत्वाद् वस्तुतस्तदाश्रय-त्वाभावाद् दृष्टान्तस्य साध्यविकलत्वात्। किं वा हेतौ वासनाशब्देन विवक्षितम्? यदि भावनापरपर्यायः संस्कारो गृह्यते, तदा साधनविकलो दृष्टान्तः। अथ गन्धः, तर्हि स्वरूपासिद्धो हेतुः; अन्तःकरण-कामाद्य-ध्यासस्यापार्थिवत्वेन गन्धानाधारत्वात्। नचोभयसङ्ग्राहकः कश्चिद्धर्मोऽस्ति, येन तं निमित्तीकृत्योभय-सङ्ग्राहकवासनाशब्दः स्यात्; तददर्शनात्। यदि ब्रूयात्—वासनाशब्देन संस्कारत्वजात्यवच्छिन्नं संस्कार-मात्रमभिधीयते, तच्च पक्ष-दृष्टान्तयोरुभयोरप्यस्ति; अन्तःकरणादेराध्यासिकस्य धर्माधर्मादिसंस्काराश्रय-त्वात्, चम्पकपुष्पादेश्च वेगाख्यसंस्काराश्रयत्वादिति, एवमपि साध्यवैकल्यमस्त्येवेति ॥ लक्षितस्तावदात्मा-नात्मनोः सामान्यतोऽध्यासः, सम्भावितश्च विशेषतः; अथेदानीं तत्र प्रमाणं वाच्यम्। नहि रजनीकरस्या-परभागे हरिणमवलोकयन् पुमान् परभागे तं सम्भावयन्नपि प्रमाणमन्तरेणाधिगच्छति; तत्र तस्य प्रमाणा-प्रवृत्तेः। *ननु*—एवं तर्हि प्रमाणमेव वाच्यम्, न सम्भावना; प्रमाणनिश्चितेऽर्थे सम्भावनाद्यौव्यादिति

**तमेतमविद्याख्यमात्माऽनात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमातृ-प्रमाण-प्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ताः, सर्वाणि च शास्त्राणि विधि-प्रतिषेध-मोक्षपराणि ।**

भामती

व्यपदेशलक्षणो व्यवहारः कण्ठोक्तः । इतिशब्दसूचितं लोकव्यवहारमादर्शयति । *तमेतमविद्याख्य-मिति* निगदव्याख्यातम् ॥

ऋजुप्रकाशिका

चिदात्मन एव तत्त्वज्ञानत्वप्रयुक्तविद्याबाध्यत्वमत्र विशेषः । *यदुक्तमिति* ॥ भाष्य इति शेषः ॥ *इति-शब्दसूचितमिति* ॥ 'अहमिदं ममेदम्' इतीत्यत्रत्येतिशब्दसूचितमित्यर्थः । *निगदव्याख्यातमिति* ॥ "तमेतमविद्याख्यमि"त्यारभ्य "मोक्षपराणी"त्यन्तं भाष्यं ; *निगदव्याख्यातम्=स्पष्टार्थमित्यर्थः । भाष्येऽध्यासं

पञ्चपादिका

श्चयमुपपत्तित उपपादयितुमिच्छन्नाह—*तमेतमविद्याख्यमात्माऽनात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमाण-प्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ताः, सर्वाणि च शास्त्राणि विधि-प्रतिषेध-मोक्षपराणीति* ॥

ऋजुविवरणम्

त्वात्, तदसिध्ययोगात् । तथा सह विवरणेन भाष्यमसङ्गतम् ; पूर्वभाष्ये हि व्यवहारत्रितयस्याध्यासपुरःसरत्व-मुक्तम्, अनन्तरं तत्रैव प्रश्नादिकरणं युक्तम् । नह्यविद्यावद्विषयत्वं प्रकृतं निरूप्यं वा, कुतस्तत्र प्रश्नकरणम् ? समाहि

वार्तिकम्

चेत्, *न* ; व्यभिचारात्, प्रत्यक्षेणाधिगतेऽपि वाराणस्यामार्द्रमरिचे 'नैतदत्र सम्भवती'त्यसम्भावना-दर्शनात् । तस्मात्तदसम्भावनानिवृत्त्यर्थं पृथक् सम्भावनाग्रा अपि वक्तव्यत्वान्न प्रमाणाभिधानेन सम्भावनाऽभिधानवैयर्थ्यम्, नवा सम्भावनाऽभिधानेन प्रमाणाभिधानवैयर्थ्यम् ; सम्भावितस्यापि रजनी-करपरभागहरिणस्य प्रमाणाभावेनानिश्चयात् । *ननु*—एवमपि न पृथक् प्रमाणाभिधानं कर्तव्यम्, लक्षणाभिधानेनैव तत्प्राप्तत्वात्, व्यतिरेकिहेतोर्लक्षणत्वादिति—चेत्, *सत्यम्* ; परन्तु लक्षणस्यैव गगनारविन्दसौरभविशेषवत् प्रमाणमन्तरेणासिद्धत्वात् तत्सिध्यर्थमेव प्रमाणमभिधातव्यम् । *ननु* तत्रापि प्रमाणमभिहितम्—"तथाच लोके ऽनुभवः" इत्यादिना, *सत्यम्* ; बहिरध्यासे तत् प्रमाणं प्रदर्शितम्, नात्मानात्माध्यासे, अतस्तत्प्रदर्शनमत्र क्रियते । *ननु* एवं तर्हि तत्रैव तत्प्रदर्शनमपि कार्यम्, *नेत्युच्यते* ; असम्भाविते प्रमाणप्रदर्शनस्य कर्तुमशक्यत्वादित्यास्ताम् । सर्वथापि प्रमाण-प्रदर्शनमत्र कर्तव्यम्, तदाह—"तमेतमविद्याख्यमाऽत्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमातृ-प्रमाण-

भाष्यभावप्रकाशिका

वाऽऽत्मना वा कृतेनाशनायादिदोषेण चैतन्यगुणेन वात्माऽनात्मा वा वस्तुतो न स्वल्पेनापि युज्यत इत्यतो विद्यया तन्निवृत्तिरित्यर्थः ॥ लक्षण-संभावने भेदोनोक्त्वा सद्भावं निर्णेतुमादौ प्रत्यक्षं दर्शयति—*तमिति* ॥ अथवा लोकव्यवहार इति व्यपदेशलक्षणो यो व्यवहारस्तद्धेतुत्वं तस्यैव कण्ठोक्तम्, इदानीं व्यवहारान्तरहेतुत्वमध्यासस्य दर्शयति—*तमिति* ॥ आक्षेप-समाधिविषयत्वं तदर्थः । लक्षितत्वमेतदर्थः ।

प्रदीपः

ज्ञानम्, तदेव विद्येति वाक्यार्थः । अनेन चेदमेवाभिप्रेयते—यद् इदमवच्छिन्नचैतन्यं केनचन रूपेणावृतं रूपान्तरेण च गृहीतं नाध्यासनिवर्तकम्, किन्तु प्रमाणजन्यविशेषांशावगाहिवृत्त्यभिव्यक्तचैतन्यमेव तदध्यासनिवर्तकमिति । तथाच न केवलं चैतन्यं विशेषानवगाहिवृत्त्यभिव्यक्तचैतन्यं वा नाध्यासस्याज्ञानस्य वा विरोधि, किन्तु प्रमाणजन्यविशेषांशावगाहिवृत्त्यभिव्यक्त-

### पञ्चपादिका

मोक्षपरत्वं च शास्त्रस्य विधि-प्रतिषेधविरहिततयोपादान-परित्यागशून्यत्वात् स्वरूपमात्रनिष्ठत्वमङ्गीकृत्य पृथक् क्रियते ।

### पञ्चपादिकाविवरणम्

प्रत्यक्षोपन्यासः कृतः । *ननु* "विधि-प्रतिषेधपराणि शास्त्राणी"त्येव वक्तव्यम्, तन्निष्ठत्वात् सकलशास्त्रस्य ; किमिदं मोक्षपराणीति ? तत्राह—*मोक्षपरत्वं चेति* ॥ "कथं पुनरि"त्यादिभाष्यस्याध्यासोपादानं व्यवहार-

### तत्त्वदीपनम्

शास्त्रस्य विधि-प्रतिषेध-मोक्षपरत्वमुक्तम्, तदाक्षिपति—*ननु विधीति* ॥ शास्त्रस्य प्रवृत्ति-निवृत्त्युपदेशन-स्वाभाव्याद् ब्रह्मणश्च प्रवृत्त्याद्यसंस्पर्शित्वान्न तत्परत्वं शास्त्रस्येति चोद्यार्थः । नच प्रवृत्त्याद्युपदेष्टृतया शास्त्रत्वम् ; अतिप्रसङ्गात्, किंतु पुरुषार्थोपदेष्टृतया, तच्च वेदान्तेष्वस्तीत्यभिप्रायेणाह—*तत्राहेति* ॥ वेदान्तेषु विधि-प्रतिषेध-वाचकपदाभावाद् ब्रह्मविषयोपादानाद्यसंभवादध्याहारस्यानुपपत्तेः स्वरूपमात्रनिष्ठमपि शास्त्रमस्तीति पृथक्करणमिति टीकार्थः । "कथं पुनः प्रत्यगात्मनी"त्यत्रासंभवाशङ्कायाः परिहृतत्वात् पुनस्तच्छङ्कानुदय इति भाष्यानुपपत्तिमाशङ्क्य, प्रमाणप्रश्नपरतया भाष्यं व्याचख्यौ, तदयुक्तम् ; प्रमाणस्य पूर्वोक्तत्वादित्याशङ्क्य तात्पर्यमाह—*कथं पुनरिति* ॥ "निदर्शनीयम्" इत्यत्र नितरां दर्शनीयमिति प्रमाणान्तरं च दर्शनीयमित्युक्तम् ; साक्षिणः प्रतिवाद्यसंमतत्वात् । नच—"कथं पुनरि"त्यतः प्रागध्यासस्वरूप-तत्संभावनाय, तदादि तत्सद्भावनिर्णयार्थमिति टीका विरुध्यते, प्रमाणस्य पूर्वभाष्येऽप्युक्तत्वादिति—शङ्क्यम् ; साक्षिण इतरासंमततया तत्संमतप्रमाणस्यात्रैव प्रदर्श्यमानत्वादित्यर्थः ॥

### वार्तिकम्

प्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ताः, सर्वाणि च शास्त्राणि विधि-प्रतिषेधमोक्षपराणीति* ॥ अत्र प्रत्यक्षं व्यवहारान्यथाऽनुपपत्तिश्चेति प्रमाणद्वयमुक्तलक्षणाध्यासे प्रदर्श्यते । *तम्*=पूर्वोक्तम् । *अविद्याख्यम्*=अविद्येत्याख्या संज्ञा यस्य, तम् । कस्याविद्येत्याख्येत्यत्र तदा परामृष्टमाह—*आत्मानात्मनोरितरेतराध्यासम्* ॥ तस्य प्रत्यक्षानुभवसिद्धत्वमाह—*एतमिति* ; जडाऽजडतादात्म्यस्याहं ममेत्यादिप्रत्यक्षानुभवसिद्धत्वस्य सर्वजनीनत्वात् । प्रत्यक्षं प्रदर्श्यानुपपत्तिप्रमाणमाह—*पुरस्कृत्येति* ॥ अनन्यथासिद्धनियतपूर्ववर्तिनं कृत्वेत्यर्थः । व्यवह्रियन्त इति *व्यवहाराः* ॥ प्रमाता च, प्रमाणञ्च, प्रमेयञ्च, तान्येव व्यवह्रियमाणत्वाद् व्यवहाराः ; प्रमातृ-प्रमाण-प्रमेयव्यवहाराः । व्यवह्रियन्ते हि प्रत्यक्षेण प्रमात्रादयः—"अहमिदं चक्षुषा प्रमिणोमि" इति । "सर्वे" इति विशेषणं व्याप्तिप्रदर्शनार्थम् । *लौकिकाः*=सर्वप्राणभृद्व्यवहारगोचराः । लौकिका इति विशेषणं शास्त्रीयप्रमात्रादिवैलक्षण्यसूचनार्थम् । अतश्च अत एव ततो निष्कृष्य पृथक् "सर्वाणि शास्त्राणी"त्युक्तम् । "प्रवृत्ताः" इत्यत्र स्वस्वकार्ये इति शेषः । तेन तत्पूर्वकाः कर्तृ-करण-कार्य-भोक्तृ-भोग-भोग्यव्यवहारा अपि संगृहीता द्रष्टव्याः । यद्वा—प्रमातृ-प्रमाण-प्रमेयाणां व्यवहाराः=अभिज्ञाऽभिवदनादयः, ते सर्वे आत्मानात्मनोरितरेतराध्यासं पुरस्कृत्य प्रवृत्ता इति व्याख्येयम् । अस्मिन् पक्षे प्रमात्रादीनामाध्यासिकत्वमर्थात्सिद्धं भवतीति द्रष्टव्यम् । सर्वथाऽपि प्रमातृत्वाद्यन्यथाऽनुपपत्तिस्तद्व्यवहारान्यथाऽनुपपत्तिर्वा आत्मानात्मनोरितरेतराध्यासे प्रमाणं दर्शितं

### प्रदीपः

चैतन्यमेवाध्यासस्याज्ञानस्य वा विरोधि, इति न निवर्तकानुपपत्तिः, न वा चैतन्ये शुद्धेऽज्ञानाश्रयत्व-विषयभावानुपपत्तिः ॥ *अयं भावः*=-वृत्तिः, वृत्त्यभिव्यक्तं चैतन्यं वाऽज्ञानविरोधि, न तु शुद्धचैतन्यमात्रम् । यथाहि सूर्यकिरणानां स्वतः प्रकाशमानानां गगनतलवर्तिनां न दाहकत्वम्, सूर्यकान्तप्रतिफलितानां तु दाहकत्वम्, एवं वृत्तिफलितस्यैव चैतन्यस्याज्ञानविरोधित्वमिति, मतान्तरानुसारिणां वृत्तिपदार्थाद्यपरामर्शेनाज्ञाने सप्तानुपपत्त्यापादनमनुक्तोपालम्भनमेवेति भावः ॥

*ननु* एवं भवतु नामाज्ञानवशेनान्योन्यात्मताध्यासनिबन्धन एवाहंव्यवहारादिः, तावताऽपि त्वविद्याकार्यत्वेन सत्यत्वमेव

वार्तिकम्

भवति ; कारणं विना कार्यानुपपत्तेरिति । यथाच तयोः कार्य-कारणभावः, तथाऽग्रे दर्शयिष्यामः । न केवलं लौकिका एव सर्वे प्रमातृत्वादिव्यवहारास्तदधीनाः, शास्त्रीयोऽपि सर्वो व्यवहारस्तदधीन इत्याह—*सर्वाणि च शास्त्राणीति* ॥ अत्र "प्रवृत्तानी"ति लिङ्गं विपरिणमय्यानुषङ्गः । शास्यते, अनुशिष्यते, कर्तुर्हिताहितप्राप्ति-परिहारसाधनेषु पुरुषो येन, तत् शास्त्रम् ; उपदेशवाक्यमिति यावत् ; कर्तुर्हिताहितप्राप्ति-परिहारसाधनबोधकवाक्यस्यैवोपदेशत्वात्, न प्रयोक्तुः ; तस्याज्ञादिरूपत्वात् । तद्यथा लोके 'अयं सुपन्थाः, अनेन गच्छतु भवान्, अयं तु चोराकुलः, नानेन गच्छतादि'ति । वेदे च "ज्योतिष्टोमेन स्वर्गकामो यजेत," "न हिंस्यात् सर्वा भूतानि", "तत्त्वमसी"त्यादि । तथाच जैमिनिराह—"तस्य ज्ञानमुपदेशः" इति । भट्टपादा अप्याहुः—

"प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा । पुंसां येनोपदिश्येत, तच्छास्त्रमिति कथ्यते ॥" इति ।

अत्र केचित्—विधि-प्रतिषेधशास्त्रयोरपि प्रपञ्चविलयनद्वारा मोक्षपरत्वं मन्यन्ते । तथाहि—"स्वर्गकामो ज्योतिष्टोमेन यजेते"ति वाक्यं न तावद् ज्योतिष्टोमस्य स्वर्गसाधनत्वं वक्तुं शक्नोति ; आशुतरविनाशिनस्तस्य कालान्तरभाविस्वर्गसाधनत्वायोगात् । नच मध्येऽपूर्वव्यापारकल्पनम् ; तत्कल्पने प्रमाणाभावात् । नच—श्रुतार्थान्यथानुपपत्तिरेव तत्र मानमिति—वाच्यम् ; प्रपञ्चविलयपरत्वेनापि श्रुतोपपत्तेः । अपिच यदीदं वाक्यं स्वार्थपरं स्यात्, तर्ह्यस्य शास्त्रत्वं व्याहतं स्यात् ; कर्तुर्हितसाधनत्वबोधकवाक्यस्यैव शास्त्रत्वात् । नच स्वर्गः कर्तुर्हितः ; तस्य पुरुषरागवर्धकत्वेन संसारहेतुतयाऽहितत्वात् । तस्माद् देहान्तरभोग्यस्वर्गादिसाधनत्वमाशुतरविनाशिनो यागस्य बोधयच्छास्त्रं तन्मुखेन देहात्मभावविलयपरम् ; देहात्मत्वे तद्भोगानुपपत्तेरिति समञ्जसम् ; अन्यथा शास्त्रत्वव्याहतेरित्युक्तम् । एवं ग्रामादिदृष्टफलकसाङ्ग्रहण्यादिबोधकवाक्यस्य सेवादितत्साधनान्तरविलयपरत्वम्, गोदोहनादिवाक्यस्याधिकारान्तरविलयपरत्वम्, नित्य-नैमित्तिकवाक्यानाञ्च प्रत्यवायविलयपरत्वम्, निषेधवाक्यानाञ्च स्वाभाविकप्रवृत्तिविलयपरत्वम्, इति परम्परया भवति विधि-निषेधशास्त्रयोरपि मोक्षपरत्वम्—इति, तान् प्रत्याह—*विधि-प्रतिषेध-मोक्ष-पराणीति* ॥ *विधिः=इष्टसाधनत्वम् । *प्रतिषेधः=तदभावः । *मोक्षः=जीव-ब्रह्मणोरैक्यम् । *तत्पराणि=तद्बोधकानीत्यर्थः । *अयमभिप्रायः*—"स्वर्गकामो ज्योतिष्टोमेन यजेते"त्यत्र लिङ् तावत् पदश्रुत्या योग्यतया च यागस्येष्टसाधनत्वं ब्रूते—याग इष्टसाधनमिति । *ननु*—एवं सति "ज्योतिष्टोमेने"ति तृतीयाविभक्तिर्व्यर्था ; लिङैव तत्साधनत्वाभिधानात् । नच—प्रत्ययेन यागसामान्यगतकरणत्वेऽभिहितेऽपि तद्विशेषज्योतिष्टोमकरणत्वानभिधानात् तदभिधानार्थं तृतीयाश्रुतिरिति—वाच्यम् ; विशेषमनादायापर्यवस्यतः सामान्यस्य नामपदसामानाधिकरण्यश्रुतेर्ज्योतिष्टोममादाय पर्यवसानादिति—

प्रदीपः

सर्वस्य प्रपञ्चस्य विवक्ष्यते, इति कथं ब्रह्माद्वैतसिद्धिरिति ? अत आह—*तत्रैवं सतीति* ॥ तस्मिन्नध्यासे पूर्वोक्तप्रकारेण विवेकज्ञानबाध्ये सति । तथाच तत्त्वज्ञानबाध्यत्वाद् अविद्या, तत्कार्योऽध्यासः, अध्यस्यमानः प्रपञ्चो वा मिथ्येति न ब्रह्माद्वैतविरोध इति भावः । "अद्वितीयं ब्रह्मे"ति वाक्येन परमार्थतो द्वितीयपदार्थरहितं ब्रह्मेत्येव विवक्ष्यते, इत्यध्यासवद् गुण-दोषादिरपि मिथ्येति न दोषः । अणुमात्रेणापि=लेशतोऽपि । *न सम्बध्यते*=परमार्थगत्येति शेषः । यथा हि नभसि कल्पितं नैल्यं न नभसः स्वच्छतां विरुणद्धि ; तद्वदिति भावः ॥ एतावताऽविद्याया लक्षणम्, तस्याः संभावना च वर्णिता । सम्प्रति तत्र प्रमाणानि दर्शयितुमाह *तमेतमविद्याख्यमिति* ॥ अध्यासं पुरस्कृत्य सर्वे प्रमातृ-प्रमाण-प्रमेयव्यवहाराः प्रवृत्ताः इति च । *एतम्—प्रत्यक्षसिद्धमित्यर्थः । अनेन प्रत्यक्षमविद्यायां प्रमाणं प्रदर्शितम् । अध्यासं पुरस्कृत्य प्रवृत्तत्ववर्णनेन प्रमातृ-प्रमाणादिव्यवहारानुपपत्तिरूपार्थापत्तिप्रमाणमप्यविद्यायां प्रदर्श्यते ॥

तत्त्वदीपनम्

प्रमाणादीनामविद्यावद्विषयत्वे किं प्रमाणमिति प्रश्नपरत्वं भाष्यस्याश्रित्योपयोगाभावादविद्यावद्विषयत्वमनुप-

वार्तिकम्

चेत्, *नैष दोषः*; तस्यास्तत्करणत्वानभिधायकत्वेऽपि तदनुवादेन यागगतैकत्वाद्यभिधानार्थत्वात्, साधुत्वार्थत्वाच्च; अन्यथा सामानाधिकरण्यानुपपत्तेः। तत्र च सति—किमिदम्? यस्य साधनं यागः, इत्यपेक्षायां पुरुषगतेच्छाविशेषणतया स्वर्गकामपदेन स्वर्गस्योपस्थापनात्, योग्यतया वाक्येन तदन्वयसिद्धेराकाङ्क्षापूरणात्, याग-स्वर्गयोः साध्य-साधनभावो वाक्यात्सिद्धो भवति। नच साक्षात्प्रतिपाद्यं तयोः साध्य-साधनभावं परित्यज्य, वाक्यस्यार्थिकदेहात्मभावविलयपरत्वं युज्यते; श्रुतहानाश्रुतकल्पनाप्रसङ्गात्, उपजीव्यविरोधाच्च। नहि याग-स्वर्गयोः साध्य-साधनभावाभावे तद्भोगान्यथानुपपत्त्या देहव्यतिरिक्त आत्मा कल्पयितुं शक्यते। नच तत्कल्पनां विना देहात्मभावविलयो भवति। नच तयोः साध्य-साधनभावाभावेऽप्यापातप्रतिपन्नेन तेन तत्सिद्धिरिति—वाच्यम्; नहि "वह्निना सिञ्चती"ति वाक्येनापातप्रतिपन्नेन वह्निकरणकसेकेन तत्कार्यक्लेदनादिसिद्धिः पारमार्थिकी भवति। देहान्तरभोग्यस्वर्गाभावेऽपि तज्ज्ञानमात्राद् देहात्मभावलयभावनासिद्धिर्भवत्येवेति—चेत्, सत्यम्; यथाकथञ्चित् भावना सिध्येत्, नतु लयः। नहि भावनामात्रेण वस्तुलय ईश्वरेणापि कर्तुं शक्यते। नहि 'शीतो वह्निरि'ति शतधा भाव्यमानोऽपि वह्निः शीतो भवति। तस्मादसदेतत्—यद् विधिवाक्यं प्रपञ्चविलयनपरमिति। *एतेन*—निषेधवाक्यमपि स्वार्थपरमेव, न प्रपञ्चविलयनपरमिति—*व्याख्यातम्। अपिच यदि विधि-प्रतिषेधवाक्ययोः स्वार्थपरत्वं न स्यात्, तर्ह्यविशेषादुपनिषदामपि स्वार्थपरता न स्यात्। तथाचापसिद्धान्तो नास्तिक्यप्रसङ्गश्चेत्यास्ताम्। यथा चैतत्, तथा भाष्यकार एव तृतीयेऽभिधास्यति। यदप्युक्तम्—कर्तुर्हिताहितप्राप्ति-परिहारसाधनत्वबोधकवाक्यस्यैव शास्त्रत्वात् स्वर्गादे रागजनकत्वेनाहितत्वात् तत्साधनत्वबोधकवाक्यानामशास्त्रत्वापत्तिरिति, तन्न; स्वर्गादिफलानां विवेकिपुरुषाहितत्वेऽपि सरागपुरुषहिततमत्वात्। न ह्यविद्याभूमौ लोके हितमहितं वा किञ्चिदाजानतो वस्त्वस्ति; हितबुद्धिगोचरस्यापि कदाचिदहितबुद्धिगोचरत्वात्, किं तर्हि? यदा यस्मै यद् रोचते, तदा तस्य तद् हितम्; यद् न, तदहितमिति लोकमर्यादा। सरागपुरुषेभ्यश्चाविद्यकमपि स्वर्गादिसुखं रोचतेतराम्, न पारमार्थिकमपि मोक्षसुखम्; तत्र तेषां रागाभावात्, प्रत्युत द्वेषाच्च। तथाच रागिगीतम्—

"अपि वृन्दावने शून्ये शृगालत्वं स इच्छति। नतु निर्विषयं मोक्षं मन्तुमर्हति गोतम॥" इति।

तथाच सार्वजनीनो वेदः पुरुषरुचिवैविध्यमनुसरन् तस्मै तस्मै पुरुषाय तं तं पुरुषार्थमुपदिशन् न शास्त्रत्वं जहाति, प्रत्युत शास्त्रत्वमेव स्वस्यानुकूलयति; अन्यथाऽनभिमतमुपदिशन् तं प्रति शास्त्रत्वं जह्यादेव। अत एव "वेदोपरा वेदान्ताः" इति केषांचिदुद्गारः। यस्तु पुरुषधौरेयः, तमधिकृत्योपनिषदः

भाष्यभावप्रकाशिका

अविद्याख्यमिति संभावितत्वोक्तिः। पुरस्कृत्येत्यध्यासस्य व्यवहारहेतुतया स्वानुभवसत्यत्वमुक्तम्। प्रमाण-प्रमेयग्रहणं प्रमात्रादेरुपलक्षणम्। अपौरुषेयत्वेन विशेषं मत्वा शास्त्राणां पृथग्ग्रहणम्।

प्रदीपः

यद्यप्यध्यास एवात्र प्रमाणे प्रदर्शितम्, नतु तन्मूलभूतायामविद्यायाम्; तथाऽपि तदिदं तत्प्रमाणानामप्युपलक्षणम्। सर्वाणि तु प्रमाणानि प्रमातारमाश्रित्य प्रवर्तमानानि प्रमातुरध्यस्तस्य सिद्धिं विना नोपपन्नानि, इति प्रमात्रध्यासमाक्षिपन्तीति भावः। *विधि-प्रतिषेधपराणि*=कर्मकाण्डोपासनाकाण्डगतानि वाक्यानि। *मोक्षपराणि=विधि-प्रतिषेधशून्य-प्रत्यग्ब्रह्मैक्यनिरूपणपराणि वाक्यानि। *ननु*—भवतु नाम प्रमाणानि प्रमातारमाश्रित्य प्रवर्तन्त इति, न हि तावताऽविद्या-

**कथं पुनरविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चेति ?**

### भामती

आक्षिपति—*कथं पुनरविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि* ? तत्त्वपरिच्छेदो हि प्रमा

### ऋजुप्रकाशिका

पुरस्कृत्य प्रमाणादीनां शास्त्राणां च प्रवृत्तत्वोक्त्या प्रमाणादीनां चाविद्यावद्विषयत्वाक्षेपं स्फोरयति—*तत्त्वपरिच्छेदो हीति*॥ प्रमेत्यस्य विवरणम्—*विद्येति* ॥ ततः किमिति ? अत आह—*तत्साधनानीति*॥

### पञ्चपादिका

*कथं पुनरविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चेति*॥ बाढम्—उक्तलक्षणाऽविद्या

### पञ्चपादिकाविवरणम्

त्रितयमित्यत्र प्रमाणान्तरप्रश्नविषयत्वं दर्शयति—*बाढमुक्तलक्षणाऽविद्येत्यादिना* ॥ "कथं पुनरि"त्याक्षेपार्थं

### ऋजुविवरणम्

वा पूर्वस्मिन्नर्थान्तरविषयप्रसङ्गो युक्तः, नात्र तथेत्याशङ्क्याह—*कथं पुनरित्यादीति* ॥ अत्र प्रमाणान्तर-विषयत्वप्रतीतिरेवं प्रत्यगृदृश्यपि संभवेदित्यन्वयो न संभवति ; अन्यत्रापि संभवप्रतीतेः । न चान्यत्रासंभवशङ्का, येन संभवः प्रदर्श्येत, अतश्च प्रत्यगृदृशि संभवेदपीत्यन्वयः ; तथा सति पूर्वमुक्तं प्रमाणमपि शब्दादनूदितमेव । एवंच सति प्रमाणान्तरविषयत्वं स्पष्टमेव ॥

अथवा—प्रत्यगृदृश्यपि संभवेदित्येवान्वयः संभवतु । अत्र प्रत्यग्रूपत्वेनासंभवाशङ्का भवति । अत्रासंभव-प्रकारानुवादोऽपिशब्देन क्रियते । यद्यपि प्रत्यग्रूपः ; तथाऽपि संभवेदिति । एवमपि "नैतावते"त्यत्रैतावतेति किं निर्दिश्यते ? न तावल्लक्षण-संभावनयोरेव निर्देशो घटते ; ताभ्यामसद्भावसिद्धिप्रसक्त्यभावात्, नैतावता तत्सद्भाव इति निषेधानुपपत्तेः । अतश्च "नैतावते"त्यनेन प्रकृतलक्षण-संभावनाप्रमाणं निर्दिश्यते ; तेनासिद्धिरपि । एवम्—"अहं मनुष्यः" इति प्रमाणम्, तद् गौणमित्यपि वक्तुं शक्यते, इति नाध्यासमेव गमयतीति । अत एवोक्तं पुरस्तात्—"कथं पुनरविद्या-वद्विषयाणी"त्यतः प्रागध्यासस्वरूप-तत्संभावनायेति ; इतरथा "अविद्यावद्विषयाणी"त्यतः प्रागित्यवधिकरणस्य विरोधो दुष्परिहरः । "तमेतमेवमि"त्यत्र प्रत्यक्षोपन्यासो वाऽस्तीति वक्तव्यम्, अवधिर्वा । तदुभयमपि वक्तुं न शक्यते ; ग्रन्थेऽ-व्यक्तत्वात्, अतश्च "तमेतमि"त्यत्रोक्तस्य प्रमाणस्य प्रत्यक्षस्य "कथं पुनरि"त्यारभ्य दृढीकरणादवधिकरणमिति शोभनम् । "तेन निदर्शनीयः सः"इत्युक्त्वा "प्रमातारमि"त्यनन्तरं लिखितत्वादध्यासपुरःसरत्वप्रतिपादकेन भवि-तव्यम् । नच तत्प्रतिपादनमत्र दृश्यते ; अविद्यावत्त्वस्यानुपयोगप्रतीतेः । नच पूर्वग्रन्थशेष एवायम् ; पूर्वग्रन्थे प्रमाण-प्रश्नः कृतः ; न तत्रानुपयोगकथनमुपयुज्यते, अतोऽनुपपन्न इत्याशङ्क्याह—*कथं पुनरित्याक्षेपार्थमिति* ॥ अथवा—

### तत्त्वदीपनम्

पन्नमित्यभिप्रायप्रदर्शनमसङ्गतमित्याशङ्क्य, व्याख्यानान्तरस्य क्रियमाणत्वाददोष इत्याह—*कथं पुनरिति* ॥ पूर्वस्मिन् व्याख्याने अविद्यावद्विषयाणि, पुनः कथम् ? साक्षिव्यतिरिक्तं किं मानम् ? इति योजना । द्वितीये कथं

### वार्तिकम्

प्रवर्तन्ते, इति न किञ्चिदनुपपन्नमस्ति । अपिच यदि विहित-प्रतिषिद्धकर्मणां न संसारफलता, तर्हि कारणाभावेन संसारस्यैवाभावात् कस्य विलयः साध्यः स्यात् ? नच—उभयफलपरत्वं वाक्यस्येति

### भाष्यभावप्रकाशिका

*मोक्षपराणि = विधि-प्रतिषेधशून्यानि ; वस्तुस्वरूपमात्रनिष्ठानीत्यर्थः । त्रिविधव्यवहारस्याध्यासिकत्वे प्रमाणान्तरजिज्ञासया पृच्छति—*कथमिति* ॥

### प्रदीपः

साधकत्वं प्रमाणानामित्याशयेन शङ्कते—*कथं पुनरविद्यावद्विषयाणि ... प्रमाणानीति* ॥ प्रमातारमेवापेक्षमाणानीति शेषः ।

**नचैतस्मिन् सर्वस्मिन्नसत्यसङ्गस्यात्मनः प्रमातृत्वमुपपद्यते ।**

### भामती

स्तात्मभावं वेमादिकं कुविन्दो व्यापारयन् पटस्य कर्ता, एवमनध्यस्तात्मभावं देहेन्द्रियादि व्यापारयन् भविष्यति तदभिज्ञः प्रमातेति, अत आह—*नचैतस्मिन् सर्वस्मिन्—इतरेतराध्यास इतरेतरधर्माध्यासे च असति, आत्मनोऽसङ्गस्य—सर्वथा सर्वदा सर्वधर्म-धर्मिवियुक्तस्य प्रमातृत्वमुपपद्यते* । व्यापारवन्तो हि कुविन्दादयो वेमादीनधिष्ठाय व्यापारयन्ति, अनध्यस्तात्मभावस्य तु देहादिष्वात्मनो न व्यापारयोगः ;

### ऋजुप्रकाशिका

तद्धर्मादिकं सर्वं विनाऽसङ्गस्यात्मनो न संभवतीत्याह—*अत आहेति* ॥ सर्वशब्दार्थमाह—*इतरेतराध्यास इति* ॥ "नचे"त्येतत् "उपपद्यते" इत्यनेन सम्बध्यते । कुविन्दादिदृष्टान्तं विघटयति—*व्यापारवन्तो हीति* ॥ प्रकृते तद्वैषम्यमाह—*अनध्यस्तात्मभावस्य त्विति* ॥ देहादिष्वनध्यस्तात्मभावस्य त्वात्मनो न व्यापारयोग इति योजनीयम् ; अतिप्रसङ्गादित्यर्थः । एवं *देहेन्द्रियादिष्वहं-ममाभिमानहीनस्य = तादात्म्य-तद्धर्माध्यासहीनस्य प्रमातृताऽनुपपत्तौ सत्यां प्रमाणप्रवृत्त्यनुपपत्तेरित्यादिनाऽध्यासाभावे प्रमाणप्रवृत्त्यभावात् प्रमाणप्रवर्तकत्वेनाध्यास आवश्यक इत्यध्यासः समर्थितः । संप्रति प्रमाणफलीभूतां प्रमां विना प्रमाणवृत्त्य-

### वार्तिकम्

**तेनेत्यर्थः । सुषुप्त्यादौ स्वादृष्टारब्धत्वरूपदेहसंबन्धे सत्यपि तत्रात्माध्यासाभावात् तेनात्मन इन्द्रियादिगोचरव्यापारादर्शनात्, जागरादौ च तद्भावे तद्दर्शनात् । अतो देहेऽहम्भावपुरस्कारेणात्मन इन्द्रियेषु ममाध्यासे सत्येव तद्गोचरव्यापारः, नान्यथेति भाष्यवाक्यार्थः ॥ अत एव न चतुर्थकल्पोऽपि ; देहेन्द्रियादिष्वहं-ममाध्यासरहितस्य प्रमातृत्वानुपपत्तेरित्याह—"नचैतस्मिन् सर्वस्मिन्नसति—प्रमातृत्वमुपपद्यत इति* ॥ तेन देहेन्द्रियादिष्वहं-ममाध्यासविशिष्टस्यैवात्मनः प्रमातृत्वम्, न तार्किकादिपरिकल्पितरीत्येत्यभिहितं भवति ॥**

### भाष्यभावप्रकाशिका

अध्यासेतरो देहात्मयोगः—देहस्यात्मेच्छयाऽनुविधीयमानत्वं वा ? तदनुविधानयोग्यत्वं वा ? तत्कर्मारभ्यत्वं वा ? नाद्यः ; तदभावेऽप्यातुरदेहे प्रमातृत्वादिदर्शनात् । न द्वितीयः ; स्वापादावपि तत्प्रसङ्गात्, तद्योग्यताया यावद्द्रव्यभावित्वात् । नच—यावत्कार्यलयमशरीरमेवेति—वाच्यम् ; स्वदृष्ट्या तदभावेऽपि परदृष्ट्या तद्भावात्, तस्य तस्मिन् प्रमातृत्वादिधीध्रौव्यात् । न तृतीयः ; भृत्यादिदेहैरपि प्रमातृत्वादिप्रसङ्गात्, तेषां स्वामिकर्मारभ्यत्वात् । अतो देहस्यात्मनि संबन्धान्तरासिद्धेरध्यास इति ॥ *ननु*—आत्मा स्वतश्चेतनत्वान्मातृत्वादिशक्तिमानिन्द्रियाद्यव्यवधानेन जागरादौ मातृत्वादिकमश्नुते, स्वापादौ चक्षुराद्यभावात्तदभावः, नाध्यासभावात् ; अतो व्यतिरेकिणि व्यतिरेकः सन्दिह्यते, तत्राह—*नचैतस्मिन्निति* ॥ अस्यार्थः—प्रमातृत्वं प्रमां प्रति कर्तृत्वं स्वातन्त्र्यम् ; तच्च कारकान्तराप्रयो-

### प्रदीपः

इन्द्रियाद्यध्यासेनैव प्रमाणप्रवृत्तिसंभवात्, इत्यत आह—*नचाधिष्ठानमन्तरेणेति* ॥ अत्र वाक्ये 'व्यवहारः' इत्येकः पाठः, अपरस्तु 'व्यापारः' इति । रत्नप्रभादिसंमतो 'व्यवहारः' इति पाठः, भामतीसम्मतश्च 'व्यापारः' इति । तत्र रत्नप्रभादिसम्मतं "नचाधिष्ठानमित्यादि—कश्चिद्व्याप्रियत" इत्यन्तं देहाध्यासावश्यकतानिरूपणपरं विवरणम् । तत्रेन्द्रियाणामधिष्ठानं शरीरमन्तरेण शरीरसम्बन्धमन्तरेण कश्चित्प्रमाता न व्यवहरेत्, इति प्रमातुः शरीरसम्बन्धावश्यकतां प्रथमेन वाक्येन प्रदर्श्य, सच सम्बन्धः संयोगादिरूप एव भवतु, किमित्यध्यासाख्य एवेति शङ्कावारणार्थम्—*"नचानध्यस्तात्मभावेन देहेन कश्चिद्व्याप्रियते" इति वाक्यम् । सर्वथा तु देहाध्यासस्याप्यावश्यकतैवात्र प्रतिपाद्यते । भामतीसम्मतं तु विवरणम्—प्रमाता कथं विनाऽध्य-

## वार्तिकम्

*ननु*—कथं तार्किकादिरीत्याऽऽत्मनः प्रमातृत्वं न संभवति? तेषामपि मत आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेनेत्यादिप्रणालिकया प्रमातृत्वोपपत्तेः। नच—सर्वेषामात्मनां तन्मते विभुत्वादात्मादिचतुष्टयसन्निकर्षस्याविशिष्टत्वात् ततो जायमानायाः प्रमितेः साधारणत्वापत्त्या न प्रमातृत्वनियम इति—वाच्यम्; यदात्मीयं मनआदि, तदात्मीयमनआदिसन्निकर्षस्यैव तद्धेतुत्वेन तत्साधारण्याभावात् प्रमातृत्वसाधारण्यानुपपत्तेरिति—चेत् *न*; मनआदावपि स्वीयत्वनियामकाभावात्, स्वादृष्टाराध्यत्वादेश्चान्योन्याश्रयादिदोषग्रस्तत्वेन तन्नियामकत्वानुपपत्तेः पूर्वमेवोक्तत्वात्। अपिच तव मते ज्ञानस्य घटादिविषयनियमो न स्यात्। तथाहि—ज्ञानं क्रिया? गुणो वा? सर्वथाऽपि न तद्विषयनियमः स्यात्; क्रिया-प्रकाशगुणयोः स्वाश्रयसंयुक्तमात्रातिशयाधायकत्वनियमस्य प्रदीपेष्वादिषु दर्शनात्, आत्मनश्च विभुत्वेन सर्वमूर्तसंयोगित्वात् तदाश्रयज्ञानस्य सर्वमूर्तविषयत्वापत्तेः। *अथ*—यदवच्छिन्न आत्मनि ज्ञानमुत्पद्यते, तदवच्छिन्नात्मसंयोग एव विषयत्वप्रयोजकः; प्रदीपेष्वादिष्वपि तथैव दर्शनात्, देहावच्छिन्ने चात्मनि ज्ञानमुत्पद्यते, अतस्तत्संयोगिन एव विषयत्वमिति—चेत्, *न*; देहासंयुक्तघटादेस्तदवच्छिन्नात्मसंयोगस्याभावादविषयत्वप्रसङ्गात्। *अथ* न स्वाश्रयसंबद्धत्वमात्रं विषयत्वप्रयोजकम्, किन्तु जनकत्वे सति तत्त्वमिति—चेत्, *न*; प्रदीपेष्वादिषु स्वाश्रयसंयुक्तमात्रे क्रिया-प्रकाशगुणयोरतिशयाधायकत्वदर्शनादुक्तविशेषणानुपपत्तेः, उपपत्तावपीन्द्रियादौ व्यभिचारावश्यकत्वात्। *ननु*—इन्द्रियादेरात्मसंयोगित्वेऽपि न तत्त्वेन जनकत्वम्; विषयसंयुक्तत्वादिनैव जनकत्वात्, विषयस्यात्मसंयोगित्वेनैव जनकत्वं विवक्षितम्, अतो न व्यभिचार इति—चेत्, *न*; विषयस्यापि तत्त्वेन जनकत्वे प्रमाणाभावादुक्तविवक्षाया असिद्धेः, इन्द्रियसन्निकृष्टत्वेनैव तस्य जनकत्वात्। अस्तु तर्हीन्द्रियसन्निकृष्टत्वेन जनकत्वमेव विषयत्वप्रयोजकमिति—चेत्, न; मनसि व्यभिचारात्, तस्यापि तत्त्वेन बहिरध्यक्षजनकत्वात्, अन्यथेन्द्रियसंयोगाभावेऽपि मनसो बहिरध्यक्षजनकत्वप्रसङ्गात्। *एतेन*—उद्देश्यत्वमेवास्तु विषयत्वप्रयोजकमिति—अपास्तम्; पथि गच्छतस्तृणादेरुद्देश्यत्वाभावेऽपि ज्ञानविषयत्वदर्शनात्। तस्माद् घटादिज्ञानस्य विषयनियमासंभवादुक्तरीत्या सर्वविषयत्वापत्तिः, इति विभ्वात्मवादिनो नैयायिकादेर्न प्रमातृत्वोपपत्तिः॥ अण्वात्मवादिनोऽपि न प्रमातृत्वमुपपद्यते; क्रिया-प्रकाशगुणयोः स्वाश्रयसंबद्धविषयत्वनियमात्, तदसंयुक्तघटादेर्ज्ञानविषयत्वानुपपत्तेः, तदसंबद्धस्यापि तदाश्रितज्ञानविषयत्वकल्पने न तद्विषयनियमः स्यात्; सर्वेषां तदसंबद्धत्वाविशेषात्, जनकत्वादिना तन्नियमस्येन्द्रियादौ व्यभिचारित्वेन पूर्वमेव निरस्तत्वात्। *एतेन*—विषयत्वेन जनकत्वं तन्नियामकमिति

## भाष्यभावप्रकाशिका

ज्यस्य समस्तकारकप्रयोक्तृत्वम्। नच कूटस्थस्यासङ्गस्यात्मनः स्वतो व्यापारः। नचेच्छातिरेकेण प्रमाकरणप्रयोक्तृत्वम्। नचात्मन्यक्रियेऽगुणे च क्रिया-गुणवद्बुद्ध्याध्यासादृते सा युक्ता। तस्माद् बुध्याद्यभेदाध्यासे तद्धर्माध्यासे वाऽसति स्वतोऽसङ्गस्य प्रमातृत्वायोगादध्यासस्तद्धेतुरित्यर्थः॥ तर्हि मा भूत्

## प्रदीपः

ध्यासमिन्द्रियाणि न व्यापारयतीति शङ्कावारणार्थं प्रथमवाक्यम्। तत्र चाधिष्ठानमध्याससम्बन्धेन प्रमातुः सम्बन्धं विना इन्द्रियाणां व्यापारः प्रमाजननानुकूलो न संभवतीति योजना। प्रथमयोजनायां व्यवहारकर्ता प्रमाता, द्वितीययोजनायां व्यापारकर्तृ इन्द्रियमिति विवेकः। द्वितीययोजनायां शरीराध्यासावश्यकतानिरूपणार्थम्—"नचानध्यस्तात्मभावेने"ति वाक्यमिति निष्कर्षः। *व्याप्रियते* प्रवर्तते; अन्यथा सुषुप्तौ, यदा न देहात्मैक्याध्यासः, तदाऽपि व्यवहारापत्तिरिति भावः। न केवलं प्रमाण-

## वार्तिकम्

—*अपास्तम्* ; अन्योन्याश्रयापत्तेः—विषयत्वेन जनकत्वसिद्धौ विषयत्वनियमः, तन्नियमे च सिद्ध विषयत्वेन जनकत्वसिद्धिरिति, परोक्षस्थले जनकत्वाभावेनाविषयत्वापत्तेश्च ॥

*एतेन*—देह-तत्परिमाण-विज्ञान-शून्यात्मपक्षेषु प्रमातृत्वानुपपत्तिः—*व्याख्याता* ; क्रिया-प्रकाशगुणयोः स्वाश्रयसंबद्ध एवातिशयाधायकत्वात् तदसंबद्धघटादिग्रहणानुपपत्तेः ॥ सांख्यमते त्वात्मन इन्द्रियाणामन्तःकरणानाञ्च व्यापकत्वेन सर्वदा सर्वविषयसंबन्धात् सर्वदा सर्वग्रहणप्रसङ्गः, सुषुप्त्यभावप्रसङ्गश्च । कृत्स्नग्रहणसामग्र्यां सत्यामपि कदाचिदग्रहे सर्वदैवाऽग्रहप्रसङ्ग इत्यादिदूषणमुन्नेयम्, तस्माद् न वादिमते प्रमातृत्वमुपपद्यते ॥ तथाहि—कस्तावत्तत्र मते प्रमाता ? शुद्धचिन्मात्रमिति चेत्, न ; तस्य व्यापकत्व-नित्यत्वाभ्यां सर्वदा सर्वविषयसंबन्धात् सर्वदा सर्वावभासप्रसङ्गात्, कूटस्थत्वव्याहते-रेकात्मत्वात्प्रमातृव्यवस्थानुपपत्तेश्च । अज्ञानविशिष्ट इति चेत्, न ; सुषुप्तावपि प्रमातृत्वप्रसङ्गः । अन्तःकरणादिविशिष्ट इति चेत्, न ; तस्य बहिरस्वातन्त्र्याद्बहिर्विषयसंबन्धायोगात्तद्ग्रहणानुपपत्तेरिति—*चेत्,* न ; स्वतो बहिर्गमनासम्भवेऽपीन्द्रियद्वारा बहिर्गमनादन्तःकरणादिविशिष्टस्य प्रमातृत्वोपपत्तेः ॥

तथाहि—चक्षुरिन्द्रियं तावदप्रतिबद्धं बहिर्गच्छत् तैजसत्वादतिशीघ्रं ध्रुवादिविषयं प्राप्य तदाकारेण परिणमते । सौरालोक इव गृह-भूधरादि प्रकाश्यं प्राप्य तदाकारेण । स च चक्षुषो विषयाकारपरिणामो निर्विकल्प एव ; विशेषण-विशेष्यभावानवगाहात्, वस्तुमात्रालोचनरूपत्वात्, विशेषण-विशेष्यभावेन वस्तुविकल्पनस्य मनोमात्रधर्मत्वात्, मनसः सङ्कल्प-विकल्पात्मकत्वात् । तथाच तेनेन्द्रियालोचनेन विषयस्यैकदेशजाड्याभिभवेऽपि नाशेषजाड्याभिभवो भवति, सविकल्पनया स्थितस्य विषयस्य तदनुरूपसविकल्पकवृत्तिमन्तरेण तदभिभवासंभवात्, सम्भवे वा मनोवै-यर्थ्यापत्तेः । अतश्चक्षुः स्वविषयं विकल्पयितुं मनोऽपेक्षते, मनोऽपि तदन्तरेण बहिर्व्यापारं कर्तुमशक्नुवत् चक्षुरपेक्षते । नहि करणं विनैव कर्ता कर्मणि व्यापृतो भवति ; करणकारकवैयर्थ्यापत्तेः । *ननु*—एवं तर्हि करणमपि कर्त्रधिष्ठानं विना स्वातन्त्र्येण न व्याप्रियेत ; कर्तृवैयर्थ्यापत्तेः । तथाच कथं मनो-व्यतिरेकेण चक्षुषो विषये व्यापारो दर्शित इति—चेत्, *न* ; वर्धकिव्यापारात् कुठारव्यापारस्य निष्कृष्य प्रदर्शनवद् मनोव्यापारान्निष्कृष्य चक्षुर्व्यापारदर्शनमात्राभिप्रायत्वात्तदभिधानस्य, न स्वातन्त्र्येण विषये चक्षुर्व्यापारोऽस्तीत्यभिप्रायत्वमित्यदोषः । तथाच सति पङ्ग्वन्धन्यायेन नदीकुल्यान्यायेन च परस्पराश्रिते मनश्चक्षुषी स्वविषयं गत्वा व्याप्नुतः । यथा पङ्ग्वन्धौ गतिशक्ति-दृक्शक्तिहीनौ प्रत्येकं ग्रामगमनादिकार्यं साधयितुमशक्नुवन्तौ परस्परं साहाय्यमपेक्षेते—पङ्गुरन्धस्य स्कन्धमारुह्य दृक्शक्तिसंपन्नत्वात् तं मार्गे चालयति, अन्धस्तु गतिशक्तिसंपन्नत्वात् तं गृहीत्वा तदुपदिष्टमार्गेण गच्छति, इति मिलित्वा ग्रामगमनादि-कार्यं च साधयतः, यथा वा—नदी स्वतो ह्रदादिदेशपूरणेऽसमर्थाऽपि तत्र गमनमार्गालाभात् कुल्यासाहाय्य-मपेक्षते, कुल्या तु गमनमार्गे सत्यपि तत्पूरणसामर्थ्याभावाद् नदीपूरमपेक्षते, इति मिलित्वा ते ह्रदादिपूरण-लक्षणं स्वकार्यं साधयतः ; एवं मनसः स्वतो विकल्पजननसामर्थ्ये सत्यपि बहिर्गमनासामर्थ्यात्, चक्षुषस्तु गमनसामर्थ्ये सत्यपि विकल्पजननासामर्थ्याद् मिलित्वा मनश्चक्षुषी स्वविषयं प्राप्य द्रुतताम्रमिव मूषाम्, दीप इव हर्म्योदरम्, तदाकारां विकल्परूपां वृत्तिं साधयतः । *एतेन*—प्रमातृचैतन्यस्यापि विषयाकारता—*व्याख्याता* ; अङ्गुल्याद्युपाधेरार्जववक्रादिभावेन तत्प्रतिफलिततेजस आर्जववक्रादिभाववद् मनः-प्रतिफलितचैतन्यस्यापि तथात्वात् । एतदेवाभिप्रेत्य भगवता भाष्यकारेण—*"देहेन्द्रियादिष्वहं-ममाभि-मानहीनस्य प्रमातृत्वानुपपत्तिरित्युक्तम्* ॥

## वार्तिकम्

न ह्यन्तःकरण-देहयोरहमित्यभिमानमन्तरेणात्मनः संबन्धान्तरमस्ति, नवा तमन्तरेण देहादि-संबन्धीन्द्रियेषु ममाभिमानः, ततो वा संबन्धान्तरमिति। तथाच तद्वृत्तिद्वारा विषयाकारजननेऽपि चैतन्यस्य न कूटस्थत्वव्याहतिरिति॥ इयमेव वृत्तिः साक्षिचैतन्यस्य विषयेण संबन्ध इति गीयते। तेन यत्प्रमातृवृत्तिरियम्, तदवच्छिन्नसाक्षिचैतन्यस्यैव वृत्तिद्वारा विषयाकारभजनाद् न तस्य सर्वप्रमातृसाधारण्यम्। एवंच सत्युक्तप्रकारेण जातायामन्तःकरणावच्छेदेन स्वविषयजाड्याभि-भवसमर्थायां विकलरूपायां साक्षिचैतन्यखचितायां वृत्तावयःपिण्डवत्तादात्म्यापन्नस्य विषयस्य जाड्याभिभवो भवति; तदनभिभवेऽजडव्यावृत्त्या तादात्म्यानुपपत्तेः, विषयचैतन्यस्य चानावृतवृत्तिप्रति-फलितसाक्षिचैतन्याभेदादावरणभङ्गः; तदभङ्गेऽनावृतसाक्षिचैतन्याभेदानुपपत्तेः। तदभेदश्च तदुपाध्यो-रन्तःकरणवृत्ति-घटयोरैक्यात्। नहि समानजात्योरुपाध्योरेकलोलीभावे जाते तदुपधेययोः समानजात्योरेक-लोलीभावो न भवति; शरावद्वयस्थजलयोरेकलोलीभावे तदुपहितादित्यप्रतिबिम्बयोरेकत्वदर्शनात्। तथाच वृत्तेः पूर्वमपि घटस्य स्फुरणाभेदे सत्यपि तत्स्फुरणस्यावृतत्वेनानभिव्यक्तेः, वृत्तौ सत्यां तदभिव्यक्त-चैतन्याभेदेनावरणभङ्गात् तदभिव्यक्तेश्च 'घटः स्फुरती'ति प्रतीत्युपपत्तिः; अन्यथा तत्स्फुरणस्यावृतत्वात्तद-नुपपत्तेः। *ननु*—वृत्युत्तरकालं वृत्त्युपहितस्फुरणमेव वृत्यभेदाद् घटे भासताम्, नतु तदुपादानस्फुर-णमपीति—चेत्, *न*; उक्तोत्तरत्वात्। उक्तं हि—न ह्युपाध्योरेकलोलीभावः; दृष्टविरोधादिति। अपिच वृत्तिद्वाराऽभिव्यक्तसाक्षिचैतन्येन तदैक्ये ह्येकत्राभिव्यक्त्यनभिव्यक्त्योर्विरोधात्तदावरणभङ्गः, नान्यथा। नच तदावरणभङ्गं विना तदध्यस्तघटाभिव्यक्तिः संभवति; अनभिव्यक्तचैतन्याभेदेन घटस्याप्यनभिव्यक्तत्वात्। नच—तदभेदे सति घटस्य वृत्तिद्वाराऽभिव्यक्तसाक्षिचैतन्याभेदेनाभिव्यक्तिः संभवति; युगपदेकस्याभि-व्यक्तत्वानभिव्यक्तत्वविरोधात्। अपि च ज्ञाने हि ज्ञेयमध्यस्तमिति सर्ववेदान्तरहस्यम्। नच तस्मिन्नन-भिव्यक्ते ज्ञेयावभासः संभवति; सर्वदा सर्वस्य सर्वभानप्रसङ्गात्। नच तद्भिन्नतयाऽवस्थितेनानभिव्यक्त-चैतन्यान्तरेणावभासः संभवति। न ह्यन्यचैतन्याध्यस्तमन्यचैतन्येन वेद्यते; शुक्तिरजतावभासस्यापि सर्वसाधारणत्वप्रसङ्गात्। *एतेन*—वृत्त्युपहितसाक्षिचैतन्याभेदादेव घटस्य जाड्याभिभवादवभासोप-पत्तौ न तदुपादानचैतन्येनापि साक्षिणोऽभेदोऽपेक्ष्यते, प्रमाणाभावादिति—*अपास्तम्*; तदुपादानचैतन्या-भेदं विना साक्षिणो ज्ञेयाभेदस्यैवासंभवात् तज्जाड्याभिभवानुपपत्तेः। न ह्यन्यस्यान्येनाभेदः परमार्थतः संभवति। न ह्येकमेवाध्यासिकं वस्तूभयत्राधिष्ठाने युगपदारोप्यते। नच साक्षिण्येवाध्यस्तं तत्; व्यावहारिकत्वभङ्गप्रसङ्गात्, व्यावहारिकसत्त्वपक्षमादायैव प्रतिकर्मव्यवस्थाप्रदर्शनात्। तस्मात् प्रमाण-प्रमेयचैतन्ययोरैक्यादेव विषयाभिव्यक्तिरिति युक्तमुत्पश्यामः। नच—आवरणभङ्गे तदैक्यम्, तदैक्ये च प्रमेयचैतन्यगतावरणभङ्ग इत्यन्योन्याश्रय इति—वाच्यम्; दीपे सत्यन्धकारनाश-तत्प्रकाशानां समकाली-नत्ववत् परस्परप्रयोज्य-प्रयोजकभावेऽपि प्रमाणे सत्यावरणभङ्ग-तच्चैतन्यैक्यानां समकालीनत्वात्, प्रतिबन्धा-भाव-कार्ययोः समकालीनत्वस्य पूर्वमेव प्रदर्शितत्वात्। अपिच प्रमाण-प्रमेयचैतन्ययोरैक्यस्य सर्वदा विद्यमानत्वाद् न तत् कर्तव्यं भवति; "एको देवः सर्वभूतेषु गूढः" इतिश्रुतेः। किं तर्हि? घटाकाश-महाकाशयोरिवावृतत्वानावृतत्वोपाधिमात्रेण तयोर्भेदः प्रतीयते। स चावरणभङ्गादनुविलीयते। अत आवरणभङ्गकरणमेव तदैक्यकरणम्, न पृथक् ततो व्यापारान्तरमपेक्षते, इति कुतोऽन्योन्याश्रयः? *एतेन*—प्रमेयचैतन्याभेदेनाभिव्यक्तौ तस्य ब्रह्मस्वरूपादैक्यसिद्धेर्मोक्षप्रसङ्गः, साधारण्याच्च सर्वेषां प्रमेयाव-भासप्रसङ्ग इति—*अपास्तम्*; तच्चैतन्यस्य ब्रह्मचैतन्यत्वेऽपि विषयावच्छिन्नतयैवाभिव्यक्तेः स्वस्वरूपे

## वार्तिकम्

भानाभिव्यक्त्यभावाद् मोक्षानुपपत्तेः, यत्प्रमातृचैतन्येनाभिव्यक्तिः, तस्यैव तदभिव्यक्तेः सर्वसाधारण्याभावात्॥

*ननु*—प्रमाणचैतन्याभेदेनैव प्रमेयचैतन्याभिव्यक्तिः, वृत्त्यवच्छिन्नस्य प्रमाणत्वात्, तदभेदं विना पूर्वोक्तयुक्त्या प्रमेयाभिव्यक्त्यसंभवात्, न प्रमातृचैतन्याभेदेनापि ; प्रमाणाभावादिति—चेत्, *न* ; प्रमातृ-प्रमाणचैतन्ययोरेकलोलीभावमन्तरेण प्रमाणस्य प्रमेयप्राप्त्यसंभवस्य पूर्वमुक्तत्वात्, प्रमाणचैतन्येन तदैक्ये प्रमातृचैतन्येनापि तदैक्यस्य ध्रौव्यात् प्रमाणाभावासिद्धेः। *ननु*—प्रमातृ-प्रमाण-प्रमेयाणामैक्ये कथं प्रमातृत्वादिभावः स्यात्? तेषां तद्भावस्य भेदनियतत्वादिति—चेत्, *न* ; अभेदस्यैव तेषां पूर्वोक्तरीत्या तद्भावप्रयोजकत्वात्, भेदनियतत्वासिद्धेः। नच—एवं प्रमातृत्वादिसाङ्कर्यप्रसङ्गः ; अन्तःकरणवृत्ति-प्रमेयोपाधिभेदेन तदैक्येऽपि साङ्कर्यपरिहारात्। *ननु*—उपाध्योरप्यैक्यापन्नत्वात् कथं तैस्तेषां साङ्कर्यपरिहार इति—चेत्, *न* ; तेषामाध्यासिकैक्येऽपि पारमार्थिकैक्याभावात्। न ह्यत्यन्तभिन्नानां स्वतोऽन्तःकरणादीनां परमार्थत ऐक्यमस्ति, सत्यपि तदवच्छिन्नचैतन्यानां परमार्थत ऐक्ये। नहि रज्ज्वा ऐक्येऽपि तदध्यस्तवंशोरग-धारादीनां परस्परमैक्यं भवति ; विरोधात्। तस्मादुपाधिभेदान्नास्ति प्रमातृत्वादिसाङ्कर्यमिति। एवंच सति 'घटोऽयमि'ति प्रतीतौ प्रमात्रादित्रितयावभास उपपद्यते। *ननु*—'घटोऽयमि'ति प्रतीतौ प्रमेयमात्रं घटो भासते, न प्रमातृ-प्रमाणे इति—*चेत्,* त्रयाणामेकलोलीभावेनैकाकारत्वप्रदर्शनात्, 'घटोऽयमि'त्येकाकारेण त्रितयावभासोपपत्तेः प्रमेयमात्रभानासिद्धेः। नच—एवम'हमि'ति केवलप्रमातृप्रतीतिर्न स्यात् ; त्रयाणामेकशृङ्खलावबद्धत्वात्, नहि प्रमाणमव्यापारयतः प्रमातृत्वमस्ति, नवा प्रमेयमविषयीकुर्वतः प्रमाणत्वम्, नापि तदविषयीभवतः प्रमेयत्वमिति—वाच्यम् ; 'अहमि'ति प्रतीतेरपि त्रितयविषयत्वस्येष्टत्वात्। नहि सुषुप्तावात्मनः प्रमाण-प्रमेयसंबन्धाभावे प्रमातृत्वमस्ति, नवा तदभावे'ऽहमि'ति प्रतीतिरस्ति। नच—स्मृत्यादिज्ञानकर्तर्यहमिति प्रतीतिर्न स्यात्, तत्र प्रमेयसंबन्धाभावादिति—वाच्यम् ; तत्रापि वासनादिरूपेण प्रमेयसत्त्वात् तत्संबन्धाभावासिद्धेः। अत एव विषयज्ञानाश्रयतयैवा'हमि'त्यात्मनो भानम्, न तद्विषयम'हमि'ति केषाञ्चिद् भ्रमः। सच निराकृत एव।

*ननु*—एवं तर्हि 'अहमि'ति 'घटोऽयमि'ति प्रतीत्योः को विशेषः? समानविषयत्वादिति—चेत्, *ननु* 'घटोऽयमि'ति 'घटे घटत्वमि'ति प्रतीत्योः समानविषयत्वाद्विशेषोऽभिधीयतां भवता !!! अथ समानविषयत्वेऽपि तयोर्विषयगतगुणप्रधानभाववैषम्यादस्ति विशेषः ;—एकत्र घटत्वस्य विशेषणतया भासनाद् अन्यत्र विशेष्यतयेति—चेत् *एवं तर्हि* प्रकृतेऽपि दीयतां दृष्टिः। यदा प्रमातुः प्राधान्यम्, इतरयोरुपसर्जनता, तदा 'अहमि'ति प्रतीतिः, यदा प्रमेयप्राधान्यम्, तदा-इदमिति, यदा तु प्रमाणप्राधान्यम्, तदा प्रमाणज्ञानमित्यस्ति विशेषः। अत एव 'घटमहं जानामि' 'घटोऽयमिति' च त्रितयविषयत्वाविशेषादेकमेव ज्ञानमित्याचक्षते वृद्धाः। अभिलापभेदस्तु प्रतिपित्साभेदादेव ; न ज्ञानभेदात्। यथा एकस्मिन्नेव चाक्षुषज्ञाने 'रूपवान् घटः' 'अयं घटः' इत्यभिलापभेद इत्युक्तमधस्तात्। अत एव सांख्याचार्या अपि—"इन्द्रियेण कृतं विषयालोचनमेव तद्द्वारा मनः प्राप्य तदेकतामापन्नं सद् विकल्पो भवति, तद्द्वारा चाहंकारं प्राप्य पूर्ववदभिमानः, पूर्ववदेव बुद्धिं प्राप्याध्यवसायः, आत्मानं प्राप्य च भोगः, इत्येक एव प्रत्ययः पञ्चभिः संबद्धः पञ्चधा व्यपदिश्यते"=इत्याहुः। ननु—एकस्यैव 'घटोऽयमि'त्यनुभवस्य प्रमात्रादित्रितयविषयत्वा-

## नच प्रमातृत्वमन्तरेण प्रमाणप्रवृत्तिरस्ति।

### भामती

असङ्गत्वादित्यर्थः। *आतश्चाध्यासाश्रयाणि प्रमाणानीत्याह—*नच प्रमातृत्वमन्तरेण प्रमाणप्रवृत्तिरस्ति*॥ प्रमायां खलु फले स्वतन्त्रः प्रमाता भवति। अन्तःकरणपरिणामभेदश्च प्रमेयप्रवणः कर्तृस्थश्चित्स्वभावः प्रमा। कथं च जडस्यान्तःकरणस्य परिणामश्चिद्रूपो भवेत्? यदि चिदात्मा तत्र नाध्यस्येत; कथं चैष चिदात्मकर्तृको भवेत्? यद्यन्तःकरणं व्यापारवत् चिदात्मनि नाध्यस्येत। तस्मादितरेतराध्यासाच्चिदात्मकर्तृस्थं प्रमाफलं सिध्यति। तत्सिद्धौ च प्रमातृत्वम्। तामेव च प्रमामुररीकृत्य प्रमाणस्य प्रवृत्तिः। प्रमातृत्वेन च प्रमोपलक्ष्यते। प्रमायाः फलस्याभावे प्रमाणं न

### ऋजुप्रकाशिका

भावात् प्रमाफलस्य चाध्यासं विनाऽयोगात् प्रमाफलानुरोधेनाप्यध्यासः समर्थ्यत इत्याह—*आतश्चेति*॥ तदेतद्विशदयति—*प्रमायां खल्वित्यादिना*॥ प्रमास्वरूपं किम्? इति वीक्षायां प्रमास्वरूपमाह—*अन्तःकरणेत्यादिना—चित्स्वभावः प्रमेत्यन्तेन*॥ *ननु* भवत्वीदृशी प्रमा, तावता कथं प्रमानुरोधेनाध्याससमर्थनम्? इति वीक्षायां तदनुरोधेनैवाध्यासं समर्थयति—*कथं च जडस्येत्यादिना*—*तस्मादित्यतः प्राक्तनेन ग्रन्थेन*। *तत्र = अन्तःकरणे। *एषः = चित्प्रतिविम्बग्राह्यन्तःकरणपरिणामभेदः। उपसंहरति—*तस्मादिति*॥ *तत्सिद्धौ च*॥ *प्रमामिति*॥ फलीभूतामित्यर्थः। *ननु* फलीभूतप्रमामुररीकृत्य प्रमाणप्रवृत्तौ, भाष्ये 'नच प्रमामन्तरेण प्रमाणप्रवृत्तिरस्ती'ति वक्तव्ये *नच प्रमातृत्वमन्तरेण प्रमाणप्रवृत्तिरस्तीति* कथमुक्तम्? इत्याशङ्क्य, भाष्यस्थप्रमातृत्वशब्देन प्रमैवोपलक्ष्यत इत्याह—*प्रमातृत्वेन चेति*॥ प्रमातृत्वशब्देन चेत्यर्थः।

### वार्तिकम्

विशेषे किमिति घट एव तत्प्रतीतौ प्रमेयतया व्यवह्रियते, न प्रमात्रादिः? तत्र प्रमातृत्वादिव्यवहारे वा किमिति घटेऽपि न तद्व्यवहारः? इति—*चेत्,* न; तद्विषयत्वाविशेषेऽपि तेषां प्रधानक्रियाकर्तृत्वरूपेणोपाधिभेदेन तद्व्यवहारासाङ्कर्यादित्यास्तामयं प्रसङ्गः। विस्तरस्तु वेदान्तमन्दाकिन्यामद्वैतामृतकन्दे चानुसन्धेयः। तस्मादस्मन्मत एवोक्तरीत्याऽऽत्मनः प्रमातृत्वमुपपद्यते, न देहेन्द्रियादिष्वहं-ममाध्यासमनङ्गीकुर्वतां परेषां मत इति सिद्धम्॥

*ननु*—माऽस्तु तर्ह्यात्मनः प्रमातृत्वम्, तदन्तरेणापि बुद्ध्यधिष्ठितानां करणानां प्रवृत्त्युपपत्तेरिति सांख्याभिमतपक्षमपक्षमाशङ्क्य निराकरोति—"*नच प्रमातृत्वमन्तरेण प्रमाणप्रवृत्तिरस्ती"ति*॥ आत्मन इति शेषः। बुद्धेरचेतनायाश्चैतन्याध्यासमन्तरेण प्रमाणप्रवर्तकत्वानुपपत्तेः, तत्र चैतन्याध्यासाङ्गीकारे

### भाष्यभावप्रकाशिका

आत्मनोऽसङ्गस्य प्रमातृत्वम्, नेत्याह—*नचेति*॥ आत्मन्याध्यासिकप्रमातृत्वाभावे सर्वव्यवहारहानिरित्यर्थः। एवं व्यतिरेकिणि व्यतिरेकासन्देहात् तस्यादोषत्वादर्थापत्तेरपि तेनाविरोधात् प्रमाणान्तरप्रश्ने

### प्रदीपः

प्रवृत्त्यन्यथाऽनुपपत्त्याऽध्यासः कल्प्यते, किन्तु प्रमातुः प्रमातृत्वानुपपत्त्या प्रमेयस्य वा प्रमेयत्वानुपपत्त्याऽपि। अत एवोक्तम्—"सर्वे प्रमातृ-प्रमाण-प्रमेयव्यवहाराः" इति, इत्यभिप्रायेण प्रमातृत्वाध्यासमपेक्षत इत्याह—*नचैतस्मिन्सर्वस्मिन्नसतीति*॥ *प्रमातृत्वम्* प्रमाश्रयत्वम्। कर्तृगामित्वात्फलस्य, कर्तृत्वस्य च करणव्यापारयितृत्वनिबन्धनत्वादिन्द्रियाद्यध्यासाभावे प्रमातृत्वमेव न संभवेत्। *ननु* माऽस्तु तर्हि प्रमातृत्वमात्मनः, इत्यत आह—*नच प्रमातृत्वमन्तरेणेति*॥ तदेवं सर्वे प्रमातृ-प्रमाण-प्रमेयव्यवहारा एतमध्यासं पुरस्कृत्य प्रवृत्ताः" इति प्रतिज्ञातमेव फलितमित्याह—*तस्मादिति*॥ अनेन प्रमाणानाम-

## तस्मादविद्यावद्विषयाण्येव प्रत्यक्षादीनि प्रमाणानि शास्त्राणि च* ॥

### भामती

प्रवर्तेत ; तथाच प्रमाणमप्रमाणं स्यादित्यर्थः । उपसंहरति——*तस्मादविद्यावद्विषयाण्येव प्रत्यक्षादीनि प्रमाणानि* ॥

### ऋजुप्रकाशिका

"उपलक्ष्यते" इत्यनन्तरं यत इति शेषः । प्रमाफलस्याभावेऽपि प्रमाणप्रवृत्तौ बाधकमाह——*तथाचेति* ॥ तथा सतीत्यर्थः । एवंचोक्तविधयाऽध्यासपूर्वकमेव प्रमाणप्रवृत्तेरध्यासस्य चाविद्यात्वादविद्यावद्विषयाणि प्रमाणानि शास्त्राणि चेत्युपसंहरतीत्याह——*तस्मादिति* ॥ शास्त्राणामप्यविद्यावद्विषयत्वमेवमेवेति द्रष्टव्यम् ।

### पञ्चपादिका

सर्वसाधारणे नैसर्गिके दोषबुद्धिः । *तथाहि*——क्षुत्पिपासोपजनिते सन्तापे शश्वदनुवर्तमाने जाठराग्नि-

### वार्तिकम्

च स्वातन्त्र्यादात्मन एव प्रमातृत्वम्, न बुद्धेः ; तत्तन्त्रत्वादित्याशयः । तदेवं पञ्चभिर्विकल्पैरर्थापत्ते-र्व्यतिरेकव्याप्त्यसिद्धिं परिहृत्य शङ्किततद्व्यभिचारपरिहारार्थमवसरं दातुमुपसंहरति—*तस्मादविद्या-वद्विषयाण्येव प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चे"ति* ॥ *तस्मात्* = प्रमातृत्वस्य देहेन्द्रियादिष्वहं-ममाभिमानपूर्वकत्वनियमादित्यर्थः । व्यतिरेकव्याप्तिसिद्धावर्थादन्वयेऽपि तत्सिद्धिः फलतीत्यभिप्रेत्या-न्वयेऽविद्यावद्विषयाण्येवेति नियमो दर्शितः ; विशेषणसङ्गतैवकारस्य तद्विरुद्धान्ययोगव्यवच्छेदार्थत्वात् । तद्यथा—"शङ्खः पाण्डर एवे"त्यत्र विशेषणीभूतपाण्डरत्वविरोधिपीतादिरूपयोगस्तद्विशेष्ये शङ्खे तत्सङ्ग-तैवकारेण व्यवच्छिद्यते, तद्वदविद्यावद्विषयत्वविशेषणविरोधियोगस्तद्विशेष्ये प्रत्यक्षादौ तत्सङ्गतैवकारेण व्यवच्छिद्यते । तथाच व्यतिरेकव्याप्तिरप्युपसंहृता भवति, इति नोपसंहारस्यार्थान्तरविषयत्वमिति ॥

संप्रति विवेकिव्यवहारस्याध्यासव्यभिचारित्वमिति षष्ठं पक्षं निरसितुम्—किं तस्य लौकिकव्यवहारेऽ-ध्यासानपेक्षा ? किं वा शास्त्रीयव्यवहारे ? इति विकल्प्य, तत्र प्रथमपक्षं निरसितुं पश्वादिव्यवहार-

### भाष्यभावप्रकाशिका

समाहितेऽपि कथमाक्षेपसमाधिः ? तत्राह—*तस्मादिति* ॥ प्रमाणस्य सत्त्वादिति यावत् ॥ *अयं भावः*——मातुरेव मानाश्रयत्वेऽपि तस्याध्यस्तत्वात् तेषामविद्यावदाश्रयत्वम् । नच कारणदोषाद-प्रामाण्यम् ; सति प्रमाकारणे पश्चाद्भाविनो दोषस्यादोषत्वात्, अविद्यायास्तत्कारणनिविष्टत्वात्, "यत्र च दुष्टं कारणमि"ति चोक्तेरागन्तुकदोषविषयत्वात्, अध्यक्षादीनां च तात्त्विकप्रामाण्याभावस्येष्टत्वात्, व्यवहारे बाधाभावाद् व्यावहारिकप्रामाण्यसिद्धेरिति । नच तेषामतात्त्विके प्रामाण्ये तदन्तर्गत-श्रुतेरपि तथात्वान्नेष्टसिद्धिः ; श्रुत्यर्थस्य ब्रह्मणः "सत्यं ज्ञानमि"त्यादिना तात्त्विकत्वदृष्टेस्तस्यास्तात्त्विक-प्रामाण्यादिति ॥

### प्रदीपः

विद्यावद्विषयत्वसमर्थनेनाविद्यावद्विषयत्वं प्रमाणत्वस्य साधकमेव, न बाधकमिति सूचनाद् द्वितीयाक्षेपोऽपि समाहितप्राय एव—यद् अविद्यावद्विषयाणि प्रत्यक्षादीनि कथं प्रमाणानीति ॥

*ननु*—प्रमाणानि, नाविद्यावत्पुरुषाश्रितानि, अविद्याविरुद्धविद्यावत्पुरुषाश्रितत्वात्, यद् यद्विरुद्धयद्दाश्रितम्, तत् तद्वदनाश्रितम् ; यथा तमोविरुद्धप्रदीपवद्देशाश्रितः प्रकाशो न तमोवद्देशाश्रितः, इति कथं प्रमाणान्यविद्यावत्पुरुषा-श्रितानीति ? *न* ; व्यवहाराः, अध्यासमूलकाः, तदन्वय-व्यतिरेकानुविधायित्वादित्यनुमानेन सत्प्रतिपक्षितत्वात्, अथवा

## पश्वादिभिश्चाविशेषात् ।

### भामती

स्यादेतत्—भवतु पृथग्जनानामेवम्, आगमोपपत्तिप्रतिपन्नप्रत्यगात्मतत्त्वानां व्युत्पन्नानामपि पुंसां प्रमाण-प्रमेयव्यवहारा दृश्यन्ते, इति कथमविद्यावद्विषयाण्येव प्रमाणानि ? अत आह—*पश्वादिभिश्चाविशेषादिति* ॥ विदन्तु नामागमोपपत्तिभ्यां देहेन्द्रियादिभ्यो भिन्नं प्रत्यगात्मानम्, प्रमाण-

### ऋजुप्रकाशिका

पुनरपि प्रमाणानामविद्यावद्विषयत्वाभावं शङ्कते—*स्यादेतदिति* ॥ *पृथग्जनानाम्* अज्ञानामित्यर्थः । *आगमोपपत्तिप्रतिपन्नप्रत्यगात्मतत्त्वानामिति* ॥ अनेनाविद्याराहित्यं सूचितम् । अत एवाह—*कथमविद्यावद्विषयाण्येवेति* ॥ तेषां व्युत्पन्नत्वेऽपि तदीयप्रमाण-प्रमेयव्यवहारस्य पशु-शकुन्तादिव्यवहारसाधारण्येनाविद्यावद्विषयत्वमेवेत्याह—*अत आहेति* ॥ पश्वादितोऽविशेष उक्तः, तमेव विशदयति—*विदन्तु नामेत्यादिना* ॥ "प्रत्यगात्मानमि"त्यनन्तरम्—'तथा वेत्तारोऽपी'ति शेषः । "प्राणभृन्मात्रधर्मतां नातिवर्तन्ते" इत्युक्तम्, तदेव

### पञ्चपादिका

कृतविकारेऽन्नपाननिष्यन्दे वा न रोगबुद्धिर्जनस्य, मुहूर्तमात्रपरिवर्तिनि मन्दे ज्वरे प्रतिश्याये वाऽल्पकफप्रसूतावपि रोगबुद्धिः ; अनैसर्गिकत्वात् । अनैसर्गिकं च दोषमभिप्रेत्योक्तम्—"यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः, स एवासमीचीनः प्रत्ययो नान्यः" इति ॥

इतश्चैतदेवम्—*पश्वादिभिश्चाविशेषात्* ॥ तथाच पश्वादयः प्रमातृत्वादिव्यवहारकाले प्रवृत्ति-

### पञ्चपादिकाविवरणम्

साधारण इति* ॥ *ननु* भाष्यकारेण दोषमात्रमेव विषयतोऽपि ज्ञानमिथ्यात्वे हेतुरुक्त इति, नेत्याह—*अनैसर्गिकं च दोषमिति* ॥

*ननु* अविवेकिव्यवहारोऽध्यासमूलो भविष्यति, न विवेकिव्यवहार इति ; नेत्याह—*इतश्चैतदेवं पश्वादिभिश्चेति*॥ पश्वादिदृष्टान्तेऽध्यासमूलतां व्यवहारस्य दर्शयति—*तथाच पश्वादय इति* ॥ अध्या-

### तत्त्वदीपनम्

प्रतिश्यायशब्देन नासिकाविवरनिस्सृतकफोत्थनीरबिन्दुरभिधीयते । आगन्तुकदोषस्य विषयमिथ्यात्वहेतुत्वम्, नेतरस्येत्येतत् शबरस्वामिवचनपराहतमिति चोदयति—*ननु भाष्येति* ॥ "यस्य च दुष्टं करणमि"त्यत्रेति शेषः । आगन्तुकदोषे दोषत्वप्रसिद्धेरितरत्र तदभावात्सामान्यवचनं विशेषविषयत्वेन निर्णीयत इत्यभिप्रायेणाह—*नेत्याहेति* ॥

प्रमाणादीनामविद्यावदाश्रयत्वेऽनुपपत्त्यभावात् प्रमाणादिव्यवहारस्याध्यासमूलत्वमुक्तम् । तत्र वक्तव्यम्—किमविवेकिव्यवहारस्याध्यासमूलत्वम् ? उतेतरस्य ? इति विकल्प्याद्ये सिद्धसाध्यतेत्याह—*नन्वविवेकीति* ॥ द्वितीयस्त्वनुपपन्न इत्याह—*न विवेकीति* ॥ अध्यासस्याविवेकपुरस्सरत्वाद्विवेकिनां च तदभावात् कथमध्यासपुरःसरत्वं व्यवहारस्येत्यर्थः । विवेकिशब्देन किं बुद्धिमत्त्वमात्रं विवक्षितम् ? उत शास्त्रीयविवेकवत्त्वम् ? इति विकल्प्याद्ये व्यवहारस्याध्यासमूलत्वं दुर्वारमित्याह—*नेत्याहेति* ॥ विवेकिनां व्यवहर्तृत्वादध्यासवत्त्वेन पश्वादिविशेषाभावमुक्तं विहाय पश्वादावध्यासप्रदर्शनमयुक्तमित्याशङ्क्याह—*पश्वादीति* ॥

### वार्तिकम्

साम्येन तद्व्यवहारस्याध्यासपूर्वकत्वं साधयति—*पश्वादिभिश्चाविशेषादिति* ॥ व्युत्पत्तिमतां

### भाष्यभावप्रकाशिका

*ननु* अविवेकिव्यवहारस्याध्यासिकत्वेऽपि नाविद्यावद्विषयाण्येव प्रमाणानि ; विवेकिनामपि तद्व्यवहारात्, तत्राह—*पश्वादिभिश्चेति* ॥ चशब्दः शङ्काव्यावृत्त्यर्थः । यौक्तिकविवेकस्या-

## भामती

प्रमेयव्यवहारे तु प्राणभृन्मात्रधर्मान्नातिवर्तन्ते। यादृशो हि पशु-शकुन्तादीनामविप्रतिपन्नमुग्धभावानां व्यवहारः, तादृशो व्युत्पन्नानामपि पुंसां दृश्यते। तेन तत्सामान्यात् तेषामपि व्यवहारसमयेऽविद्यावत्त्व-मनुमेयम्। चशब्दः समुच्चये। उक्तशङ्कानिवर्तनसहितपूर्वोक्तोपपत्तिरविद्यावत्पुरुषविषयत्वं प्रमाणानां

## ऋजुप्रकाशिका

विशदयति—*यादृशो हीति* ॥ *तत्सामान्यात्=पशु-शकुन्तादिव्यवहारवत्त्वात्। *तेषामपि=व्युत्पन्नानामपि। *अनुमेयमिति*। अत्रेत्थमनुमानम्—विमता व्युत्पन्नाः, अविद्यावन्तः, पशु-शकुन्तादिव्यवहारसमानव्यवहार-वत्त्वात्, पामरवदिति। तथाच तान् प्रति प्रवृत्तानां प्रमाणादीनामविद्यावद्विषयत्वमेवेत्यर्थः। "पश्वादि-भिश्चाविशेषात्" इत्यत्रत्यश्चशब्दः समुच्चयार्थ इत्याह—*चशब्द इति* ॥ समुच्चयमेवाह—*उक्तशङ्केति* ॥ निवर्तनेति छेदः। "पश्वादिभिश्चाविशेषात्" इत्युक्तं भाष्यकृता, तदेतद् भाष्यकार एव विशदयतीत्याह—

## पञ्चपादिका

निवृत्त्यौदासीन्यं भजमानाः कार्य-कारणसंघात एवाहंमानं कुर्वन्तीति प्रसिद्धं लोके। तदेकरूपयोग-क्षेमा हि मनुष्या जन्मत एव पश्वादिभ्योऽधिकतरविवेकमतयः शास्त्राधेयसाम्परायिकमतिसामर्थ्या अपि; अतस्तदेकरूपकार्यदर्शनात् कार्य-कारणसंघातेऽप्यात्माभिमानः समानो युक्तः। *ननु* पश्वादी-

## पञ्चपादिकाविवरणम्

सानुमाने हेतुभूतव्यवहारस्य विवेकिष्वपि पक्षधर्मतामाह—*तदेकरूपयोगक्षेमा इति* ॥ तत्र हेतुदर्शनाद् हेतुमन्तमध्यासमनुमिमीते—*अतस्तदेकरूपकार्यदर्शनादिति* ॥ पश्वादिदृष्टान्तेऽप्यध्याससद्भावे प्रमाणं चोदयति—*ननु पश्वादीनामिति* ॥ पदार्थद्वयदर्शने सति प्रत्यक्षानुमानागमैर्भेदाप्रतिपत्तावध्यासः परिशिष्यत

## ऋजुविवरणम्

पश्वादिव्यवहारेऽध्यासपूर्वकत्वे किं प्रमाणमिति चोदिते, "प्रौढमतिभ्यः" इत्यनेन प्रौढमतिभ्यो ह्यात्मव्युत्पादनं दृश्यते, अतस्तेषां व्युत्पादनात् प्राग् यथाऽध्यासः; तद्वदत्रापि, अथवा—प्रौढमतिभ्योऽपि व्युत्पादिते सत्येवात्मज्ञानम्, किमुत पश्वादीनाम्? "पूर्वं ज्ञानं नास्तीति वक्तव्यत्" इत्युक्तम्, तदसंबद्धम्; विवेकिष्वध्यासपुरःसरत्वं कथमिति तत्रैव चोदिते पश्वादिदृष्टान्तोपादानात्, पुनस्तत्रापि चोदिते प्रौढमतिष्वध्यासदर्शनेन पश्वादिष्वपि तत्साधन इतरेतराश्रयप्रसङ्गात्, इत्याशङ्क्याभिप्रायमाह—*प्रत्यक्षानुमानेति* ॥ स चासौ कालश्चेति तत्काल इति विग्रहः प्रतिभाति, तथा सति

## तत्त्वदीपनम्

"तदेकरूपे"त्यत्र पश्वादीनां मनुष्याणां च साम्यमुच्यते। "अतस्ततदेकरूपे"त्यनेन पौनरुक्त्यं स्यात्, तदर्थम-पुनरुक्तमर्थमाह—*अध्यासेति* ॥ विवेकिव्यवहारः, अध्यासनिबन्धनः, व्यवहारत्वात्; पश्वादिव्यवहारवदित्युक्तम्, तदनुपपन्नम्; तस्याप्रसिद्धत्वात्। तथाच साध्यविकलो दृष्टान्त इति चोदयति—*पश्वादीति* ॥ शरीरादावहंकारानुबन्धो गौणत्वेनाप्युपपत्स्यत इत्यभिसन्धिः। दृष्टान्तेऽध्यास आक्षिप्ते तत्समर्थनं विहाय प्रौढमतीनां व्युत्पाद्यत्वं कस्मात् सिद्धा-न्तिनोक्तम्? इत्याशङ्क्य तात्पर्यमाह—*पदार्थेति* ॥ आत्मानात्मानौ पदार्थद्वयशब्दार्थः ॥ "उच्यते" इत्यादेरयमर्थः—देहात्मनोर्भेदानधिगतावहं-ममाभिमानस्याध्यासत्वम्; ज्ञातभेदयोरभेदाभिमानस्य गौणत्वादित्याशयेनोत्तरयति—

## वार्तिकम्

व्यवहार इति शेषः। चोऽप्यर्थे भिन्नक्रमः। नहि व्युत्पत्तिमतामपि पुरुषाणां व्यवहारे कर्तव्ये

## भाष्यभावप्रकाशिका

ध्यक्षभ्रान्त्यविरोधित्वात्, विरोधित्वेऽपि तदननुसन्धाने विवेकिनामपि व्यवहारे पश्वादिभिरविशेषाद् व्यवहारोऽप्याध्यासिक एवेत्यर्थः ॥ कथं व्यवहारकाले विवेकिनः पश्वादिव्यवहारमनुवर्तन्ते? तत्राह—

## प्रदीपः

विद्वद्व्यवहारे व्यभिचारात्, इत्याशङ्क्य समाधत्ते—*पश्वादिभिश्चाविशेषादिति* ॥ विदुषामिति शेषः। व्यवहर्तारो

## पञ्चपादिका

नामपि कार्य-कारणसंघातेऽहङ्कारानुबन्ध इति कुतोऽवसीयते ? येन सिद्धवदभिधीयते, *उच्यते*—प्रौढमतिभ्य एव प्रत्यक्षादिवृत्तकुशलैरात्मा व्युत्पाद्यते ; अन्यथा तदनर्थकत्वप्रसङ्गात् । एवमेव प्रमाणविचारविरहं सर्वः संप्रतिपद्येत ॥

*ननु* गोपालाङ्गनादयः प्रमाणविरहमेव वर्तमानदेहपातेऽपि स्थायिनं भोक्तारं मन्यमानास्तदर्थमाचरन्ति *न* ; तदभिज्ञव्यवहारमात्रप्रमाणकत्वात् । तथाच ते पृष्टाः—कः परलोकसम्बन्धी ? इति, 'न

## पञ्चपादिकाविवरणम्

इत्याह—*प्रौढमतिभ्य इति* ॥ स्वाभाविकप्रत्यक्षेण विवेकदर्शने दोषमाह—*एवमेवेति* ॥ *ननु* अनुमानागमविचारहीनानामप्यदृष्टार्थे व्यवहारदर्शनात् प्रत्यक्षेणैव विवेको गृह्यत इति चोदयति—*ननु गोपालाङ्गनादय इति* ॥ न प्रत्यक्षेण विवेकग्रहः, किन्त्वाप्तवचनादित्याह—*न तदभिज्ञव्यवहारेति* ॥ प्रत्यक्षश्चेद्विवेकः, विशेषतः प्रत्यगात्मानं प्रतिपद्येरन्नित्याह—*तथाच ते पृष्टा इति* ॥ अतो निगमनवाक्य-

## तत्त्वदीपनम्

*उच्यत इति* ॥ कथं भेदानधिगतिरिति चेत् ? तत्र वक्तव्यम्—किमनुमानाद् व्यतिरेकसिद्धिः ? उतागमात् ? अथवा प्रत्यक्षात् ? इति विकल्प्य कल्पद्वयं दूषयति—*प्रौढमतिभ्य इति* ॥ व्युत्पादनयोग्येभ्य इत्यर्थः । पश्वादीनामुपदेष्टृत्वनिराकरणार्थं प्रत्यक्षादीति विशेषणम् । पश्वादीनामप्रौढमतित्वादुपदेष्टृभावाच्च न व्युत्पाद्यत्वमित्यर्थः । तृतीयं कल्पं शङ्कते—*अन्यथेति* ॥ व्युत्पाद्यत्वं विनाऽप्यधिगतावित्यर्थः । प्रत्यक्षाद्विवेकसिद्धिं ब्रुवाणं प्रत्युपदेशानर्थक्यप्रसञ्जनं नानिष्टमित्याशङ्कायाम्—"एवमेवे"त्याद्युक्तमनुपपन्नम्, युक्तिसहकृतप्रत्यक्षस्याभेदबोधकत्वात्, सर्वेषां च तदभावादित्याशङ्क्याह—*स्वाभाविकेति* ॥ *एवमेवेति* ॥ पश्वादिवदित्यर्थः । सर्वेषां प्रत्यक्षेणात्मप्रतिपत्त्यभावेऽपि केषांचित्तदस्तीत्युक्तम्—"ननु गोपाले"त्यत्र, तदनुपपन्नम् ; तत्र प्रमाणाभावादित्याशङ्क्य तात्पर्यमाह—*नन्विति* ॥ अदृष्टोद्देशेन देव-भूदेवसमाराधनसंदर्शनाद् देहस्य चात्र भस्मीभावोपलम्भात् कालान्तरीयफलभोक्त्रधिगतिस्तेषां निश्चीयते ; आगमाद्यप्रवीणत्वाच्च प्रत्यक्षाद्विवेकाधिगतिरित्यर्थः ॥

"व्यवहारबलाद्भेदः प्रत्यक्ष" इत्युक्ते तदभिज्ञव्यवहारमात्रं व्यतिरेकस्य प्रत्यक्षत्वे प्रमाणमिति सिद्धान्तिनोक्तमिति प्रतिभाति, तन्न संभवति ; अनिष्टापादनाभावादित्याशङ्क्य टीकार्थं स्पष्टयति—*न प्रत्यक्षेणेति* ॥ देहव्यतिरिक्तात्मज्ञानवानाप्तः, तदभिवदनादिरप्यात्मनि प्रमाणमिति टीकार्थः । उक्तेऽर्थे विनिगमनमुक्तम्—"तथाचे"त्यत्र, तदनुपपन्नम् ; व्यतिरिक्तात्मविशेषप्रतिपत्तेरित्याशङ्क्याह—*प्रत्यक्ष इति* ॥ *विशेषत इति* । असंसार्यादिरूपेणेत्यर्थः । "प्रत्यक्षादिव्यवहारः" इति भाष्ये हेतूपसंहरणं प्रतिभाति, न हेतुमतः, तत्र कोऽभिप्रायः ? इत्याशङ्क्य हेतुमतोऽप्युपसंहरणमस्तीत्याह—*अत इति* ॥ स चासौ कालश्चेति कर्मधारयसमासः ? उत तस्य कालस्तत्काल इति षष्ठीसमासः ? नाद्यः ; व्यवहारस्य कालत्वाभावात्, न द्वितीयः ; किं तच्छब्देन व्यवहारः परामृश्यते ?

## वार्तिकम्

पश्वादिभिः कश्चन विशेषोऽस्ति ; तद्व्यवहारस्याविवेकपूर्वककर्तृकत्वेन पशु-पक्षि-सरीसृपादिव्यवहारसाम्यादित्यर्थः । *यद्वा*—नहि पश्वादिभिः क्रियमाणो यो व्यवहारः, ततो व्युत्पत्तिमतामपि व्यवहारे

## प्रदीपः

विद्वांसोऽपि पश्वादिवदविद्यावन्त एवेति न व्यभिचारः, नवा सत्प्रतिपक्षानुमानावकाश इति भावः । अनेन चेदमेव सूच्यते—यद् अपरोक्षज्ञानमेवाध्यासविरोधि, न परोक्षज्ञानमिति । आगमादिप्रतिपन्नप्रत्यगात्मतत्त्वव्यवहर्तारश्च पुरुषा नापरोक्षज्ञानिनः, इति सत्प्रतिपक्षानुमानमसिद्धमेव । अत्रायमनुमानप्रयोगो विवक्षितः—विपश्चितः, अविद्यावन्तः, व्यवहर्तृत्वात् ; पश्वादिवदिति । दृष्टान्ते हेतु-साध्यसमन्वयप्रदर्शनार्थमुदाहरणवाक्यं निर्दिशति—*यथाहीति* ॥ पश्वादयः प्रत्यक्षव्यवहारवन्तोऽध्यासवन्तश्चेति सूचनार्थम्—"शब्दादिभिः श्रोत्रादीनां सम्बन्धे सती"त्यादि "प्रवर्तते" इत्यन्तम् । प्रतिकूले जाते निवर्तन्तेऽनुकूले जाते प्रवर्तन्त

**यथाहि पश्वादयः शब्दादिभिः श्रोत्रा(१)दीनां संबन्धे सति, शब्दादिविज्ञाने प्रतिकूले ज्ञाते ततो निवर्तन्ते, अनुकूले (२)च प्रवर्तन्ते ; यथा—**

भामती

साधयतीत्यर्थः। एतदेव विभजते—*यथा हि पश्वादय इति* ॥ अत्रच *शब्दादिभिः श्रोत्रादीनां संबन्धे सति* इति प्रत्यक्षं प्रमाणं दर्शितम्। *शब्दादिविज्ञाने* इति तत्फलमुक्तम्।

ऋजुप्रकाशिका

*एतदेवेति* ॥ अतः समानः पश्वादिभिः पुरुषाणां प्रमाण-प्रमेयव्यवहारः* इत्यग्रे भाष्य उपसंहारात् तदनुरोधेन "पश्वादिभिश्चाविशेषात्" इति भाष्यानन्तरं पश्वादिभिः पुरुषाणां प्रमाणादिव्यवहारसाम्यमुपपादनीयम्। अत्र पश्वादीनां किं प्रमाणमुपन्यस्तम् ? इति वीक्षायामाह----*अत्र शब्दादिभिः श्रोत्रादीनामिति* ॥ प्रत्यक्षप्रमाणं दर्शितमित्यभिधाय, तत्फलमपि दर्शितमित्याह----*शब्दादिविज्ञान इतीति* ॥ एवमनुमानफलमपि दर्शितमित्याह----*प्रतिकूल इतीति* ॥ अनुमानफलप्रदर्शनेनानुमानप्रमाणमपि दर्शितप्रायम्। तदेतदुपपादयति---*तथाहीति* ॥ शब्दादिस्वरूपमुपलभ्येत्यतः प्राक् पश्वादय इति शेषः। *तज्जातीयस्येति* ॥ उपलभ्यमानशब्दसजातीयस्येत्यर्थः। *प्रतिकूलतामनुस्मृत्येति* ॥ पूर्वानुभूतां प्रतिकूलतामनुस्मृत्येत्यर्थः। *अनुमिमत इति* ॥ अयमुपलभ्यमानः शब्दः, प्रतिकूलः, प्रतिकूलतया पूर्वानुभूतो यः शब्दस्तत्सजातीयत्वादित्यनुमिमत इत्यर्थः। ततस्ततो निवर्तन्त इति भावः। *भाष्ये*----अनुकूले च प्रवर्तन्त इति* ॥

वार्तिकम्

कश्चन विशेषोऽस्ति ; अविवेकपूर्वकत्वसाम्यादित्यर्थः। *यद्वा*—पश्वादिभिर्व्यवहर्तृभिर्व्युत्पत्तिमतामपि व्यवहर्तृणामविशेषादित्युक्तेऽर्थाद्विवक्षिताविवेकेन च तद्व्यवहारसाम्यं प्रतिपादितं भवति। एतस्य संग्रहवाक्यत्वात्। एवंच सत्युत्तरग्रन्थोऽपि समञ्जसो भवतीति। एतदेव संग्रहवाक्यं विभजते—"यथाही"त्यादिना—"समान इति निश्चीयते"* इत्यन्तेन ॥ तत्र दृष्टान्तं विभजते—*"यथाहि पश्वादयः शब्दादिभिः श्रोत्रेन्द्रियादीनां सम्बन्धे सति, शब्दादिविज्ञाने प्रतिकूले जाते ततो निवर्तन्ते, अनुकूले च जाते प्रवर्तन्ते"इति* ॥ हिशब्दो लोकप्रसिद्धिद्योतनार्थः। "शब्दादिभिरि"त्यादिशब्देन स्पर्शादेर्ग्रहणम्। श्रोत्रेन्द्रियादीनामिति त्वगादेः। *ततः = देशाद्विषयाच्चेत्यर्थः। शब्दादिज्ञानस्यैवानुकूलत्वं प्रतिकूलत्वं च वदता न शब्दादेः स्वतोऽनुकूलत्वं प्रतिकूलत्वं वाऽस्ति, किन्त्वध्यासकृतमेवेति ध्वनितं भवति। कुतः ? कश्चित्प्रत्यनुकूलस्यापि शब्दादेस्तस्यैवान्यं प्रति प्रतिकूलत्वदर्शनात्, वस्तुनोऽनेकस्वाभाव्यानुपपत्तेः, उपपत्तौ वा सर्वान् प्रत्यविशेषेण तत्स्वाभाव्यापत्तेः। नचैकं प्रत्यपि तस्यैकस्वाभाव्यमस्ति ; देश-कालभेदेनैकं प्रत्यप्येकस्य नानास्वाभाव्यदर्शनात्, तस्य चैकत्वस्य परमार्थतो विरोधादविद्यात्मकत्वमन्तरेणानुपपत्तेरिति ॥ तत्र 'शब्दादिभिः श्रोत्रेन्द्रियादीनां सम्बन्धे सति, शब्दादिविज्ञाने प्रतिकूले जातेऽनुकूले च जाते" इत्यनेन

भाष्यभावप्रकाशिका

*यथाहीति* ॥ संगृहीतोऽर्थो यथा व्यज्यते, तथोच्यत इति यावत्। आदिशब्देन शकुन्तादिरुक्तः। अत्र च "शब्दादिभिः श्रोत्रादीनां सम्बन्धे सती"ति अर्थेन्द्रियसन्निकर्षात्मकमध्यक्षमुक्तम्, "शब्दादिविज्ञाने" इति तत्फलम्, "प्रतिकूलेऽनुकूले" इत्यनुमानम्। ते हि शब्दाद्युपलभ्य तज्जातीयस्य प्रातिकूल्यमानुकूल्यं वाऽनुस्मृत्य, अस्यापि तज्जातीयत्वात् तथात्वमनुमिन्वन्ति ; तत्र प्रतिकूलत्वानुमानफलं निवृत्तिः, अनुकूलत्वानुमानस्य तु प्रवृत्तिरिति विवेकः ॥ उक्तमर्थमुदाहरति—*यथेति* ॥

(१) श्रोत्रेन्द्रियादीनामिति। (२) अनुकूले च जाते इति च वार्तिकाभिमतः पाठः।

**दण्डोद्यतकरं पुरुषमभिमुखमुपलभ्य मां हन्तुमयमिच्छतीति पलायितुमारभन्ते, हरिततृणपूर्णपाणिमुपलभ्य तं प्रत्यभिमुखीभवन्ति ; एवं पुरुषा अपि व्युत्पन्नचित्ताः क्रूरदृष्टीनाक्रोशतः खड्गोद्यतकरान् बलवत उपलभ्य ततो निवर्तन्ते, तद्विपरीतान् प्रति प्रवर्तन्ते !!! अतः समानः पश्वादिभिः पुरुषाणां प्रमाण-प्रमेयव्यवहारः ।**

### भामती

*प्रतिकूले* इति चानुमानफलम् । तथाहि—शब्दादिस्वरूपमुपलभ्य, तज्जातीयस्य प्रतिकूलतामनुस्मृत्य तज्जातीयतयोपलभ्यमानस्य प्रतिकूलतामनुमिमत इति । उदाहरति—*यथा दण्डेति* ॥ शेषमतिरोहितार्थम् ।

### ऋजुप्रकाशिका

अभिमुखमागतेन पुंसा प्रयुक्त उपलभ्यमानोऽयं शब्दः, अनुकूलः, अनुकूलतया पूर्वानुभूतो यः शब्दः, तत्सजातीयत्वादित्यनुमाय तदभिमुखं प्रवर्तन्त इत्यर्थः । भाष्ये----"दण्डोद्यतकरम्" ॥ क्रूरमाक्रोशन्तमिति शेषः । *हरिततृणेत्यतः* प्राग् अनुनयशब्दवन्तमिति शेषः । एवं पश्वादिनिवृत्तिलक्षणं व्यवहारमुपपाद्य, तत्साम्यं पुरुषव्यवहारस्यापि दर्शयति----भाष्ये---*एवं पुरुषा अपीत्यादिना* ॥ *भाष्ये----तद्विपरीतानिति* ॥ ललितदृष्टीननुनयवतो हिरण्योद्यतकरानित्यर्थः । भाष्ये----*अतः* इत्युपसंहारः । *ननु* पश्वादीनां प्रत्यक्षादि-

### वार्तिकम्

**ग्रन्थेन पश्वादीनां प्रमाण-प्रमेयव्यवहारः प्रदर्शितः । "ततो निवर्तन्ते प्रवर्तन्ते" इत्यनेन तल्लिङ्गतया तज्जन्यप्रवृत्ति-निवृत्ती प्रदर्शिते इति मन्तव्यम् । एवं सामान्यतोऽनुकूल-प्रतिकूलविज्ञानविषये प्रमाण-प्रमेयव्यवहारमूलकप्रवृत्ति-निवृत्ती अभिधाय, तद्विशेषविषये ते उदाहरति—*"यथा दण्डोद्यतकरं पुरुषमभिमुखमुपलभ्य मां हन्तुमयमिच्छतीति पलायितुमारभन्ते, हरिततृणपूर्णपाणिमुपलभ्य तं प्रति पुनरभिमुखीभवन्तीति* । पश्वादय इत्यनुषङ्गः । "मां हन्तुमयमिच्छती"त्यादिना देहे तेषामात्माभिमानो दर्शितः । *हरिततृणम्*=बालघासः, तेन पूर्णः पाणिर्यस्य सः, हरिततृणपूर्णपाणिः ; तमित्यर्थः । एवं पश्वादीनां प्रवृत्ति-निवृत्तिलिङ्गकं प्रमाण-प्रमेयव्यवहारं लोकसिद्धमभिधाय, व्युत्पन्नचित्तानां प्रवृत्ति-निवृत्तिलिङ्गके तद्व्यवहारे तत्समानतां लोकसिद्धामाह—*"एवं पुरुषाः,अपि व्युत्पन्नचित्ताः क्रूरदृष्टीनाक्रोशतः खड्गोद्यतकरान् बलवत उपलभ्य ततो निवर्तन्ते, तद्विपरीतान् प्रति प्रवर्तन्ते" इति* ॥ यथा पश्वादयः प्रवर्तन्ते निवर्तन्ते च स्वानुकूले प्रतिकूलविषयाच्च ; एवं पुरुषा अपीति योजना । एवंशब्दपरामृष्टं तद्व्यवहारसाम्यं**

### भाष्यभावप्रकाशिका

पुरुषविशेषं दृष्ट्वा तज्जातीयस्य हन्तृत्वमनुस्मृत्य, अस्यापि तज्जातीयत्वात् तदनुमाय निवृत्तिः, एवं तज्जातीयस्योपकर्तृत्वमनुस्मृत्य तज्जातीयत्वात्तदनुमाय तदाभिमुख्यमित्याह—*दण्डेति । हरितेति च* ॥ दार्ष्टान्तिकं वदन् व्यवहारलिङ्गेनाध्यासमनुमातुं तस्य पक्षधर्मतामाह—*एवमिति*॥ पित्रादित्रितयशिक्षाजन्यपदवाक्याभिज्ञता—*व्युत्पन्नचित्तता* ॥ क्रूरदृष्ट्यादिविशिष्टान् पुरुषान् दृष्ट्वा तद्विधानां प्रातिकूल्यं स्मृत्वा, तथात्वेनैषामपि तदनुमाय, पश्वादिवद्विवेकिनोऽपि तेभ्यो विमुखीभवन्ति, तेभ्यो विपरीतान् प्रसन्नदृष्टित्वादिविशिष्टान् पुरुषविशेषानालक्ष्य, तादृशानामानुकूल्यं स्मृत्वा तथात्वादेषामपि तदनुमाय तेष्वभिमुखीभवन्तीत्यर्थः । पक्षधर्मतां निगमयति—*अतइति* ॥ अनुभवार्थोऽतश्शब्दः । *ननु*

**पश्वादीनां च प्रसिद्धोऽविवेकपूर्वकः(१) प्रत्यक्षादिव्यवहारः, तत्सामा(२)न्यदर्शनाद् व्युत्पत्तिमतामपि पुरुषाणां प्रत्यक्षादिव्यवहारस्तत्कालः समान इति निश्चीयते।**

भामती

स्यादेतत्—भवन्तु प्रत्यक्षादीन्यविद्यावद्विषयाणि, शास्त्रं तु 'ज्योतिष्टोमेन स्वर्गकामो

ऋजुप्रकाशिका

व्यवहारस्याविद्यावद्विषयत्वे सिद्धे खलु, तत्साम्याद् व्युत्पन्नपुरुषप्रत्यक्षादिप्रमाणव्यवहारस्यापि तथात्वं सिध्येत्, तदेव कुतः ? इति पुनः स्पष्टीकरणार्थमाशङ्कायामाह----भाष्ये----पश्वादीनां चेति* ॥ *भाष्ये----अविवेकपूर्वक इति छेदः। प्रमाणानामविद्यावद्विषयत्वमङ्गीकृत्य शास्त्रस्याविद्यावद्विषयत्वाभावमाशङ्कते----*स्यादेतदित्या-

पञ्चपादिका

विद्यो विशेषतः, प्रसिद्धो लोके' इति प्रतिब्रुवन्ति। तस्माद् युक्तमुक्तम्—पश्वादीनां च प्रसिद्धोऽविवेकपूर्वकः प्रत्यक्षादिव्यवहारः, तत्सामान्यदर्शनाद् व्युत्पत्तिमतामपि पुरुषाणां प्रत्यक्षादिव्यवहारस्तत्कालः समान इति* ॥

पञ्चपादिकाविवरणम्

मुपपन्नमित्याह—*तस्माद्युक्तमुक्तमिति* ॥ तस्य व्यवहारस्य काल एव कालो यस्याध्यासस्य, सोध्यासस्तत्कालः, स च पश्वादिभिर्विवेकिनामपि समान इति ॥

ऋजुविवरणम्

"व्यवहारः"इत्यनेन सामानाधिकरण्यं न स्यात्, नच तस्य व्यवहारस्येति विवक्षितम्, नापि तस्याध्यासस्य काल इति ; अनन्वयात्, नापि तस्याध्यासस्य काल एव कालो यस्येति व्यवहारपरत्वम् ; असाध्यनिगमनप्रसङ्गात्, इति, मध्यमपदलोपिसमासान्तरं दर्शयति—*तस्य व्यवहारस्येति* ॥ "न तेनानध्यस्तात्मभावेनासङ्गस्ये"त्यनेन गतभाष्य-

तत्त्वदीपनम्

उताध्यासः ? नाद्यः ; व्यवहारस्य कालत्वाभावात् ; अत एव न द्वितीयोऽपि संगच्छत इत्याशङ्क्याह—*तस्येति* ॥ मध्यमपदलोप्ययं समास इत्यर्थः। नचाध्यासस्य व्यापकत्वाद् व्यवहारस्य च व्याप्यत्वादध्यासस्य काल एव कालो

वार्तिकम्

**स्पष्टीकृत्य दर्शयति—*"क्रूरदृष्टीनि"त्यादिना*। बहूनामपि पश्वादीनामेकं पुरुषं दण्डोद्यतकरं दृष्ट्वा पलायनं दृष्टम्, इति दृष्टान्त एकवचनेन तदुपन्यासः कृतः,न तथा बहूनां व्युत्पन्नमतीनां पुरुषाणामेकं पुरुषं तादृशं दृष्ट्वा पलायनं दृष्टमिति, दार्ष्टान्तिके क्रूरदृष्टीनिति बहूनां ग्रहणं कृतमिति द्रष्टव्यम्। स्वभावतोऽपि केचन क्रूरदृष्टयो भवन्ति, नच तान्दृष्ट्वा पलायनं संभवतीत्यत उक्तम्—*आक्रोशतः इति* ॥ छिन्धि, भिन्धि, जहि,**

भाष्यभावप्रकाशिका

'अस्माकं प्रवृत्तिरध्यासादि'ति न पश्वादयो भणन्ति, नापि परेषामेतत् प्रत्यक्षम् ; अतो दृष्टान्तस्य साध्यवैकल्यम्, तत्राह—*पश्वादीनां चेति* ॥ अधिष्ठानारोप्यज्ञाने सति, अध्यक्षानुमानागमैश्च सामानाधिकरण्यविरोधिविवेकाभावादध्यासवत्त्वं तेषां कल्प्यते, विनाऽपि मानैर्विवेके तदानर्थक्यम्, ततो विना विवेकं पश्वादिषु व्यवहारदृष्टेस्तन्मूलाध्याससिद्धिरित्यर्थः। संप्रत्यनुमानमाह—*तत्सामा-

प्रदीपः

इति योजना। अनेन च दृष्टान्ते हेतुसमन्वयः साधितः। "यथे"त्यादिना चानुमानिकव्यवहारवत्त्वं बोध्यते। "एवं पुरुषाः" इत्यनेन हेतोः पक्षधर्मत्वमुच्यते। दृष्टान्त-पक्षोभयसाधारण्यं हेतोरुपसंहरति—*अतः पश्वादिभिरिति* ॥ पक्षधर्मता-

(१) अविवेकपुरस्सर इति वार्तिकाद्यभिमतः पाठः। (२) तत्साम्यदर्शनादिति वार्तिकाभिमतः पाठः।

## भामती

यजेत' इत्यादि न देहात्माध्यासेन प्रवर्तितुमर्हति ; अत्र खल्वामुष्मिकफलोपभोगयोग्योऽधिकारी प्रतीयते । *तथाच पारमर्षं सूत्रम्—"शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्तस्मात् स्वयं प्रयोगे

## ऋजुप्रकाशिका

दिना* ॥ कथं न प्रवर्तितुमर्हति ? इत्यत आह—*अत्र खल्विति* ॥ *शास्त्रफलम्=स्वर्गादि स्वभोक्तरि कर्तरि यत्र विद्यते, स एव खल्वामुष्मिकफलोपभोगयोग्यः ॥ *अत्र = "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यादिशास्त्रेऽधिकारी प्रतीयत इत्यर्थः । आमुष्मिकस्वर्गादिफलयोग्योऽधिकारी, फलं च तन्निष्ठमित्यत्र पारमर्षं सूत्रं प्रमाणयति—*तथाच पारमर्षं सूत्रम्—शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वादितीति* ॥ शेषलक्षणे स्थितम्—शास्त्रफलं प्रयोक्तरि ; तल्लक्षणत्वात् तस्मात् स्वयं प्रयोगे स्यात् । अत्र—"दर्श-पूर्णमासाभ्यां स्वर्गकामो यजेत" इति श्रूयते । तत्र संशयः—किं साङ्गे प्रधाने यजमानः कर्ता ? उत उद्देशत्यागात्मकप्रधान एव यजमानः कर्ता, अङ्गेषु यथायोग्यमृत्विजां कर्तृत्वमिति ? एवं संशये स्थिते—तत्रेदं पूर्वपक्षसूत्रम् ॥ साङ्गप्रधानस्य प्रयोगेऽनुष्ठाने स्वयं यजमानः कर्ता स्यात् ; साङ्गप्रधानकर्मप्रयोक्तृत्वात् , साङ्गे प्रधाने यजमानः कर्ता । अत्र हेत्वन्तरम् । किं तद्धेत्वन्तरमिति चेत् , उच्यते—यतः शास्त्रफलं प्रयोक्तरि प्रतीयते, ततो हेतोः । तद्वा कुतः ? इति चेत् , तल्लक्षणत्वात् ; "शास्त्रफलं प्रयोक्तरी"त्यस्यार्थस्य शास्त्रप्रमाणकत्वात् । कुतस्तस्यार्थस्य शास्त्रप्रमाणकत्वमिति चेत् , उच्यते—"स्वर्गकामो यजेत" इति हि शास्त्रम् । तत्र स्वर्गोद्देशेन यागभावनां विदधदाख्यातं भावनाऽऽक्षिप्तकर्तृसंबद्धं फलमवगमयति । फले कर्तृगामिनि सति आत्मनेपदप्रवृत्तेः, आत्मनेपदेन च फलस्य कर्तृगामिता प्रतीयते । अतः प्रयोक्तरि शास्त्रात् फलमिति । एतच्चात्र सप्रमाणकमेव । अस्त्वेवम् , तथाऽपि साङ्गे प्रधाने यजमानः कर्तेति कथमिति पुनः शङ्का चेत् , उच्यते ;—साङ्गमेव प्रधानं प्रयोक्तृगतफलसाधनम् , प्रयोक्ता च यजमान एव, इति साङ्गे प्रधाने यजमानः कर्तेति पूर्वपक्षे प्राप्ते, राद्धान्तः ;—

## वार्तिकम्

इत्येवमुच्चैः शब्दान् कुर्वत इत्यर्थः । तथाच तल्लिङ्गान्निश्चीयते—नैते स्वभावतः क्रूरदृष्टयः, किन्तर्हि ? अस्मदादिहननाकाङ्क्षयेति । आक्रोशनमपि परिहासादिना कदाचित् संभवति, तद्वारणार्थम्—*क्रूरदृष्टीनित्युक्तम्* ॥ तथापि शस्त्ररहितत्वान्निष्प्रयोजका एव स्युरिति, नेत्याह—*खड्गोद्यतकरानिति* ॥ तथाऽप्यबलत्वान्निष्प्रयोजकाः स्युरिति, नेत्याह—*बलवत इति* ॥ *तद्विपरीतान् प्रति* =अक्रूरदृष्ट्यादीन् प्रतीत्यर्थः । सर्वलोकप्रत्यक्षेण व्यवहारसाम्यमुपपाद्योपसंहरति—*"अतः समानः पश्वादिभिः पुरुषाणां प्रमाण-प्रमेयव्यवहार इति* ॥ तथाच प्रयोगः—विवादाध्यासितः प्रमाण-प्रमेयव्यवहारः, देहेन्द्रियादिष्वहं-ममाध्यासपुरःसरः, प्रमाण-प्रमेयव्यवहारत्वात् , पश्वादिव्यवहारजातीयत्वाद्वा ; पश्वादिव्यवहारवत् । षष्ठाद्याधिकरणपूर्वपक्षन्यायेन दृष्टान्ते साध्यवैकल्यमाशङ्क्याह—*"पश्वादीनाञ्च प्रसिद्धोऽविवेकपुरःसरः प्रत्यक्षादिव्यवहार इति* ॥ अविवेकोऽत्र देहेन्द्रियादिष्वहं-ममाभिमानः कथ्यते ; अविवेकहेतुत्वात् । नहि पश्वादीनां देहेन्द्रियादिभ्य आत्मविवेके किञ्चित्प्रमाणमस्ति, येन तेषामुक्ताध्यासमन्तरेणैव प्रमाण-प्रमेयादिव्यवहारः स्यात् । न तावत् प्रत्यक्षेण तेषां देहादिविविक्तात्मग्रहणम् ; प्रत्यक्षस्य तदसामर्थ्यात्, सामर्थ्ये वाऽस्मदादीनामपि तथात्वप्रसङ्गेन शास्त्रवैयर्थ्यापत्तेः । नाप्यनुमानेन ; तेषां दृष्टमात्रव्यवहारित्वेन तद्विषये तदवतारानुपपत्तेः ॥ शास्त्रोपदेशस्तु तेषां नास्त्येव ; तद्ग्रहणादिसामर्थ्याभावात् । षष्ठाद्यपूर्वपक्षन्यायस्तु तत्रैव निराकृतः । अतः पश्वादीनां प्रत्यक्षादिव्यवहारस्याध्यासपूर्वकत्वप्रसिद्धेर्न साध्यविकलो दृष्टान्त इत्याशयः । तदेवं दृष्टान्तस्य साध्यवैकल्यं परिहृत्य बाध-

भामती

स्यात्"। नच देहादि भस्मीभूतं पारलौकिकाय फलाय कल्पते, इति देहाद्यतिरिक्तं कञ्चिदधिकारिणमाक्षिपति शास्त्रम्। तदवगतिश्च विद्या, इति कथमविद्यावद्विषयं शास्त्रम्? इत्या-

ऋजुप्रकाशिका

अन्यो वा स्यात् परिक्रयाम्नानादिप्रतिषेधात्॥ यदि यजमान एव साङ्गे प्रधाने कर्ता स्यात्, तर्हि ऋत्विजां दक्षिणाभिः परिक्रयणमनर्थकं स्यात्। नच—दक्षिणाभिः परिक्रयणं स्वविषयम्, न ऋत्विग्विषयमिति—वाच्यम्; स्वस्मिन् परिक्रयस्य विप्रतिषिद्धत्वात्। अत आध्वर्यवादिकं ऋत्विग्भिरेव कार्यम्। अत ऋत्विज एव कर्तारः। *ननु*—तर्हि ऋत्विजां कर्तृत्वप्राप्तौ ऋत्विज एव फलभागिनः स्युरिति—चेत्, *न*; परिक्रयद्वारा यजमानस्यैव प्रयोजककर्तृत्वाद् यजमान एव साङ्गप्रधानफलभागित्यविरोधात्। अत्र पूर्वपक्ष-सिद्धान्तयोः कर्तृगामिनि फले न विवादः, इति पूर्वपक्षसूत्रमपि प्रयोजककर्तृत्वांशे प्रमाणं चेदपि न विरोध इति। *शास्त्रफलम्*=स्वर्गादि॥ देहाध्यासापन्नस्यैव पारलौकिकफलोपभोगयोग्यत्वमाशङ्क्याह—*नच देहादि भस्मीभूतमिति*॥ *तदवगतिः*=देहादिव्यतिरिक्तात्मावगतिः। "स्वर्गकामो यजेत" इत्याद्यधिकार-

वार्तिकम्

सत्प्रतिपक्षशङ्कानिरासाय सहेतुकं साध्यं पक्षे निगमयति—*तत्साम्यदर्शनाद् व्युत्पत्तिमतामपि पुरुषाणां प्रत्यक्षादिव्यवहारस्तत्कालः समान इति निश्चीयत इति*॥ तथाचोक्तमभियुक्तेन—"हेत्वपदेशात्साध्यस्य पुनर्वचनं निगमनमि"ति॥ "तदि"ति पश्वादिव्यवहारपरामर्शः। 'तत्साम्यादि'ति वक्तव्ये तत्साम्यदर्शनादिति वदन् ज्ञायमानं लिङ्गं लिङ्गज्ञानं वा हेतुरिति दर्शयति। अत एव धूमादिति हेतुवचनं विषये विषयिणमुपलक्ष्य व्याकुर्वन्ति तद्व्याख्यातारः। तत्साम्यं तु तदेकजातीयत्वम्। एकजातीयत्वन्तु समानविषयत्वात्, समानविषयकप्रवृत्ति-निवृत्तिजनकव्यवहारत्वाद्वेति ध्येयम्। *समान इति*॥ अध्यासपूर्वक इत्यर्थः। तेन न हेतोः साध्याभेद इति द्रष्टव्यम्। तथाऽपि भागासिद्धो हेतुः; "अहं ब्रह्मास्मि" "अहमेको न मे कश्चिदि"त्यादिजीवन्मुक्तव्यवहारे पश्वादिव्यवहारसाम्याभावात्, तस्य शुद्धात्मविषयत्वात्, पश्वादेश्च तद्विषयव्यवहाराभावादित्याशङ्क्य तं विशिनष्टि—*तत्काल इति*॥ 'तदि'ति देहेन्द्रियादिष्वहं-ममाभिमानकालः परामृश्यते। तेन देहेन्द्रियादिष्वहं-ममाभिमानकाल एव कालो यस्य व्यवहारस्य, स तत्कालः। तथाचाध्यासकालीनव्यवहारस्य पक्षीकरणाद् न भागासिद्धो हेतुरित्यभिप्रायः। नच—एवं कालविशेषणतया साध्यस्य पक्षतावच्छेदकेऽत्र लाभादन्योन्याश्रयः—पक्षसिद्धौ साध्यसिद्धिः, साध्यसिद्धौ च पक्षसिद्धिरितीति—वाच्यम्; विवादाध्यासितत्वेन रूपेण तस्य पक्षावच्छेदकत्वाविरोधादन्योन्याश्रयानुपपत्तेः। अत एवैतादृशस्थलेऽभियुक्ता विवादाध्यासित इति पक्षं विशिंषन्ति। तस्माददोषः। यद्वा—"तदि"ति पश्वादिव्यवहारसमानजातीयव्यवहारकालः परामृश्यते; हेत्ववच्छिन्नस्यापि पक्षत्वदर्श-

भाष्यभावप्रकाशिका

न्येति*॥ तैः पश्वादिभिः सामान्यं व्यवहारवत्त्वम्, तस्य विवेकिषु भानादिति यावत्। अपरोक्षाध्यासस्य व्यवहारपुष्कलकारणत्वात् तस्याध्यासस्य काल एव कालो यस्य व्यवहारस्य, स तत्कालः। *समानः*। पश्वादिभिरिति शेषः। विमतो व्यवहारः,अध्यासकृतः, व्यवहारत्वात्, संमतवत्; विमताः, अध्यासवन्तः, व्यवहारवत्त्वात्; पश्वादिवदिति वा प्रयोगः। मान-युक्तिभ्यां विवेकेऽप्यध्यासविरोधिप्रमित्यभावादध्यासवत्त्वमविरुद्धमिति मत्वा—*व्युत्पत्तिमतामपि* इत्युक्तम्॥

नच व्यवहारत्वाद्यप्रयोजकम्; आत्मनो मातृत्वादिशक्तिमत्त्वे शक्तेः सन्निमित्तशक्याधीनतया

### पञ्चपादिका

एवं तावत् प्रत्यक्षादीनि प्रमाणानि चक्षुरादिसाधनानि। तानि च नाधिष्ठानशून्यानि व्याप्रियन्ते। अधिष्ठानं च देहः। *न तेनानध्यस्तात्मभावेनासङ्गस्याविकारिणश्चैतन्यैकरसस्यात्मनः प्रमातृत्वमुपपद्यते*, इत्यनुभवारूढमविद्यावद्विषयत्वं प्रत्यक्षादीनामुपदिश्य, पश्चादिव्यवहारसाम्येन कार्यतोऽ-

### पञ्चपादिकाविवरणम्

*एवं तावत्प्रत्यक्षादीनी*त्युक्तानुवादः। "न तेनानध्यस्तात्मभावेने"ति भाष्यं पूर्वं न व्याख्यातम्, तदनुवादग्रन्थे व्याचष्टे॥ *तत्रेयमाशङ्का*—भवत्वध्यासस्य व्यवहारनिमित्तता, तथाऽपि रजतादिवद् निमित्तकारणमेवाध्यासो व्यवहारस्य, आत्मैव केवलस्तूपादानमिति, तत्राह—*न तेनानध्यस्तात्मभावेनासङ्गस्येति*॥

### ऋजुविवरणम्

व्याख्यानं कृतम्, तदसङ्गतम्; इत्याशङ्क्याभिप्रायमाह—*पूर्वं न व्याख्यातमिति*॥ "अनुवादः" इत्यनेन धीस्थताकारणमुक्तम्। अथवा—"अनुवादग्रन्थे" इत्यनेन शङ्काबीजमुक्तम्। किमर्थं स्वस्थानातिक्रमेणेदानीं व्याख्यायते? इत्याशङ्क्याभिप्रायमाह—*तत्रेयमाशङ्केति*॥ सिद्धे हेतुत्वे निमित्तत्वमेव भवतु, नोपादानत्वमिति शङ्का स्यात्। नतु पूर्वमिति भावः। कथमनेनोपादानत्वमुक्तम्? चैतन्यैकरसत्वेन स्वतः प्रमातृत्वाभावे, अविकारित्वेनागन्तुकविकाराभावे, असङ्गत्वेनान्यनिमित्तप्रमातृत्वाभावे चोक्ते नाध्यासस्योपादानत्वमुक्तम्, किन्त्वध्यस्तात्मभावेन भवितव्यमित्युक्तम्। अथवा—"न तेनानध्यस्तात्मभावेने"त्यनेनैव व्याख्यानं कृतम्। देहादिष्वात्मभावाध्यासेन विनाऽऽत्मनः प्रमातृत्वं नास्ति। प्रमाश्रयत्वं हि प्रमातृत्वम्। नच तदात्मनः संभवति; विषयेण प्रमासाधनैर्वाऽसङ्गत्वेन संसर्गाभावात्। नच केवलस्यैव तदाकारपरिणामः; अविकारित्वात्। अविकारित्वं च चैतन्यैकरसत्वात्। अथवा—स्वाभाविकप्रमाश्रयत्वेन विषयतादात्म्येन वा प्रमातृत्वं 'चैतन्यैकरसस्ये'त्यनेन निरस्तम्। नच तावतोपादानत्वमुक्तम्; कुठारेण विनाऽऽत्मनश्छेत्तृत्वाभावेऽपि नैव कुठारस्योपादानत्वम्, तद्वदध्यासस्वरूपनिमित्ताभावात् केवलस्य प्रमातृत्वाभाव इत्यपि वक्तुं शक्यते। अतो न निमित्तवैलक्षण्यमध्यासस्यानेनोक्तमित्याशङ्क्याभिप्रायमाह—

### तत्त्वदीपनम्

यस्य, स तत्काल इति विवेचनीयम्, किमिदमुच्यते—व्यवहारस्य काल एव कालो यस्येति चेत्, तत्र ब्रूमः—व्यवहारस्य व्याप्यत्ववद् व्यापकत्वमप्यध्यासं प्रत्यस्तीति प्रदर्शयितुमेवं समासमाचार्याश्चक्रिर इत्यर्थः। नचात्रान्वयासंभवः; 'च' शब्दाध्याहारेण तत्कालपदोदिताध्यासस्य व्यवहारस्य च समत्वाभिधानादित्याह—*स च पश्वादिभिरिति*॥ "शास्त्रीये तु व्यवहारे" इत्यत्र व्यतिरिक्तात्मज्ञानमनुज्ञायोपनिषदात्मज्ञानं प्रतिचिक्षेप, तदनुपपन्नम्, तस्य प्रकृताननुसारित्वादित्याशङ्क्य, वृत्तानुवादेन तात्पर्यं कथ्यते—"एवं तावदि"त्यत्र, तत्रानुवादत्वे "न तेने"त्यादिना भाष्यव्याकरणमनुपपन्नमित्याशङ्क्याह—*एवं तावदिति*॥ अनुवादत्वे भाष्यव्याख्यानमनुचितमिति यत्तूक्तम्, तत्राह—*न तेनेति*॥ पूर्वमव्याख्याततत्वादनुवादव्याजेन व्याख्योपपत्तिरित्यर्थः। नच स्थानातिक्रमणेन व्याख्यानमसङ्गतमिति—शङ्कनीयम्; शङ्कानिमित्ताभिधाने शङ्कावकाशादित्याह—*तत्रेति*॥ अध्यासस्य हेतुत्वे सिद्धे निमित्तत्वमेव, नोपादानत्वमिति शङ्कासंभव इत्यर्थः॥

व्यवहारस्याध्यासपुरस्सरत्वमुक्तम्, तत्र किं तस्य निमित्तत्वम्? उतोपादानत्वम्? आद्ये सिद्धसाधनता, इत्याह—*भवत्विति*॥ द्वितीयस्त्वनुपपन्न इत्याह—*तथापीति*॥ रजताध्यासादेर्व्यवहारं प्रति निमित्तत्वादत्रापि तदेव युक्तमित्यर्थः। किं तर्ह्युपादानम्? तत्राह—*आत्मैवेति*॥ *केवल इति*॥ अनध्यस्तात्मभाव इत्यर्थः। *असङ्गस्येत्यादेरयमर्थः*—प्रमातृत्वं ततः स्वतो न संभवति; संवित्स्वभावत्वादित्याह—*चैतन्येति*॥ कर्तृत्वमप्यसंभवीत्याह—*अविकारिण इति*॥ सहकारिसंबन्धाभावादपि न तस्य कर्तृत्वमित्याह—*असङ्गस्येति*॥ रजता-

### वार्तिकम्

नात्। यद्वा—*व्युत्पत्तिमतामपि पुरुषाणां पश्वादिसाम्यदर्शनात्*॥ पश्वादिसादृश्यन्तु तेषां रञ्जनीय-

## पञ्चपादिकाविवरणम्

*अयमर्थः*—रजताद्यध्यासानां व्यवहाराश्रयकोटिनिक्षिप्तत्वाभावात्तदन्तरेण चात्मनि प्रमातृत्वादिव्यवहारदर्शनाद् निमित्तकारणतैव युक्ता, इह तु पुनराश्रयकोटिनिक्षिप्तत्वात् केवलात्मनि सुषुप्ते व्यवहारादर्शन उपादानकारणस्याभ्यर्हितत्वाद् अन्वय-व्यतिरेकवतोऽध्यासस्योपादानकारणत्वमेव व्यवहारं प्रति कल्पयितुं युक्तमिति।

## ऋजुविवरणम्

*अयमर्थो रजतेति* ॥ *ननु*—स्वर्गसाधनकर्मणां व्यतिरिक्तात्मना विनाऽप्युपपत्तिरस्तीत्याशङ्क्याह—*तज्जन्य-

## तत्त्वदीपनम्

ध्यासस्य निमित्तत्वमेवेति यदुक्तम्, तत्राह—*अयमर्थ इति* ॥ व्यवहाराश्रयः प्रमाता रजताध्यासश्चात्माश्रय इत्यसिद्धो हेतुरित्याशङ्क्याह—*तदन्तरेणेति* ॥ रजताध्यासस्य प्रमातरि सद्भावेऽपि न प्रमातृत्वप्रयोजकत्वम्, तदभावेऽपि व्यवहारदर्शनात्। ततश्च तस्य निमित्तत्वं युक्तमित्यर्थः। ततो वैषम्यमाह—*इह त्विति* ॥ तत्र हेतुमाह—*केवलेति* ॥ निमित्ताभावादपि नैमित्तिकाभावप्रसिद्धेर्व्यतिरेकस्यान्यथासिद्धिमाशङ्क्याह—*उपादानेति* ॥ सत्ता-स्थितिहेतुतयोपादानस्यान्तरङ्गत्वादन्वयः, अतस्तद्विषयत्वम्। नच—मिथ्याज्ञान-तत्संस्कारयोर्निमित्तत्वमात्रस्य पुरोक्तत्वात्तद्विरोध इति—वचनीयम्; मिथ्याज्ञानस्यानुपादानत्वेऽपि तद्विषयाहंकारादिसंपिण्डितरूपस्योपादानत्वसंभवादित्यर्थः। उपदिश्य, आपाद्य, आशङ्क्याहेति ग्रन्थच्छायाऽनुसारेण शङ्काप्रदर्शनस्याप्यनुवादप्रतीतिं व्यावर्तयति—

## वार्तिकम्

कोपनीयविषयकप्रवृत्ति-निवृत्तिदर्शनात्। *तत्कालः*=तादृशप्रवृत्ति-निवृत्तिकालीनः। *प्रत्यक्षादिव्यवहारः समानः*=पश्वादीनामिवाविवेकपूर्वक इति निश्चीयत इत्यर्थः। कारणसाम्यमन्तरेण कार्यसाम्यानुपपत्तेरित्याशयः॥

*स्यादेतत्*—मा भूद् व्युत्पत्तिमतां लौकिकप्रत्यक्षादिव्यवहारे व्यभिचारः; पश्वादिव्यवहारसाम्येनाविवेकपूर्वकत्वनिश्चयात्तस्य, शास्त्रीये तु विवेकपूर्वके तद्व्यवहारे भविष्यति। नहि देहादिव्यतिरिक्तं परलोकसंबन्धिनमात्मानमविदित्वा देहान्तरादिभोग्ये स्वर्गादौ बुद्धिमतां कामनोपपद्यते। नच तत्कामनां विना तत्साधनमन्विष्य तत्र प्रवृत्तिः। नचैवं तद्विवेकज्ञाने सति तदविवेकोऽध्यासो भवितुमर्हति; विरोधादिति द्वितीयपक्षमाशङ्क्य परिहरति—*शास्त्रीये तु व्यवहारे यद्यपि बुद्धिपूर्वकारी नाविदित्वाऽऽत्मनः परलोकसंबन्धमधिक्रियते; तथापि न वेदान्तवेद्यमशनायाद्यतीतमपेतब्रह्म-क्षत्रादिभेदमसंसार्यात्मतत्त्वमधिकारेऽपेक्ष्यते; अनुपयोगादधिकारविरोधाच्चेति* ॥ तत्र वक्तव्यम्—किमैहिकग्रामादिफलकसाङ्ग्रहण्याद्यनुष्ठानरूपः शास्त्रीयव्यवहारः स्थलदेहव्यतिरिक्तकालान्तरस्थाय्यात्मज्ञानमपेक्षते? किं वा पारलौकिकफलकज्योतिष्टोमाद्यनुष्ठानरूपः? आहोस्विद् मोक्षशास्त्रविहितश्रवणाद्यनुष्ठानरूपः? उत तदनन्तरं कृतसाक्षात्कारस्य 'अहं ब्रह्मास्मी'त्यनुभवादिरूप इति? तत्र नाद्यः; स्थूलदेहव्यतिरिक्तात्मनोऽभावेऽपि तेनैव तत्फलभोगसंभवात्, साङ्ग्रहण्याद्यनुष्ठाने स्थूलदेहव्यतिरिक्तात्मज्ञानानपेक्षणादिति प्रथममंशं प्रसिद्धनिरसन-

## भाष्यभावप्रकाशिका

मुक्तानामपि सन्निमित्तशक्तिशक्त्यापादकत्वात्, तत्रापि मातृत्वादिप्रसक्त्या मुक्त्यभावापातस्य विपक्षे बाधकत्वात्, प्रमातृत्वादिलक्षणशक्त्यभावे च ग्राहकमानाभावेन शक्तिमत्त्वस्यापि दुर्वचत्वात्। नच

## प्रदीपः

ज्ञानस्य व्याप्तिज्ञानस्य च प्रदर्शनानन्तरमनुमितिप्रकारप्रदर्शनार्थम्—"तत्सामान्यदर्शनादि"त्यादि "निश्चीयत" इत्यन्तम्। एतावता लौकिकव्यवहारस्याध्यासपूर्वकत्वं पश्वादिदृष्टान्तेन साधितम्, सम्प्रति ज्योतिष्टोमादिवैदिकव्यवहारस्याप्यध्यासपूर्वकत्वं साधयिष्यन्—ज्योतिष्टोमादिव्यवहाराः, अध्यासपूर्वका न, देहात्मविवेकजन्यत्वात्, यन्नैवं तन्नैवम्, यथा पश्वादिव्यवहाराः,

**शास्त्रीये तु व्यवहारे यद्यपि बुद्धिपूर्वकारी नाविदित्वाऽऽत्मनः परलोकसंबन्धमधिक्रियते ;**

### भामती

शङ्काह—*शास्त्रीये त्विति* ॥ तुशब्दः प्रत्यक्षादिव्यवहाराद्भिनत्ति शास्त्रीयम् ।

### ऋजुप्रकाशिका

शास्त्रं स्वर्गकामस्य परलोकसम्बन्धमात्रं प्रत्याययति, नतु तस्याध्यासानापन्नत्वमसंसारित्वमपि, येन शास्त्रमविद्यावद्विषयं न स्यादित्यभिप्रेत्याह—*इत्याशङ्क्याहेति* ॥ "शास्त्रीयमि"त्यनन्तरं व्यवहारमिति शेषः ।

### पञ्चपादिका

प्यापाद्य, शास्त्रं पुनः प्रतिपन्नात्मविषयमेव, तेन न तत्राध्यासपूर्विका प्रवृत्तिरिति विशेषमाशङ्क्य, तस्याप्यविद्यावद्विषयत्वप्रदर्शनायाह—*शास्त्रीये तु व्यवहारे यद्यपि बुद्धिपूर्वकारी नाविदित्वाऽऽत्मनः परलोकसम्बन्धमधिक्रियत इति* ॥

*ननु* फल-नैयमिक-नैमित्तिक-प्रायश्चित्तचोदना वर्तमानशरीरपातादूर्ध्वकालस्थायिनं भोक्तारमन्त-

### पञ्चपादिकाविवरणम्

"शास्त्रं पुनरि"त्युत्तरभाष्यस्याशङ्का । *तस्यापीति* तात्पर्याभिधानम् । *शास्त्रीये त्विति* अदृष्टार्थप्रवृत्तौ व्यतिरेकज्ञानमभ्यनुजानाति । अभ्यनुज्ञामाक्षिपति—*ननु फलनैयमिकेति* ॥ फलचोदना तावत्

### तत्त्वदीपनम्

*शास्त्रं पुनरिति* ॥ "विद्वान् यजेत"इत्यादिवाक्याद् ज्ञानवदात्मविषयत्वं शास्त्रस्य, ततो नाध्यासपुरस्सरत्वमिति शङ्कार्थः । शास्त्रीयविवेकवत्त्वमिति कल्पान्तरमत्रोत्थापितमित्यर्थः ॥ "शास्त्रीये"त्विति भाष्येऽविद्यावद्विषयत्वस्यानुक्तत्वात् "तस्याप्यविद्यावद्विषयत्वप्रदर्शनाये"ति ग्रन्थानुपपत्तिरित्याशङ्क्य तस्य तात्पर्यार्थत्वाददोष इत्याह—*तस्यापीति* ॥ "कारीर्या यजेते"त्यादिशास्त्रीयव्यवहारस्य व्यतिरेकज्ञानानपेक्षणात्तदभ्यनुज्ञासंभवमाशङ्क्याह—*शास्त्रीये त्विति* ॥

देहव्यतिरिक्तात्मज्ञानं विनाऽपि फलादिचोदनानां प्रामाण्यसमर्थनस्यात्र पूर्वपक्ष-सिद्धान्तयोरनुपयोगादविद्यावद्विषयत्व-तदभावयोर्वादिप्रतिवादिनोरिहाभिप्रेतत्वाद् "ननु फले"त्यादिग्रन्थोऽसमञ्जस इत्याशङ्क्य, परलोकसंबन्ध्यात्मज्ञानं विना न प्रवृत्तिरित्यवसरमालक्ष्य, लब्धावसरश्चार्वाकवरः शङ्कत इत्याह—*अभ्यनुज्ञामिति* ॥ टीकाऽपेक्षितं हेतुं

### वार्तिकम्

तया तुशब्देन निरस्य,द्वितीयेऽपि किं तद्व्यतिरिक्तपरलोकसंबन्ध्यात्मास्तित्वमात्रज्ञानमपेक्षते ? किं वा देहात्माध्यासविरोधिवेदान्तवेद्यात्मतत्त्वज्ञानमिति ? नाद्यः ; तादृशज्ञानस्य देहात्माध्यासाविरोधित्वादिष्टापत्तेरित्याह—*"शास्त्रीये त्वि"*त्यादिना । *अधिक्रियते*=प्रवर्तते, तत्फलस्वाम्यं वाऽऽत्मनोऽभिजाना-

### भाष्यभावप्रकाशिका

सर्वो व्यवहारः, रजताध्यासवत्, अध्यासकृतः, व्यवहारत्वात् ; इत्याभासतुल्यता ; विरोधादेव तस्यानुमानस्य, मनुष्योऽहमित्यध्यासस्य सर्वानुभवसिद्धतया तदभावादिति भावः । विवेकिनामविवेकिनां च लौकिकव्यवहारस्याध्यासिकत्वेऽपि शास्त्रीयव्यवहारस्य प्रतिपन्नात्मविद्वद्विषयत्वाद् न तत्पूर्वतेति भागे बाधमाशङ्क्य, तस्यापि तत्पूर्वतार्थं देहेतरात्मज्ञानपूर्वकत्वमङ्गीकरोति—*शास्त्रीये त्विति* ॥

### प्रदीपः

इत्यनुमानविधया वैदिकव्यवहाराणामध्यासपूर्वकत्वमाक्षिपति—*शास्त्रीये तु व्यवहार इति* ॥ तुशब्देन लौकिकव्यवहारवैलक्षण्यप्रदर्शनाद् व्यतिरेकदृष्टान्तः सूच्यते । "नाविदित्वाऽत्मनः परलोकसम्बन्धमि"ति देहात्मविवेकज्ञानपूर्वकत्वरूपहेतोः पक्षधर्मता ज्ञाप्यते । तथाच शास्त्रीयव्यवहारः, नाध्यासपूर्वकः, देहात्मविवेकजन्यत्वात् ; व्यतिरेकेण लौकिकव्यवहारवदिति शङ्का-

## पञ्चपादिकाविवरणम्

पश्वादीनामस्मिन्नेव जन्मनि लब्धुं शक्यत्वात्, तज्जन्यसुखस्य च स्वर्गस्य पश्वादिचोदनाफलत्वाभावाद् ज्योतिष्टोमादिफलत्वोपपत्तेः, निरतिशयप्रीतेरप्यत्रैव सम्भवात्, न देहान्तरसम्बन्धिनमात्मानमापादयति, नैयमिक-नैमित्तिकचोदना तु सुतराम्; फलशून्यत्वात्, फलवत्त्वे वा दृष्टेनैवोपभोक्तुं शक्यत्वात्। प्रायश्चित्तस्य तु दोषनिवर्हणफलत्वात्, दोषफलस्यास्मिन् जन्मनि भोक्तुं शक्यत्वात्, जन्मान्तरस्य चैतादृशत्वात्, फलादर्शने च कारीर्यादि-

## ऋजुविवरणम्

सुखस्येति* ॥ कथं क्रत्वादिजन्यसुखस्य ज्योतिष्टोमादिकर्मफलत्वम्? कर्मान्तरफलत्वादित्याशङ्क्याह—*पश्वादिचोदनाफलेति* ॥ *ननु*—निरतिशयप्रीतिर्हि स्वर्गः, तादृशं च ज्योतिष्टोमादिफलम्, तच्च देहान्तरसम्बन्धमापादयति, तदुक्तम्—"अन्यथाऽनुपपत्त्या तु विधिनाऽऽत्मन्यपेक्षिते" इति, तत्राह—*निरतिशयप्रीतेरिति* ॥ *ननु*—नित्यकर्मणां प्रत्यवायपरिहारार्थत्वात् प्रत्यवायस्य च जन्मान्तरे फलहेतुत्वात् तन्निवर्तकनित्यकर्मणां व्यतिरिक्तात्मना विनाऽनुपपत्तिः; तदभावे नरकादिफलप्रत्यवायनिवृत्त्यर्थं नित्यकर्मसु प्रवृत्त्यनुपपत्तेः, इत्याशङ्क्याह—*फलवत्त्वे वेति*॥ *ननु—*जन्मान्तर एव तद्द भोक्तुं शक्यते; नास्मिन् जन्मनि; ततो जन्मान्तराक्षेपकत्वम्, इत्याशङ्क्याह—*जन्मान्तरस्येति* ॥ *ननु—अनुष्ठितधर्मस्यापि फलादर्शनात्, ध्रुवफलत्वाच्च कर्मणाम्, जन्मान्तराक्षेपकत्वमित्याशङ्क्याह—*फलादर्शने चेति* ॥ *ननु*—स्वर्गो नाम विशिष्टदेशादिजन्यो भोगः, नचानेन शरीरेण स भोक्तुं शक्यते, इत्याशङ्क्याह—*मन्त्रौषधादिसिद्धेनेति* ॥ "सत्यमेवमि"त्यादिना व्यतिरिक्तात्मज्ञानापेक्षित्वे "प्रामाणिक-

## तत्त्वदीपनम्

व्यनक्ति—*फलेति* ॥ फलचोदना तावद् देहान्तरसंबन्धिनमात्मानं नापादयतीति संबन्धः। कुत इति चेत्, तत्र वक्तव्यम्—किं पश्वादिफलचोदना व्यतिरिक्तात्माऽऽपादिका? उत स्वर्गादिफलचोदनेति? नाद्य इत्याह—*पश्वादीनामिति* ॥ नच—पश्वादीनामस्मिन्नेव जन्मनि लाभे चित्रादेः कारीर्यादितुल्यतेति—शङ्क्यम्; कारीर्यादेर्नियतसमनन्तरफलत्वे पश्वादिचोदनानां चास्मिन्नेव जन्मनि यदा कदाचित्फलसंबन्धपरत्वादिति वैषम्याक्षित्यर्थः। द्वितीयेऽपि किं लोकविशेषः स्वर्गः? उत सुखमात्रम्? नाद्यः; तत्र मानाभावात्; द्वितीये न विवक्षितात्मसिद्धिरित्यभिप्रायेणाह—*तज्जन्येति* ॥ स्वर्गस्यास्मिन् जन्मनि लब्धुं शक्यत्वादिति संबन्धः। पश्वादिजनितसुखस्य पश्वादिचोदनाफलत्वाद् न ज्योतिष्टोमादिफलत्वम्, तत्राह—*पश्वादीति* ॥ "चित्रया यजेत पशुकामः" "सांग्रहण्या यजेत ग्रामकामः' इत्यादिचोदनानां पश्वादिसमर्पकत्वान्न सुखसमर्पकत्वम्, यथाश्रुतयङ्गीकारस्य युक्तत्वादित्यर्थः। निरतिशयप्रीतेः स्वर्गशब्दार्थत्वात्तद्भोक्तृत्वेन व्यतिरिक्तात्मसिद्धिः? अत्राह—*निरतिशयेति* ॥ कार्तवीर्यादिवत्साम्राज्यादिपदप्राप्त्या तद्भोगस्यापीह संभवादित्यर्थः ॥ फलचोदनाया अनपेक्षत्वमभिधाय, नैयमिक-नैमित्तिकचोदनयोरप्यनपेक्षत्वमाह—*नैयमिकेति* ॥ "यावज्जीवमग्निहोत्रं जुहुयादि"त्याद्या नैयमिकचोदना, 'गृहदाहवान् यजेत' इत्याद्या नैमित्तिकचोदना। फलवतोऽपि यदा न भोक्त्राक्षेपकत्वम्, तदा तद्विधुरस्य नाक्षेपकत्वमिति किमु वक्तव्यमित्याह—*सुतरामिति* ॥ नैयमिकादेरपि फलवत्त्वं ब्रुवाणं भाट्टं प्रत्याह—*फलवत्त्व इति* ॥ सुख-दुःखप्राप्ति-निवृत्तिफलस्य दृष्टेनैव शरीरेणोपभोगसंभवान्नादृष्टार्थकल्पनेत्यर्थः। नापि प्रायश्चित्तचोदनाया व्यतिरिक्तात्मप्रापकत्वमित्याह—*प्रायश्चित्तस्येति* ॥ "तरति ब्रह्महत्यां योऽश्वमेधेन यजते" इत्याद्या प्रायश्चित्तचोदना। अकृतप्रायश्चित्तदोषफलोपभोगाय व्यतिरिक्तापेक्षेति शङ्कां प्रत्याह—*दोषेति* ॥ दोषफलम्=दुःखम्, तच्चात्र सुलभमित्यर्थः ॥

*ब्रह्महत्यायाश्च सूकराद्यनेकयोनिसंबन्धफलत्वात् तदुपभोक्तृतया व्यतिरिक्तात्मसिद्धिरित्याशङ्क्याह—*जन्मान्तरस्येति* ॥ जन्मान्तरसंबन्धस्य न स्वरूपेण फलत्वम्, किं तु दुःखहेतुत्वेन; तच्च दुःखमत्रैव भोक्तुं शक्यम्, इति न जन्मान्तरापेक्षा; सूकरादिसमानदुःखपरतयाऽपि संभवादित्यर्थः। चित्रादिफलस्यास्मिन् जन्मनि कदाचिदनुपलम्भाद् अदत्तफलस्य कर्मणः क्षयायोगात् फलोपभोगाय देहान्तरसंबन्धापेक्षेत्यत्राह—*फलादर्शन इति* ॥ साङ्गानुष्ठानेऽपि फलादर्शनादङ्गवैकल्यकल्पनमयुक्तमित्याशङ्क्य, प्रतिबन्धाद् बहुसहकार्यभावाद्वा फलादर्शनं युक्तमित्याह—

## पञ्चपादिका

रेणापि प्रमाणतामश्नुवत एव। यथा चैतदेवम्, तथा—"एक आत्मनः शरीरेऽभावादि"त्यधिकरणारम्भे दर्शयिष्यामः, सत्यमेवम्; तथाऽपि सकलशास्त्रपर्यालोचनापरिनिष्पन्नं प्रामाणिकमर्थमङ्गीकृत्याह भाष्यकारः। तथाच विधिवृत्तमीमांसाभाष्यकारोऽप्युत्सूत्रमेवात्मसिद्धौ पराक्रान्तवान्। तत् कस्य हेतोः?

## पञ्चपादिकाविवरणम्

वदङ्गवैकल्यप्रतिबद्धतया सहकार्यभावकल्पनोपपत्तेः, मन्त्रौषधादिसिद्धेनानेनापि शरीरेण स्वर्गादिभोगसम्भवाद् न देहव्यतिरेकज्ञानोपयोग इति। तत्र देवताधिकरणनयेन मन्त्रादिप्रामाण्याद् विशिष्टदेश-काल-शरीरादिभोग्यं स्वर्गादि फलमङ्गीकृत्येदमुक्तमिति परिहरति—*सत्यमेवं तथाऽपीति* ॥

*ननु* मन्त्रादिसमन्वयप्रामाण्यमनपेक्ष्यैव चोदनाभिरेव व्यतिरिक्तात्माऽपेक्ष्यते, कर्ममात्रनिर्णयप्रवृत्तेन भाष्यकारेणात्मनो निरूपितत्वादिति, तत्राह—*तथाच विधिवृत्तेति* ॥ विधिभिरेवापेक्षितश्चेत्, सूत्रेणापि भवितव्यमित्यर्थः। *ननु* अनपेक्षितस्यासूत्रितस्य च भाष्यकारेण प्रतिपादनमयुक्तमित्याक्षिपति—*तत्कस्य हेतोरिति* ॥ "तत् प्रमाणं बादरायणस्यानपेक्षत्वादि"ति सूत्रावयवेन मन्त्रादिप्रामाण्यद्वारेण परम्परया सूचित

## ऋजुविवरणम्

मर्थमङ्गीकृत्ये"ति प्रामाणिकत्वं हेतुत्वेनोक्तम्, प्रामाणिकत्वे च सकलशास्त्रपर्यालोचनापरिनिष्पन्नत्वं हेतुः, तत्र कस्य प्रामाणिकत्वमिति न ज्ञायते? न तावद् देहान्तरोपभोग्यफलस्य प्रामाणिकत्वम्; देहान्तरोपभोग्यत्वग्राहकप्रमाणस्यादर्शनात्, विधीनां चातद्गोचरत्वात्; ततश्चात्मनोऽपि न प्रामाणिकत्वं युक्तम्; विध्यपेक्षितत्वात्, अन्यस्य तत्साधकत्वादर्शनादित्याशङ्क्य व्याचष्टे—*तत्र देवताधिकरणेति* ॥ देवताधिकरणे हि प्रमाणान्तरसंवाद-विसंवादाभावे मन्त्राद्यर्थवादानां प्रामाण्यमुक्तमिति भावः। विध्यनपेक्षितत्व उत्सूत्रत्वं हेतुत्वेनोक्तम्—"उत्सूत्रत्वमेवे"त्यनेन, तदयुक्तम्; न ह्युत्सूत्रं भाष्यकारेण प्रतिपादितमिति कृत्वा विध्यनपेक्षितत्वं निश्चेतुं शक्यम्; विध्यपेक्षितत्वेनोत्सूत्रमपि प्रतिपादितमिति वक्तुं शक्यत्वादित्याशङ्क्य व्याचष्टे—*विधिभिरेवेति*॥ कथम्—"उपयोगाभावादि"त्युक्तम्? धर्मेण

## तत्त्वदीपनम्

*प्रतिबद्धेति* ॥ देशान्तरादिभोग्यं स्वर्गमङ्गीकृत्याह—*मन्त्रेति* ॥ फलादिचोदनानां व्यतिरिक्तात्मानं विनाऽनुपपत्त्यभावात्प्रमाणान्तरस्य च तत्साधकस्यासंभवाद् व्यतिरेकाभ्यनुज्ञानमयुक्तमित्याक्षेपे कृते, तदङ्गीकारेण समाधानमयुक्तमित्याशङ्क्य तात्पर्यमाह—*तत्रेत्यादिना* ॥ तत्र चोद्यं परिहरतीति संबन्धः। अन्यपराणां वाक्यानां प्रमाणान्तरविसंवाद-संवादाभावे स्वार्थे प्रामाण्यमिति देवताधिकरणन्यायः। विशिष्टो देशो=मेरुपृष्ठादिः। विशिष्टकालः=शरीरपातोत्तरक्षणः। विशिष्टं शरीरम्=तैजसादि। टीकाया एषा योजना—

चोदनामात्रपर्यालोचनया व्यतिरिक्तात्मसिद्धिरित्येतदङ्गीकरोति—*सत्यमेवमिति* ॥ तर्ह्यभ्यनुज्ञानमनुपपन्नमित्याशङ्क्याह—*तथाऽपीति* ॥ मन्त्रादिप्रामाण्याद्विशिष्टदेश-कालोपभोग्यस्वर्गोपलब्धेस्तस्य च व्यतिरिक्तात्मना विनाऽसंभवात् स आश्रयणीय इत्युक्तमनुपपन्नम्, मन्त्राद्यप्रामाण्यवादिना शबरस्वामिना व्यतिरिक्तात्मसमर्थनादिति शङ्कते—*नन्विति* ॥ चोदनानामतिरिक्तानपेक्षत्वे व्यतिरिक्तात्मनिरूपणवैयर्थ्यं स्यात्; विधिवाक्यार्थमात्रनिर्णयप्रवृत्तत्वाच्छबरस्वामिनः। ततश्च मन्त्रादिप्रामाण्यमाश्रित्य व्यतिरेकाभ्यनुज्ञानमसंगतमित्यर्थः। चोदनापेक्षितत्वं तावदसिद्धमित्याह—*तत्राहेति* ॥ विधौ वृत्ता मीमांसा, विधिवृत्तमीमांसा। विधेर्वृत्तं विधिवृत्तम्, तद्विषया वा मीमांसा विधिवृत्तमीमांसा। उत्सूत्रप्रतिपादितत्वमात्रेण कथं विध्यनपेक्षितत्वम्? तत्राह—*विधिभिरेवेति* ॥ विध्यपेक्षितन्यायप्रतिपादनार्थं जैमिनेर्व्यापारः। ततश्च विध्यपेक्षितत्वे तत्सूत्रणं स्यात्। नच तदुपलभ्यते। तस्मान्मन्त्राद्यपेक्षयैव तत्प्रतिपादनमित्यर्थः। भाष्यकृतो विध्यपेक्षितप्रतिपादकसूत्रार्थव्याख्यानप्रवृत्तत्वादसूत्रितप्रतिपादकत्वे सूत्राननुसारित्वमिति शङ्कते—*नन्विति* ॥ अयुक्तत्वे हेतुमाह—*भाष्यकारेणेति* ॥ प्रामाण्यप्रयोजकस्यानपेक्षत्वस्य कुत्र सूत्रणमिति न ज्ञायते? तत्राह—*तत्प्रमाणमिति* ॥ "औत्पत्तिकस्तु शब्दस्यार्थेन

## पञ्चपादिका

"धर्मजिज्ञासे"ति कार्यार्थविचारं प्रतिज्ञाय तदवगमस्य प्रामाण्येऽनपेक्षत्वं कारणमनुसरता सूत्रकारेण विशेषाभावात् स्वरूपनिष्ठानामपि वाक्यानां प्रामाण्यमनुसृतं मन्यते, तथा "चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवं जातीयकमर्थं शक्नोत्यवगमयितुमि"ति वदंश्चोदनाशेषत्वेनापि स्वरूपावगमेऽनपेक्षत्वमविशिष्टमवगच्छतीत्यवगम्यते। स च स्वरूपावगमः कस्मिन् कथं वेति धर्ममात्रविचारं प्रतिज्ञाय, तत्रैव प्रयतमानेन भगवता जैमिनिना न मीमांसितम्; उपयोगाभावात्, भगवांस्तु पुनर्बादरायणः पृथग् विचारं प्रतिज्ञाय व्यचीचरत् समन्वयलक्षणेन। तत्र च देहान्तरोप-

## पञ्चपादिकाविवरणम्

एवात्मेति परिहरति—*धर्मजिज्ञासेति कार्यार्थविचारं प्रतिज्ञायेति*॥ एवं सूत्रार्थपरम्परया भूतेऽप्यर्थे प्रामाण्यमाश्रित्य भाष्यकारेणात्मविचारः कृतः, न चोदनासामर्थ्यमाश्रित्येति कथमवगम्यत इति? तत्राह—*तथा चोदना हि भूतमिति*॥ तर्हि चोदनापेक्षितत्वात् समन्वयोऽप्यत्रैव वर्णनीय इति, नेत्याह—*स च स्वरूपावगम इति*॥ *ननु धर्मे प्रयतमानेनाप्यपेक्षितत्वात् कर्तव्य एवात्मविचार इति, नेत्याह—*उपयोगाभावादिति*॥ नहि धर्ममात्रं व्यतिरिक्तात्मानमपेक्षते, किन्तु फलमपेक्षते; फले च न प्रयतते जैमिनिरित्यर्थः। *ननु* फलमप्यपेक्षते चेत्, तत्रापि प्रयत्नो युक्त इति, न; अन्यथासिद्धत्वादित्याह—*भगवांस्तु पुनरिति*॥

## ऋजुविवरणम्

व्यतिरिक्तात्मनोऽपेक्षितत्वादित्याशङ्क्याह—*नहि धर्ममात्रमिति*॥ पिष्टपेषणमिति*॥ "नात्मा श्रुतेरि"त्यादिभिरात्मनिरूपणं कृतम्, तद् व्यर्थमित्यर्थः। "तेने"ति सन्निहितत्वादप्रामाण्यमेव निर्दिष्टमिति शङ्का स्यात्,

## तत्त्वदीपनम्

संबन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत् प्रमाणं बादरायणस्यानपेक्षत्वा"दिति सूत्रम्। तस्मिंश्च सूत्रे विधिवाक्यस्यापौरुषेयत्वेनानपेक्षत्वं प्रामाण्यप्रयोजनमुक्तम्, तन्मन्त्रादिष्वविशिष्टम्, इति तत्प्रामाण्यमप्यर्थात्सूत्रितमित्यर्थः। उक्तेऽर्थे विनिगमनकारणं पृच्छति—*एवमिति*॥ भाष्यकारेण योऽयमात्मविचारः कृतः, स भूतेऽर्थे प्रामाण्यमाश्रित्य, न चोदनासामर्थ्यमाश्रित्येति कथमवगम्यत इति योजना। तद्वचनं तत्र प्रमाणमित्याह—*तत्राहेति*॥

"चोदना हि भूतमि"त्यत्र चोदनाया भूतादिबोधकत्वं लक्ष्यते। तत्र विधिवाक्यानां क्रियार्थत्वात्साक्षाद्भूतादिबोधकत्वासंभवाच्छेषभूतमन्त्रादिद्वारेण तद्बोधकत्वं वक्तव्यम्। ततश्च मन्त्रादिप्रामाण्यमाश्रित्यात्मविचारं चकार शबरस्वामीति समाधिग्रन्थार्थः। सिद्धार्थनिष्ठानामपि वाक्यानां प्रामाण्यस्य सूत्रितत्वेन तत्प्रामाण्यविशेषोऽपि तत्र विचारणीय इत्याह—*तर्हीति*॥ *वर्णनीय इति*॥ जैमिनिनेति शेषः। स्वरूपस्यावगमो येन शब्देन, स स्वरूपावगमः, कस्मिन्=किं चोदना शेषभूत आत्मनि प्रमाणम्? उत स्वतन्त्र इति विमर्शः। *कथं चेति*॥ किमखण्डार्थम्? उत संसृष्टार्थमिति? वेदान्तानां प्रामाण्यस्यासूत्रितत्वेऽपि विधिवाक्यार्थनिरूपणप्रवृत्तत्वात्तद्विचारः कृतो जैमिनिनेत्यर्थः। आत्मविचारस्य विधिवाक्यार्थनिरूपणाविघातित्वात्तदनुकूलत्वाच्च स कर्तव्य इत्याह—*ननु धर्म इति*॥ असिद्धो हेतुरित्याह—*नेत्याहेति*॥ धर्मस्य व्यतिरिक्तात्मापेक्षितत्वात्कथमुपयोगाभाव उक्तः? तत्राह—*नहीति*॥ किं धर्मस्य स्वरूपेण व्यतिरिक्तात्मापेक्षा? उत फलद्वारा? नाद्यः; उपयोगानिरूपणात्, न द्वितीयः; फलनिरूपणार्थप्रवृत्तत्वाज्जैमिनेरित्यर्थः। धर्मस्य फलापेक्षत्वात्तत्रापि यत्नो युक्त इति शङ्कते—*ननु फलमिति*॥

## प्रदीपः

स्वरूपं प्रदर्शितं भवति॥ अयमत्र परिहाराशयः—सत्यं शास्त्रीयव्यवहारो देहात्मविवेकजन्यः, तथाऽपि न नाध्यासपूर्वकः, अप्रयोजकत्वादुक्तहेतोः। अध्यासं प्रति ह्यद्वितीयात्मतत्त्वज्ञानमेव विरोधि, नतु देहात्मविवेकमात्रमिति हि सांप्रदायिको निर्णयः, इति नेदमप्रयोजकशङ्काकलङ्कितमनुमानमत्रावसरतीति। तमिममाशयं 'तथाऽपी'ति हेतोः पक्षवृत्तित्वाभ्युपगमद्वारेण सूचयन्

## पञ्चपादिका

भोग्यः स्वर्गः स्थास्यति । तच्च सर्वं कार्य-कारणसंघातादन्येन भोक्त्रा विना न सिध्यति । तत्सिद्धिश्च नागममात्रायत्ता ; प्रमाणान्तरगोचरस्य तदभावे तद्विरोधे वा शिलाप्लवनवाक्यवदप्रामाण्यप्रसङ्गात् । अतस्तत्सिद्धौ पराक्रान्तवांस्तेन । सत्यं विनाऽपि तेन सिध्येत्प्रामाण्यम् , अस्ति तु तत् । तस्मिन् विद्यमाने न तेन विना प्रामाण्यं सिध्यति फलादिचोदनानामिति मत्वाऽऽह—*शास्त्रीये तु व्यवहारे यद्यपि विद्यमाने बुद्धिपूर्वकारी नाविदित्वाऽऽत्मनः परलोकसंबन्धमधिक्रियते* ॥

## पञ्चपादिकाविवरणम्

*ननु* ब्रह्मैव तत्र विचारितम्, न चोदनाफलमिति, तत्राह—*तत्र च देहान्तरोपभोग्य इति* ॥ *तच्च सर्वमिति स्पष्टार्थः* ॥

*ननु* समन्वयसामर्थ्यादेव व्यतिरिक्तात्मसिद्धेरात्मविचारः पिष्टपेषणमिति, नेत्याह—*तत्सिद्धिश्चेति* ॥ *ननु* प्रमाणान्तरयोग्यस्य तदभाव-विरोधयोः शब्दस्याप्रामाण्याद् नात्मसिद्धिरिति, तत्राह—*अतस्तत्सिद्धौ पराक्रान्तवांस्तेनेति* ॥ विरोधपरिहारफलेन विचारेणेत्यर्थः । "सत्यम् विनाऽपि तेन सिध्येदि" त्यादिनोक्तमर्थं संक्षेपतो दर्शयति—*अस्ति तु तदिति* ॥ भूतेऽर्थे प्रामाण्यम् ; स्वर्गादावित्यर्थः । *न तेन विनेति* ।

## ऋजुविवरणम्

तथा सति "अतः" इत्यनेन पुनरुक्तम् । नच हेत्वन्तरपरत्वम् ; तस्यादर्शनात् । नच हेत्वन्तरेऽपि बाधकप्रमाणस्याप्रामाण्ये सत्यात्मसिद्धिरित्याशङ्क्य, 'तेन' व्याचष्टे—*विरोधपरिहारफलेन विचारेणेति* ॥ "सत्यं विनाऽपि तेने"ति पुनरुक्तमित्याशङ्क्य, प्रयोजनभेदेन पौनरुक्त्यं परिहरति—*संक्षेपत इति* ॥ "अस्ति तु तदि"ति तच्छब्देन सन्निहितत्वाद् विधिप्रामाण्यमेव निर्दिश्यत इति शङ्का स्यात् , तथा सत्युत्तरग्रन्थेऽपि "तस्मिन् विद्यमाने" इत्यत्र तस्यैव निर्देशः स्यात् ; तथा सति व्यतिरिक्तात्मना विना चोदनाप्रामाण्याभाव इति मत्वेति ग्रन्थार्थः स्यात् , एवंच पूर्वग्रन्थविरोधः स्यादित्याशङ्क्याह व्याचष्टे—'भूतेऽर्थ इति* ॥ "तेन विने"ति प्रामाण्यमेव सन्निहितत्वान्निर्दिश्येत ; तथा सति व्याहतोक्तिः स्यात् , वैयधिकरण्यं च ; न ह्यन्यप्रामाण्याभावेऽन्यस्याप्रामाण्यमित्याशङ्क्य व्याचष्टे—*व्यतिरिक्तात्मना विनेति*॥ *ननु*—एकेनैव पदेनासंसार्यात्मतत्त्वसिद्धिर्भवति, नचैकरसत्वप्रदर्शने प्रयोजनमपीत्याशङ्क्याह—*कर्त्रन्वयेति* ॥

## तत्त्वदीपनम्

निष्फलस्तावद् धर्मोपदेशो न संभवति ; फलस्य कस्यचित्कालान्तरे संभवात् । तस्य च व्यतिरिक्तात्मानं विनाऽनुपपत्तेस्तद्विचारो युक्त इत्यर्थः । उत्तरमीमांसायां तत्सिद्धेर्न तत्र प्रयत्न इत्याह—*नान्यथेति* ॥

उत्तरमीमांसाया ब्रह्मपरत्वान्न कर्मफलनिरूपणपरत्वमिति चोदयति—*ननु ब्रह्मेति* ॥ वेदान्तानां भूतेऽर्थे प्रामाण्ये सिद्धे कर्मप्रतिपादकार्थवादादेरपि प्रामाण्यादिः सेत्स्यतीत्याशयेनाह—*तत्राहेति* ॥ वाक्यपर्यालोचनयैवात्मनः सिद्धत्वाद् बादरायणस्यापि तद्विचारो न युक्त इति शङ्कते—*ननु समन्वयेति* ॥ भूतस्य प्रमाणान्तरयोग्यत्वात् तदभाव-तद्विरोधयोः सतोर्न वाक्यमात्रात् तत्सिद्धिरित्याह—*नेत्याहेति* ॥ तर्हि देहातिरिक्तात्मनि प्रमाणाभावाद् देह एवात्मेत्याह—*ननु प्रमाणेति* ॥

आत्मनः प्रमाणान्तरयोग्यत्वमसिद्धम् ; तद्योग्यत्वेऽप्यक्षादिवद् वेदान्तानां प्रामाण्यात् । नच प्रमाणान्तरविरोधः ; तस्याभासत्वादित्यभिसन्धायाह—*तत्राहेति*॥ अतःशब्देनाप्रामाण्यस्य परामृष्टत्वात् "तेने"त्यत्रापि तत्परामर्शशङ्का स्यात्, तदर्थमाह—*विरोधेति* ॥ विचारस्य प्रस्तुतत्वाद् योग्यतया तस्य ग्रहणमित्यर्थः । फलाभावादुक्तसंकीर्तनं व्यर्थमित्याशङ्क्याह—*सत्यम्—इत्यादिनेति* ॥ विस्तरेणोक्तस्य संक्षेपेण प्रदर्शने बुद्धिसौकर्यं भवतीत्यर्थः । "अस्ति तु तदि"त्यत्र देहातिरिक्तात्माभावेऽपि फलादिचोदनानां प्रामाण्यस्य प्रस्तुतत्वात् तत्परामर्शशङ्का स्यात्, तत्राह—*अस्ति तु तदिति* ॥ प्रामाण्यादेर्विद्यमानत्वादेव तेन विना प्रामाण्यं नेति निषेधानुपपत्तिमाशङ्क्याह—*न

**तथाऽपि न वेदान्तवेद्यम्, अशनायाद्यतीतम्, अपेतब्रह्म-क्षत्रादिभेदम्, असंसार्यात्मतत्त्वमधिकारेऽपेक्ष्यते ;**

## पञ्चपादिका

तथाऽपि न वेदान्तवेद्यमिति* ॥ किं तदित्यत आह—*असंसार्यात्मतत्त्वं न तदधिकारेऽपेक्ष्यते ।

## पञ्चपादिकाविवरणम्

व्यतिरिक्तात्मना विनेत्यर्थः । *ननु* सूत्रकार-भाष्यकाराभ्यां देवताधिकरणे मुखत एव देवतादिषु मन्त्रादि-प्रामाण्यं नास्तीत्युक्तम्, तत् कथं सूत्रावयवसामर्थ्यात् प्रामाण्यमनुमतमिति मन्यते, *नैष दोषः* ; तत्र देवताया विग्रहवत्त्वे सन्निपत्योपकारकत्वप्रसङ्गाद् योग्यानुपलब्धिविरोधात्, कर्मणि विरोधप्रसङ्गाभिप्रायेणोक्तत्वात्, नाप्रामाण्याभिप्रायेण, अर्थवादलिङ्गानामपि तत्र तत्र द्वादशलक्षण्यां प्रमाणत्वेनोदाह्रियमाणत्वादिति । *तथाऽपि न वेदान्तवेद्यमित्यादिभाष्यव्याख्यानं स्पष्टार्थम्* । तत्र "अशनायाद्यतीतमि"त्यादिना कर्त्रन्वयाधिकारान्वय-भोक्त्रन्वयाः क्रमेण निरस्यन्ते ।

## तत्त्वदीपनम्

तेन विनेति* ॥ मन्त्रादीनां स्वार्थे प्रामाण्यं न सूत्रकार-भाष्यकृदभिप्रेतम्, स्वोक्तिविरोधादिति शङ्कते—*ननु सूत्रेति* ॥ प्रामाण्यनिषेधस्यान्याभिप्रायत्वान्न विरोध इत्याह—*नैष इति* ॥ विग्रहवताम् ऋत्विगादीनां प्रत्यक्षतो हविर्भाग-स्वीकारवद् देवतादीनामपि तथात्वं स्यात्, न च तदुपलभ्यते ; तस्माद् देवता नागतेति कर्मानुष्ठानलोपः स्यात्, तन्निरासार्थमप्रामाण्याभिधानमित्यर्थः । अप्रामाण्याभिप्रायत्वं कस्मान्न ? इत्याशङ्क्याह—*नाप्रामाण्येति* ॥ "अश-नायाद्यतीतमि"ति भाष्यस्थविशेषणानां कृत्यमाह—*तत्रेति* ॥ 'मयेदमनुष्ठेयमि'ति बुद्धिः कर्त्रन्वयः । 'मदभिलषित-साधनमिदमि'त्यन्वयोऽधिकारान्वयः । 'ममाऽयं नियोगः' इति स्वामित्वेनाऽन्वयो भोक्त्रन्वयः ॥

## वार्तिकम्

तीत्यर्थः । द्वितीयस्तु न सङ्घटीतीत्याह—*"तथापी"त्यादिना*॥"असंसार्यात्मतत्त्वमि"ति विषयेण विषयि तज्ज्ञानं लक्ष्यते । अधिक्रियत इत्यधिकारः =शास्त्रीयव्यवहारः =ज्योतिष्टोमाद्यनुष्ठानम्,तस्मिन्नित्यर्थः । यद्वा—*अधिकारे =तदनुकूलप्रवृत्तौ तत्फलस्वाम्यबोधे वाऽऽत्मन इत्यर्थः । वक्ष्यमाणहेत्वोः पक्षधर्मतां दर्शयितुमात्मतत्त्वं विशिनष्टि—*वेदान्तवेद्यमिति* ॥ वेदान्तवेद्यरूपमेव दर्शयति—*अशनायाद्यतीतमि-त्यादिना* ॥ अशनायादि अतीतम्, अतिक्रान्तम् ; तद् अशनायाद्यतीतम् । "योऽशनाया-पिपासे शोकं मोहं जरां मृत्युमत्येती"ति श्रुतेरित्यर्थः । *अपेतः =निरस्तः, ब्रह्म-क्षत्रादिजातिभेदः =तद्विशेषः, तद्विभागश्च यत्र, तत् ; अपेतब्रह्मक्षत्रादिभेदम् । "यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः" "ब्रह्म तं परा-दाद् योऽन्यत्रात्मनो ब्रह्म वेद, क्षत्रं तं परादाद् योऽन्यत्रात्मनः क्षत्रं वेदे"त्यादिश्रुतेरित्यर्थः। संसारो यस्यास्ति तत्, संसारि, न संसारि, असंसारि । "अज आत्मा महान् ध्रुवः", "अविनाशी"वा अरेऽयमात्माऽनु-च्छित्तिधर्मे"त्यादिश्रुतेरित्यर्थः । "वेदान्तवेद्यमि"ति विशेषणमुक्तविशेषणत्रयविशिष्टस्य प्रामाणिकत्वप्रद-र्शनार्थम् । तच्च विशेषणत्रयं हेत्वोः पक्षसत्त्वज्ञापनार्थमिति द्रष्टव्यम् । कुतो बुद्धिपूर्वकारी, उक्ताधिकार

## भाष्यभावप्रकाशिका

तस्य तद्विषयत्वे कथमध्यासाधीनतेत्याशङ्क्याह—*तथाऽपीति* ॥ किं तद् वेदान्तवेद्यम् ? तदाह—*अशनायादीति* ॥ कर्त्रन्वयाधिकारान्वय-भोक्त्रन्वया विशेषणैर्व्यावर्त्यन्ते ॥

## अनुपयोगात्, अधिकारविरोधाच्च ।

### भामती

अधिकारशास्त्रं हि स्वर्गकामस्य पुंसः परलोकसंबन्धं विना न निर्वहति, इति तावन्मात्रमाक्षिपेत्, न त्वस्यासंसारित्वमपि ; तस्याधिकारेऽनुपयोगात्, प्रत्युतौपनिषदस्य पुरुषस्याकर्तुरधिकारविरोधात् । प्रयोक्ता हि कर्मणः कर्मजनितफलभोगभागी कर्मण्यधिकारी स्वामी भवति । तत्र कथमकर्ता प्रयोक्ता ? कथं वाऽभोक्ता च कर्मजनितफलभोगभागी ? तस्मादनाद्यविद्यालब्धकर्तृत्व-भोक्तृत्व-ब्राह्मणत्वाद्यभिमानिनं नरमधिकृत्य विधि-निषेधशास्त्रं प्रवर्तते । एवं वेदान्ता अप्यविद्यावत्पुरुषविषया एव । नहि प्रमात्रादिविभागादृते तदर्थाधिगमः । ते त्वविद्यावन्तमनुशासतो निर्मृष्टनिखिलाविद्यमनुशिष्टं स्वरूपे व्यवस्थापयन्तीत्येतावानेषां विशेषः । तस्मादविद्यावत्पुरुषविषयाण्येव शास्त्राणीति सिद्धम् ॥

### ऋजुप्रकाशिका

*अस्य=स्वर्गकामस्य । *तस्य=असंसारित्वस्य । प्रत्युतासंसारित्वेऽधिकारित्वस्यायोग एवेत्याह—*प्रत्युतेति* ॥ *औपनिषदस्य=उपनिषद्गम्यस्यासंसारिणः । तस्याधिकारविरोधमेव स्फोरयति—*प्रयोक्ता हीत्यादिना*—*तस्मादित्यतः प्राक्तनेन ग्रन्थेन* । कर्मणः प्रयोक्ता हीत्यन्वयः । अधिकारीत्येतद् विवृणोति—*स्वामीति* ॥ "अभोक्ता चे"त्यनन्तरम् 'असंसारी'ति शेषः । एवंचासंसारिणोऽधिकारविरोध इति भावः । उपसंहरति—*तस्मादिति* ॥ अस्तु विधि-प्रतिषेधशास्त्रस्याविद्यावद्विषयत्वम्, वेदान्तानां तु तन्नेत्याशङ्क्याह—*एवं वेदान्ता अपीति* ॥ तदेव व्यतिरेकमुखेन द्रढयति—*नहीत्यादिना* ॥ वेदान्ता उभयत्र तच्छब्दार्थः । *स्वरूपे=अद्वितीयब्रह्मात्मस्वरूपे । *एषाम्=वेदान्तानाम् । *विशेष इति* । विधि-प्रतिषेधशास्त्राद् विशेष इत्यर्थः । एवंच प्रत्यक्षादिप्रमाणवद् विधि-प्रतिषेधशास्त्रस्य, विधि-प्रतिषेधशास्त्रवद् वेदान्तशास्त्रस्य चेति सर्वेषां शास्त्राणामविद्यावद्विषयत्वमेवेत्युपसंहरति—*तस्मा-

### पञ्चपादिका

अनुपयोगादधिकारविरोधाच्च* । अशनायाद्यतीतमित्यसंसार्यात्मतत्त्वं दर्शयति । अशनायाद्युपप्लुतो हि सर्वो जन्तुः स्वास्थ्यमलभमानः प्रवर्तते, तदपाये स्वास्थ्ये स्थितो न किंचिदुपादेयं हेयं वा पश्यति । *अपेतब्रह्मक्षत्रादिभेदमिति* प्रपञ्चशून्यमेकरसं दर्शयति ।

### वार्तिकम्

उक्तात्मतत्त्वज्ञानं नापेक्षते ? इत्यत्राह—*"अनुपयोगादधिकारविरोधाच्चेति* ॥ *ननु*—एवं तर्ह्येकेनैव विशेषणेन हेत्वोः पक्षधर्मत्वसिद्धेर्विशेषणत्रयं व्यर्थम् । तथाहि—अशनायाद्यतीतात्मविज्ञानं हि नाधिकारोपयोगि ; दृष्टविनाशस्थूलदेहव्यतिरिक्त-कालान्तरभाविभोक्तृज्ञानस्यैव तदुपयोगित्वात्, अस्य च

### भाष्यभावप्रकाशिका

आमुष्मिकफलकर्मसु देहेतरात्मज्ञानादेव प्रवृत्तावुक्तात्मज्ञानस्याकिञ्चित्करत्वादित्याह—*अनुपयोगादिति*॥ विविक्तात्मज्ञाने सर्वाभिमानभङ्गात् कर्मस्वप्रवृत्तिरेवेति कुतस्तदपेक्षेत्याह—*अधिकारेति*॥

### प्रदीपः

समाधत्ते—*तथापीति* ॥ अध्यासविरोधि ह्यशनायादिधर्मातीतासंसार्यात्मतत्त्वज्ञानम्, नच शास्त्रीयव्यवहाराधिकारस्तादृशमात्मतत्त्वज्ञानमपेक्षत इत्याह—*न वेदान्तवेद्यमिति* ॥ *अशनायाद्यतीतमिति* ॥ फलभोगकामनारहितमित्यर्थः । फलकामनायाः कर्माधिकारप्रयोजकत्वादशनायाद्यतीतो न कर्माधिकारीति भावः । *ननु* काम्ये कर्मणि फलकामोऽधिकारी, न नित्ये ; तथाच नित्यकर्मानुष्ठानमध्यासं विरुणद्धीत्याशङ्क्याह—*अपेतब्रह्मक्षत्रादिभेदमिति*॥ नित्यकर्मसु फलकामनानपेक्षायामपि ब्राह्मणत्वाद्यभिमानोऽधिकारप्रयोजकोऽपेक्षितः, इति ब्राह्मणत्वाद्यभिमानपूर्वकं नित्यकर्मानुष्ठानमपि न नाध्यासपूर्वकमिति

### वार्तिकम्

तद्रूपत्वाभावात्, प्रत्युत तद्विरोधि ; तस्मिन् सति तत्फलभोगेच्छानुदयात् तत्र प्रवृत्त्यनुपपत्तेरिति । एवमात्मनो ब्राह्मणत्वाद्यभावे ज्ञाते तदुचितकर्मणि बृहस्पतिसवादौ शूद्रस्येवाप्रवृत्तिः, तथाऽसंसारित्वज्ञानेऽपि परलोकगामिनो भोक्तुरभावनिश्चयादप्रवृत्तिरिति विशेषणत्रयं व्यर्थमिति—चेत्, *न* ; उपयोगभेदेनाधिकारभेदेन च तत्सार्थकत्वोपपत्तेः । तथाहि—त्रेधा खल्वनात्मज्ञानमधिकार उपयुज्यते । प्रथमतस्तावदात्मनो भोक्तृत्वज्ञानम् ; तदभावे भोगार्थितया प्रवृत्त्यनुपपत्तेरुक्तत्वात्, तत्सिध्यर्थं चेहलोक-परलोकगामित्वज्ञानम् ; तदभावे इहलोक-परलोकसंबन्धाभावात्तत्रत्यभोगानुपपत्तेः, तदुभयज्ञाने सत्यप्यात्मनि ब्राह्मणत्वाद्यभिमानाभावे तदुचिते कर्मणि शूद्रस्येव न प्रवृत्तिरित्यपि त्वयैवोक्तमेव । एवं च सति प्रवृत्त्युपयोग्युक्तज्ञानत्रयं परस्परविलक्षणतया स्वविषयमप्यधिकारं त्रिधा भिनत्ति । न चैतेषामेकतररूपमप्युक्तात्मज्ञानेऽस्ति, येन तदेकतररूपेणोपयोगोऽधिकाराविरोधो वा भवेदिति प्रतिपादनार्थमुपपन्नं विशेषणत्रयमिति ॥

*ननु*—मा भूत् कर्माधिकारे उक्तात्मतत्त्वज्ञानापेक्षा, मोक्षशास्त्रविहितश्रवणाद्यधिकारे तु तदपेक्षाऽस्त्येव ; आत्मानात्मविवेकज्ञानस्य तद्धेतुत्वाभ्युपगमात्, पूर्वोक्तदोषाभावाच्चेति तृतीयकल्पमाशङ्क्य, किं तादृशात्मतत्त्वसाक्षात्कारः श्रवणाद्यधिकारेऽपेक्ष्यते ? किं वा श्रुतित आपातप्रतिपन्नतज्ज्ञानमात्रम् ? तत्र नाद्यः ; कर्माधिकार इव प्रकृतेऽपि तस्यानुपयोगात्, अधिकारविरोधाच्च । श्रवणादेस्तदर्थतयाऽनुष्ठानात् तस्यान्यतस्तत्पूर्वमेव सिद्धौ तद्वैयर्थ्यापत्तेः । अन्योन्याश्रयाच्च—श्रवणाद्यनुष्ठाने तत्सिद्धिः, तत्सिद्धौ च श्रवणाद्यनुष्ठानमिति । अथ द्वितीयः पक्षः, न तर्हि काचिदनुपपत्तिः ; आपातज्ञानस्य परोक्षत्वेनाध्यासाविरोधित्वादित्यभिप्रेत्याह—*प्राक् च तथाभूतात्मविज्ञानात् प्रवर्तमानं शास्त्रमविद्यावद्विषयत्वं नातिवर्तत इति* ॥ श्रवणादिव्यवहारस्यापि शास्त्ररूपत्वात् शास्त्रमित्युक्तम् । सामान्यतः शास्त्रमिति वदन् यदाशङ्कितम्—कथं पुनरविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चे"त्यत्र शास्त्रस्याविद्यावद्विषयत्वं न संभवतीति, तदपि तन्त्रेण परिहरति । अत एवाग्रे "ब्राह्मणो यजेते"त्यादिशास्त्रोदाहरणमप्युपपन्नं भवति ; अन्यथा "ब्राह्मणः पाण्डित्यं निर्विद्ये"त्येवमादिमोक्षशास्त्रमेवोदाहरिष्यत् । *विज्ञानम्* = साक्षात्कारः । *तथाभूतात्मा*=अशनायाद्यतीतत्वादिपूर्वोक्तविशेषणकः । "प्राक् चे"ति चकारादुत्तरकालीनविद्वद्व्यवहारस्याप्यविद्यावद्विषयत्वं दर्शितं भवति ; प्रारब्धकर्मस्थित्यनुरोधेन तस्यापि लेशाविद्याङ्गीकारात् । "अहं ब्रह्मास्मी"त्यादिव्यवहारोऽपि यद्यन्तःकरणतदाकारवृत्त्यादिरूपः, तर्हि तस्याप्यध्यासपूर्वकत्वमस्त्येव । अथ स्वरूपानुभवरूपः, न तर्हि स व्यवहार इति निरवद्यम् ॥

### प्रदीपः

भावः ॥ *ननु*--दहरोपासनादयो न कर्तुर्ब्राह्मणत्वाद्यभिमानमपेक्षन्ते ; न वा फलकामनामित्युपासनाकाण्डीयव्यवहाराः, नाध्यासपूर्वकाः, अशनायाद्यतीतापेतब्रह्म-क्षत्रादिभेदात्मतत्त्वज्ञानपूर्वकत्वादिति, नान्तःकरणाद्यध्यासपूर्वकः सर्वोऽपि व्यवहार इत्याशङ्क्याह--*असंसारीति* ॥ अन्तःकरणादावप्यहं-ममाभिमानरहितमित्यर्थः । तथाचोपासनादिव्यवहारोऽपि नात्मतत्त्वज्ञानिनां वर्तते, किन्तु तज्ज्ञानविधुराणामेव, इति कस्यापि व्यवहारस्य मोक्षशास्त्रपर्यन्तप्रयुक्तस्य न नाध्यासपूर्वकत्वमिति निष्कर्षः ॥ *ननु*—ज्योतिष्टोमादिव्यवहारा अपि न देहात्मविवेकमात्रमूलाः, किन्तु पूर्वोक्तासंसार्यात्मतत्त्वज्ञानपूर्वका एवेति शास्त्रीयव्यवहारस्याध्यासपूर्वकत्वं बाधितमित्याशङ्क्याह--*अनुपयोगादिति* ॥ 'अधिकारे'इत्यनुषज्यते । अशनायाद्यतीतात्मतत्त्वज्ञानस्येति चाध्याह्रियते । "अधिकारविरोधादि"त्यत्र तु उक्तविधात्मतत्त्वज्ञानस्येत्यनुषङ्गमात्रम् । देहात्मविवेकज्ञानेनैवाधिकारनिर्वाहाद् नोक्तविधात्मतत्त्वज्ञानापेक्षा शास्त्रीयव्यवहाराणामिति भावः । *विरोधादिति* ॥ पूर्वोक्तप्रकारेण शास्त्रीयव्यवहारेषु अशनायादीनामपेक्षितत्वाद् अशनायाद्यतीतत्वमधिकारविरुद्धमिति भावः । *ननु* एवमपि साधनचतुष्टयसम्पन्नानां मोक्षशास्त्र-

**प्राक्च(१) तथाभूतात्मविज्ञानात् प्रवर्तमानं शास्त्रमविद्यावद्विषयत्वं नातिवर्तते ।**

### भामती

स्यादेतत्—यद्यपि विरोधानुपयोगाभ्यामौपनिषदः पुरुषोऽधिकारे नापेक्ष्यते ; तथाऽप्युपनिषद्भ्योऽवगम्यमानः शक्नोत्यधिकारं निरोद्धुम् । तथाच परस्परापहतार्थत्वेन कृत्स्न एव वेदः प्रामाण्यमपजह्यादित्यत आह—*प्राक् च तथाभूतात्मेति* ।

### ऋजुप्रकाशिका

दिति* ॥ शङ्कते—*स्यादेतदिति* ॥ ततः किमिति ? अत आह—*तथाच परस्परेति* ॥ अविद्यावदधिकारिणि सत्यधीतवेदान्तेन तेनौपनिषदः पुरुषोऽवगम्यते ; औपनिषदपुरुषावगमेन चाविद्यावत्त्वभङ्गादधिकार्यलाभः, इति परस्परव्याहतार्थत्वेनाधिकारिशून्यो वेदः कृत्स्नोऽप्यविद्यावद्विषयत्वमपि न प्राप्तः, इति प्रामाण्यमपि जह्यादित्यर्थः । औपनिषदपुरुषावगमानन्तरमविद्यावत्त्वभङ्गेऽपि तदवगमात् प्रागविद्यावत्त्वसत्त्वादविद्यावद्विषयत्वसंभवेन नोक्तदोष इत्याह—*अत आहेति* ॥ *अनुपजातेनेति* ॥ औपनिषद-

### पञ्चपादिका

प्राक् च तथाभूतात्मविज्ञानात्प्रवर्तमानं शास्त्रमविद्यावद्विषयत्वं नातिवर्तत इति*॥ "तत्त्वमसी"ति-वाक्यार्थावगमादर्वागविद्याकृतं संसारमहमुल्लेखमाश्रित्य प्रवर्तमानं शास्त्रं नाविद्यावद्विषयत्वमतिवर्तते । तस्माद् युक्तमुक्तं प्रत्यक्षादीनां प्रमाणानां शास्त्रस्य चाविद्यावद्विषयत्वम् ॥

### पञ्चपादिकाविवरणम्

*प्राक् चेत्यादि* भाष्यव्याख्यानम्—*"तत्त्वमसी"ति वाक्यार्थावगमादित्यादि* ॥ कथं पुनर्व्यतिरेकज्ञानेनाध्यासस्य सहवृत्तिः ? परोक्षापरोक्षविभागात् चन्द्रद्वित्वज्ञानवदविरोध इति केचित् ।

### तत्त्वदीपनम्

वाक्यार्थावगमोत्तरकालमपि शास्त्रस्याविद्यावद्विषयत्वाद् भाष्य-टीकयोरनुपपत्तिमाशङ्क्यावगमशब्देन साक्षात्कारस्य विवक्षितत्वान्नानुपपत्तिरित्यभिप्रायेणाह—*प्राक् चेति* ॥ भाष्यव्यावर्त्यां शङ्कामाह—*कथं पुनरिति* ॥ अदृष्टार्थप्रवृत्तौ व्यतिरेकज्ञानं तावदपेक्षितम् । ज्ञानाध्यासयोस्तु निवर्त्य-निवर्तकभावप्रसिद्धेर्न शास्त्रीयस्य व्यवहारस्याविद्यावद्विषयत्वमित्यर्थः । निवर्त्य-निवर्तकभावोऽसिद्ध इत्याह—*परोक्षेति* ॥ अपरोक्षभ्रमस्यापरोक्षज्ञाननिवर्त्यत्वनियमाद् व्यतिरेकज्ञानस्य च परोक्षत्वान्न निवर्तकत्वमित्यर्थः ॥

### वार्तिकम्

*यद्वा*—एवमयं ग्रन्थो योजनीयः—एवं प्रत्यक्षादिप्रमाणानामविद्यावद्विषयत्वं समर्थ्य, शास्त्राणामविद्यावद्विषयत्वं समर्थयति—*शास्त्रीयेत्वित्यादिना* ॥ व्याख्यानं पूर्ववत् । किं तादृशात्मविज्ञानमनुष्ठानादुत्तरकालं तदधिकारेऽपेक्ष्यते ? तत्पूर्वकालं वा ? नाद्य इत्याह—*अनुपयोगादिति* ॥ न द्वितीय इत्याह—"*अधिकारविरोधाच्चेति*॥ माऽस्तु तर्हि शास्त्रार्थानुष्ठानात् पूर्वं तथाभूतात्मविज्ञानापेक्षा, प्रकृते किमायातमिति ? अत आह-*प्राक् चेत्यादिना* ॥ अविद्यावान् विषयो नियोज्यो यस्य, तद् अविद्यावद्विषयम् ; तस्य

### भाष्यभावप्रकाशिका

तथाऽपि कथं शास्त्रीयप्रवृत्तेराध्यासिकत्वम् ? नहि देहादिव्यतिरिक्तात्मज्ञाने बाधके तदध्यासानुवृत्तिरित्याशङ्क्य, तस्य पारोक्ष्यादपरोक्षाध्यासविरोधे तत्पूर्विकैव शास्त्रीयप्रवृत्तिरित्याह—*प्राक्त्विति* ॥

१ 'प्राक्त्वि'ति भाष्यभावप्रकाशिकाधृतः पाठः ।

### भामती

सत्यमौपनिषदपुरुषाधिगमोऽधिकारविरोधी, तस्मात्तु पुरस्तात्कर्मविधयः स्वोचितं व्यवहारं निर्वर्तयन्तो नानुपजातेन ब्रह्मज्ञानेन शक्या निरोद्धुम्। नच परस्परापहतिः; विद्याविद्यावत्पुरुषभेदेन व्यवस्थोपपत्तेः। यथा "न हिंस्यात्सर्वा भूतानि" इति साध्यांशनिषेधेऽपि "श्येनेनाभिचरन् यजेत" इति शास्त्रं प्रवर्तमानं "न हिंस्यादि"त्यनेन न विरुध्यते, तत्कस्य हेतोः? पुरुषभेदादिति। अपजित-क्रोधारातयः पुरुषा निषेधेऽधिक्रियन्ते, क्रोधारातिवशीकृतास्तु श्येनादिशास्त्र इति॥

### ऋजुप्रकाशिका

पुरुषावगमात् प्राग्विरोधिनोऽसंजातत्वेनानुपजातत्वं बोध्यम्। यच्चोक्तं परस्परापहतार्थत्वमिति, तदपि नेत्याह—*नचेति*॥ यद्यप्येकस्यैव पुरुषस्य कालभेदेन विद्यावत्त्वाविद्यावत्त्वे उपपद्येते; तथाऽपि तत्तत्कालभेदात् तत्तद्विशिष्टपुरुषभेदमाश्रित्य तथोक्तम्। तथाच—भविष्यता विद्यावत्त्वेन पूर्वमविद्यावन्तमाश्रित्य प्रवर्तमानं शास्त्रं नापहतप्रामाण्यमिति भावः। तत्रानुकूलं दृष्टान्तमाह—*यथा न हिंस्यादिति* ॥ *अभिचरन्= शत्रुवधकामः। "न विरुध्यते" इत्यत्र हेत्वाकाङ्क्षोद्भावनापूर्वकं हेतुमाह—*तत् कस्य हेतोः? पुरुष-भेदादिति*॥ पुरुषभेदमेवाह—*अपजितेति*॥ अपजिताः क्रोधाद्या अरातयो यैस्ते तथोक्ताः, क्रोधाराति-वशीकृता इत्यर्थः। "श्येनादिशास्त्रे" इत्यनन्तरम्—'अधिक्रियन्ते' इति शेषः। तथाच यथा "न हिंस्यादि"ति निषेधशास्त्रे "श्येनेने"ति शास्त्रे चाधिकारिभेदाद् न तयोर्विरोधः; तद्वदौपनिषदपुरुषावगमोत्तरकालं विद्या-वत्त्वेऽपि तत्पूर्वमविद्यावत्त्वादविद्यावन्तं पुरुषमाश्रित्य प्रवर्तमानं शास्त्रमप्यविरोधादविद्यावद्विषयमेवेति भावः।

### पञ्चपादिकाविवरणम्

सूक्ष्मशरीरस्यात्माविद्याकार्यत्वात् कार्य-कारणयोर्भेदाभेदभावात् स्थूलशरीरस्याग्न्ययःपिण्डवत् सूक्ष्मशरीरेण संश्लेषाद् भेदज्ञानेऽप्यध्यास इत्यपरे। सर्वथाऽपि यावदपरोक्षज्ञानमध्यासो न निवर्तत इति भावः। *तस्मा-दित्यध्यासप्रमाणोपसंहारः। नच प्रत्यक्षानुमानार्थापत्तिभिरेवाध्याससिद्धिः, किन्त्वागमोऽपि विधेर्बोद्धारमधि-

### ऋजुविवरणम्

"तदेवे"ति व्यर्थम्; पूर्वप्रमाणैः साधितत्वात्, इत्याशङ्क्याह—*नच प्रत्यक्षेति*॥ आत्म-शब्दस्य विशिष्टवाचित्वमुक्तम्, अस्मदर्थश्चाहंप्रत्ययिसंभिन्न इति, तदयुक्तम्; विशिष्टे प्रयोगाभावात्, प्रसिद्धार्थहानेना-

### तत्त्वदीपनम्

स्वयूथ्यमतमाह—*सूक्ष्मशरीरस्येति*॥ आत्मा चाविद्या चेत्यात्माऽविद्ये, तत्कार्यत्वादित्यर्थः। मिथ्या-ज्ञान-तत्संस्कारयोर्निमित्तत्वमभिप्रेत्य—"आत्माविद्याकार्यत्वादि"त्युक्तम्, शरीरात्मनोरुपादानोपादेयभावाद्ध भिन्ना-भिन्नत्वम्, ततश्च भेदज्ञाने सत्यप्यभेदज्ञानानुवृत्तिर्युक्तेत्यर्थः। कथं तर्हि स्थूलशरीराभिमानानुवृत्तिरिति? तत्राह—*स्थूलशरीरस्येति*॥ सूक्ष्मशरीरारम्भकस्य कर्मवृन्दस्य स्थूलशरीरं विना स्वफलदानेऽसमर्थत्वात् स्वारम्भ्यभूतद्वारेण वा तदारम्भकत्वम्। एतदभिप्रेत्योक्तम्—*संश्लेषादिति*॥ किं तर्ह्यादर्तव्यमिति? अत आह—*सर्वथेति*॥ आचार्यमतस्ये-तरस्य वाऽनुसरणेऽपीत्यर्थः। प्रमाणानवद्यतामनुपसंहृत्य प्रमेयोपसंहरणे को हेतुः? इत्याशङ्क्यानुपसंहरणमसिद्ध-मित्याह—*तस्मादिति*॥ "सर्वाणि शास्त्राणी"त्यत्र शास्त्रीयव्यवहारस्याविद्यावद्विषयत्वसिद्धेः—"तथा ही"त्येतत् कथम्? इत्याशङ्क्य तात्पर्यमाह—*नचेति*॥ "ब्राह्मणो यजेते"त्यादौ चिदचितोरैक्यावभासो न प्रतीयते, इत्याशङ्क्याह—*विधेरिति*॥ मदभिलषितसाधनमिदं कर्मेति प्रतिपत्तिसमर्थस्याधिकारिणः कर्तव्यविशेषोपदेशात्

### भाष्यभावप्रकाशिका

अथवा—कर्म-ज्ञानकाण्डयोः कर्तृकर्त्रतीतमविषयत्वात् परस्परविगीतार्थत्वादप्रामाण्यं स्यादित्याशङ्क्य, विद्याऽविद्यावत्पुरुषभेदेन व्यवस्थोपपत्तेर्न विरोध इत्याह—*प्राक्त्विति*॥ न केवलमुक्तप्रमाणैरेवाध्यास-

### प्रदीपः

व्यवहारो नाध्यासपूर्वक इति शङ्कावारणार्थमाह—*प्राक् च तथाभूतात्मविज्ञानादिति*॥ तथाच मोक्षशास्त्रपर्यन्तानां सर्वेषा-

**तथाहि—"ब्राह्मणो यजेत" इत्यादीनि शास्त्राण्यात्मनि(१) वर्णाश्रम-वयोऽवस्थादिविशेषाध्यासमाश्रित्य प्रवर्तन्ते ।**

### भामती

अविद्यावत्पुरुषविषयत्वं नातिवर्तत इति यदुक्तं तदेव स्फोरयति—*तथाहीति* ॥ वर्णाध्यासः—'राजा राजसूयेन यजेत' इत्यादिः । आश्रमाध्यासः—'गृहस्थः सदृशीं भार्यां विन्देत'

### ऋजुप्रकाशिका

*भाष्ये*—*वर्णाश्रम-वयोऽवस्थादिविशेषाध्यासमाश्रित्येत्युक्तम्*, तत्र वर्णाध्यासम्, आश्रमाध्यासम्, वयोऽध्यासम्, अवस्थाद्यध्यासं च क्रमेण स्वयमाह—*वर्णाध्यास इत्यादिना* ॥ "ब्राह्मणो बृहस्पतिसवेन यजेत"

### पञ्चपादिका

तदेव दर्शयति—*तथाहि—"ब्राह्मणो यजेते"त्यादीनि शास्त्राण्यात्मन्यतदध्यासमाश्रित्य प्रवर्तन्ते ।* वर्ण-वयोऽध्यासः "अष्टवर्षं ब्राह्मणमुपनयीते"त्यादिः । आश्रमाध्यासः—"न ह वै स्नात्वा भिक्षेते"ति । अवस्थाध्यासः—"यो ज्योगामयावी स्यात् स एतामिष्टिं निर्वपेदि"ति । आदिशब्देन "यावज्जीवं जुहुयादि"ति जीवनाध्यासः । एवमध्याससद्भावं प्रसाध्य, "स्मृतिरूपः" इत्यादिना "सर्वथाऽपि त्वन्य-

### पञ्चपादिकाविवरणम्

कारिणं ब्राह्मणादिशब्दैरनुवदंश्चेतनाचेतनयोरैक्यावभासं दर्शयतीत्याह—*तदेव दर्शयति तथाहीति* ॥ *यो ज्योगामयावी=उज्ज्वलामयवानित्यर्थः । वृत्तसङ्कीर्तनपूर्वकमध्यासो नामेति लक्षणभाष्यमवतारयति—

### तत्त्वदीपनम्

चेतनस्तावत् प्रतीयते, तस्य च वस्तुतो ब्राह्मणत्वाद्यसंभवादारोपितैक्यं प्रतीयत इत्याशयः । अध्याससद्भावं प्रसाध्य लक्षितं परामृशतीत्यभिधानात् प्रसाधनस्य पूर्वकालीनत्वं लक्षणस्योत्तरकालीनत्वं प्रतिभाति, तत्राह—*वृत्तेति* ॥ लक्षितमध्याससद्भावं प्रसाध्य परामृशतीत्यन्वयः ॥

कस्य युष्मदर्थस्य कस्मिन्नस्मदर्थेऽध्यासः ? इति विमर्शे तस्योत्तरम्—"एतस्मिन्नि"ति शङ्का स्यात्, तत्राह—*भाष्यमिति* ॥ "पुत्र-भार्यादिष्वि"त्यादिनाऽध्यासानुभवः प्रदर्श्यत इति शङ्का स्यात्, नच सोपपद्यते ; अनुभवस्य

### वार्तिकम्

भावस्तत्त्वमित्यर्थः । कुत एतदध्यवसीयते ? इति चेत्, शास्त्रलिङ्गेभ्य एवेत्याह—तथाहि "ब्राह्मणो यजेते"त्यादीनि शास्त्राण्यात्मनि वर्णाश्रम-वयोऽवस्थादिविशेषाध्यासमाश्रित्य प्रवर्तन्त इति* ॥ "ब्राह्मणो बृहस्पतिसवेन यजेत," "राजा राजसूयेन यजेत", "वैश्यो वैश्यस्तोमेन यजेते"त्यादीनि शास्त्राणि ब्राह्मणोत्वादिवर्णाध्यासमात्मनि पुरस्कृत्य प्रवर्तन्ते ; "ब्रह्मचार्यवकीर्णी नैर्ऋतं गर्दभमालभेते"त्यादीनि चाश्रमाध्यासम् ;"अष्टवर्षं ब्राह्मणमुपनयीते"त्यादीनि च वयोऽध्यासम् ; "जातपुत्रः कृष्णकेशोऽग्नीनादधीते"त्या-

### भाष्यभावप्रकाशिका

सिद्धिः, किन्त्वागमोऽपि विधेर्बोद्धारमधिकारिणं ब्राह्मणादिशब्दैरुपदिशंश्चेतनाचेतनयोरैक्याभासं दर्शयतीत्याह—*तथाहीति* ॥

### प्रदीपः

मविद्यावत्पुरुषाश्रितत्वमेव ; अन्यथा साधनचतुष्टयसम्पत्तिमात्रेण मुक्त्यापत्त्या मोक्षशास्त्रमेव वितथमापद्येतेति सुष्ठूक्तम्—"इममेवाध्यासं पुरस्कृत्य सर्वे प्रमातृ-प्रमाण-प्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ताः, सर्वाणि च शास्त्राणि विधि-प्रतिषेध-

(१) "आत्मन्यतदध्यासमि"ति पञ्चपादिकाधृतः पाठः, तत्रातदध्यासो वर्णाश्रमाद्यध्यास इति भावः ।

## भामती

इत्यादिः । वयोऽध्यासः—"कृष्णकेशोऽग्नीनादधीत" इत्यादिः । अवस्थाध्यासः—'अप्रतिसमाधेय-व्याधीनां जलादिप्रवेशेन प्राणत्यागः' इति । आदिग्रहणं पातकोपपातक-संकरीकरणापात्रीकरण-मलिनीकरणाद्यध्यासोपसंग्रहार्थम् । तदेवमात्मानात्मनोः परस्पराध्यासमाक्षेपसमाधानाभ्यामुपपाद्य, प्रमाण-प्रमेयव्यवहारप्रवर्तनेन च दृढीकृत्य तस्यानर्थहेतुतामुदाहरणप्रपञ्चेन प्रतिपादयितुं तत्स्वरूपमुक्तं स्मार-

## ऋजुप्रकाशिका

इत्यादिशब्दार्थः । भाष्यस्थादिशब्दस्यार्थमाह—*आदिग्रहणमित्यादिना* ॥ पातकेति* ॥ *पातकम्=ब्रह्म-वधादि, *उपपातकम्=गोवधादि, सङ्करीकरणादीनि च मनुनोक्तानि—

"खराश्वोष्ट्र-वराहाणामजाविक वधस्तथा । सङ्करीकरणं ज्ञेयं मीनाहि-महिषस्य च ॥
निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनम् । अपात्रीकरणं ज्ञेयमसत्यस्याभिभाषणम् ॥
कृमि कीट-वयो हत्याऽमेध्यानुगतभोजनम् । फलैधः-कुसुमस्तेयमधैर्यं च मलावहम् ॥"

इति । आदिशब्दात् तदुक्तजातिभ्रंशकरादि गृह्यते—

"ब्राह्मणस्य रुजः कृत्या-घ्रातिरघ्रेय-मद्ययोः । जैह्मं च मैथुनं पुंसि जातिभ्रंशकरं स्मृतम् ॥"

इति । *तस्य=अध्यासस्य । *तत्=स्वरूपम् । *एतत्=अतस्मिन् तद्बुद्धिरित्येतत् । अभ्यर्हितत्वात्

## वार्तिकम्

दीनि चावस्थाध्यासमिति । 'अवस्थादी'त्यादिशब्देन "ज्योतिष्टोमेन यजेत स्वर्गकामः," "गतश्रियोधार्योऽ-ग्निरि"त्यादीन्यात्मनि काम-गतश्रीत्वाद्यध्यासं पुरस्कृत्य प्रवर्तन्त इत्यभिप्रेतम् । एवं "ब्राह्मणो न सुरां पिबेत्," "ब्राह्मणः प्रव्रजेदि"त्यादीनि निषेध-मोक्षपराणि शास्त्राणि वर्णाश्रमाद्यध्यासपुरस्कारेण प्रवृत्तानी-त्युदाहर्तव्यानि । तस्माच्छास्त्रलिङ्गान्येव तेषामध्यासपूर्वकत्वे प्रमाणानि, इति सिद्धम्—प्रमाण-प्रमेयादि-व्यवहारान्यथानुपपत्तिर्निर्दष्टतयाऽऽत्मानात्मनोः परस्पराध्यासे प्रमाणमित्याशयः ॥

तदेवमनुपपत्तिप्रमाणेनात्मानात्मनोः परस्पराध्यासे सिद्धे दृढमूलत्वात्तत्प्रत्यक्षमपि स्वविषयात्प्रच्या-व्यान्यथा न नेतुं शक्यते, इति तदपि तत्र प्रमाणं सिद्धं भवतीत्यभिप्रेत्य, संप्रति तत्र पूर्वोदाहृतप्रत्यक्ष-प्रमाणमेव विशदीकृत्य दर्शयितुमनुपपत्तिप्रमाणव्यवधानात् शिष्यस्याध्यासलक्षणविस्मरणं मत्वा, तमनुक-

## भाष्यभावप्रकाशिका

तत्र *वर्णवयोऽध्यासः*—"अष्टवर्षं ब्राह्मणमुपनयीत" इत्यादिः ; *आश्रमाध्यासः*—"न ह वै स्नात्वा भिक्षेते"त्यादिः ; *अवस्थाध्यासः—"ज्योगामयावी यजेत्" इति ; *ज्योगामयः = उज्ज्वलामयवानिरयर्थः ॥ "यावज्जीवं जुहुयात्" इति जीवनाध्यासो गृह्यते । कस्य युष्मदर्थस्य कस्मिन्नस्मदर्थे तद्विपर्ययेण वाऽध्यास इति विशेषतः प्रदर्शयितुमुपपदितस्याध्यासस्य लक्षणं परामृशति—

## प्रदीपः

मोक्षपराणि चेति । किं बहुना ? स्पष्टमागम एवाविद्यावत्पुरुषविषयत्वमध्यासस्य प्रतिपादयतीत्याह—*तथाहि*—*ब्राह्मणो यजेतेति* ॥ ब्राह्मणत्वं हि शरीरधर्म इति शरीरात्माध्यासवन्तमेव "ब्राह्मणो यजेते"ति वाक्यमधिकरोति । "ब्राह्मणो यजेते"ति वाक्यं वर्णविशेषाध्यासमाश्रित्य प्रवर्तते । "गृहस्थः सदृशीं भार्यामि"त्याश्रमविशेषाध्यासम्, "जातपुत्रः कृष्णकेशोऽग्नीनादधीते"ति वयोविशेषाध्यासम्, "अप्रतिसमाधेयव्याधिर्जलप्रवेशादिनाऽऽत्मानं हन्यादि"त्यादि त्ववस्थाविशेषाध्या-समाश्रित्य प्रवृत्तमिति वर्णाश्रमवयोऽवस्थाविशेषाध्यासमाश्रित्येत्यस्य क्रमेणोदाहरणानि । तदेवं लक्षणप्रमाणाभ्यां साधितमध्यासं

**अध्यासो नामातस्मिंस्तद्बुद्धिरित्यवोचाम। तद्यथा—पुत्रभार्यादिषु विकलेषु सकलेषु वा, 'अहमेव विकलः सकलो वे'ति बाह्यधर्मानात्मन्यध्यस्यति।**

### भामती

यति—*अध्यासो नाम—अतस्मिंस्तद्बुद्धिरित्यवोचाम* ॥ "स्मृतिरूपः परत्र पूर्वदृष्टावभासः" इत्यस्य संक्षेपाभिधानमेतत्। तत्राहमिति धर्मितादात्म्याध्यासमात्रं ममेत्यनुत्पादितधर्माध्यासं नानर्थहेतुः, इति धर्माध्यासमेव ममकारं साक्षादशेषानर्थसंसारकारणमुदाहरणप्रपञ्चेनाह—*तद्यथा पुत्रभार्यादिष्विति* ॥ देहतादात्म्यमात्मन्यध्यस्य देहधर्मं पुत्र-कलत्रादिस्वाम्यं च कृशत्वादिवदारोप्याह—*अहमेव विकलः

### ऋजुप्रकाशिका

धर्म्यध्यासः प्रथमं वक्तव्य इत्यत आह—*तत्राहमिति धर्मितादात्म्येति* ॥ *ममेत्यनुत्पादितधर्माध्यासमि*त्येतद् धर्मितादात्म्याध्यासमात्रमित्यस्य विशेषणम्। *ममकारमिति* ॥ मम भार्या, मम पुत्रः, मम क्षेत्रम्,

### पञ्चपादिका

स्यान्यधर्मावभासतां न व्यभिचरती"त्यन्तेन भाष्येण लक्षितं निरुपचरितमतदारोपम्—*अध्यासो नामातस्मिंस्तद्बुद्धिरित्यवोचामेति* परामृशति—कस्य युष्मदर्थस्य कस्मिन्नयुष्मदर्थे तद्विपर्ययेण चाध्यास इति विवेकतः प्रदर्शयितुम्। अतस्मिन्नयुष्मदर्थेऽनिदंचिति तद्बुद्धिर्युष्मदर्थावभास इत्यर्थः। तदाह—*तद्यथा पुत्रभार्यादिष्वित्यादि* ॥

### पञ्चपादिकाविवरणम्

*एवमध्याससद्भावं प्रसाध्येत्यादिना* ॥ किमिति पुनरत्रोक्तलक्षणानुवाद इति? तदाह—*कस्य युष्मदर्थस्येति* ॥ भाष्यं योजयति—*कस्मिन्नयुष्मदर्थ इत्यादिना* ॥ "आत्माऽनात्मनोरितरेतराध्यासं पुरस्कृत्ये"-त्यादिना प्रत्यक्षतो दर्शितस्याध्यासस्य विभज्य प्रदर्शनायोत्तरं भाष्यमित्याह—*तदाह तद्यथा पुत्रभार्यादि-

### तत्त्वदीपनम्

पुरोक्तत्वादित्याशङ्क्याह—*आत्मानात्मनोरिति* ॥ *विभज्य प्रदर्शनायेति* ॥ देहविशिष्टे साकल्यादीनामारोपः, देहस्य चान्तःकरणविशिष्टे, तस्य च प्राक्तनाहंकारसंस्कारविशिष्टात्मनीत्येवंरूपेण विभागप्रदर्शनायेत्यर्थः ॥

### वार्तिकम्

स्पयन् तत् स्मारयति—*अध्यासो नामातस्मिंस्तद्बुद्धिरित्यवोचामे"ति* ॥ "स्मृतिरूपः परत्र पूर्वदृष्टावभासः" इत्यनेनेति शेषः। यथाचैतत् तथा पूर्वमेव व्याख्यातम्। उक्तलक्षणमध्यासं स्मारयित्वा तत्र प्रत्यक्षप्रमाणमुदाहरति—तद्यथा पुत्रभार्यादिषु विकलेषु सकलेषु वाऽहमेव विकलः सकलो वेति बाह्यधर्मानात्मन्यध्यस्यतीति* ॥ आत्मनोऽत्यन्तभिन्नतयोपलब्धानामपि पुत्रादीनां धर्मा विकलत्वादय

### भाष्यभावप्रकाशिका

*अध्यासो नामेति* ॥ अध्यासस्यानर्थहेतुतां दर्शयितुमध्यासविशेषानुदाहरति—*तद्यथेति* ॥ प्रसिद्धव्यतिरेकयोरपि पुत्रादिगतसाकल्य-वैकल्ययोरनुभवत एव मुख्याध्याससिद्धावप्रसिद्धव्यतिरेकाणां कृशत्वादीनां मुख्याध्यासः स्यादिति किमु वक्तव्यमित्यभिप्रेत्याह—*पुत्र-भार्येति* ॥ बाह्यधर्माः,

### प्रदीपः

सोदाहरणं प्रदर्शयितुं पूर्वोक्तमध्यासस्वरूपं स्मारयति—*अध्यासो नामेति* ॥ "ममे"त्यनुत्पादितधर्माध्यासः—"अहमि"ति-धर्मिमात्राध्यासो नानर्थहेतुः, इति धर्म्यध्यासमेकरूपत्वाद्विभजनानर्हं मत्वा धर्माध्यासं सोदाहरणप्रपञ्चमुपक्षिपति—*पुत्रभार्यादिष्विति* ॥

भामती

सकल इति* ॥ स्वस्य खलु साकल्येन स्वाम्यसाकल्यात् स्वामीश्वरः सकलः संपूर्णो भवति । तथा स्वस्य वैकल्येन स्वाम्यवैकल्यात् स्वामीश्वरो विकलोऽसंपूर्णो भवति, इति बाह्यधर्मा ये वैकल्यादयः स्वाम्यप्रणालिकया संचारिताः शरीरे,तानात्मन्यध्यस्यतीत्यर्थः । यदा च परोपाध्यपेक्षे देहधर्मे स्वाम्य इयं गतिः,

ऋजुप्रकाशिका

ममेमान्युपकरणानि, इत्येवंरूपमित्यर्थः । "बाह्यधर्मानात्मन्यध्यस्यती"त्युक्तं भाष्ये, तद्विशदयति—*स्वस्य खल्वित्यादिना* ॥ स्वम्=स्वकीयं वस्तु, तस्येत्यर्थः । स्वामीत्येतस्य विवरणम्—*ईश्वर इति* ॥ सकल इत्यस्य विवरणम्—*सम्पूर्ण इति* ॥ एवमग्रेऽपि "स्वामी"त्यस्य विवरणम्—*ईश्वर इति* ॥ विकल इत्यस्य विवरणम्—*असम्पूर्ण इति* ॥ *बाह्यधर्मा इति* ॥ इत्येवंरूपा बाह्यधर्माः, ये साकल्य-वैकल्यादयः स्वाम्यप्रणाडिकया शरीरे सञ्चारिताः, तानात्मन्यध्यस्यतीत्यर्थ इत्यर्थः । *परोपाध्यपेक्षे=पुत्र-भार्यादिलक्षणो-

पञ्चपादिका

*ननु* प्रणव एव विस्वरः ; नहि पुत्रादीनां वैकल्यं साकल्यं वाऽऽत्मनि मुख्यमध्यस्यति, मुख्यो ह्यतदारोपो दर्शयितुं प्रारब्धः, *सत्यम्* ; स एव निदर्श्यते । कथम् ? तद्यथा बालके प्रातिवेश्यमात्रसंबन्धिना केनचिद्वस्त्रालङ्कारादिना पूजिते निरुपचरितमात्मानमेव पूजितं मन्यते पिता । पूजयिताऽपि पितरमेवापूपुजमिति मन्यते । यतो न बालकस्य पूजितत्वाभिमानः ; अव्यक्तत्वात्, तथैव राजानमुपहन्तुकामोऽनन्तरो विजिगीषुस्तद्राष्ट्रे ग्राममात्रमप्युपहत्य तमेवोपघ्नन्तमात्मानं मन्यते, सोऽप्युपहतोऽस्मीति संतप्यते । तदेवं प्रसिद्धव्यतिरेकस्यात्मनि मुख्य एवाध्यासो दृष्टः, किमु वक्तव्यम्—कृश-स्थूलाद्यभिमानस्य मुख्यत्वमिति कथयितुमाह—*अहमेव विकलः सकलो वेति बाह्यधर्मानात्मन्यध्यस्यतीति* ॥ बाह्येषु पूजादेर्धर्ममात्रस्यैव युष्मदर्थस्याध्यासः ॥

अस्मदर्थश्चाहंप्रत्ययिसम्भिन्न एवानिदंचिदंशो विषयः, न पुनः शुद्ध एवाहंप्रत्ययिन इवाध्यासेऽ-

पञ्चपादिकाविवरणम्

ष्वित्यादि* ॥ *तथाऽन्तःकरणधर्मानित्यतः* प्राक्तनो ग्रन्थः स्पष्टार्थः । अत्रोत्तरोत्तराध्यासविशिष्टे पूर्वपूर्वाध्यास इति कथयितुमात्मन्यध्यस्यतीत्यात्मशब्दार्थमाह—अस्मदर्थश्चाहंप्रत्ययिसम्भिन्न इति* ॥ *ननु*

ऋजुविवरणम्

प्रसिद्धार्थस्वीकारे प्रयोजनाभावात्, अथवा—प्रसिद्धार्थत्वात् किं व्याख्यानेन ? इत्याशङ्क्याभिप्रायमाह—*अत्रोत्तरोत्तराध्यासेति* ॥ यद्यपि देहाद्यध्यासस्यैव वस्तुत उत्तरत्वम् ; तथाऽपि भाष्यकारेण तत्पुरःसरमेवाध्यासस्य प्रदर्शितत्वात्

तत्त्वदीपनम्

*स्पष्टार्थ इति* ॥ उत्सर्गतः स्पष्टार्थत्वम् । कानिचित्त्वस्पष्टपदानि व्याख्यायन्त इत्यर्थः । आत्मशब्दस्य प्रसिद्धार्थत्वात् किं तद्व्याख्यानेनेति ? तत्राह—*अत्रोत्तरेति* ॥ अत्राध्यासानां मध्य इत्यर्थः । पाठक्रममभिप्रेत्योत्तरेत्युक्तम् ।

वार्तिकम्

आत्मन्यारोप्यन्त इति सर्वप्रत्यक्षसिद्धम्, किमु वक्तव्यं देहादीनां प्रत्यक्तया भासमानानां गौरत्वादयो धर्मा आत्मन्यारोपिताः प्रत्यक्षसिद्धा इति !! इति कैमुतिकन्यायसूचनार्थं प्रथमं बाह्यधर्माध्यासप्रदर्शनं कृतमिति द्रष्टव्यम् ॥ यद्वा—पुत्र-भार्यादीनामनात्मत्वे चार्वाकादीनामप्यविवाद एव, इति सर्ववादिविप्रतिपत्तिविषयतया प्रथमतस्तद्धर्माध्यासाध्यक्षमुदाहृतम् । *ननु*—पुत्र-भार्यादीनां धर्मिणामनध्यासे कथं तद्धर्माणां सकलत्वादीनामात्मन्यध्यास इति—चेत्, *न* ; तेषाम्—'अहमि'त्यध्यासाविषयत्वेऽपीन्द्रियवदध्यस्तदेहसंबन्धितया ममाध्यासविषयत्वादनध्यासासिद्धेः । एवं बाह्यधर्माध्यासमात्मनि सर्वप्रत्यक्षसिद्धं प्रदर्श्यात्मप्रत्यक्षोप-

**तथा देहधर्मान्'--स्थूलोऽहम्' 'कृशोऽहम्' 'वीरोऽहम्' 'तिष्ठामि' 'गच्छामि' 'लङ्घयामि' चेति। तथा–इन्द्रियधर्मान्–'मूकः' 'काणः' 'क्लीबः' 'बधिरः' 'अन्धोऽहमि'ति।**

### भामती

तदा कैव कथाऽनौपाधिकेषु देहधर्मेषु कृशत्वादिषु ? इत्याशयवानाह—*तथा देहधर्मानिति* ॥ देहादेरप्यन्तरङ्गाणामिन्द्रियाणामध्यस्तात्मभावानां धर्मान्मूकत्वादीन्, ततोऽप्यन्तरङ्गस्यान्तःकरणस्याध्यस्तात्मभावस्य धर्मान् काम-संकल्पादीन् आत्मन्यध्यस्यतीति योजना। तदनेन प्रपञ्चेन धर्माध्यासमुक्त्वा

### ऋजुप्रकाशिका

पाध्यपेक्षे। इन्द्रियेष्वात्मतादात्म्याध्यासाभाव आत्मनीन्द्रियधर्माध्यासायोगः, तदर्थमाह—*अध्यस्तात्मभावानामिति* ॥ इन्द्रियाणामित्यस्य विशेषणम्। अन्तःकरण *आत्मतादात्म्याध्यासाभाव आत्मन्यन्तःकरणधर्माध्यासायोगः, तदर्थमाह—*अध्यस्तात्मभावस्येति* ॥ अन्तःकरणस्येत्येतस्य विशेषणम्। "अहं-

### पञ्चपादिका

ध्यासान्तरानास्कन्दितः। *देहधर्मान् कृशत्वादीनिति* ॥ धर्मिणोऽपि; धर्मशब्दस्तु मनुष्यत्वादिधर्मसमवायिन एवाध्यासः, न 'देहोऽहमि'ति कथयितुम्। तन्निमित्तश्च शास्त्रेणेतश्चेतश्च नियमः क्रियते।

### पञ्चपादिकाविवरणम्

शरीरमप्यध्यस्यते, न धर्मा एवेत्यत आह—*धर्मिणोऽपीति* ॥ ग्रहणमित्यध्याहारः। धर्मशब्दस्तर्हि किमिति गृहीत इति ? अत आह—*धर्मशब्दस्त्विति* ॥ शास्त्रीयव्यवहारमूलत्वेन प्राधान्याच्च धर्माध्यासस्य प्राधान्येन ग्रहणमित्याह—*तन्निमित्तश्चेति* ॥

### ऋजुविवरणम्

तन्निर्देशाभिप्रायेणैवमुक्तम्। तन्निर्देशोऽपि समूलतारतम्येन प्रतिपादनस्य सौकर्यापेक्षया; तस्यैव च व्यवहारप्रत्यासत्तेरिति मन्तव्यम्। *ननु*—नान्तःकरणधर्मत्वे कामादीनां प्रमाणमस्ति; कथं सिद्धवदुपादानम्? इत्याशङ्क्याह—

### तत्त्वदीपनम्

देहधर्ममात्राध्यास उक्तः, स नोपपद्यते, धर्मिणोऽप्यध्यासदर्शनादिति शङ्कते—*ननु शरीरमिति* ॥ अपेक्षितं पूरयति—*ग्रहणमिति* ॥ धर्म्यध्यासे धर्माध्यासस्यार्थसिद्धत्वात् तद्ग्रहणं वक्तव्यमिति शङ्कते—*धर्मशब्द इति* ॥ मनुष्यत्व-ब्राह्मणत्वादिकं विहाय केवलदेहेऽभिमानाभावेन प्राधान्यात्तद्ग्रहणमित्याह—*अत आहेति* ॥ तत्र हेत्वन्तरमाह—*शास्त्रीयेति* ॥ कार्य-कारणत्वादीनामात्मन्यारोपमङ्गीकृत्य सुखादीनामारोपमाक्षिपति*—नन्वन्तः-

### वार्तिकम्

गृहीतानां देहादीनां तदुपाधिकं स्वधर्माध्यासं सर्वप्रत्यक्षसिद्धमात्मनि दर्शयति—*तथा देहधर्मान् स्थूलोऽहम्, कृशोऽहम्, तिष्ठामि, गच्छामि, लङ्घयामि चेति* ॥ यथा बाह्यपुत्रादिधर्मानध्यस्यति, तथा देहधर्मानपि कृशत्वादीनात्मन्यध्यस्यति। कथमिति ? अत आह—'कृशोऽह'मित्यादीति वाक्ययोजना। एवमुत्तरत्रापि—

### भाष्यभावप्रकाशिका

ये वैकल्यादयः, तत्स्वाम्यनिमित्तस्वशरीरे तानध्यस्यतीत्यर्थः ॥ इदानीमप्रसिद्धव्यतिरेकाणां सुतरामध्यास इत्याह—*तथा देहधर्मानिति* ॥

अत्र चाहंप्रत्ययसंभिन्नचैतन्यस्याधिष्ठानता, न पुनरहङ्काराध्यास इव शुद्धस्य। "देहधर्मानि"ति धर्मिणोऽपि ग्रहणम्, धर्मशब्दस्तु मनुष्यत्वादिधर्मविशिष्टस्यैवाध्यासात्, तथाभूतस्यैव विधि-प्रतिषेधशास्त्रगोचरत्वाच्च धर्मप्राधान्यात् ॥ इदानीमस्मादप्यन्तरङ्गेन्द्रियधर्माध्यासमाह—*तथेन्द्रियधर्मानिति* ॥

